तेन 'तददोषौ शब्दार्थौ सगुणावनलङ्कृती पुनः क्वापी'ति लक्षणं 'कुरङ्ग-नयने'त्यादावपि पर्य्याप्तं भवति, सगुणालङ्कारनिर्दोष-शब्दार्थत्वात् ।

Kavyaprakasa—
Ullasa I.

'वाक्यं रसात्मकं काव्य'मिति च लक्षणं 'गोपीभिः सह विहरति हरि'-रित्यादौ पर्य्याप्तं स्यात्, रसात्मकवाक्यत्वात्(ङ) । व्यति-रेकेन दोषः, यद्वाक्यं न भवति तत्र काव्यं न भवती-त्यायातेः,

Sahityadarpana—
I. 3.

कूर्म्मलोमपटच्छन्नः शशशृङ्गधनुर्द्धरः ।
एष वन्ध्यासुतो भाति खपुष्पकृतशेखरः (च) ॥

Yogavasistha-Ramayana—Utpatti. 4 & 20.

इत्यस्य वाक्यत्वाभावेऽपि काव्यत्वदर्शनात् ।

सति गुणविशिष्टशब्दार्थोभयवत्त्वमिति काव्यलक्षणम् । कुरङ्गस्य नयने इव नयने यस्यास्तथाभूता इत्यादौ शब्दार्थदोषाभावगुणालङ्कारादीनां सत्वात् तादृशलक्षणं पर्य्याप्तमतिव्याप्तं भवति। स्वमते तु असाधारणचमत्कारकारिरचनाऽभावादेव तत्र न दोषः। कस्यचिन्मते 'वाक्यं रसात्मकं काव्य'मिति लक्षणम् । तदपि दुष्टं, यतो 'गोपीभिः सह विहरति हरि'रित्यादावतिव्याप्तं, शृङ्गाररसात्मकत्वस्य वाक्यत्वस्य च तत्र सत्त्वात् । 'कूर्म्मलोमपटच्छन्न' इत्यादौ न वाक्यत्वमस्ति; परस्परान्वितार्थबोधकपदसमुदायवत्त्वं वाक्यत्वमिति तल्लक्षणात् । अत्र तु शृङ्गादौ शशादेर्यथाक्रममन्वयाप्रसिद्धेरेव न वाक्यत्वमिति भावः ।

---

(ङ) काव्यप्रकाशकृतो लक्षणं खण्डशो विचारितं दूषितञ्च तद्दर्पणकृद्रसगङ्गाधर-कारादैः। अत्र तु खण्डनस्यापूर्व्वः पन्थाः । प्रस्तुतात् लक्षणाद्रसस्य समग्रस्यार्थबोधस्य चाहार्यत्वादैवेयं प्रौढ़िः। दर्पणकृल्लक्षणं रसगङ्गाधरेऽपि दूषितं, तत्तु प्रौढ़िरवेति । यदाहुः गङ्गाधरशास्त्रिपादास्तत्र स्वटिप्पण्याम् । अत्रापि योऽव्याप्त्यतिव्याप्तिरूपस्तल्लक्षण-दोषो दर्शितः स खलु परमार्थतः भाक्त एव। 'गोपीभिः सहे'त्यत्र वैचित्र्याभावः, चर्व्वणा-पर्य्यायस्य रसास्वादनस्य सहृदयहृदयगस्य विरलता च। 'कूर्म्मलोमे'त्यादौ गौणवृत्त्या मुख्यावसितसम्बन्धस्वीकारात् वाक्यत्वं सम्भवतीति तु दिक्। एवञ्च दर्पणकृतो लक्षणं यथामति यथासम्भवमदोषमेवेति प्रतिभाति। Vide Dr. A. B. Keith's remarks in J. R. A. S., 1910.

---

[1] 'अनलङ्कृती' इत्यतः पश्चात् 'ईषदलङ्कारविशिष्टौ, ईषदर्थे नञ्, तथाच क्वापि स्थानेऽस्पष्टालङ्कारविशिष्टौ', इति पाठः ।

Vamana's Kavyalankara.

यस्तु 'रीतिरात्मा काव्यस्ये'ति पठति, न तदपि साधीयः, रीतेर्वैह्यगुणत्वात्। यत्तु

लोकोत्तरचमत्कारवर्णनानिपुणः कविः।

तस्य तादृग् वचः काव्यम्—

इत्यपि न साधु, अन्योन्याश्रयदोषप्रसक्तेः। तथाहि लोकोत्तरचमत्कारवर्णनानिपुणः कविः, कवेर्लोकोत्तरचमत्कारवर्णनानिपुणा वाक् काव्यमिति परस्पराश्रयम्। (8)

तत् साधूक्तं 'कविवाङ्निर्मितिः काव्यम्' इति। कविरिति पारिभाषिकी संज्ञेति परस्पराश्रयदोषो निरस्तः।

कस्यचिन्मते रीतिरेव काव्यस्यात्मा, रीतिर्गौडीप्रभृतिः। तन्मते रीतिमत्त्वं काव्यत्वमिति तल्लक्षणम्। तदपि न साधीयः, यतो रीतेर्बाह्यगुणत्वम्। तथाच सदोषे गुणालङ्कारभावविशिष्टे च रीतिमति काव्याभासे दोषः स्यादिति भावः। यत्त्विति—लोकोत्तरवर्णनायां निपुणः कविः, तस्य लोकोत्तरचमत्कारवर्णना वाक् काव्यमिति लक्षणमन्योन्याश्रयदोषदुष्टम्। तथाच काव्यलक्षणघटितं कविलक्षणं, कविलक्षणघटितं काव्यलक्षणमिदमेवान्योन्याश्रयरूपम्। तथा सति काव्यलक्षणे कविज्ञानापेक्षा, कविलक्षणे काव्यज्ञानापेक्षा। अत उभयोरेव (9) ज्ञानासम्भवादिदमपि लक्षणं न साधीय इत्यर्थः।

ननु कविवाङ्निर्म्मितिरिति लक्षणस्यापि कविकृते काव्यभिन्नव्याख्याकौशले दोषप्रसङ्गः। न च निर्म्मितिपदेनासाधारणचमत्कारकारिरचनारूपोऽर्थः पूर्व्वमुक्तः, अतः पिङ्गलच्छन्दोमञ्जर्य्यादिरूपच्छन्दःशास्त्रोक्तताद्दशरचनायास्तत्र व्याख्याकौशलेऽभावान्न दोष इति वाच्यं, कविपदस्य वाक्पदस्य च वैयर्थ्यापत्तेः। अन्यकृतव्याख्याकौशले शिल्पकर्म्मणि च निर्म्मितिपदार्थताद्दशरचनाया अभावादेव न कुत्रापि दोषावकाश इति। पारिभाषिकीति-...कवेः पारिभाषिकं लक्षणं स्वयमेव वक्ष्यति।

---

(च) श्लोकोऽयं शरणदेवकृतदुर्घटवृत्तौ (२।२।८) किञ्चित् विलक्षणतया दृश्यते। तत्रायं पाठः—

एष बन्ध्यासुतो याति खपुष्पकृतशेखरः।
मृगतृष्णाम्भसि स्नात्वा शशशृङ्गधनुर्द्धरः॥

दर्पणकृन्मतेऽप्यत्र काव्यत्वस्थापनं न दुरुपपादम्। आक्षेपात् विशिष्टबोधजननमुखेन नूनमत्रापि चमत्कारित्वम्। 'रसे सारश्चमत्कार' इति धर्म्मदत्तोक्तदिशा अत्र रसोद्बोधकत्व-

---

(8) (क) (ख) (ङ) पुस्तकेषु 'यत्तु' इत्यारभ्य वाक्यं 'निरस्तः' इत्यन्तस्य वाक्यस्य पश्चात् दृश्यते।

(9) पाठोऽयं सर्व्वेष्वेव पुस्तकेषु। वस्तुतस्तु 'उभयोरज्ञानकाले एकतरज्ञानासम्भवात्' इति भवितुमर्हतीति ज्ञेयम्।

अथवा काव्यत्वं नाम गोत्वादिवज्जातिरेव । यथा सास्नाद्यवयववतीषु गोव्यक्तिषु प्रत्येकमयं गौरयं गौरित्यनुगताकारा येनासाधारणधर्म्मेणावगतिः स एव जातिलक्षणः कोऽप्यसाधारणधर्म्मो गोत्वं, तथा शब्दार्थसङ्घातस्य सहृदयहृदयास्वाद्यः कोऽपि काव्यत्वलक्षणो धर्म्मविशेषः काव्यत्वं जातिः । (क)

## निपुणं कविकर्म तत् ॥ २का

अथ काव्यं कविकर्मेति कविजिज्ञासायां तत्स्वरूपमाह—

लक्षणान्तरमाह—अथवेति । अवगतिः प्रतीतिः, येन गोत्वरूपासाधारणधर्म्मेणायं गौरयं गौरित्यनुगताकारा समानाकारा भवति स एव गोत्वरूपो धर्म्मो जातिः । तथात्रापि शब्दार्थसमूहस्य काव्यत्वलक्षणो धर्म्मविशेष एव काव्यत्वं जातिः । ननु गोत्वजातौ हलिकलोकादिसर्व्वेषामनुगतप्रतीतिरेव प्रमाणं, काव्यत्वजातौ किं प्रमाणम् ? तत्राह—स काव्यत्वरूपो धर्म्मः सहृदयहृदयास्वाद्यः, तथाच सर्व्वत्र काव्ये सहृदयानां काव्यत्वरूपेणानुगता प्रतीतिरेव काव्यत्वजातौ प्रमाणमिति भावः । न च प्रत्येकवर्णनिष्ठकत्वखत्वादिजातिभिः काव्यत्वजातिः सङ्कीर्णा स्यात् । तथाहि कत्वाद्यभाववति केवलेकाक्षरघटितचित्रकाव्ये काव्यत्वं वर्त्तते, काव्यत्वाभाववति च केवलककाररूपाक्षरे कत्वजातिर्व्वर्त्तते, एकस्मिन्नेव ककारघटितकाव्ये काव्यत्वजातिः कत्वजातिश्च वर्त्तते, अतः परस्परात्यन्ताभावसमानाधिकरणत्वे सति एकाधिकरणवृत्तित्वरूपसाङ्कर्य्यदोषेण काव्यत्वजातिर्दुष्टेति वाच्यं (10), यतो यन्मते साङ्कर्य्यस्य न जातिबाधकत्वं तन्मतमालम्ब्योक्तं (क), अतो न दोषः ।

---

मस्त्येव । तथाच गौण्या वृत्त्या काव्यलक्षणाङ्कितोऽयं श्लोकः । एवमितरत्रापि चमत्कारमुखेन काव्यता यथाधोदर्शिते नैषधचरितश्लोके—

> अस्य क्षोणिपतेः परार्द्धपरया लक्षीकृताः संख्यया
> प्रज्ञाचक्षुरवेक्ष्यमाणतिमिरप्रख्याः किलाकीर्त्तयः ।
> गीयन्ते स्वरमष्टमं कलयता जातेन बन्ध्योदरा-
> न्मूकानां प्रकरेण कूर्म्मरमणीदुग्धोदधे रोधसि ॥

(क) लक्षणे पक्षान्तरकल्पनं लक्षणकर्त्तुर्दुर्व्वलत्वं प्रकटयति । काव्यस्य जातित्वस्वीकारेण काव्यलक्षणं न सहजकल्प्यमित्यपि प्रतिपाद्यते । साङ्कर्य्यस्य जातिबाधकत्वाभावपक्षस्तु न सर्व्वैः स्वीक्रियते, अतस्तन्मते लक्षणदोष एव । एवञ्च, काव्यत्वं चेत् शब्दार्थव्यतिरिक्ता जातिरेव, तत् कथं काव्यत्वलक्षणो धर्म्मः शब्दार्थयोस्तथाकथिते सङ्घाते स्यातुमर्हति ? अतो नैतन्मनोज्ञम् ।

---

(10) 'दुष्टेति न वाच्यं' इति '(ख)' '(ग)' पुस्तकयोः दुष्टः पाठः ।

सबीजो हि कविर्ज्ञेयः स सर्व्वागमकोविदः ।
सरसः प्रतिभाशाली यदि स्यादुत्तमस्तदा ॥ २का (ज)

एतेन 'इये कवयः सम्भवन्ति अरोचकिनः सतृणाभ्यवहारिणश्च'ति वामनः ।

Kavyalankara-Sutra.

तत्र सतृणाभ्यवहारिणः कवय एव न भवन्त्यनादृतत्वात् ।
अरोचकिन एव कवयः । (झ)

ननु काव्यत्वस्य जातिरूपत्वे कविघटितकाव्यलक्षणस्यासम्भवात् कथमालङ्कारिकैरलङ्कारशास्त्रे उत्तममध्यमादिभेदेन कवेर्लक्षणं क्रियते, तत्राह—अर्थेति । काव्यत्वस्य जातित्वेऽपि काव्यमिति पदं यौगिकवृत्त्या कवेः कर्म्म काव्यमिति व्याकरणसिद्धं भवति, अतस्तत्र कविजिज्ञासायां कवेर्लक्षणं सुसङ्गतमेवेति भावः । सर्व्वागमकोविदोऽलङ्काराद्यनेकशास्त्राभिज्ञः । (११)

एतेन पारिभाषिककविलक्षणेन इये द्विप्रकाराः कवयो भवन्ति । इयशब्दस्य बहुवचनेऽपि प्रयोगः साधुः, न तु द्विशब्द इव नित्यद्विवचनान्तः । अरोचकिन इति—यथातिसुकुमारा महान्तो जना असंस्कृतविरसवस्तुनि अरोचकिनो भवन्ति, तथैव

(ज) 'सबीजः' 'सर्व्वागमकोविदः' 'प्रतिभाशाली'ति विशेषणत्रयादाचार्य्यदण्डिप्रोक्तं काव्यसम्पन्निदानभूतं कविकर्तृत्वमखिलमायाति । उक्तं हि दण्डिना—

नैसर्गिकी च प्रतिभा श्रुतञ्च बहु निर्म्मलम् ।
अमन्दश्चाभियोगोऽस्याः कारणं काव्यसम्पदः ॥

अमन्दोऽभियोगोऽत्र कौस्तुभे काव्यरोहभूसंस्कारविशेषफलतया बीजत्वेनोक्तः । एवमपि पीयूषवर्षो जयदेवः—

प्रतिभैव श्रुताभ्याससहिता कवितां प्रति ।
हेतुर्मृदम्बुसम्बन्धबीजव्यक्तिर्लतामिव ॥

स च संस्कारविशेषः प्राक्तन एव (४ का) । रसगङ्गाधरकृज्जगन्नाथः प्रतिभामात्रं इतरव्यवच्छिन्नायाः कारणत्वं निर्द्दिशति । ग्रन्थकृदपि 'सबीज इत्येव कविलक्षण'मिति निर्द्दिशन् एकस्यैव कारणत्वं काव्यकरणे स्वीकरोति । वस्तुतस्तु नाममात्रे भेदः । सरसत्वञ्चात्रैवान्तर्भूयते इति केचित्, अन्तर्भाव्यं वा तदित्यपरे । यदाह महिमभट्टस्तत्त्वोक्तिकोषे—

रसानुगुणशब्दार्थचिन्तास्तिमितचेतसः ।
क्षणं स्वरूपस्पर्शोत्था प्रज्ञैव प्रतिभा कवेः ॥

(११) 'ग' पुस्तकेऽयमधिको पाठः । नैतद्वाक्यमन्येषु पुस्तकेष्वत्र दृश्यते ।

सबीज इत्येव कविलक्षणम्, अन्यानि तु विशेषणानि, सबीजः कवि-रीदृशः स्यादित्यर्थः ।

किन्तद्बीजं येन सबीज इति ज्ञेयः कविरित्याह—

**बीजं प्राक्तनसंस्कारविशेषः काव्यरोहभूः ॥ ४ का**

रोहश्च द्वेधा निर्मातृमूलः स्वादकमूलश्च, यं विना निर्मातुं स्वादयितुञ्च न शक्यते । तेनोत्पत्त्यास्वादयोरेवास्य कारणता ।

केचिदुत्कृष्टकविजनाः सदोषेऽथवा गुणालङ्काररहिते च अकाव्ये (12) अरोचकिनो भवन्ति । यथा च पशवस्तृणसहितान्नादिभोजिनो भवन्ति तथैव निकृष्टकवयो दोष-सहितकाव्यास्वादका भवन्तीति द्विविधाः कवयो वामनसम्मता इत्यर्थः । अन्यानि 'सर्व्वागमकोविदः' 'सरसः' 'प्रतिभाशाली'ति पदानि विशेषणबोधकान्येव, न तु कविलक्षण-घटकानि । तथाच सबीजः कविः कीदृशः स्यादित्याकाङ्क्षायां तादृशविशेषणानि ज्ञेयानि ।

काव्योत्पादकप्राक्तनसंस्कारविशेषः काव्यरोहभूः काव्यरोहस्थानम् । रोहश्चेति—द्विविध उत्पत्तिरूप आस्वादरूपश्च । अस्य संस्कारविशेषस्य कारणता बोध्या । तथा च काव्योत्पत्तिकाव्यास्वादनोभयहेतुभूतप्राक्तनसंस्कारविशेषवान् कविरिति कवेर्लक्षणम् ।

---

सा हि चक्षुर्भगवतस्तृतीयमिति गीयते ।
येन साक्षात्करोत्येष भावांस्त्रैकालवर्त्तिनः ॥

सरसत्वमेव कविस्ष्टेश्वरमसुपादानं, यदुक्तमग्निपुराणे—

अपारे काव्यसंसारे कविरेकः प्रजापतिः ।
यथास्मै रोचते विश्वं तथेदं परिवर्त्तते ॥
शृङ्गारी चेत् कविः काव्ये जातं रसमयं जगत् ।
स चेत् कविर्व्वीतरागो नीरसं व्यक्तमेव तत् ॥

अत्र शृङ्गारपदेन रस उपलक्ष्यते इत्यभिनवगुप्तपादा ध्वन्यालोकलोचने ।

(क) एकेषामर्थोऽयोनिरन्येषामन्यच्छायायोनिरितथा निन्दनीयश्च । तदेतत् सर्व्वं व्यक्तं भट्टवामनेन स्वोपज्ञवृत्तौ विशदीकृतञ्च काव्यालङ्कारकामधेनौ । अत्र क्षेमराजकृत-कविकण्ठाभरणे कविशिक्षाप्रसङ्गे कविविभागकल्पना उदाहार्य्या । सा चेत्थं निर्द्दिष्टा—

छायोपजीवी पदकोपजीवी पादोपजीवी सकलोपजीवी ।
भवेदथ प्राप्तकवित्वजीवी स्वोन्मेषतो वा भुवनोपजीव्यः ॥

तत्र च अरोचकिनां प्रतिभावताम् प्रशंसा भुवनोपजीव्य इत्यभिधानात् ।

---

(12) 'काव्ये' इति पाठः (ख) (घ) (क) पुस्तकेषूपलभ्यते ।

काश्मी प्रतिभेत्याह—

Bhamaha-lamkara I. प्रज्ञा नवनवोल्लेख-(न्मेष) शालिनी प्रतिभा मता ॥५का

अथोक्तलक्षणं काव्यं कियत्प्रकारकं भवतीत्याकाङ्क्षायां तद्भेदानाह—

उत्तमं ध्वनिवैशिष्ट्ये मध्यमे तत्र मध्यमम्।

अवरं तत्र निष्पन्द इति त्रिविधमादितः॥ ६का (ञ)

व्यङ्ग्यमेव ध्वनिः। यत्तु 'इदमुत्तमातिशयिनि व्यङ्ग्ये वाच्याद्ध्वनिर्बुधैः Kavyaprakasa. I. कथित' इति काव्यस्यैव ध्वनित्वं, तत्तु ध्वनिसम्बन्धाद्ध्वनिरिति लक्षणा, किम्वा ध्वन्यतेऽनेनेति करणसाधनेन। वस्तुतस्तु ध्वन्यत इदमिति कर्म्मसाधनमेव।

तेन कविभिन्ने काव्यास्वादवति सहृदये आस्वादनहेतुभूतप्राक्तनसंस्कारविशेषवत्त्वरूपलक्षणस्य न समन्वय इति भावः।

नवनवोल्लेखशालिनी नवनवार्थरचनायां समर्था प्रज्ञा बुद्धिः प्रतिभा भवति।

ध्वनेर्वैशिष्ट्ये उत्तमत्वे काव्यमुत्तमं भवति। तत्र ध्वनौ मध्यमे सति काव्यं मध्यमं भवति। ध्वनौ निस्पन्दे अस्पष्टे सहृदयहृदये शीघ्रमप्रकटे सति अवरं निकृष्टं काव्यम्। ननु कोऽयं ध्वनिर्यस्य त्रैविध्येन काव्यस्यापि त्रैविध्यमुक्तं, तत्राह—व्यङ्ग्यं व्यञ्जनावृत्तिबोध्यं वस्तु ध्वनिः। काव्यप्रकाशकृतोक्तं ध्वनिलक्षणमाह—यत्त्विति। अस्मिन् काव्ये वाच्यात् वाच्यार्थापेक्षया व्यङ्ग्यार्थेऽतिशयिनि उत्कृष्टे सति इदमुत्तमं काव्यं बुधैर्ध्वनिः कथित इति काव्यस्यैव यद्ध्वनित्वमुक्तं तत्त्वसङ्गतं, प्रामाणिकानां काव्ये ध्वनिव्यवहाराभावात्। अतः काव्ये ध्वनिपदप्रयोगो ध्वनिसम्बन्धाल्लाक्षणिकत्वेन गौण एव, नतु साक्षान्मुख्यप्रयोगः। नन्वनेन काव्येनार्थो ध्वन्यते शब्द्यत इति करणसाधनेन काव्येऽपि ध्वनिपदस्य साक्षात्प्रयोग दृष्ट एवेत्याह··किम्वेति। ननु काव्ये प्रामाणिकानां न कदापि ध्वनिपदस्य मुख्यप्रयोगः, अतो ध्वनिपदं न करणसाधनं, किन्तु काव्येनेदं वस्तु ध्वन्यत इति कर्म्मसाधनमेव। अतएव ध्वनिपदस्य मुख्यप्रयोगो व्यङ्ग्यार्थे एव नतु काव्ये। काव्ये तु ध्वनिसम्बन्धाल्लाक्षणिक एवेत्यथ संक्षेपेणाह—वस्तुतस्त्विति।

---

(ञ) निस्पन्द इति—अत्र शरीरं शब्दार्थावित्यादिवदारोपोक्तिः। निर्नास्ति स्पन्दनमुच्छ्वासः प्राणाः (ध्वनिरिति यावत् ध्वनिरेव इति ग्रन्थकृता स्वयमवोक्तत्वात्)—यत्र, अर्थात् यत्र केवलं शब्दार्थवैचित्र्यमेव स्फुरति तदधमं काव्यम्। चित्रकाव्यमिति तस्य प्रकाशकृदादिकृतसंज्ञा। न तन्मुख्यं काव्यं, काव्यानुकारो ह्यसाविति ध्वनिकारः।

ध्वनेर्ध्वन्यन्तरोद्गारे तदेव ह्युत्तमोत्तमम् ।
शब्दार्थयोश्च वैचित्र्ये द्वे यातः पूर्व्वपूर्व्वताम् ॥ ७का (ट)

यदि ध्वनिवैशिष्ट्यं ध्वन्यन्तरवैशिष्ट्यं स्यात्, यदि वा शब्दार्थयोर्वैचित्र्यञ्च भवति, तदा काव्यमुत्तमोत्तमम् । एवं शब्दार्थवैचित्र्ये सति द्वे मध्यमावरे पूर्व्वपूर्व्वतां यातः, मध्यममुत्तमं भवति, अवरं मध्यमं भवतीत्यर्थः । शब्दार्थयोरिति काकाक्षिगोलकन्यायेनोभयत्र योजनीयम् ।

क्रमेणोदाहरणानि—

गौरीमर्च्चयितुं प्रसूनविचयं श्वश्रूनिदिष्टा हरेः
क्रीड़ाकाननमागता वयमहो मेघागमश्चाभवत् ।

ध्वनेरिति—यस्मिन् काव्ये ध्वन्यर्थस्यापि ध्वन्यर्थः सम्भवति तत् काव्यमुत्तमोत्तमं भवति । शब्दार्थयोर्वैचित्र्ये सति द्वे काव्ये पूर्व्वपूर्व्वतां यातः । ध्वनेर्ध्वन्यन्तरोद्गारे इत्यस्यार्थमाह—यदीति । ननु यत्र काव्ये ध्वनिर्वैशिष्ट्यमात्रं वर्त्तते, नतु ध्वनेर्ध्वन्यन्तरं, अथच शब्दार्थयोर्व्वैचित्र्यं वर्त्तते, तदुत्तममपि काव्यं शब्दार्थवैचित्र्यहेतोरुत्तमोत्तमं भवतीत्याह—यदिवेति । एवमिति—तथा च यत्काव्यं ध्वनेर्मध्यमत्वान्मध्यमं भवति तत्काव्यस्यापि शब्दस्यार्थस्य च (13) चमत्कारो वर्त्तते चेत्तदा मध्यममपि काव्यमुत्तमं भवति । एवं ध्वन्यर्थस्याभावे सति यत्काव्यमवरं भवति तत्काव्यस्यापि शब्दार्थयोश्चमत्कारो वर्त्तते चेत्तदा अवरमपि काव्यं मध्यमं भवतीत्यर्थः । काकाक्षिगोलकन्यायेनेति—शब्दार्थयोर्व्वैचित्र्ये इति पदस्य काकाक्षिगोलकन्यायेन उत्तमोत्तममित्यत्र द्वे यातः पूर्व्वपूर्व्वतामित्यत्र चान्वयो बोध्यः ।

तत्र वाच्यार्थापेक्षया ध्वन्यर्थस्योत्कर्षे सति उत्तमं काव्यं भवतीत्यत्रोदाहरणमाह—

---

विश्वनाथोऽप्येवम् । जगन्नाथस्तु एवम्विधस्थलेषु यत्र शब्दचमत्कृतिसमन्वा अर्थचमत्कृतिस्तत्रैव काव्यता, यत्र तु शब्दचमत्कृतिरेव केवलं वर्त्तते, नार्थचमत्कृतिस्तत्र केश्चिदधमाधमकाव्यतया स्वीकृतमपि न तत् काव्यमित्याह । त्रिविधमादित इति—पश्चात् चतुर्णां भेदानां स्वीकारादादित इति । ध्वनिरिति लक्षणा—सुष्ठूक्तमेतत् । नादध्वनितः काव्यध्वनिप्रतिपादने ध्वनिपदस्य मुख्यया वृत्त्या न भवतीति ।

(ट) एवम् व्यङ्ग्याचारुत्वाचारुत्वकृतविभागेन एतन्मते उत्तमोत्तमं मध्यमं अधमञ्चेति त्र्यतः काव्यं चतुर्द्धा भिद्यते । रसगङ्गाधरेऽपि काव्यभेदाश्चत्वार एतन्नामाङ्किता एव स्वीकृताः । ध्वनिकाव्यमात्रमेव उत्तमोत्तमं, जागरूकगुणीभूतव्यङ्ग्यमयमुत्तमं यत्र

---

(13) 'च' इत्यत्र 'वा' इति (क) (ख) (ग) (च) पुस्तकेषु पाठः ।

प्रेङ्खोलाः परितश्च कण्टकलताः श्यामाश्च सर्व्वा दिशो
नो विद्मः प्रतिवेशवासिनि ! गुरोः किं भावि सम्भावितम् ॥ ४

अत्र वाच्याद्भावि श्रीकृष्णसङ्गजन्यनखक्षतस्थगनरूपस्य व्यङ्गस्य वैशिष्ट्या-दुत्तमत्वम् । (ठ)

गौरीमिति। श्रीकृष्णेन सह मिलनार्थं वृन्दावनमध्ये गता काचिद्‌व्रजसुन्दरी श्रीकृष्णेन सह मिलनात् पूर्व्वमेवाकस्मात् कार्य्यान्तरे तत्रैवागतां पड़्लिनीति प्रसिद्धां कामपि प्रतिवेशिनीं दृष्ट्वा स्वीयागमनं पुष्पचयननिमित्तमिति वक्तुं, एवं दैवात् सम्भोगानन्तर-मनया सह पुनर्म्मिलनं चेत् सम्भोगचिह्ननखक्षतादिकं दृष्ट्वा किं खिद्यदिष्यतीत्यधुनैव सम्भोगचिह्नं कण्टकक्षतत्वेन वक्तुञ्च तस्याग्रे स्वखेदमभिनयति। श्वश्रूनिदिष्टा सती हरेः क्रीड़ाकाननं वृन्दावनमागता। मेघागमश्चेत्यनेन श्यामाश्च सर्व्वा दिश इत्यनेन च शीघ्रं गृहं गन्तुं न शक्नोमीत्यतोऽत्र मम विलम्बश्च भविष्यतीत्यपि ध्वनितम्। हे प्रतिवेश-वासिनि ! अद्य गुरुजनस्य किं सम्भावितं भावि कीदृशी सम्भावना भविष्यतीति न जाने। तेन गुरुजनोऽपि यदि विलम्बं नखक्षतञ्च दृष्ट्वा किञ्चिद्वदिष्यति तदा त्वामेव साक्षित्वेनो-पन्यस्य हे प्रतिवेशवासिनि ! तन्निकटे तदानीं मया यत् सम्भावितं तदेव मम ललाटे फलितमित्यपि वक्ष्यामीति स्वाभिप्रायश्च ध्वनितः। प्रेङ्खोलाश्चञ्चलाः कण्टकयुक्तलता इत्यनेन शीघ्रं गृहागमनसमये मम कण्टकक्षतं भविष्यतीत्यपि विज्ञापितम्। अत्र भावी यः श्रीकृष्णसङ्गमस्तस्य स्थगनं सम्वरणम्।

---

व्यङ्ग्यमप्रधानमेव सत् चमत्कारकारि। एतच्च कर्णपूरमते मध्यममपि शब्दार्थवैचित्र्येण कदाचिदुत्तमं जायते—यथा तद्‌दुदाहृते शिञ्जितानि मन्द्रदामित्यादौ। मध्यमन्तु यत्र व्यङ्ग्य-चमत्कारासमानाधिकरणो वाच्यचमत्कारः। उत्तममध्यमाख्यं काव्यद्वयम् जगन्नाथमते-ऽलङ्कारप्रधानमेव। अधमन्तु यत्र शब्दचमत्कृतिमुपजीव्यैवार्थचमत्कृतिः कथमपि भासते। कर्णपूरस्तु एवम्विधस्थले अवरस्यापि काव्यस्य शब्दार्थचमत्कृतिमूलतया मध्यमत्वमिच्छ-तीति विद्मः। तद्‌दुदाहृताधमकाव्यं उज्जृम्भत्स्फूर्जैरित्यादि शब्दचित्रमेव, न तत् काव्य-तया उररीक्रियते ततोऽर्व्वाचीनेन सार्थकनाम्ना पण्डितराजेनेत्यस्माकमनुमानम्। प्रकाश-कृद्विद्याधराद्या उत्तममध्यमाधमभेदेन त्रिधा काव्यभागमिच्छन्ति। आनन्दवर्द्धन-विश्वनाथादिमते ध्वनिगुणीभूतव्यङ्ग्ये उभे एव काव्ये, नेतरत्। महिमभट्टादयस्तु व्यङ्ग्य-चारुत्वाचारुत्वकृतविभागसरणिं द्राक् नाद्रियन्ते यदाह महिमाऽतो महिमा स्वयमेव.—

यदि काव्ये गुणीभूतव्यङ्ग्येऽपीष्टैव चारुता।
प्रकर्षशालिनो तर्हि वृथैं एवादरो ध्वनौ ॥

(ठ) श्लोकोऽयं कर्णाट रस्यप्राचीनस्त्रीकवेः विज्जकायाः 'दृष्टिं हे प्रतिवेशिनि !

मध्यमं यथा—

उत्तमस्य पुरुषस्य वनान्तः सत्रमालि! कुसुमाय गतासीः।
आययुर्मधुकरास्तव पश्चाद्दुःशकः परिमलो हि वरीतुम्॥ ५

Amarakosa—Vanausadhivarga.

अत्र 'पुन्नागे पुरुषस्तुङ्गः केशर' इत्यादिनोत्तमपुरुषस्य प्रकृष्टपुन्नागस्य पक्षे पुरुषोत्तमस्य श्रीकृष्णस्यैवेति व्यङ्ग्यमेव स्फुटम्। (ड)

अवरं यथा—

ऊर्ज्जत्स्फूर्ज्जगर्ज्जनैर्व्वारिवाहाः प्रोद्यद्विद्युद्दामविद्योतिताशाः।
अद्रावद्रौ विद्रुता द्राघयन्ते दन्तिभ्रान्त्या सिंहसङ्घप्रकोपान्॥ ६। (ढ)

अत्र केवलं शब्दवैचित्र्याद्ध्वनेर्निस्यन्दभावाच्चावरत्वम्।

ध्वनेर्ध्वन्यन्तरोद्गारे उत्तमोत्तमत्वं यथा—

यातासि स्वयमेव रत्नपदकस्यान्वेषणार्थं वना-
दायातासि चिरेण कोमलतनुः क्लिष्टासि हा मत्कृते।

उत्तमस्य श्रेष्ठस्य नागकेशर इति प्रसिद्धस्य पुन्नागस्य वनमध्ये पुष्पार्थं त्वं गतासीः। भ्रमरास्तव पश्चादाययुः। यतो हि निश्चितम् पुन्नागस्य परिमलस्त्वया सम्वरीतुं दुःशकः। श्रीकृष्णपक्षे त्वदङ्गस्थः श्रीकृष्णस्य परिमलः सम्वरीतुं दुःशकः। अत्र श्लेषप्राप्तत्वेन ध्वनेर्मध्यमत्वम्।

अवरमिति—ऊर्ज्जन् वलवान् स्फूर्ज्ज आटोपो यत्र तथाभूतैर्गर्ज्जनैः करणैर्व्वारिवाहा मेघा अद्रावद्रौ प्रतिपर्व्वते विद्रुता धावन्तः सन्तः दन्तिभ्रान्त्या श्यामाकारा एते हस्तिनः प्रतिपर्व्वते भ्रमन्तीति हस्तिभ्रमेण सिंहसमूहस्य कोपान् द्राघयन्ते दीर्घान् कुर्व्वन्ति दीर्घशब्दस्य द्राघादेशः। कथम्भूताः? प्रकर्षेणोद्यन्ती या विद्युन्माला तया प्रकाशिता आशा दिक् यैः।

---

चरणमिहाप्यस्मद्गृहे दास्यसी'त्यादि 'नीरन्ध्रास्तनुमालिखन्तु जरटच्छेदा नलग्रन्थय' इत्यन्त' सन्दर्भरत्नमनुसृत्य कृतः। उभयत्रापि एक एव वस्तुध्वनिस्तेन च ध्वनिकाव्यत्वम्।

(ड) अगूढ़गुणीभूतव्यङ्गतया मध्यमं काव्यमेतत्। 'अर्थो गिरामपिहितः पिहितश्च कश्चित् सौभाग्यमेती'ति वचनेन स्फुटव्यङ्ग्यतया नात्र चमत्कार इति वोध्यम्।

(ढ) द्राघयन्त इत्यात्मनेपदप्रयोगः 'आत्मनेपदमिच्छन्ति परस्मैपदिनां क्वचिदि'त्यादिना समाधेयः। अत्रानुप्रासप्रकर्षवशात् शब्दवैचित्र्यं जायते। मधुमङ्गलवाक्यमेतदिति साहित्य-कौमुदीटीकायां कृष्णानन्दिन्याख्यायां निर्दिष्टम्।

श्वासो दीर्घतरः सकण्टकपदं वक्षो मुखं नीरसं

का ते क्रीरसमञ्जसा सखि ! गतिर्दूरे रहः सुभ्रुवाम् (14) * ॥ ७ (ण)

अत्र त्वं तदानयनार्थं न गतासि, अपि तूपभोगार्थमेवेति ध्वनिरेकः। अन्योऽपि वक्तृप्रकृतिप्रकरणवैशिष्ट्यात् प्रतिभासते। तथाहि प्रकरणन्तावत् प्रियसखीमिमां श्रीकृष्णेन सह सङ्गमयितुं तेनैव सह श्रीराधया प्रागेव युक्तिः कृता, यदासौ मया प्रहीयते तदास्याः सङ्गः करणीय इति। पश्चात्तथा समागतायान्तस्यां तामपराद्धां कर्त्तुं (15) तस्याः परीहासावहित्थासूयादि-भावशावल्यं, सख्याश्च क्रीसाध्वसकोपादिभावशावल्यमिति वहव एव ध्वनेः पल्लवाः। तेन ध्वनेर्ध्वन्यन्तरोद्गारः, अत एवम्बिधस्थले उत्तमोत्तमत्वं ज्ञेयम्।

शब्दार्थवैचित्र्येणोत्तमोत्तमत्वं यथा—

नवजलधरधामा कोटिकामावतारः

प्रणयरसयशोरः श्रीयशोदाकिशोरः।

अरुणदरुणदीर्घापाङ्गभङ्ग्या कुरङ्गी-

रिव निखिलकृशाङ्गी रङ्गिणि ! त्वं क्व यासि ॥ ८। (त)

काचित् यूथेश्वरी स्वसखीं श्रीकृष्णसम्भुक्तां कर्त्तुं स्वकण्ठस्थितपदकानयनमिषेण कुञ्जमध्ये प्रेषितां तत्र स्थितेन श्रीकृष्णेन सह सम्भोगानन्तरं स्वनिकटे आगत्य लज्जयाधोमुखीं तां प्रति सपरीहासमाह—यातेति। वक्षः सकण्टकपदं कण्टकचिह्नेन सह वर्त्तमानम्। हे सखि ! रहः एकान्ते दूरे सुभ्रुवां गतिरसमञ्जसा भवति। अतस्त्वयाद्यावसमञ्जसं कृतमधुना पश्चात्तापे किं भविष्यति ?

त्वमिति—तदानयनार्थं पदकानयनार्थं न, किन्तु श्रीकृष्णेन सहोपभोगार्थम्। अन्योऽपि ध्वनिः वक्तृवैशिष्ट्यात् प्रकृतिवैशिष्ट्यात् प्रकरणवैशिष्ट्यात् प्रतिभासते। सख्या

(ण) श्लोकोऽयं 'निःशेषच्युतचन्दनं स्तनतट'मित्यादि 'वापीं स्नातुमितो गतासि न पुनस्तस्याधमस्यान्तिक'मित्यन्तं बहुशः ध्वनिकारादिप्राचीनालङ्कारिकैः नितरामादृतममरुककवेः सुभाषितमुपजीव्य रचितः। सुष्ठुक्तं खलु नैषधकारेण 'विजृम्भितं यस्य किल ध्वनेरिदं विदग्धनारीवदनं तदाकर' इति।

(त) एवमादीनि पद्यानि सार्थकनाम्नः श्रीश्रीकविकर्णपूरस्य सुललितसरस्वती-निस्यन्दभूतानि। यदि रसानुगुणवर्णरचितार्थगाम्भीर्यसहितवाक्प्रपञ्च एवादरमर्हति,

(14) 'क्रीरमवक्षिप्तौ हि भवति प्रेमा सखि स्वैरिणः' इति (क) पुस्तके मूलभ्रमः पाठः।

(15) 'तामपराद्धीकर्त्तु'मिति (ख) (घ) (ङ) पुस्तकेषु पाठः।

अत्र शब्दार्थवैचित्र्येण वाच्यादतिशयिना ध्वनिना चोत्तमोत्तमत्वम् ।

ध्वनिस्तु—हे रङ्गिणि ! कुतुकिनि ! त्वमतिप्रसिद्धा गुणवती । क्व यासि ? तत्रैव याहि यत्र श्रीयशोदाकिशोरः निखिलकृशाङ्गीररुणत् ररोध । कया ? अरुणदीर्घापाङ्गभङ्ग्या । कुरङ्गीरिवेत्युपमालङ्कारेणापाङ्गभङ्ग्या वागुरात्वेन रूपकालङ्कारो ध्वनितः । वस्तुतस्तु क्व यासीति तत्र किं यासि, मा याहीति(16) लक्ष्योऽर्थः, कोटिकामावतार इति प्रलोभनद्वारा तत्रैव याहीति व्यङ्ग्योऽर्थः । अत्राविश्वासञ्च मा कार्षीः, यतः प्रणयरसयशोरः प्रणयरसयशःप्रदः । नवजलधरधामेति स्वधाम्नैव सर्व्वतस्तिमिरमुत्पाद्य निःशङ्कमलक्ष्यो भूत्वा विहरति । अतो लोकभीतिरपि न कार्य्येति बहव एव ध्वनेः पल्लवाः ।

शब्दार्थवैचित्र्ये मध्यमस्योत्तमत्वं यथा—

शिक्षितानि सुहृदां न गृहीतान्युचितासि निजगर्व्वरसेन ।
दीक्षितः कुलवधूवधयागे वीक्षितः सखि ! स नन्दकुमारः ॥ ८

अत्र ध्वनेर्मध्यमत्वेऽपि शब्दार्थवैचित्र्यपुष्ट्या उत्तमत्वमेव ।

सह प्रेमानुबन्धप्रकरणवशात् राधयैव कृष्णेन सह प्राक् युक्तिः कृतेति ध्वनिः । ध्वनेर्ध्वन्यन्तरं यथा समागतायामिति । परीहासः स्पष्टः । अवहित्था श्रीकृष्णेन सह सम्वादरूपाकारगोपनम् । सुभ्रुवां दूरे गतिरसमञ्जसेत्यनेनासूया, इत्यादि भावशावल्यं यूथेश्वर्य्याः । सख्यास्तु साध्वसं भयं, एताद्दृशमदिड्मने त्वमेव हेतुरिति प्रणयकोपश्च ।

नवीनमेघस्येव धाम कान्तिर्यस्य, तथा कोटिकन्दर्पा अवतारा यस्य, सौन्दर्य्यातिशयत्वेन तेषामवतारीत्यर्थः । प्रणयरसरूपं यशो राति ददाति, एवम्भूतो यशोदाकिशोरोऽरुणापाङ्गभङ्ग्या निखिलकृशाङ्गीररुणत् ररोध—तत्र दृष्टान्तः कुरङ्गीर्हरिणीरिव । तस्मात् हे रङ्गिणि । त्वं कुत्र यासि ? तत्र मा याहीति लक्ष्यार्थस्य वैचित्र्यम् । शब्दवैचित्र्यन्तु स्पष्टमेव । एवं वाच्यार्थात् ध्वन्यर्थस्योत्कर्षेणोत्तमत्वम् । हे रङ्गिणी त्यस्य व्याख्या हे कुतुकिनि । अपाङ्गभङ्गा वागुरात्वं मृगबन्धनीत्वम् ।

---

तर्हि स एवात्रादाहृत श्लोके प्रकटो नितरामुपभोग्यश्च । माधुर्य्यव्यञ्जकैः र-ण-य-म-वहुलैरसंयुक्तवर्णैस्तथा ङ्-नि-रू-पेरन्त्यप्राणसंयुक्ताक्षरैश्च गुम्फिता सानुप्रासा रचनेयं ललितात्मिका ।

---

(16) 'मा यासी'ति '(क)' '(ख)' '(घ)' '(च)' (क) पुस्तकेषु अशुद्धः पाठः ।

शब्दार्थवैचित्र्येऽवरस्य मध्यमत्वं यथा—

काननञ्जयति यत्र सदा सत् का न नन्दति यदेत्य सुखश्रीः।
का न नन्दतनये प्रणयोत्का काननं धयति वा न हि तस्य॥ १० (थ)

अत्र ध्वनेर्निस्पन्दतायामवरत्वेऽपि मध्यमत्वम्।

**यशःप्रभृत्येव फलं नास्य केवलमिष्यते।**
**निर्म्माणकाले श्रीकृष्णगुणलावण्यकेलिषु॥**
**चित्तस्याभिनिवेशेन सान्द्रानन्दलयस्तु यः।**
**स एव परमो लाभः स्वादकानान्तथैव सः (द)॥ ८ का**

शिक्षितानीति॥ हे सखि। नन्दनन्दनस्य दर्शनं कदापि मा कुर्व्विति शिक्षितानि न गृहीतानि। यतोऽहं कुलाङ्गना, मच्चित्तस्य चाञ्चल्यं कः कर्त्तुं शक्नोतीति निजगर्व्वरसेनोच्चिता सिक्तासि। यः कुलाङ्गनावधे दीक्षितः स नन्दकुमारस्त्वयेक्षितः। अत्रास्माकं शतसहस्रशिक्षितान्यप्यनादृत्य अत्यौत्सुक्येन त्वया तस्य दर्शनं कृतं, अधुना तु तेन सह मिलनं विना त्वत्प्राणा न स्थास्यन्ति। यतः कुलाङ्गनावधे दीक्षितः, अतस्त्वत्प्राणरक्षार्थमस्माभिः सखीभिरेव तेन सह मिलने यतनीयमिति यथेश्वरीं प्रति सखीनामाश्वासो ध्वनिः। अस्य ध्वनेर्गूढ़त्वाभावेन मध्यमत्वम्। यद्वात्र सतीः कुलवतीरपि कृष्णो मोहयितुं क्षम इति ध्वनिः। अस्य वाच्यादतिशयित्वं नास्तीति मध्यमत्वम्।

काननमिति। यत्र सत् काननं वृन्दावनञ्जयति, यत् काननमेत्य प्राप्य का सुखश्रीः सुखसम्पत्तिर्न्न नन्दति न समृद्धा भवति। का सुन्दरी श्रीकृष्णे प्रणयार्थं नोत्का नोत्कण्ठिता। धैर्य्यलज्जावती का कुलाङ्गना तस्य कृष्णस्याननं न धयति न पानं करोति? सुखसम्पत्तिश्च (17) रमणमेवेति ध्वनिः, तस्माद्वाच्यार्थ एव चमत्कारी।

---

(थ) अत्र चतुर्ष्वेव पादेष्वादियमकम्। तेन च शब्दवैचित्र्यकृतश्चमत्कारः। सुखसम्पत्तौ रमणमेवेति टीकाकृदुक्तदिशा व्यङ्ग्यार्थस्य तथा न यथा वाच्यार्थस्य वैचित्र्यम्। तथापि नात्रावरत्वमिति।

(द) सत्काव्यकृतः प्रकृतकाव्यतत्त्वग्राहिणश्च काव्य एव तत्त्वत अखण्डप्रकाशानन्दचिन्मयस्य ब्रह्मास्वादसहोदरस्य रसस्यानुभवः। उक्तं हि प्राचा भामहेन—

धर्म्मार्थकाममोक्षेषु वैचक्षण्यं कलासु च।
करोति कीर्त्तिं प्रीतिञ्च साधुकाव्यनिवन्धनम् (निषेवणम्)॥

---

(17) 'सुखसम्पत्तौ रमणमेवे'ति '(ग)' '(क)' पुस्तकयोः पाठः

Kavyaprakasa I. 'काव्यं यशसेऽर्थकृते' इत्यादीन्येव केवलं न फलानि, अपि तूक्तप्रकारः श्रीकृष्णगुणानुवादादिकृत आनन्दश्च ।

*॥ इत्यलङ्कारकौस्तुभे काव्यादिसामान्योद्देशो नाम प्रथमः किरणः ॥ *

---

'काव्यं यशसेऽर्थकृत' इति वदता काव्यप्रकाशकृता काव्यनिर्म्माणस्य फलं यशोऽर्थ-प्राप्त्यमङ्गलनिवृत्त्यादि फलमुक्तं, स्वमते तु तत्तत्फलस्य तुच्छत्वात् तत्तन्न मुख्यं फलम् । मुख्यफलन्तु निर्म्माणसमये श्रीकृष्णगुणलावण्यकेलिषु चित्तस्याभिनिवेशेन सान्द्रानन्दमुज्जनमेवेत्याह—यश इति । (18)

---

एवमपि काव्यमीमांसायाम् राजशेखरः—'पञ्चमी साहित्यविद्ये'ति यायावरीयः । सा हि चतसृणां (आन्वीक्षिक्यादीनाम्) अपि निस्यन्दः । याभिर्धर्म्मार्थौ यत् विद्यात्तत् विद्यानां विद्यात्वम्' इति । कालिदासभवभूत्यादिकृतप्रबन्धेषु मयूरभट्टबाणादिकृत-सूर्य्यशतकचण्डीशतकादौ ग्रन्थकृत्रूपसनातनजयदेवादिगौड़ीयवैष्णवाचार्य्याणां आनन्द-वृन्दावनपद्यावलीगीतगोविन्दादिकाव्यनिबन्धेषु भक्तिरसनिर्झरिणीप्रवाहस्य सान्द्रानन्द-मयस्य वा साक्षादेवोपलम्भः; प्रकृतकाव्यकृतिर्हि जगतो मातेव गङ्गेव च पापमभ्यस्य पुनाति वर्द्धयति च श्रेयांसि, मङ्गल्या च मनोहरा च भवति । एतमेव लक्ष्यमुद्दिश्य ध्वन्यालोककारेणोक्तम्—

या व्यापारवती रसान् रसयितुं काचित् कवीनां नवा
दृष्टिर्या परिनिष्ठितार्थविषयोन्मेषा च वैपश्चिती ।
ते द्वे अप्यवलम्ब्य विश्वमखिलं निर्व्वर्णयन्तो वयं
श्रान्ता नैव च लब्धमब्धिशयन ! त्वद्भक्तितुल्यं सुखम् ॥ इति

---

(18) 'समाप्तोऽयं प्रथमः किरण' इति किरणटीकाशेषेऽत्र दृश्यते सर्व्वेष्वेव पुस्तकेषु । एवं द्वितीय-किरणादौ

## द्वितीयः किरणः ।

अथ काव्यपुरुषस्य शरीरत्वेन निर्दिष्टयोः शब्दार्थयोः शब्दे निरूपित एवार्थनिरूपणमिति प्रथमतः शब्द एव निरूप्यते—

**आकाशस्य गुणः शब्दो वर्णध्वन्यात्मको द्विधा । ६ का**

वर्णात्मको ध्वन्यात्मकश्चेति द्विधा । यद्यपि वर्णा नित्यास्तथापि तदभिव्यक्तिः शरीरस्थवायुनैव भवति (क)। अत उक्तं 'तस्माद्भवति पवनप्रेरितो वर्णसङ्घः' (२ पृष्ठायाम् ) इति ।

नित्यत्वप्रकारश्च यथा—

**सच्चिदानन्दविभवात् सकलात् परमेश्वरात् ।**
**आसीच्छक्तिस्ततो नादस्तस्माद्बिन्दुसमुद्भवः ॥**
**नादो विन्दुश्च वीजञ्च स एव त्रिविधो मतः ।**
**भिद्यमानात् पराद्बिन्दोरुभयात्मा रवोऽभवत् ।**
**स रवः श्रुतिसम्पन्नः (1) शब्दब्रह्माभवत् परम् ॥ १० का**

वर्णध्वन्यात्मक इत्यस्य व्याख्या—वर्णात्मक इति। ननु वर्णानां नित्यत्वमते वर्णघटितकाव्ये कथं कविजन्यत्वव्यवहारस्तत्राह—यद्यपीति। अभिव्यक्तिरिति— तथाच नित्यसिद्धस्य वस्तुनः कविकृतप्राकट्यमेव, नतु वास्तवजन्यत्वमिति भावः। उक्तं प्रथमकिरणे।

(क) वर्णानां नित्यत्वविषये मीमांसकसिद्धान्तोऽनुकूल एव। वर्णा एव शब्दाः, शब्दाश्च नित्या इति तैरभ्युपगम्यते । एवमपि योगिनस्तेषां मतमत्र उपरिष्टाच्च उदाहृतमेतदर्थमेव। वर्णानां सावयवत्वं, उत्पन्नप्रध्वंसित्वादर्णानामनित्यत्वमिति तु तार्किकाः। 'न शब्दनित्यत्वं कार्य्यत्वप्रतीतेः' ( सांख्यसूत्र ५।५८ ) इति च दर्शनान्तरसिद्धान्तः। वैयाकरणैः प्रतिष्ठापिते स्फोटवादे नितरामास्थावन्त आलङ्कारिकाः 'यद्यपि नित्याः, तथापि कार्य्याः' इति महाभाष्योक्तदिशा नित्यानामपि वर्णानामभिव्यक्तिमिच्छन्ति। विस्तरस्तु वाक्यपदीयादिनिवन्धेषु द्रष्टव्यः। नित्याया अपि शक्तेरुत्पत्तिकथनमुपपद्यते—यथा सप्तशत्याम्—

(1) 'स' एव श्रुतो'ति केषाञ्चित् मुद्रितपुस्तके पाठः ,

सकलादिति मूर्त्तात्, नादो घोषः, तथा च 'प्राणेन घोषेण गुहां प्रविष्ट'

Bhagavatapurana. XI. 12.

इति। विन्दुः प्रणवः। स च वीजं (2) सर्व्ववर्ण-प्रभवत्वात्। तथाच—

Bhagavatapurana. XII. 6.

समाहितात्मनो ब्रह्मन् ब्रह्मणः परमेष्ठिनः।
हृद्याकाशादभून्नादो वृत्तिरोधाद्विभाव्यते।
ततोऽभूत्त्रिवृदोङ्कारो योऽव्यक्तप्रभवः स्वराट्॥

इत्यारभ्य—

ततोऽक्षरसमाम्नायमसृजद्भगवानजः!

सकलात्—कला अंशोऽवयवस्तत्सहितान्मूर्त्तादित्यर्थः। तथाच मूर्त्तात् सच्चिदानन्द-विभवात् (3) मूर्त्तसच्चिदानन्दस्वरूपात् परमेश्वरादित्यर्थः। तस्मात् स्वरूपभूता-च्चिच्छक्तिः पृथग् बभूव। ततश्चिच्छक्तेः सकाशात् परमेश्वरस्वरूपो नादः पृथग् बभूव। नादात् स्वरूपभूतो विन्दुरपि पृथग् बभूव। स एव विन्दुर्व्वर्णानां प्राकट्ये वीजत्वाद्वीज-रूपश्च। स एव परमेश्वर एव भिद्यमानात् पृथग्भूतात् परात् परमेश्वरस्वरूपान्नादा-द्विन्दुः, विन्दोः सकाशादुभयात्मा वर्णध्वन्यात्मा रवः शब्दोऽभवत्। स उभयात्मा रव एव सर्व्वेषां श्रुतौ कर्णेन्द्रिये सम्पन्नः सन् प्रत्यक्षगोचरो भवति, नतु नादविन्दू। परमेश्वर एव विन्दुद्वारा वर्णात्मको भवति, इत्युभयात्मा शब्दः परं ब्रह्माभवत्। नादशब्दस्य घोषवाचित्व ईश्वरस्वरूपत्वे च प्रमाणमेकादशस्कन्धोक्तपद्यमाह—'स एव जीवो विवर-प्रसूतिः प्राणेन घोषेण गुहां प्रविष्ट' इति। अस्यार्थः—जीवयतीति जीवो परमेश्वरः विवरेषु आधारादिचक्रेषु प्रसूतिरिव प्रसूतिरभिव्यक्तिर्यस्य सः। तामेवाभिव्यक्तिमाह—घोषेणेति। घोषेण पराख्येन नादवता प्राणेन सह गुहामाधारचक्रं प्रविष्ट इत्यर्थः। स च प्रणवः सर्व्ववर्णानां प्रादुर्भावे प्रयोजकत्वाद्वीजम्। प्रणव एव वर्णात्मकः सन्

---

देवानां कार्य्यसिद्ध्यर्थमाविर्भवति सा यदा।
उत्पन्नेति तदा लोके सा नित्याप्यभिधीयते॥

वैशेषिकमते ध्वनिरेव शब्दः, स च वर्णावर्णात्मकत्वेन द्विविधः। तदभिव्यक्तिस्तु कार्य्यमित्यभिन्नः स्थूलतः सिद्धान्त इत्यास्तां तावद्विस्तरः।

(ख) तन्मात्रवृत्तिगुणस्येति—नित्यद्रव्यमात्रवृत्तिगुणस्य। नित्यद्रव्यमात्रवृत्तिगुणत्वन्तु नित्यद्रव्येतरावृत्तित्वे सति नित्यद्रव्यवृत्तिगुणत्वम्। तथाच शब्दस्य नित्यद्रव्यभिन्ने-ऽनित्यद्रव्ये पृथिव्यादाववृत्तेराकाशरूपे नित्यद्रव्ये वृत्तेश्च नित्यद्रव्यमात्रवृत्तिगुणत्व-

---

(2) 'स च वीजञ्चे'ति (क) (ख) (ङ) पुस्तकेषु पाठः।

(3) 'सच्चिदानन्दरूपविभवादि'ति (ख) (ङ) पुस्तकयोः पाठः।

इति श्रीभागवतम्। तेन नादस्य नित्यत्वात्तदात्मकस्योङ्कारस्य च नित्यत्वं, स्वराड़िति पूर्व्वोक्तेः। तदात्मकस्य वर्णसमूहस्य च तथा। आकाशस्य नित्यद्रव्यत्वे तद्गुणस्यापि नित्यत्वं, गुणाश्रयो द्रव्यमिति गुणगुणिनोः समवाय-सम्बन्धात् (ग)। तेन पवनप्रेरणाप्रेरणवशादेवाभिव्यक्त्यनभिव्यक्ती। वस्तुतस्तु नित्यतैव तेषामित्ययमान्तरस्फोटः। उक्तञ्च 'शृणोति य इमं स्फोट'मिति द्वादशस्कन्धे। XII. 6.

प्रकटो भवतीत्यत्र प्रमाणं द्वादशस्कन्धस्य पद्यद्वयमाह- तथा चेति। अस्यार्थो यथा— चतुर्म्मुखब्रह्मणो हृदि य आकाशस्तस्मान्नादोऽभूत्। यः कर्णपुटपिधानेन श्रोत्रवृत्ति-निरोधादस्मदादिष्वपि विभाव्यते वितर्क्यते। ततोऽभूदिति—त्रिवृत् त्रिमात्रः अकारो-कारमकारात्मक ओंकारः। अव्यक्तात् परमेश्वरात् प्रभवः प्राकट्यं यस्य सः। स्वराट् स्वतन्त्र एव हृदि प्रकाशमानः। ततोऽक्षरेत्यस्यार्थो यथा—ततस्त्रिवृदोङ्कारादक्षराणां समा-म्नायं समाहारं भगवानसृजत्। तदात्मकस्य ओङ्कारात्मकस्य वर्णसमूहस्य तथा नित्यत्वम्। शब्दस्य नित्यत्वे प्रमाणमुक्त्वा युक्तिमाह—आकाशस्येति। तद्गुणस्य तन्मात्रवृत्तिगुणस्य— तथाच यो गुणः नित्यद्रव्यमात्रे वर्त्तते स तु नित्यो भवति। अतएवाकाशवृत्तिद्वित्वबहुत्वादि-संख्यानां तद्वृत्तिसंयोगानाञ्चानित्यत्वेऽपि न क्षतिः, तेषामाकाशमात्रवृत्तित्वाभावात्। एतन्मते रागद्वेषेच्छाप्रयत्नादयो नात्मनो गुणाः, अपि त्वन्तःकरणगुणा एव। परमाणवोऽपि तत्त्वरेणोः सकाशान्नातिरिक्ताः। एवं पञ्चमस्कन्धे परमाणूनामज्ञानकल्पितत्वेनानित्य-त्वमुक्तम् (4)। एवम् नित्यदिक्कालावपि न परमेश्वरातिरिक्ताविति बोध्यम्। गुणा-श्रयो द्रव्यमिति द्रव्यसामान्यलक्षणम्। गुणगुणिनोः शब्दाकाशयोः समवायसम्बन्धा-न्नित्यगुणाश्रयो नित्यद्रव्यस्य लक्षणमिति बोध्यम्। तेन शब्दानां नित्यत्वेन हेतुना

मयाहृतम्। आकाशवृत्तिद्वित्वबहुत्वादिसंख्यानामाकाशवृत्तिसंयोगानाञ्च विशेष्य-दलसत्त्वेऽपि सत्यन्तदलाभावान्न नित्यद्रव्यमात्रवृत्तिगुणत्वम्। आकाशमात्रवृत्तित्वा-भावादिति—आकाशेतरावृत्तित्वे सति आकाशवृत्तित्वस्याभावात्। तथाच संख्यादीना-माकाशभिन्ने पृथिव्यादावपि वर्त्तमानत्वात् सत्यन्तदलाभावादाकाशमात्रवृत्तित्वाभावः।

(ग) आकाशस्य नित्यद्रव्यत्वमुपरिष्टाद्दर्शनात् ब्रह्मलिङ्गादेवावसेयम्। 'आकाशस्त-ल्लिङ्गात् (१।१।२२), 'आकाशे चाविशेषात्' (२।२।२०) इति भगवद्बादरायणकृतब्रह्मसूत्रयो-स्तत्र च भगवत्पादभाष्यस्याशयात् सुप्रकटमेव तत्।

घटादीनां कपालादौ द्रव्येषु गुणकर्म्मणोः। तेषु जातेश्च सम्बन्धः समवायः प्रकीर्त्तितः॥

इति समवायलक्षणतो द्रव्यस्य नित्यत्वे तद्गुणस्य नित्यत्वं भवतीत्यखिलमवदातम्।

(4) '......कल्पितत्वेनानित्यत्वमप्युक्त'मिति (ख) (ग) (च) (छ) पुस्तकेषु पाठो दृश्यते।

Vide Punyaraja-Vakyapadiya-prakasa I. 48.

अतएवैके आचार्य्याः शब्दार्थमान्तरं स्फोटं शब्दब्रह्मेत्याहुः । यथा 'निरंश एवाभिन्नो नित्यो बोधस्वभावः शब्दार्थमय आन्तरः स्फोट' (ङ) इति ।

प्रयोगश्च—

Yogavasistha-Ramayana—Nirvana. II. 42.?

जातान्धमूकवधिरस्यान्तः स्वीयपरास्त्वपि ।
स्ववाक्शब्दार्थयोर्व्वोध आन्तरस्फोट एव सः ॥

तेषामुत्पत्तिनाशौ पवनप्रेरणाप्रेरणवशादभिव्यक्त्यनभिव्यक्तिरूपावेव । वस्तुतस्त्विति—वस्तुतस्तु तेषां वर्णानां नित्यता एवेति हेतोरन्तरुपलभ्यमानोऽयं नित्यो वर्ण आन्तरः स्फोट इति प्राचां प्रवादोऽपि सङ्गच्छते । ननु स्फोटशब्दस्यादृष्टाश्रुतत्वेनाप्रामाण्यमिति न शङ्कनीयं, यतो द्वादशस्कन्धे स्फोटशब्दस्य श्रवणमस्त्येवेत्याह—उक्तञ्चेति । अस्यार्थो यथा—ननु कोऽसौ परमेश्वरस्तत्राह—यः परमेश्वर इममोङ्कारमन्तःकरणमात्रवेद्यतया आन्तरं स्फोटं शृणोति । (घ)

---

(घ) अत्रार्थः स्फुटीक्रियते समग्रमूलश्लोकोदाहरणेन, तत्र श्रीश्रीधरस्वामिकृतटीकांशेन च । श्लोकस्त्वेवम्—

शृणोति य इमं स्फोटं सुप्तश्रोत्रे च शून्यदृक् । येन वाग्व्यज्यते यस्य व्यक्तिराकाश आत्मनः ॥

श्रीधरस्वामिचरणास्त्वेवम्—...ननु जीव एव तं शृणोतु, नेत्याह । सुप्तश्रोत्रे कर्णपिधानादिना अवृत्तिकेऽपि श्रोत्रे सति । जीवस्तु करणाधीनज्ञानत्वान्न तदा श्रोता; तदुपलब्धिस्तु तस्य परमात्मद्वारिकैवेति भावः ॥

(ङ) स्फोटाख्यो निरवयवो नित्यः शब्दो जगन्निदानं ब्रह्मेव । एवमपि हरिराह ब्रह्मकाण्डे—

अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम् । विवर्त्ततेऽर्थभावेन प्रक्रिया जगतो यतः ॥ इति

स्फोटस्य निरंशत्वाभिन्नत्वप्रकारस्तत्रैव दर्शितो यथा—

नादस्य क्रमजातत्वान्न पूर्व्वो नापरश्च सः । अक्रमः क्रमरूपेण भेदवानिव गृह्यते ॥ इति

शृणोति य इममित्यादि भागवतश्लोकेन स्फोटात्मकशब्दश्रवणस्यात्मलिङ्गत्वोक्ता । आन्तरः स्फोट आन्तरः शब्दः । स च हृदयगो बुद्धियुक् च भवति । एतदेवाभिप्रेत्योक्तं 'अथवा प्रतीतपदार्थक' इत्यादि व्याख्यानावसरे भाष्यप्रदीपोद्द्योते नागेशेन—ध्वनिपदेनात्र वैखरी, स्फोटपदेनाभिव्यक्तकत्वादिको मध्यमावस्थ आन्तरः शब्द उच्यते । ब्रह्मतत्वमेव हि शब्दरूपतया प्रतिभाति' इति । तदेवं वराटिकान्वेषणाय प्रवृत्तश्चिन्तामणिं लब्धवानिति शब्दविचाराय प्रवृत्तः सन् प्रसङ्गाद्द्वैते ब्रह्मण्यपि व्युत्पाद्यतामित्यादि च शब्दकौस्तुभे दीक्षितः । नादध्वनेरप्यत्र परामर्शः । तथाच स्फोटसिद्धिन्यायविचारे—

तत्र केचन नादानां स्फोटाभिन्नत्वमूचिरे । असंवेद्यत्वमितरे स्वातन्त्र्यं मेनिरे परे ॥ इति

वैयाकरणास्तु वहिःस्फोटमाहुः (च)। तत्र पूर्व्वपूर्व्ववर्णोच्चारणाभिव्यक्त-तत्तत्संस्कारसहकृतचरमवर्णसंस्कारनिष्ठपदजन्यैकपदार्थप्रत्यायकता पदस्फोटः।

अतएवैके आचार्य्याः शब्दः अर्थश्च शब्दार्थं तदन्तरेवोपलभ्यमानश्चेदान्तरं स्फोटम्। तत्र शब्दस्फोटं शब्दब्रह्मेत्याहुः। तत्र दृष्टान्तो यथेति—निरंशः न कस्याप्यंशः अतएवाभिन्न एक इत्यर्थः नित्यो ज्ञानस्वरूपश्च एवम्भूत ओंकारः शब्दार्थवस्तुमात्राणां प्रादुर्भावकत्वात् शब्दार्थमयः। एतन्मते प्रणवादेव वेदादीनां सर्व्वेषां सृष्टिरिति बोध्यम्। अन्तरेवोपलभ्यमानत्वात् स प्रणव आन्तरः स्फोटोऽव्यक्त इत्यर्थः। प्रयोग उदाहरणं यथा—जन्मान्धमूकवधिरस्य पुरुषस्य चक्षुःकर्णवागिन्द्रियानामभावात् स्वीयान्तःकरण एव स्वत एव शब्दार्थयोः परामर्षे जाते सति स्वीयवाक्यस्य शब्दार्थस्य चान्तरेव बोधो भवतीत्यान्तरः स्फोट एव।

अथ घटेन जलमाहरेति वाक्यश्रवणं विना घटकरणकजलाहरणस्य शाब्दबोध-वारणाय प्रत्येकवर्णज्ञानसहितचरमवर्णज्ञानत्वेन (5) कारणता वक्तव्या। एवं सति द्वितीयवर्णस्य ज्ञानकाले प्रथमवर्णज्ञानस्य नाशादेवं क्रमेण चरमवर्णज्ञानकाले पूर्व्व-पूर्व्ववर्णज्ञानानां नाशात् कथं शाब्दबोधः? तथा विशृङ्खलतत्तद्वर्णज्ञानात्तादृशज्ञानजन्य-संस्काराद्वा शाब्दबोधापत्तिश्च इत्यतोऽत्र वैयाकरणानां समाधानं यथा—घटकरणक-जलाहरणस्य शाब्दबोधं प्रति स्फोट एव कारणं, नतु तत्तद्वर्णज्ञानानां तादृश-ज्ञानजन्यसंस्काराणां वा कारणत्वम्। स्फोटत्वन्तु यादृशयादृशानुपूर्व्वीविशिष्टचरमवर्ण-ज्ञानानन्तरं घटकरणकजलाहरणप्रतीतिर्ज्जायते तादृशचरमवर्णज्ञाननिष्ठोऽसाधारण-

---

(च) वैयाकरणा भाष्यकृदादयः। यदाह स्फुटमेव भाष्यकारस्तपरसूत्रभाष्येऽभिव्यक्तप्रप-कारकत्वेन ध्वनेः स्फोटरूपशब्दगुणत्वं प्रतिपादयितुकामः—'एवं तर्हि स्फोटः शब्दः। ध्वनिः शब्दगुणः। कथम्? भेर्य्याघातवदि'ति। तत्र कैयटः—एवं तर्हीति पदाभिव्यङ्ग्यो वर्णस्फोटोऽत्र विवक्षितः। स च नित्यः। एतच्च येनोच्चारितेनेत्यत्र पस्पशायां विचारितमिति तत एव बोद्धव्यम्। नागेशस्त्वित्थं विशदयामास—अनेदं बोध्यम्—एक एव स्फोटस्तत्तद्वर्णैस्तत्तद्रूपेणाभिव्यज्यते। ध्वनिः शब्दगुण इति भाष्ये ध्वनिशब्देन वर्णो वैकृतध्वनिश्च।.........वैकृतध्वनिस्फोटयोः प्रमाणमाह—तदुक्तं हरिणा,—

स्फोटस्य ग्रहणे हेतुः प्राकृतो ध्वनिरिष्यते।

स्थितिभेदे निमित्तत्वं वैकृतं प्रतिपद्यते॥ इति

'वस्तुतस्तु वाचकता स्फोटैकनिष्ठा। तत्र चाष्टौ पक्षाः—वर्णस्फोटः पदस्फोटः

---

(5) 'जलाहरणस्य बोधाभावात् शाब्दबोधकरणाय प्रत्येकवर्णस्यार्थस्य च ज्ञानत्वेन' इति '(ग)' '(क)' पुस्तकयोः पाठः।

एवं पूर्व्वपूर्वपदोच्चारणाभिव्यक्ततत्तत्संस्कारसहकृतचरमपदसंस्कारनिष्ठवाक्यजन्यैकवाक्यार्थप्रत्यायकता वाक्यस्फोटः। एतदुभयलक्षणं शब्दब्रह्म।

*Vide* citation by Punyaraja-Vakyapadiyaprakasa—II. 29.

तथाच 'एक एव नित्यः पदाभिव्यङ्ग्यो वाक्याभिव्यङ्ग्योऽखण्डो व्यक्तिस्फोटो जातिस्फोटो बहौरूप''

जातिविशेषः। स तु घटकरणजलाहरणविषयकशाब्दबुद्धित्वावच्छिन्नजन्यतानिरूपितजनकतावच्छेदकतया सिद्धः न च न्यायमतसिद्धतादृशानुपूर्व्व्यवच्छिन्न (6)—चरमवर्णज्ञानस्यैव कारणत्वं कथं न स्वीक्रियते, अलं स्फोटरूपस्वतन्त्रधर्म्मस्वीकारेणेति वाच्यम्,—आनुपूर्व्वीघटितधर्म्मस्य कारणतावच्छेदकत्वे महागौरवात्। तथाहि घोच्चारणाव्यवहितोत्तरटोच्चारणघटितानुपूर्व्वीशरीरे तदव्यवहितोत्तरत्वं नाम तत्क्षणध्वंसाधिकरणक्षणध्वंसानधिकरणत्वे सति तत्क्षणध्वंसाधिकरणत्वरूपं, एतादृशानन्ताव्यवहितोत्तरत्वघटितगुरुधर्म्मस्य कारणतावच्छेदकत्वप्रसङ्गः। एवं घटेन जलमाहरेति, जलं घटेनाहरेति द्विविधानुपूर्व्व्यवच्छिन्नस्य कारणत्वे परस्परव्यभिचारवारणाय कारणवैशिष्ट्यमपि कार्य्यतावच्छेदके निवेशनीयमिति कार्य्यतावच्छेदकेऽपि महागौरवप्रसङ्गः। यन्मते साङ्कर्य्यं न जातिबाधकं तन्मतमालम्ब्योक्तम्—अतएव वैयाकरणमतमेव साधीयः, अतस्तन्मतमुपन्यस्यति—

वैयाकरणास्त्विति—तत्र वैयाकरणमते पूर्व्वपूर्व्ववर्णोच्चारणेनाभिव्यक्तस्तत्तदुच्चारणसंस्कारः, तादृशसंस्कारोऽत्र पूर्व्वपूर्व्ववर्णोच्चारणाव्यवहितोत्तरघटितानुपूर्व्वीत्यर्थः। तथाच तादृशानुपूर्व्वीविशिष्टचरमवर्णस्य संस्कारश्चरमवर्णस्य ज्ञानम्। तन्निष्ठपदजन्यैकपदार्थप्रत्यायकतेत्यस्य समुदायार्थो यथा—तादृशानुपूर्व्वीविशिष्टचरमवर्णज्ञाननिष्ठपदजन्यपदार्थबोधजनकतावच्छेदकधर्म्मः पदस्फोटत्वम्। स्फोटत्वविशिष्टपदज्ञानमेव पदस्फोटः। वाक्यस्फोटस्तु तत्तदवान्तरपदस्फोटसहितमहास्फोटस्वरूप इत्याह—एवमिति। एतदुभयलक्षणं पदस्फोटवाक्यस्फोटलक्षणं शब्दब्रह्मैव।

तथा चेति—व्यक्तिः स्फोटः भावप्रधाननिर्द्देशात् स्फोटत्वमित्यर्थः। तथाच चरम-

---

वाक्यस्फोटः, अखण्डपदस्फोटस्तादृक्वाक्यस्फोट इत्थं पञ्च व्यक्तिस्फोटाः, वर्णपदवाक्यभेदेन त्रिविधो जातिस्फोट इति, इत्यादिको विचारः शब्दकौस्तुभे द्रष्टव्यः। समासेनोक्ता चात्र वाचोयुक्तिरित्थं शब्दार्थरत्ने तारानाथतर्कवाचस्पतिपादैः—'तत्र वर्णानां प्रत्युच्चारणमन्यथा प्रतीयमानतया अनित्यत्वेन आशुविनाशिनाञ्च तेषां मेलनासम्भवेन तत्समुदायस्यापि सम्बन्धित्वाभावेन प्रत्येकं वर्णेषु वृत्तौ व्यभिचारेण च पूर्व्वपूर्व्ववर्णानुभवाहितसंस्कारबीजवति अन्त्यवर्णजनितपरिपाकशालिनि हृदये झटिति समुदीयमानस्य

---

(6) 'पूर्व्व्यवच्छिन्ने'ति '(घ)' पुस्तके, 'पूर्व्वीविशिष्टे'ति '(ख)' पुस्तके, 'पूर्व्वीव्यवच्छिन्ने'ति '(क)' पुस्तके पाठः।

Kavyaprakasa—
Ullasa I.

इत्याहुः। व्यक्तिस्फोटपुरस्कारेण जातिस्फोटः। अत आहुः—बुधैर्वैयाकरणैरिति काव्यप्रकाशकृतः।

तमन्ये न सहन्ते। तथाहि पूर्व्वपूर्व्ववर्णाननुभवतश्चरमवर्णश्रवणकाले पूर्व्वपूर्व्ववर्णानुभवजनितसंस्कारसहकृतचरमवर्णसम्बन्धेन पदव्युत्पादनसमयग्रहणानुगृहीतेन पूर्व्वपूर्व्ववर्णानुभवजनितसंस्कारसहकृतचरमवर्णसम्बन्धेन श्रोत्रेण युगपदेव सदसदनेकवर्णावगाहिनी पदप्रतीतिर्ज्जन्यते। सहकारि-

वर्णज्ञानव्यक्तिनिष्ठस्फोटत्वरूपो (7) धर्म्मो नित्यः अखण्डः पदाभिव्यङ्ग्यश्च। एवं तादृशानेकपदघटितमहावाक्यस्फोट एव जातिस्फोटपदवाच्यः। तथाच व्यक्तिस्फोटसहितजातिस्फोट एव महावाक्यजन्यशाब्दबोधे कारणम्। अतो वैयाकरणमतस्य सर्व्वोत्कर्षादेव काव्यप्रकाशकृतापि बुधशब्देन वैयाकरण एवोक्त इत्याह—अत आहुरिति।

ननु पूर्व्वोक्तदोषवारणाय चरमवर्णस्य श्रवणेन्द्रियजन्यज्ञानकाले पूर्व्वपूर्व्ववर्णानां संस्कारवशात् पुनरपि तेषां ज्ञानादेव शाब्दबोधः स्वीकरणीयः, अतो न दोष इत्याह—तमिति। तं स्फोटमन्ये अज्ञा न सहन्त इति। पुर्व्वपूर्व्ववर्णाननुभवतः पुरुषस्य चरमवर्णसम्बन्धेन श्रोत्रेण युगपदेव पूर्व्वपूर्व्वातीतवर्णावगाहिनी पदप्रतीतिर्ज्जायते, तदनन्तरं वाक्यार्थविषयकशाब्दबोधो जायते। श्रोत्रेण कीदृशेन? पदव्युत्पत्तिजनको यः समयस्तस्य ग्रहणं ज्ञानं, तदनुगृहीतेन तत्सहकृतेनेत्यर्थः। तथाच 'न सोऽस्ति प्रत्ययो लोके यत्र कालो न भासते' इति मीमांसकमतानुसारेण कालस्यापि विषयविधया कारणत्वमुक्तम्। तत्र दृष्टान्तः—सहकारीति। सोऽयं देवदत्त इति प्रत्यभिज्ञान-

---

स्फोटरूपस्यैव शब्दस्य नित्यतया तत्रैव नित्यसम्बन्धस्य योग्यतया वृत्तिमत्त्वमुचित मिति। स्फुट्यते व्यज्यते वर्णैरिति स्फोटो वर्णाभिव्यङ्ग्यः, स्फुटीभवत्यस्मादर्थ इति स्फोटशब्दार्थमुभयथा निराहुः। एवं पदाभिव्यङ्ग्यव्यक्तिस्फोटपुरस्कारेण वाक्याभिव्यङ्ग्यजातिस्फोटस्वीकारो न व्याहतः। अनेकवर्णानां शक्ततावच्छेदकतापेक्षया एकस्यैव जातिरूपस्फोटत्वस्य शक्ततावच्छेदकत्वकल्पने लाघवमपि द्रष्टव्यमिति दिक्। वाक्यस्फोटस्य निष्कृष्टतया तस्यैव बोधकत्वं, यदुक्तं वाक्यपदीये—

'पदे न वर्णा विद्यन्ते वर्णेष्ववयवा न च। वाक्यात् पदानामत्यन्तं प्रविवेको न कश्चन॥'

'वाक्यस्फोटोऽतिनिष्कर्षे तिष्ठतीति मतस्थितिः॥' इति च।

योगदर्शनेऽपि (३।१७) स्फोटः स्वीकृतः—तत्र व्यासभाष्यं भोजवृत्तिश्चानुसन्धित्सुभिर्द्रष्टव्यम्। प्रपञ्चितश्चैतद् वस्त्वखिलमेव वाक्यपदीयादौ। ग्रन्थबाहुल्यभयान्नात्र निर्द्दिश्यते।

---

(7) चरमवर्णज्ञानव्यक्तिस्फोटनिष्ठस्फोटत्वरूप' इति '(क)' '(ग)' पुस्तकयोः पाठो न सम्यङ्।

दार्ढ्येन प्रत्यभिज्ञानवदेव प्रत्यभिज्ञाने प्रत्यक्षेऽपि अतीतापि पूर्व्वावस्था स्फुरति,—तेन कृतं स्फोटेनेति (क)।

तन्न। तथाहि पदव्युत्पादनसमयो हि स्फोटकृत एव। न च तत्र प्रमाणाभावः, प्रत्यक्षार्थापत्त्योः सम्भवात्। यथायं गौरित्युक्ते नहि गकारौकार-विसर्गा एव प्रतीयन्ते, अपि तु सास्नादिमत् किमपीति प्रत्यक्षम्। अयं गौरित्यत्र किं गकारादयो वर्णा व्यस्ता एवार्थप्रत्यायकाः, किं समस्ताः? नाद्यः, इतरवर्णवैयर्थ्यात्। नापि द्वितीयः, उत्पन्नप्रध्वस्तानां सामस्त्याभावात्।

स्थले यथा चक्षुःसन्निकर्षजन्येदंपदार्थज्ञानकाले पूर्व्वप्रतीततत्कालतद्देशरूपतत्तापि तादृशप्रत्यक्षे भासते, तथात्रापि चरमवर्णस्य श्रवणेन्द्रियजन्यज्ञाने पूर्व्वपूर्व्वातीतवर्णस्यापि संस्कारवशाज्ज्ञानं भविष्यतीति। तेन कृतं व्यर्थं स्फोटेनेति।

तन्नेति—यत्समयेऽतीतसमस्तवर्णघटितपदानां युष्माकं मते पुनः प्रतीतिर्भवति, तत्र समये स्फोटकृतशाब्दबोध एव भवति, न तु अतीतवर्णानां पुनः प्रतीतिरित्यर्थः। अत्र प्रमाणाभावो न वक्तव्यः, यतः प्रत्यक्षप्रमाणमर्थापत्तिप्रमाणञ्च वर्त्तते। तत्र च प्रथमतः प्रत्यक्षप्रमाणमाह। गौरित्युक्ते नातीतगकारादेः पुनः प्रतीतिः, किन्तु

---

(क) वर्णवादमेवार्थबोधे प्रमाणीकुर्व्वद्भिस्तार्किकादिदर्शनप्रस्थानपरमाचार्य्यैर्बहुभिः स्फोटवाद आपाततः प्रध्वस्तकल्प इव प्रतिभाति। तथाहि

नतु दृष्टं परित्यज्य सर्व्वथादृष्टमार्गणम्।
कुर्व्वन् व्यथयसि नूनं पिपासुर्मृगतृष्णिकाम्॥ (स्फोटसिद्धिन्यायविचार १७ श्लोक)

इति पूर्व्वपक्षिणो प्रश्नः, 'तस्मादन्ये स्थायिनः संस्काराः कल्प्याः, तथा वर्णातिरिक्तः शब्दः कल्प्य इति वक्रप्रमाणकमापन्न'मिति शास्त्रदीपिकाकृतां पार्थसारथिमिश्राणां सोत्प्रास गर्हा च स्फोटवादिनः प्रति प्रवर्त्तते। तार्किकयुक्तिन्निराकृतात्र कौस्तुभकृता, स्मृतिहेतुभूतसंस्कारवादिनां मते निहितं कल्पनागौरवञ्चात्र दर्शितम्। निर्व्विरोधमेवैतदत्र इति ग्रन्थकृतः कल्पः। एतत्प्रसङ्गे 'शब्द इति, चेन्नात' (१।३।२८) इत्यादौ ब्रह्मसूत्रे भाष्यं, 'प्रतीत्यप्रतीतिभ्याम् न स्फोटात्मकः शब्दः' (५।५।७) इति साङ्ख्यसूत्रे वृत्तिश्च,

'यथाग्नेयादिकर्म्माणि क्रमवर्त्तीनि सन्त्यपि।
संहत्य कुर्व्वते कार्य्यमेकं वर्णास्तथैव नः॥' (श्लोकवार्त्तिक)
"यद्वा प्रत्यक्षतः पूर्व्वं क्रमज्ञातेषु यत्परम्।
समस्तवर्णविज्ञानं तदर्थज्ञानकारणम्॥" (शास्त्रदीपिका)

'नार्थस्य वाचकः स्फोटो वर्णेभ्यो व्यतिरेकत' इत्यादि मीमांसाग्रन्थोऽपि निपुणमालोचनीयं सुधीभिर्व्बोधवैशद्यार्थम्। न चैतत् सम्यग्विचारसहमिति वहवः। आकर एव तत्प्रपञ्चः।

Sarvadarsana-samgraha-Panini-darsana.

"न च व्याससमासाभ्यामन्यः प्रकारोऽस्ति । तस्माद्वर्णानां वाचकत्वानुपपत्तौ यद्बलादर्थप्रतीतिः स एव स्फोटो वर्णातिरिक्तो वर्णाभिव्यङ्ग्यार्थप्रत्यायको नित्य एवे'ति । अर्थापत्तिरपि । स्फोटानङ्गीकारे सर्व्व एव संस्कारा विशृङ्खला एव सन्तः पदजन्यपदार्थ-प्रतीतौ न शक्नुवन्ति । नापि प्रत्यभिज्ञाने प्रत्यक्षेऽप्यतीतापि पूर्व्वावस्था स्फुरति । न वा सदसदनेकवर्णावगाहिनी पदप्रतीतिः श्रोत्रेण जन्यते । सोऽयं देवदत्त इति प्रत्यभिज्ञानस्य तत्तांशे संस्कारजनितस्मृतिविशेषत्वात्, श्रोत्रेण सदसदनेकवर्णावगाहाभावाच्च । नहि प्रत्यभिज्ञानमेकं ज्ञानं, तदंशे संस्कारजन्यतया इदमंशे च चक्षुर्ज्जन्यतया च स्मरणग्रहणात्मकत्वात् । न च तदंशेऽपि चक्षुः करणं, तस्य सन्निहितग्राहितया तदभावात् । नापीदमंशे

साक्षादवयवविशिष्टगोपदार्थस्य प्रतीतिरित्यत्र सर्व्वेषामनुभव एव प्रमाणम् । अर्थापत्ति-प्रमाणमाह—गौरित्यत्र केवलगकारस्य कारणत्वेऽन्यवर्णोच्चारणस्य वैयर्थ्यापत्तिः, केवल-गकारोच्चारणात् शाब्दबोधापत्तिश्च । नापि द्वितीय इति—वर्णसमूहज्ञानानामेकदाऽसत्त्वेन द्वितीयपक्षोऽपि निरस्तः । तस्मात् पदजन्यशाब्दबोधान्यथानुपपत्त्या स्फोटः सिद्ध इत्यन्यथानुपपत्तिरेवात्र प्रमाणम्—यथा स्थूलो (8) देवदत्तो दिवा न भुङ्क्ते इत्यत्र पीनत्वान्यथानुपपत्तिप्रमाणेन रात्रिभोजित्वसिद्धिः । नापि वर्णसमुदायज्ञानानां तादृशज्ञानजन्यसंस्काराणां वा कारणत्वं वक्तुं शक्यं, यतो विशृङ्खलाद्वर्णानां ज्ञानात् संस्काराद्वा शाब्दबोधापत्तिरित्याह—स्फोटानङ्गीकार इति । यच्च सोऽयं देवदत्त इति प्रत्यभिज्ञानात्मकचाक्षुषप्रत्यक्षं दृष्टान्तीकृत्य श्रवणेन्द्रियजन्यचरमवर्णज्ञानेऽप्यतीतवर्णस्य संस्कारवशाद्भानमुक्तं तदपि दुष्टमित्याह—नापि प्रत्यभिज्ञान इति । तत्र प्रथमतो दृष्टान्त-मेवासिद्धमित्याह । प्रत्यक्षात्मकप्रत्यभिज्ञाने तद्देशतत्कालरूपा अतीता पूर्व्वावस्था न स्फुरति, न वा दार्ष्टान्ते श्रोत्रेणातीतवर्णावगाहिनी चरमवर्णविषयकप्रतीतिर्ज्जन्यते । तत्र हेतुः—सोऽयमिति—तत्रातीतदेशकालरूपतत्तायाः स्मरणं, चक्षुःसन्निकृष्टेदम्पदार्थस्य

वेदान्तादिदर्शनप्रतिपादितापत्तिस्तु दूरादास्ते यदि तावद्वैयाकरणमतं धीरमालोच्यते । अत्रार्थे 'तस्मात् यश्चोभयोः समो दोषः न तेनैकश्चोद्यो भवतीति न्यायात् ····नातिरिक्त-स्फोटकल्पनावकल्पत इति चेत् तदेतत् काशकुशावलम्बनकल्पनं विकल्पानुपपत्ते'रित्यादिः 'तस्माद्वर्णानां वाचकत्वासम्भवात् स्फोटोऽभ्युपगन्तव्य' इत्यन्तः पाणिनिदर्शनप्रस्तावोत्थः सर्व्व-दर्शनसंग्रहग्रन्थो द्रष्टव्य इत्यलमतिगहनावगाहनेन ।

(8) 'पीनो देवदत्त' इति मुद्रितपुस्तके पाठः ।

संस्कारः, चक्षुरन्वयव्यतिरेकानुविधानात् स्मरणहेतुव्यवसायाभावाच्च। तेन स्फोट एवाङ्गीकार्य्य इति वैयाकरणाः।

तेन पृथक्सम्बन्धानां संस्काराणां क्रमेण परस्परसम्बन्धकारित्वं स्फोटत्वम्। अन्यथा रसः सरः नदी दीन इत्येतेषां प्रतिलोमपाठेऽपि रेफसकारादीनां संस्कारोऽस्ति, न तु तेऽनुलोमसंस्कारवत्त्वेन पदं व्युत्पादयन्ति, अन्यथा भेदो न स्यात् (९) (ज)।

## साध्वसाधुतयाद्योऽपि—११ का।

आद्यो वर्णात्मकः शब्दोऽपि साधुतया असाधुतया च द्वेधा भवति। किन्नाम साधुत्वम्? किं साधुजनोदितत्वं, किमुत सूनृतत्वमुताहो वेद-

प्रत्यक्षमिति ज्ञानद्वयमेव, न तु तत्ताविशिष्टेदंपदार्थस्यैकं ज्ञानम्, यतस्तत्तांशे चक्षुःसन्निकर्षाभावेन चाक्षुषप्रत्यक्षे तस्य भानासम्भवात्, एतन्मतेऽलौकिकसन्निकर्षरूपज्ञानलक्षणायाः प्रत्यासत्तित्वानङ्गीकारादिति। नापीदमंश इति—यथा तत्तांशे संस्कारवशात् स्मरणं तथेदमंशेऽपि वाच्यमित्यपि न सम्भवति। इदमंशे चक्षुःसन्निकर्षसत्त्वे सति ज्ञानं, तदभावे नेत्यन्वयव्यतिरेकात्, स्मृतिजनकस्येदम्पदार्थस्यानुभवाभावाच्च।

तेनेति—पृथक्सम्बन्धानामानुपूर्व्वीरहितानां संस्काराणां प्रत्येकवर्णोच्चारणानां क्रमेण परस्परानुपूर्व्वीविशिष्टचरमवर्णज्ञाने शाब्दबोधकारित्वं कारणतावच्छेदकं स्फोटत्वम्। तथाच यादृशानुपूर्व्वीविशिष्टचरमवर्णस्य ज्ञानसत्त्वे तत्तदर्थस्य शाब्दबोधो जायते तादृशज्ञाननिष्ठजातिविशेष एव स्फोटत्वम्। सा जातिस्तत्तदर्थविषयकशाब्दबोधजनकतावच्छेदकत्वेन सिद्धा। यथा तृणारणिमण्यादिजन्यतावच्छेदकतया वह्निनिष्ठजातिविशेषस्य सिद्धिस्तद्वदत्रापि तत्तच्छाब्दबोधजनकतावच्छेदकतया चरमवर्णज्ञाननिष्ठजातिविशेषस्य स्फोटत्वस्य सिद्धिः। अन्यथा स्फोटत्वस्यानङ्गीकार एवं तत्तद्वर्णज्ञानजन्यशाब्दबोध-

(ज) अत्र वेदान्तिमासुत्तरं 'शब्द इति चेन्नातः प्रभवात्, प्रत्यक्षानुमानाभ्याम्' (१।३।२८) इत्यत्र प्रदर्शितात् वक्ष्यमाणाङ्गवच्छङ्करवाक्यतो ज्ञेयं। 'सत्यपि समस्तवर्णप्रत्ययवमर्शे यथा क्रमानुरोधिन्य एव पिपीलिकाः पङ्क्तिबुद्धिमारोहन्ति, एवं क्रमानुरोधिन एव वर्णाः पदबुद्धिमारोक्ष्यन्ति। तत्र वर्णानामविशेषेऽपि क्रमविशेषकृता पदविशेषप्रतिपत्तिर्न विरुध्यत' इति शारीरकभाष्यम्। भामत्यादिषु चैतत् प्रपञ्चितमिति तत एव द्रष्टव्यम्। वस्तुतस्तु विभिन्नप्रयोजनत्वात् शास्त्रयोः विभिन्नसिद्धान्तत्वमिति स्थितिः। अतो नानर्थोपपातः।

(९) 'अन्यथा' इति पदं '(घ)' '(ङ)' पुस्तकयोर्नोपलभ्यते।

वाक्यस्थत्वं वा, प्रकृतिप्रत्ययव्युत्पादितत्वं वा? आद्ये चण्डालादिप्रयुक्तस्य संस्कृतस्याप्यसाधुत्वापत्तिः, द्वितीये परुषसंस्कृतस्य, तृतीयेऽस्मदादिकृतसंस्कृतशब्दानां, चतुर्थे संज्ञाशब्दानामपि। तेन व्याकरणप्रणीतत्वं साधुत्वमिति। तथा सति डित्यादीनां संज्ञाशब्दानामपि डित्थोऽयं डवित्थोऽयमिति विभक्त्युत्पत्तेः साधुत्वम्; न तु गावीप्रभृतीनां, भ्रान्तप्रणीतत्वात्। तथापि तैर्यद्व्यवहारनिष्पत्तिस्तद्विज्ञानां तत्स्मारितगोशब्दादिद्वारा, अज्ञानान्तु अज्ञपरम्पराप्राप्तसंस्कारद्वारैव। प्राकृतस्य तु साधुसमत्वात् साधूद्भवत्वेन तत्तद्व्याकरणप्रणीतत्वाच्च साधुत्वम्। (भ)

स्वीकारे च सरोवरवाचकस्य सरःशब्दस्य प्रतिलोमेन रस इति पाठेऽपि सरोवरबोधः स्यात्। नदीशब्दस्यापि प्रतिलोमेन दीन इति पाठेऽपि नदीबोधः स्यात्। संस्कार इति—प्रत्येकवर्णज्ञानजन्यसंस्कारोऽस्तीत्यर्थः। न त्विति—ते प्रतिलोमेनोच्चारिता वर्णा अनुलोमसंस्कारवत्त्वेन विशिष्टं पदं याद्दृशार्थं व्युत्पादयन्ति, ताद्दृशार्थं न व्युत्पादयन्तीत्यर्थः। अन्यथा अनुलोमप्रतिलोमपदाभ्यामेकबोधस्वीकारे रससरःपदाभ्यां जनितबोधयोर्नदीदीनपदाभ्यां जनितबोधयोः भेदो न स्यादित्यर्थः।

सवृतत्वं स्निग्धत्वादिगुणविशिष्टत्वम्। आद्य इत्यसाधुचण्डालादिप्रयुक्तस्येत्यर्थः। परुषसंस्कृतस्य कठोरसंस्कृतस्य। संज्ञाशब्दानां चैत्रडित्थादिशब्दानां प्रकृतिप्रत्ययाभ्यामवयवव्युत्पत्त्यसिद्धेः। व्याकरणनिष्पाद्यत्वं साधुत्वमित्यर्थः। अतएव डित्थादिशब्दानां प्रकृतिप्रत्ययाभ्यामवयवव्युत्पत्त्यभावेऽपि डित्थोऽयमित्यादौ 'सु'विभक्तिसाहित्येन व्याकरणसिद्धत्वमस्त्येव। नत्विति—यथा वच्धातोर्बहुवचने देवदत्ता वचन्तीति प्रयोगोऽसाधुः 'नान्त्यन्त्वोर्वचेः प्रयोगः' इति सूत्रात्, तथैवात केवलगोशब्दोत्तरापत्यार्थकप्रत्ययेन 'गाव' इति प्रयोगोऽप्यसाधुः, अतो 'गावी' इति प्रयोगो भ्रान्तप्रणीत एव। ननु कथं भ्रान्तोक्त-'गावी'पदप्रयोगादपि विशेषदर्शिनामप्यर्थप्रत्ययो जायते, अत आह—तथापीति। तैरसाधुपदैरसाधुशब्दस्मारितसाधुशब्दाद्विज्ञानां शाब्दबोधः। अज्ञानामविशेषदर्शिनामज्ञपरम्पराप्राप्त'गावी'शब्दादेव शाब्दबोधः नाटकादौ विशेषदर्शिनां शौरसेनिकादिप्राकृतशब्दः साधुशब्दः, साधुशब्दसमत्वात्। साधूद्भवत्वे साधूच्चरितत्वे तत्तत्प्राकृतलङ्केश्वरव्याकरणप्रणीतत्वाच्च साधुत्वम्।

जातिरिति—जात्यादिवाचकत्वेन साधवश्चतुर्विधा भवन्ति। गौरिति साधुशब्देन

---

(भ) वस्तुतस्तु साधुसमसाधूद्भवदेश्येति भेदैस्त्रैविध्यं प्राकृतभाषोक्तशब्दानाम्। तत्र जह-इला-थवरीत्यादिप्राकृतशब्दाः शिष्टप्रयोगादररुच्यादिकृतव्याकरणकृदनुमोदितत्वाच्च साधव एव।

## साधवश्च चतुर्व्विधाः ।

## जातिः क्रियागुणद्रव्यैः—१२ का

गौः पाचकः शुक्लो डित्थ इति क्रमाज्जात्यादिभिश्चातुर्व्विध्यम् । चकारा-ज्जातिरेव पदार्थं इति च मतम् (ज) । तथाहि गुडतण्डुलादिपाचकभेदेन पाचकोऽयं पाचकोऽयमिति पाचकत्वमस्ति । एवं चन्द्रचन्दनकुन्दादिषु अयं शुक्लोऽयं शुक्ल इति शुक्लत्वम् । बालवृद्धयुवाद्युदीरितडित्थाद्यर्थेषु डित्था-दित्वमिति ।

गोत्वरूपजातिविशिष्टयावत्गोरूपधर्म्मिवाचक इत्येको भेदः । तथा पाचक इति साधुशब्दः पचनक्रियारूपो यो मनुष्यनिष्ठो धर्म्मस्तस्य वाचक इत्यपरो भेदः, एवं शुक्ल इति साधु-शब्दः शुक्लरूपगुणविशेषो यो गवादिवृत्तिधर्म्मस्तस्य वाचक इत्यन्यो भेदः । तथा डित्थ इति साधुशब्दः डित्थरूपैकव्यक्तिमात्रवाचकः इत्येवं क्रमेण साधुशब्दश्चतुर्व्विधो ज्ञेयः । ननु यन्मते जातावेव शक्तिर्न कदापि व्यक्तौ, शाब्दबोधे व्यक्तिभानन्तु 'जात्या व्यक्तिराक्षिप्यत' इति न्यायसिद्धाक्षेपबलादेव, तन्मते साधुशब्दो जातिमात्रवाचक-त्वेनैकविध एवैतदेवाह—चकारादिति । गुड़तण्ड़ुलादीनां नानापाचकभेदेन पाचकोऽयं पाचकोऽयमिति सर्व्वत्र पाचके पचधातोः प्रयोगात् पाचकत्वमपि जातिविशेषः । नन्वीश्वरकृतसङ्केतविशिष्टस्य सर्व्वत्र जातौ शक्तिरस्तु, आधुनिकपुरुषकृतस्य डित्यादौ सङ्केतविशिष्टशब्दस्यैकमात्रवृत्तित्वेन डित्थत्वस्य जातित्वाभावात् कुत्र शक्तिर्वक्तव्येत्यत आह—बालवृद्धेति । यथा पुत्रे पितृकृतसङ्केतविशिष्टस्य देवदत्तविष्णुदत्तादिशब्दस्य शक्तिर्व्वाल्यपौगण्ड्यादिनानाशरीरवृत्तिदेवदत्तविष्णुदत्तत्वादिजातौ वर्त्तते, तथैव पुरुषकृत-सङ्केतार्थडित्थादावेकस्मिन्नेव वस्तुनि बालवृद्धयुवादीनां डित्थोऽयं डित्थोऽयमित्यनुगत-

---

(ज) एतच्च मम्मटाद्युक्तिमनुसृत्य । तथा च प्रकाशे—'सङ्केतितश्चतुर्भेदो जात्यादि-र्ज्जातिरेव वा' इति । केचित् तार्किका व्यक्तिरेव पदार्थ इत्यपि वदन्ति । भगवान् व्याड़िरप्येवम् । जातिरेव पदार्थ इति मीमांसकसिद्धान्तपक्षः । द्वयमेव स्वोक्तं भाष्यकारैः 'किं पुनराकृतिः पदार्थ आहोस्विद्द्रव्य'मिति पदार्थनिर्णयभाष्ये पञ्चमाह्निके । सुष्ठु व्याख्यातमेतत् तत्रैव प्रदीपे कैयटेन । चतुर्द्धा पदार्थप्रपञ्चो भिद्यत इति भूयसां वैयाकरणानामपि मतम् 'जात्याकृतिविशिष्टव्यक्तिशक्तिपक्ष एव साधीया'निति तार्किकचूड़ामणयो महामहोपाध्यायगदाधरभट्टाचार्य्यपादाः । 'परं ब्रह्मतत्त्वं सर्व्व-शब्दार्थ' इति स्थितम्' इति पाणिनिदर्शनप्रस्तावे जरद्द्वैतवादिमतानुवादं कुर्व्वन्नेव फणिभाषितानुसारी माधवाचार्य्यः । षोढ़ा च भेदो दर्शितो जयदेवेन, तच्चाकरे द्रष्टव्यम् ।

## मुख्यो लाक्षणिकस्तथा॥
## व्यञ्जकश्चेति—१३का

त्रिधा ते शब्दाः। मुख्यो वाचकः, यस्तु सङ्केतमैश्वरं धत्ते, स मुख्यः। ऐश्वरमीश्वरकृतं, अस्मदादिकृतं सङ्केतमपि यो धत्ते तस्य द्रव्यत्वे स्वार्थं प्रतिमुख्यता। (ट)

## सङ्केत ईशेच्छा तत्र तत्त्वकृत्॥ १४ का

तत्र घटादौ तत्त्वकृत् घटादित्वबोधकृत् सङ्केतः स्यात्। तथाहि कश्चिदगृहीतसङ्केतो बालः कदाचिदुत्तमवृद्धेन घटमानयेत्युक्ते मध्यमवृद्धे कम्बुग्रीवादिमन्तं व्यक्तिविशेषं स्थानात् स्थानान्तरं नयति सति घटशब्देनेदृशी व्यक्तिरिति प्रथमं व्यक्तावेव घटशब्दशक्तिरिति प्रतिपद्यते। पुनस्तेनैव प्रतीतिबलात् डित्थवस्तु घटकीभूतनानावयववृत्तिडित्थत्वमपि जातिविशेषः। यन्मतेऽवयवातिरिक्तस्वतन्त्रावयविनोऽभावात् घटत्वजातिर्नानावयववृत्तिरेव, तन्मतमालम्ब्य डित्थत्वमपि जातिरेवेति सर्व्वं समञ्जसम्।

नन्वीश्वरकृतसङ्केतविशिष्टशब्दस्यैव मुख्यत्व उक्तेऽस्मदादिकृतसङ्केतविशिष्टस्य डित्थादिशब्दस्येश्वरकृतसङ्केताभावान्न मुख्यत्वं, शक्तेरभावेन शक्यसम्बन्धरूपलाक्षणिकत्वमपि न सम्भवतीत्यत आह—अस्मदादीति। द्रव्यत्वे डित्थादितत्तद्द्रव्यमात्रवाचकत्वे स्वार्थं प्रत्यौपचारिकमुख्यता। यथार्थमुख्यव्यवहारस्तु (१०) ईश्वरकृतसङ्केतविशिष्टशब्दस्येति बोध्यम्। तद्भिन्नभिन्नेति—घटाद्भिन्नः पटादिस्तद्भिन्नो घट एव; तादृशरूपेण निवेशस्तु अपोहद्वारा निर्द्धारणार्थमेव, न त्वसाधारणलक्षणे निवेशनीयं, तादृशरूपेण निवेशे

---

(ट) ईश्वरेच्छारूपस्य सङ्केतस्य शक्तित्वमङ्गीकृतं नैयायिकनये। ईश्वरकृतसङ्केतार्थं प्रमाणं मनुस्मृतौ (१।२१) यथा—

'सर्व्वेषान्तु स नामानि कर्म्माणि च पृथक् पृथक्।
वेदशब्देभ्य एवादौ पृथक् संस्थाश्च निर्म्ममे॥"

उन्नेयमेतत् 'वेदपूर्व्विकैव सृष्टिः' 'यस्य निःश्वसितं वेदा' इत्याद्यास्तिकमतमाहात्म्याच्च। वस्तुतस्तु न केवलं डित्थडवित्थादय अपि तु सर्व्व एव शब्दा अस्मदादिकृतसङ्केतमेव दधते, न तु ऐश्वरं, भाषानामानन्त्यात्, भाषाविशेषस्य चेश्वरकृतानादिशब्दसङ्केतधारणार्थस्य गौरवापत्तेरिति भाषातत्त्वविदः कोविदाः। सङ्केतपदेन शब्दव्यतिरिक्तं चिह्नमात्रं गृह्यते चेत्, तदा नानर्थक्यापात इति सर्व्वमवदातम्।

---

(१०) 'यथावन्मुख्यव्यवहार' इति पाठः (ग) (ङ) पुस्तकयोः।

पटमानयेत्युपक्ते तद्विजातीयं व्यक्तिविशेषं तथैव तस्मिन् नयति सति पुनः सोऽपि घटाद्भिन्नः पटः पटाद्भिन्नो घट इति व्युत्पद्यमानः पुनरघटभिन्नो घटः अपटभिन्नः पटश्चेत्यपोहद्वारेण निश्चिन्वन् पुनस्तेनैव घटान्तरं पटान्तरञ्चानयेतुक्ते तस्मिन् पूर्व्वघटपटयोराकारतो विसदृशौ घटपटावानयति सति पुनरयं संशेते—अहो घटपटशब्दो न व्यक्तिविशेषविषयकसङ्केतौ, यत एतौ पूर्व्वघटपटतो भिन्नौ, तेन घटादिषु कश्चिदसाधारणो भविष्यति धर्मः यद्वशादयं घटोऽयमपि घट इत्यनुगताकारावगाहिज्ञानं जन्यत इति निश्चित्य जातावेव सङ्केतमवधारयति। तद्भिन्नभिन्नाधिकरणमात्रवृत्तित्वमसाधारणत्वं यथा गोः सास्नादिमत्त्वम् ।

## योगरूढ़ाश्च रूढ़ाश्च यौगिकाश्चेति ते त्रिधा । १५का (ठ)

ते शब्दाः पुनस्त्रिविधा भवन्ति। योगरूढ़ाः पङ्कजादयः। पङ्काज्जनेर्ड-प्रत्ययेन (११) पङ्कजनिकर्तृभिधायकेन योगेनापि पद्मार्थ एव प्रतिपद्यते, प्रयोजनाभावात् गौरवप्रसङ्गाच्च। तथा च तद्वृत्तित्वे सति तदितरावृत्तित्वं तदसाधारणलक्षणमिति। तत्र दृष्टान्तो यथेति—सास्ना गलकम्बलादिर्गोभिन्ने न वर्त्तते, गवि वर्त्तते च, अतो गोरसाधारणधर्म्मः सास्नादिः।

योगरूढ़ा इति—ननु पद्मशब्दस्येव पङ्कजशब्दस्यापि पद्मत्वं कथं शक्यतावच्छेदकं नोक्तं, तत एव कुमुदशैवालादिवारणं सम्भवेदित्याह—पङ्कादिति। पद्मपदेन केवलपद्मत्वरूपेण बोधो जायते। पङ्कजपदात् पङ्कजनिकर्त्तृ पद्ममिति बोधो जायत इति प्रामाणिकानामनुभववशात् पङ्कजनिकर्त्तृकत्वेन यौगिकशक्तिः, पद्मत्वरूपेण रूढ़शक्तिश्च स्वीकरणीयेति ज्ञेयम्। पद्मस्येवेति—पङ्कजनिकर्त्तृपद्मस्यैव स्मृतेः। यदेति—

(ठ) नैरुक्तैस्तु सर्व्वेषामपि पदानां धातुभूतप्रकृतिप्रत्ययनिष्पन्नत्वं स्वीक्रियते। उणादिसूत्राणि च तत्र निष्पत्तौ सहायकानि। एवं सति किमवयवशक्तित एव निखिलानां पदानामर्थग्रह उतान्योऽप्युपायोऽस्तीति एच्छायां शब्दानां त्रैविध्यप्रदर्शनव्याजेनाभिधानियामकमन्यदप्यस्तीति सूचयति। उक्तं हि शाब्दिकैः—

> शक्तिग्रहं व्याकरणोपमानकोषाप्तवाक्याद्व्यवहारतश्च ।
> वाक्यस्य शेषाद्विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः ॥

एवमर्थग्रहकारणेष्वनेकेषु लक्षितेष्वपि शब्दानां, तेषां यथायथमुपरिष्टाद्दर्शितेष्वेव भेदेषु

(११) 'पङ्कजनि'डप्र'त्ययेन' इति (क) पुस्तके, 'पङ्कजनितप्रत्ययेन' इति (ख) (ग पुस्तकयाः पाठः।

न तु कुमुदाद्यर्थं, इति योगार्थपुरस्कारेऽपि रूढ्यर्थ एवेति योगरूढ़ एव, ईश्वरसङ्केतमहिम्ना झटिति पद्मस्यैव स्मृतिः । यदा तु पङ्कजं वर्मदौर्गत्यमित्यादि केनाप्युच्यते तदा तत्र पङ्कजातत्वे लक्षणा । वस्तुतस्तु पद्मे शक्तिः ।

रूढ़ा मण्डपादयः । यथा पद्मे पङ्कजनिकर्तृत्वं वर्त्तते, तथा मण्डपे गृहविशेषे मण्डपानकर्तृत्वं नास्ति, तेन केवलं गृहविशेषो योगार्थं विनापि गम्यत इति रूढ़ एव । कर्म्मणि कुशल इत्यत्र कुशलशब्दो न लाक्षणिक-स्तस्य नानार्थत्वात्, 'कुशलः क्षेमे पुण्ये च शिक्षिते' इति शिक्षितो निपुणः, अतो मुख्य एव (ड) । एवं मण्डपशब्दो रूढ़त्वेन गृहविशेषे मुख्यः । यदा तु मण्डपं भोजयेत्युक्तिस्तदा शब्दान्तरसाहचर्य्यात् मण्डपानकर्त्तरि लाक्षणिकः ।

आदितेयादिशब्दा यौगिकाः, अदितेरपत्यानीति 'ढक्'प्रत्ययेन केवलं योगार्थ एव । यदा तु अपत्यार्थप्रत्ययान्तरेण 'ण्य'प्रत्ययेन निरुक्तिस्तदा नानार्थं-

वर्मदौर्गत्यं पङ्कजं पङ्काज्जातमित्यत्र पङ्कजशब्दस्य पङ्कजातत्वे लक्षणा, पद्म एव शक्तिः । कस्यचिन्मते कर्म्मणि कुशल इत्यत्र कुशं लातीत्यवयवव्युत्पत्तिं विनैव निपुणार्थे कुशलशब्दो लाक्षणिकस्तन्मतं दूषयति--कर्म्मणीति । यदा तु आदित्यशब्दो (12) ऽत्रापत्यार्थे ण्यप्रत्ययान्तस्तदा न नादितेः पुत्रसामान्यस्य बोधः, अपि तु द्वादशादित्य-रूपस्य सूर्यस्य बोधः, 'आदित्या ऋभव' इति देवसामान्यपर्य्याये पठितोऽपि ।

ननु 'प्रकृत्यर्थान्वितस्वार्थबोधकत्वं प्रत्ययाना'मिति न्यायात् प्रकृत्यर्थसहितस्यैव प्रत्ययार्थस्य

---

अन्तर्भावो द्रष्टव्यः । तत्राखण्डशक्तिमात्रेणैकार्थप्रतिपादकत्वं रूढ़िः, अवयवशक्तिसापेक्षं पदस्यैकार्थप्रतिपादकत्वं योगः, अवयवसमुदायोभयशक्तिसापेक्षमेकार्थप्रतिपादकत्वं योग-रूढ़िरिति वृत्तिवार्त्तिकेऽप्पयदीक्षितचरणाः । डित्यादौ शब्दे रूढ़िः, आदितेयपाचकादौ योगः, पङ्कजादौ योगरूढ़िः । एवमभिधा त्रिविधा ।

(ड) दर्भग्रहणाद्ययोगात्लक्षणैवमिति काव्यप्रकाशकृतो मतं, न तच्चारु । 'अन्यद्धि शब्दानां व्युत्पत्तिनिमित्तमन्यच्च प्रवृत्तिनिमित्त'मिति दर्पणे दर्शितम् कारणम् । मण्डपादि-शब्देषु भिन्नोऽभिधायाः प्रकार इति केचित्—यदाहुः शब्दशक्तिप्रकाशिकाकाराः—'परे रूढ़यौगिकं मन्यतेऽधिक'मिति । "अथाश्वगन्धाश्वकर्णमण्डपनिशान्तकुवलयादिशब्देषु का शक्तिरिति ? अत्र केचित्—अश्वगन्धारसं पिबेत्यादिषु केवलसमुदायशक्तिः, अश्वगन्धा वाजिशालेत्यादिषु केवलयोगशक्तिः ।...अन्ये तु वदन्ति, सङ्करस्य (योगरूढ़िमयस्येति यावत्)

---

(12) 'अदितिशब्दो' इति (ख) (घ) (ङ) पुस्तकेषु ।

त्वेऽप्यादित्य इति देवपर्य्याये पठितोऽपि देवविशेषे शक्तिमत्वात् प्रत्ययमहिम्ना योगरूढ़ पदार्थः।

प्रकृतिशक्तिः प्रकृत्यर्थपरा। सुप्प्रत्ययशक्तिः संख्याकारकत्वोपरक्त-प्रकृत्यर्थपरा। तिङ्शक्तिः संख्याकर्त्तृकर्म्मभावोपरक्तवर्त्तमानादिकालपरा। उपसर्गा द्योतकत्वाद्धात्वर्थभेदकाः—यथा संहारः अभिहारः विहारः आहारः मिलित्वा समभिव्याहारः। एवं कृत्तद्धितप्रत्ययावपि पूर्व्ववत्। प्रत्येकं सूत्र-करणात् सर्व्वत्र योगेन मुख्य एवार्थः। (ढ)

Panini III. 3.1. 'उणादयो बहुल'मिति बहुलग्रहणात् प्रायशो न योगार्थः।

Unadi. 235. तेन गच्छतीति 'गमेर्डोः' इति कृते 'डो'प्रत्यये गौः शेत

बोधो भवति, नतु स्वातन्त्र्येणेत्याह—प्रकृतीति। मिलित्वा—सम् अभि वि आ इत्युपसर्गा मिलित्वा समभिव्याहाररूपार्थबोधका भवन्ति। पूर्व्ववदिति—कृत्तद्धितौ प्रकृत्यर्थपरौ। सर्व्वत्रेति—सर्व्वेषु प्रत्ययेषु योगेन योगशक्त्या मुख्य एवार्थः।

ननु तेषां मध्य उणादिप्रत्ययो बहुलमिति सूत्रस्य बहूनर्थान् लातीति व्युत्पत्त्या यस्मिन्नर्थे विहितस्तदतिरिक्तार्थमपि बोधयति; तेनोणादिप्रत्ययो हि प्रायशो योगार्थं न प्रतिपादयति, अपि तु रूढ़ार्थमपीत्याह—उणादय इति। कर्त्तृबोधक'डो'प्रत्ययेन सिद्धस्य गोशब्दस्य प्रथमान्तपदघटितस्य 'गौः शेते' इति वाक्यस्य गमनकर्त्तुः शयनरूपार्थे बाधिते सति लक्षणायाः प्रसङ्गात्। अत औणादिकप्रत्ययघटितगोशब्दस्य न प्रत्ययघटितावयवार्थो विवक्षणीयः, अपि तु सास्नादिविशिष्ट एव रूढ़िः। न च रूढ़्यर्थस्य मुख्य एव, न लाक्षणिकः।

साऽन्यपदार्थे शक्तिर्द्वेधा, तद्गुणसंविज्ञानरूपाऽतद्गुणसंविज्ञानरूपा च। साहित्यस्य प्राधान्यं यत्रैवम्भूते द्वन्द्वे एकत्वं भवति—यथा धवखाश्वकर्णस्य द्वौ वृक्षविशेषौ। यदा तु

---

तु द्वौ भेदौ योगरूढ़िर्यौगिकरूढ़िश्चेति। तत्राद्यस्योदाहरणं पङ्कजादिशब्दः 'न यत्रैकं वनान्यस्यास्ति शब्दधोः', द्वितीयस्य लम्बकर्णादयः। चतुर्थ एवायमभिधाया भेद इत्यन्ये' इति रसगङ्गाधरेऽपि।

(ढ) 'प्रकृतिः प्रत्ययश्चैव निपातश्चेति स त्रिधा' इति तार्किकमार्गेण त्रिधा,

'क्रियावाचकमाख्यातमुपसर्गो विशेषकृत्।
सत्त्वाभिधायकं नाम निपातः पादपूरणः॥'

इति नैरुक्तोक्तदिशा महाभाष्यकृत्सम्मतमतेन चतुर्द्धा, 'कृत्तद्धितसमासैकशेषसनाद्यन्त-धातुरूपा पञ्च वृत्तयः' इति वा पञ्चधा अर्व्वाचीनवैयाकरणसरणिमनुसृत्य पदानां

इत्यत्रापि मुख्यार्थबाधे लक्षणा स्यात्, तेनोणादिप्रत्यये न योगार्थः, अपि तु रूढ़ एवार्थः। स च मुख्य एव, न लाक्षणिकः।

समासशक्तिश्च विविधा (ग)। तथाहि बहुव्रीहेरन्यपदार्थे शक्तिः। सा च द्वेधा—तद्गुणसंविज्ञानरूपा, तदितरा च। उभयपदार्थप्रधाना तत्पुरुषस्य। अव्ययांशप्रधानाऽव्ययीभावस्य। नञर्थप्राधाना नञ्तत्पुरुषस्य। प्रत्येकपदप्रधाना द्वन्द्वस्य। तत्र साहित्यप्राधान्ये समाहारे एकत्वं यथा धवाश्वकर्णम्। साहित्याश्रयप्राधान्ये इतरेतरयोगे द्वित्वबहुत्वे—धवखदिराविल्यत्र धवसाहित्यवान् खदिरः, खदिरसाहित्यवान् धव इति साहित्येऽपि द्वयोः प्राधान्याद्द्विवचनमेव, एवं धवखदिरपलाशा इत्यत्र बहुवचनमेव। साहित्यमूलके द्वित्वादौ विभक्तिर्न प्रत्येकं द्वित्वादिकं बोधयति। धवखदिरौ पश्येति क्रिया तु प्रत्येकं सम्बध्यते।

एकशेषे तु लक्षणैव—पितराविल्येकस्य पितृद्वयान्वयाभावात् पितृमातरावेव लक्ष्येते, पितृशब्दस्य जनकार्थमात्रस्मृतेः।

साहित्याश्रयस्य तत्तद्वृक्षस्य प्राधान्यं तदेतरेतरद्वन्द्वसमासे द्वित्वबहुत्वे भवतः। धवखदिराविल्यत्र परस्परसाहित्यस्य द्वित्वसंख्यया द्विवचनम्। धवखदिरपलाशा इत्यत्र परस्परसाहित्यस्य बहुत्वाद्बहुवचनम्। द्वन्द्वसमासस्य साहित्ये शक्तिरितिहेतोः शाब्दबोधे साहित्यस्य भानम्। साहित्यमूलक इति—यतः साहित्यस्यैव द्वित्वप्रतीतिर्न तु धवस्य खदिरस्य वा, अत एकधवैकखदिराभिप्रायेण धवखदिरौ पश्येत्यपि सङ्गच्छते।

पितृशब्दस्य जनके शक्तिः, मातृपितृभयबोधे लक्षणा। तत्रोदाहरणमाह—एकशेष इति—माता च पिता चेत्येकशेषे कृते मातृपितुभयबोधस्तु लक्षणयैवेति बोध्यम्।

---

विभागमङ्गीकृत्य मनसि यथाक्रमं प्रत्येकं शक्तिस्वरूपप्रसङ्गमवतारयति। तत्रासमस्तसुप्तिङन्तोपसर्गसहितप्रकृतिकृत्तद्धितान्तेषु पदेषु यथायोगं योगशक्त्या एवार्थप्रतीतिः।

(ग) प्रायशोऽभिधयैव वृत्त्यार्थबोधः। तत्र शब्दशक्तीत्यादि पदेषु योगतः, पङ्कजादिपदेषु योगरूढ़्या, कैवर्त्तबोधकधीवरादिपदेषु च रूढ्यैव शक्तिमत्वम्। क्वचित् सुवह्नादिबोधकधीवरादिपदेषु 'लब्धात्मिका सती रूढ़िर्भवेत् योगापहारिणी' इति भट्टवचनात् रूढ़िलक्षणेत्यतिरोहितार्थमेतत्। नन्वत्र समासघटकपदार्थप्राधान्येनैव भागकल्पनोपरिष्टादित्यवधेयम्। यदुक्तमुद्देशेऽत्र, न तु समाससञ्ज्ञादर्शनाय। तद्गुणसंविज्ञानेति—लम्बकर्णमानयेत्यादि आद्यस्य भेदस्योदाहरणं, दृष्टसागरमानयेत्यादि परस्येति। इत्योक्तमनुक्तञ्च सर्वं शब्दशक्तिप्रकाशिकादितो ग्राह्यम्।

वाचकोऽपि शब्दः समाससद्भावे सति लाक्षणिको भवति । धीवर इति कैवर्त्तवाचकः शब्दः, धिया वर इति तृतीयातत्पुरुषसमासेन सुबुद्धिः प्रतिपाद्यते । तत्र तु लक्षणैव । एवं सर्व्वत्र लक्षणा बोद्धव्या । दिङ्मात्रमुदाहृतम् ।

यौगिकास्तु शब्दाः सिद्धाः साध्याश्च । सिद्धा वासुदेवादयः । साध्या वक्तृस्वेच्छाकल्पिता आनकदुन्दुभिनन्दनन्दनादयः [13] । ते च पूर्व्वपदपरिवृत्तिसहा उत्तरपदपरिवृत्तिसहा उभयपदपरिवृत्तिसहाश्च । वसुदेवनन्दन इति पूर्व्वपदस्य परिवृत्तिः, आनकदुन्दुभिसुत इति परपदस्य, शूरसुतपुत्त्र इत्युभयपदस्य (त) । एवमुन्नेयम् । क्वचिदुभयपदापरिवृत्तिः, पत्तरथः गरुत्मान् गोसंख्य इत्यादि ।

वाचकोऽपीति—धीवरशब्दः कैवर्त्ते रूढः, धिया वर इति व्युत्पत्त्या तस्य सुधीजनबोधे लक्षणा । ननु मुख्यार्थस्य बाधाभावे कथं लक्षणा सम्भवतीति चेत् रूढिशब्दस्य मुख्यार्थो रूढ्यर्थ एव, अवयवव्युत्पत्त्याऽर्थान्तरन्तु न मुख्यम् । यथा मण्डपशब्दस्तथात्रापीति बोध्यम् ।

सिद्धाः कोषादौ प्रसिद्धा (थ) यथा अमरे वासुदेवशब्दः । पूर्व्वपदपरिवृत्तीति—वाक्यघटकीभूतपूर्व्वपदस्य परिवृत्तिं पूर्व्वपदसमानार्थकशब्दान्तरं सहन्ते । वसुदेवेति—वसुदेवमानन्दयतीति वाक्ये वसुदेवशब्द एव परिवृत्तिसहः, नतु नन्दनशब्दः, अतो वसुदेवपुत्त्र इत्युक्ते वसुदेवस्यानन्दजनकत्वरूपेण प्रतीतिर्न भवति । एवं वसुदेवस्य जन्मकाले भाविभगवदवतारसूचकं दुन्दुभिवाद्यं देवाश्चक्रुरतस्तदर्थबोधक आनकदुन्दुभि·

(त) वसुदेवपिता शूरस्तस्य पुत्त्रः शूरसुतपुत्त्रः । अत्र सुतपुत्रपदयोः परिवृत्तिसहत्वं विद्यत एव, न तु शूरपदस्येति बोध्यम् । यत्तु 'शूरसुतपुत्त्र इत्यत्र शूरसुतशब्दः परिवृत्तिसह' इति टीकाकृत् तत् शौरिशूरतनयशूरात्मजादिपदैरेव तस्य परिवृत्तिरित्यभिप्रायकम् । वसुदेवार्थे शौरिपदं योगरूढं, रूढ्या तु 'देवकीनन्दनः शौरि'रित्यभिधानबलात् कृष्णस्यैव बोधः ।

(थ) कोषादाविति टीकाकृदुक्तं कोषग्रहणं न सम्यक्—नात्र कोषप्रसिद्धाप्रसिद्धिभ्यां विभागोऽवतार्य्यत इति मूलतः प्रतिभाति । तथा सति आनकदुन्दुभिरित्यत्रापि सिद्धत्वं पर्य्यवस्येत् 'वसुदेवोऽस्य जनकः स एवानकदुन्दुभि'रित्यमरोक्तेः । 'उपाधिश्च द्विविधो वस्तुधर्म्मो वक्तृयदृच्छासन्निवेशितश्च । वस्तुधर्मोऽपि द्विविधः सिद्धः साध्यश्चे'ति 'सङ्केतितश्चतुर्भेद' इत्यादि काव्यप्रकाशकारिकास्यवृत्तिमनुसृत्यात्र भागकल्पना । सिद्धान्ते तु द्वयोर्मनाग् वैलक्षण्यं यतस्तत्र साध्यपदेन कृदाख्यातप्रकृत्यर्थौ विवक्षितः । इह त्वन्यथा ।

(13) 'आनकदुन्दुभिनन्दनादयः' इति पाठः (ख) (ङ) (क) पुस्तकेषु ।

मुख्यो लाक्षणिको व्यञ्जक इति ये त्रिविधा पूर्व्वोक्तास्ते पुनरपि लक्षयिष्यमाणवृत्तित्रयाद्धेतोरिह प्रस्तूयन्ते—

**वृत्तित्रयात् पुनस्त्रेधा—१६का**

ते शब्दा इति गम्यम् ।

**—वृत्तयस्त्वभिधादयः ॥ १७का**

वृत्तित्रयन्तु अभिधा लक्षणा व्यञ्जनेति । अभिधैव शक्तिः ।

**यस्योच्चारणमात्रेण सहजं यत् प्रतीयते ।**

**तस्य तत्र तु या वृत्तिः साभिधा—१८ का**

यथा गोशब्दस्य सास्नादिमति प्राणिविशेषे वृत्तिः । सा तु न व्यक्तौ, अपि तु जातौ । व्यक्तौ चेत्तर्हि गोविशेष एव प्रतिपाद्यते, न तु गोमात्रम् । जातौ चेत्तर्हि व्यवहारानुपपत्तिः, अतो जात्याक्षिप्तव्यक्ताविव । न तु तत्र लक्षणा आक्षेपलभ्यत्वात्, अविनाभावो ह्याक्षेपः । (द)

शब्दो न परिवृत्तिसहः किन्तु सुतशब्द एव परिवृत्तिसहः । तथाच पुरसुतपुत्र इत्यत्र पुरसुतशब्दः परिवृत्तिसहः, पुत्त्रशब्दोऽपि परिवृत्तिसहः । ननु कस्यचित् शब्दस्य परिवृत्तिर्व्वर्त्तते कस्यचिन्नेत्यत्र किं प्रमाणमिति चेत्तत्र शब्दशक्तिस्वभावात् प्रामाणिकानामनुभव एव प्रमाणमिति बोध्यम् । पत्त्रथशब्द एव पक्षिवाची, नतु दलरथो, नापि पत्रस्यन्दनः पक्षिवाची । गरुत्मच्छब्द एव गरुड़वाची, नतु पक्षवान्, नाप्यस्त्यर्थकलकारादिप्रत्ययान्तो गरुत्मादिशब्दः । तथा गोसंख्यशब्द एव गोपवाची नतु धेनुसंख्यः, नापि गोसङ्ख्यानः ।

यदस्तु सहजं प्रतीयते तत्र तस्मिन् तस्य शब्दस्य या वृत्तिः साभिधा । व्यक्तौ चेदिति—तत्तद्व्यक्तिमात्र एव स्वीकारे व्यक्तिभेदेऽनन्तशक्तिस्वीकारेण गौरवात्, सन्निकृष्टतत्तगोव्यक्तौ शक्तिज्ञानवतः पुरुषस्य काश्यां गौरस्तीति वाक्यादसन्निकृष्टकाशीस्थतद्व्-

---

(द) अविनाभाव इति—नहि कदापि व्यक्तिं विना जातिर्व्वर्त्तते । आक्षेपोऽनुमानं व्याप्तिरिति यावत् । तथाचानुमानसहकारेण जातिविशिष्टधीः । इयं गौर्गोत्वादित्यनुमानान्न लक्षणा । शक्यार्थ एव प्रयोगो, नतु शक्यार्थबाधः । एवमपि वाक्यार्थबोधस्थले । अतो न लक्षणा । यदुक्तं कुसुमाञ्जलावुदयनाचार्य्यपादैः (३।१२) —

श्रुतान्वयादनाकाङ्क्षं न वाक्यं ह्यन्यदिच्छति ।
पदार्थान्वयवैधुर्य्यात्तदाक्षिप्तेन सङ्गतिः ॥

—लक्षणा पुनः ।

मुख्यार्थबाधे शक्यस्य सम्बन्धे यान्यधीर्भवेत् ॥ १६ का

'गङ्गायां घोष' इत्याप्तोक्तौ कश्चित् परामृशति—गङ्गायां घोषान्वयाभावात् घोषशब्दोऽत्र ध्वन्यर्थः, नत्वाभीरपल्ल्यर्थः ; ततः प्रतिवसतीति श्रुते गङ्गाशब्दो वा स्वसम्बन्धि तीरमभिधत्ते, घोषशब्दो वा स्वसम्बन्धिनं प्रतिबिम्बमभिधत्ते। उभयोरेव लाक्षणिकत्वं सम्भाव्यते, तदत्र नेयं रूढ़िलक्षणा, अपि तु प्रयोजनलक्षणैव। यदयमभ्रान्तो वक्ता तत्प्रयोजनमेव विचार्य्यम्। यदि गङ्गाशब्दस्तटं लक्षयति तदा तस्य शैत्यपावनत्वादिकमेव प्रयोजनम्। यदि वा घोषशब्दः स्वप्रतिबिम्बं लक्षयति, तदापि घोषस्य तत्तीरनैकट्यातिशयप्रतिपादनेन तदैव तीरगतं शैत्यपावनत्वादिकं, अधिकञ्च गङ्गाजलस्य स्वच्छत्वम्। तेनाधिकप्रयोजनलाभे घोषशब्दः एव लाक्षणिक इति परामर्शानन्तरं पुनस्तमा-

गोविषयकशाब्दबोधानुपपत्तेश्च, तत्र शक्तिज्ञानाभावेन पदजन्यपदार्थोपस्थितेरभावात्। एष दोषस्तु सामान्यलक्षणाया: प्रत्यासत्तित्वानङ्गीकारपक्ष एव बोध्यः। ननु जातौ शक्तिस्वीकारे व्यक्तिज्ञानाभावेन कथं तत्तद्व्यक्तिविषयकव्यवहारः सिध्यतीत्याह—तर्हीति। अतो जात्याक्षिप्तव्यक्तावेव व्यवहार इत्यर्थः। जातौ शक्तिवादिनां मते व्यक्तिभाणार्थं व्यक्तौ लक्षणा न स्वीकरणीया, व्यक्तिभाणमाक्षेपादेव। अविनाभावो व्याप्तिः। तथा च व्यक्तिभाणं विना जातिभाणमनुपपन्नमतो यत्र यत्र जातिभाणं तत्र तत्र व्यक्तिभाणमावश्यकमेवेति व्यक्तिज्ञानादेव शाब्दबोधे व्यक्तिभाणमिति।

मुख्यार्थस्य बाधे जाते यः शक्यस्य वाच्यस्य सम्बन्धस्तस्मिन् सति शक्यसम्बन्धस्य ज्ञाने जाते सतीत्यर्थः। या अन्यपदार्थविषयकधीर्भवेत्तादृशधीजनकशक्यसम्बन्धो लक्षणेति पर्य्यवसितार्थः। अधिकञ्चेति—गङ्गापदस्य लक्षणापेक्षया घोषपदस्य लक्षणायां गङ्गायां स्वच्छत्वप्रतीतिरधिका। अतोऽधिकप्रयोजनलाभात् घोषपदस्यैव लक्षणोचिता। एतन्मतमपि दूषयति—पुनरिति। तमानयेत्युक्ते तत्पदेन घोषपदार्थस्य प्रतिबिम्बस्य बोधस्वीकारे तस्यानयनमसम्भवमतो गङ्गापदस्यैव तीरे लक्षणा वक्तव्या। घोषपदस्याभीरपल्ल्यां शक्तिरेवातस्तदानयनं सङ्गच्छत इति निष्कृष्टम्। गङ्गापदसमभिव्याहारं विना केवलं घोषः प्रतिवसति, तमानयेत्युक्ते मुख्यार्थस्य बाधाभावे न लक्षणाया अवकाशः। किन्तु गङ्गापदप्रयोगादेव मुख्यार्थबाधः, अतएव गङ्गापद एव लक्षणेति व्युत्पद्यते। इयं लक्षणा जहत्स्वार्था, जहत् त्यजन् स्वार्थं यस्यां, (ध) तथाभूतापि गङ्गारूपस्वार्थस्य त्यागं

(ध) जहत्त्यजन् स्वार्थो यामिति वा विग्रहः।

नयेति श्रुते 'गङ्गा'शब्द एव लाक्षणिको न 'घोष'शब्द इति निश्चिन्वन्, 'घोषः प्रतिवसति, तमानये'त्युक्ते नान्वयवाधः, तेन वाक्ये न लक्षणा, अपि तु 'गङ्गा'-शब्द एवेति व्युत्पद्यते। इयन्तु लक्षणा जहत्स्वार्थापि स्वसम्बन्धमात्रेण स्वाविनाभावप्रतिपादयित्री।

'कुन्ताः प्रविशन्ती'त्यादावजहत्स्वार्था, कुन्तधारित्वेन कुन्तसहितप्रवेशात्।

Patanjali-Varttika.

'शोणो धावती'त्यत्र न लक्षणा, 'क्वचित् गुणवचनान्मतुपो लुगिष्ट' इति लुप्तेनापि मतुपा मुख्यार्थ एवाभिधीयते। 'छत्रिणो गच्छन्ती'ति समूहार्थे लक्षणा, सर्व्वेषां छत्रित्वेनान्वयाभावात्।

'रथो गच्छती'त्यत्र जहदजहत्स्वार्था, स्वाकर्षकगमनेन शक्यसम्बन्धात् स्वकर्त्तृकगमनाभावादंशतो जहत्स्वार्था गमनांशेनाजहत्स्वार्था। केचित्कुर्व्वेत्यपीत्यर्थः। शक्यसम्बन्धरूपलक्षणाघटकीभूतस्वसम्बन्धमात्रेण यः स्वस्याविनाभावो व्याप्तिः गङ्गासम्बन्धज्ञानस्यावश्यकतारूपा तस्य सम्पादयित्री।

कुन्तोऽस्त्रविशेषः, तद्विशिष्टपुरुषप्रवेशतात्पर्य्यस्थले केवलपुरुषे 'कुन्त'पदस्य न लक्षणा, किन्तु कुन्तविशिष्टपुरुष एव। शोणो रक्तगुणविशिष्टो धावतीत्यत्र गुणवाचकस्य 'शोण'-शब्दस्य शोणगुणविशिष्टे लक्षणेति सर्व्वत्र प्रसिद्धिः। कस्यचिन्मते लक्षणां विनैव 'गुणवचनान्मतुपो लुगि'त्यनुशासनेन शोणशब्दोत्तर-मतुपो लोपान्मुख्य एवार्थः। ननु छत्रसहितानां छत्ररहितानाञ्चानेकपुरुषाणां गमनस्थले 'छत्रिणो गच्छन्ती'ति प्रयोगश्छत्ररहितछत्रसहितपुरुषसमूहे लाक्षणिक इत्याह—सर्व्वेषामिति। छत्ररहितानां छत्रसहितानाञ्च सर्व्वेषां छत्रित्वेनान्वयाभावान्मुख्यस्यार्थस्य वाधः, अतोऽत्र छत्राछत्रुभयत्र 'छत्रि'पदस्य लक्षणा। तेनात्राप्यजहत्स्वार्था लक्षणा वोद्धव्या।

ननु 'रथो गच्छती'त्यादौ गमनानुकूलयत्नवत्त्वरूपस्य गमनकर्त्तृत्वस्य रथेऽचेतनत्वेन वाधितत्वात् कथं शाब्दवोधः? न च 'रथ'पदस्य रथप्रेरकपुरुषे लक्षणा स्वीकर्त्तव्या - तथा सति पुरुषस्य सचेतनत्वेन तस्मिन् गमनकर्त्तृत्वं न वाधितमिति वाच्यं, केवलं 'पुरुषो गच्छती'-त्यनुक्त्वा रथस्य गमनतात्पर्य्येण 'रथो गच्छती'ति वक्तुः पुरुषस्य विवक्षितार्थस्य रथनिष्ठवोधितगमनस्यासिद्धेः। तस्मादेवं वाच्यं—यथा 'रथ'पदस्य पुरुषे लक्षणा तथा गम्धातोरपि रथनिष्ठगमनविशेषे लक्षणा विवक्षणीया। तथाच रथनिष्ठगमनानुकूलयत्नवान् पुरुष इत्याकारकः शाब्दवोधः सिद्धः। एवं सति लक्षणया रथवृत्तित्वावच्छिन्नगमनत्वरूपधर्म्मविशेषस्य शाब्दवोधे भाणे सति गम्धातोः शक्यतावच्छेदकस्य निरवच्छिन्नगमनत्वजातिरूपस्वार्थस्य तादृशशाब्दवोधेऽभाणेन जहत्स्वार्था। एवं गम्धात्वर्थस्य गमनविशेषस्य भाणेनाजहत्स्वार्था च। तस्मादेकैव लक्षणा जहदजहत्स्वार्था भवतीति

दाख्यातस्य प्रयत्नवाचकत्वादचेतने तदभावाद्व्यापारे लक्षणां पठन्ति ; केचि-दाख्यातस्यानुकूलव्यापारप्रधानतया चेतनाचेतनयोर्धात्वर्थानुकूलव्यापारस्य सत्त्वादाख्यातप्रयोगो मुख्य एवेति ।

'मञ्चाः क्रोशन्ती'त्यत्र स्वसम्बन्धमात्रेण जहत्स्वार्थैव । नेयं प्रयोजनवती, न वा रूढ़िलक्षणा ।

कस्यचिदेकदेशिनो मतमाश्रित्याह—'रथो गच्छती'ति । स्वस्य रथस्याकर्षको यः पुरुष-स्तस्माद्रथस्य गमनेन पुरुषे 'रथ'पदस्य शाक्यसम्बन्धरूपलक्षणासम्भवादित्यर्थः । स्वकर्त्त-केति—रथकर्त्तृकगमनासम्भवादन्वयानुपपत्तिरूपं लक्षणाबीजमपि दर्शितम् । अंशत इति—गम्धातोरपि निरवच्छिन्नगमनत्वजातिरूपस्वार्थस्य शाब्दबोधेऽभागेन तदंशे जहत्स्वार्था लक्षणा । गमनांशेनेति—गम्धात्वर्थस्य गमनविशेषस्य भागेन तदंशेऽजहत्-स्वार्था च । एतन्मतं नात्यन्तविचारसहमतो मतान्तरमाह—केचिदिति (न) । आख्यातस्य यत्ने शक्तिरतोऽचेतने रथादौ यत्नाभावाद्व्यापाररूपार्थे लक्षणां पठन्ति । व्यापारोऽत्र स्वप्रेरकपुरुषेण सह रथस्य गमनक्रियानुकूलसंयोगः । तथाच गमनानुकूलव्यापाराश्रयो रथ इत्याकारको बोधः सिद्ध इति भावः । कस्यचिन्मते 'रथो गच्छती'त्यत्र लक्षणैव नास्ति' किन्तु मुख्य एवायं प्रयोगस्तन्मतमुपन्यस्यति—केचिदिति । आख्यातस्य न यत्नमात्रे शक्तिः, किन्तु व्यापारवत्त्वरूपेण व्यापारे शक्तिः । व्यापारवत्त्वरूपधर्मस्तु यत्ने तथा रथपुरुषसंयोगे वर्त्तते, (14) अतो व्यापारवत्त्वरूपेणोभयत्र शक्तिः । तथाच सचेतनकर्त्त-समभिव्याहारस्थले व्यापारवत्त्वरूपेण यत्नस्य बोधो जायते, अचेतनकर्त्तृकस्थले व्यापार-वत्त्वरूपेण संयोगादिबोधो जायत इति न कुत्रापि लक्षणाया अवकाशः, एतदभिप्रायेणाह—आख्यातस्यानुकूलेति । आख्यातार्थानुकूलव्यापारस्य प्रधानतया मुख्यतया चेतने पुरुषे ऽचेतने रथे च धात्वर्थानुकूलव्यापारस्य यत्नस्य संयोगस्य च यथासंख्येन सत्त्वादाख्यातघटितो 'रथो गच्छती'ति प्रयोगो मुख्य एव, नतु लाक्षणिकः ।

---

(न) वस्तुतस्तु 'केचिदि'ति निर्देशेन जहदजहत्स्वार्थलक्षणापक्षः ग्रन्थकृतो नानभि-मत इति सुव्यक्तमेव, अतः 'अतो मतान्तरमाह' इति टीकाकृदभिधानं न ग्रन्थकारमत-तात्पर्यपर्य्यालोचनया । आख्यातस्य प्रयत्नादिवाचकत्वमुपन्यस्तं जगदीशेन—'धात्वर्थेन विशिष्टस्य विधेयत्वेन बोधने । समर्थः स्वार्थयत्नस्य शब्दो वाख्यातमुच्यते ॥' इति कारिकायाम् ।

---

(14) 'यथा यत्ने तथा रथपुरुषसंयोगे च वर्त्तते' इति (घ) पुस्तके पाठः ;

## रूढ़्या प्रयोजनेनापि सा द्विधा—२० का

सा लक्षणा द्विधा भवतीत्यर्थः। 'विष्वक्सेन' इत्यादौ विषूची सेना यस्येति बहुतरसेनावति महाराजादौ व्युत्पन्नत्वेऽपि शक्त्या भगवत्यपि भगवद्भक्तविशेष एव रूढ़िः। 'गङ्गायां घोषः प्रतिवसती'त्यादौ प्रयोजनं, तत्तु शैत्यपावनत्वादि। अत उक्तम्—

Kumarila Bhatta—Slokavarttika.

अभिधेयाविनाभूतप्रतीतिर्लक्षणोच्यते।
लक्ष्यमाणगुणैर्योगाद्वृत्तेरिष्टा तु गौणता॥

'व्यङ्गेन रहिता रूढ़ौ सहिता तु प्रयोजने' इति वचनाद्व्यङ्ग्यसहिता प्रयोजनवती लक्षणैव प्रयोजिका, न रूढ़िलक्षणा।

Kavyaprakasa II.

## —भिद्यतेऽथ सा। २१ का

सा प्रयोजनवती लक्षणा भिद्यते विविधा भवतीत्यर्थः।

मञ्चा इति—अचेतनमञ्चस्य क्रोशनासम्भवान्मञ्चपदेन मञ्चस्थपुरुषे लक्षणा। इयन्तु प्रयोजनवतीरूढ़िलक्षणयोरतिरिक्ता निरर्थिकैव।

सार्थकलक्षणा तु द्विविधेत्याह—रूढ़ेति। रूढ़िलक्षणा तु शक्तितुल्यैव, अतोऽस्या अपि सार्थकत्वं बोध्यम्। 'विषु'शब्दोऽव्ययः सर्व्ववाची, तेन विषु सर्व्वतोऽञ्चति गच्छतीति विषूची सर्व्वव्यापिका सेना यस्येति व्युत्पत्त्या 'विष्वक्सेन'शब्दोऽवयवव्युत्पत्त्या महाराजबोधकः, 'विष्वक्सेनो जनार्द्दन' इत्यभिधानाच्छक्त्या भगवद्वाचकः, रूढ़िलक्षणया भगवत्पार्षदविशेषे लाक्षणिकः। तथाच 'रूढ़िर्योगापहारिणी'ति नियमेन 'विष्वक्सेन'शब्देन पार्षदबोध एव भवति, नतु योगशक्त्या महाराजादिबोधो भवति। न च रूढ़ेः प्रतिबन्धकत्वाच्छक्त्या भगवद्बोधोऽपि माऽस्त्विति वाच्यं, यतो 'रूढ़िर्योगापहारिणी'ति न्यायेन योगशक्त्या प्रत्ययघटितप्रकृतिजन्यमहाराजादीनां बोध एव न जायते। नतु 'विष्वक्सेनो जनार्द्दन' इत्यभिधानात् समुदायशक्त्या भगवद्बोधे रूढ़ेः प्रतिबन्धकत्वं सम्भवतीति बोध्यम्।

अभिधेयस्य शक्यस्याविनाभूतोऽसाधारणसम्बन्धविशेषविशिष्टस्तस्य प्रतीतिर्यस्याः सा लक्षणोच्यते। उदाहरणन्तु 'गङ्गायां घोष' इत्यादि। लक्ष्यमाणगुणस्य सादृश्यस्य योगाद्धेतोर्वृत्तेर्गौणतेष्टा, गौणी वृत्तिर्भवतीत्यर्थः। तथाचैतन्मते सादृश्यलक्षणास्थले गौणी वृत्तिः शक्तिलक्षणातिरिक्ता स्वतन्त्रा वृत्तिरिति भावः। उदाहरणन्तु 'गौर्व्वाहीक' इत्यादि। वहिर्लिखतीत्यौणादिकप्रत्ययाद्ग्रामस्यान्ते स्थितनीचजातिर्व्वाहीकः (प), स तु गौर्गोसदृशः।

व्यङ्गेनेति—रूढ़िलक्षणा व्यञ्जनावृत्तिरहिता, प्रयोजनवती लक्षणा व्यञ्जनावृत्तिसहितेति

सारोपा सारोप्यमाण आरोपविषयोऽपि च ।
यत्र व्यक्तौ —२२ का

यत्र लक्षणायामारोप्यमाण आरोपविषयश्च स्फुटौ, सा सारोपा । यथा 'अमृतं श्रीकृष्णगुणश्रवणम्' । अत्रामृतमारोप्यमाणं गुणश्रवणमारोपविषयो द्वाविव स्फुटौ । 'गौर्वाहीक' इत्यन्ये (प) ।

—आदिनान्तर्निगीर्णे चरमे सति ।
भवेत् साध्यवसाना सा—२३ का

सा सारोपा साध्यवसाना भवेदादिनारोप्यमाणेन चरम आरोपविषये-ऽन्तर्निगीर्णे सति । यथा 'अमृतमेवेद'मिति । आरोप्यमाणेनामृतेन गुण-श्रवणमारोपविषयोऽन्तर्निगीर्णः । 'गौरेवाय'मित्येके ।

भिदे द्वे द्विविधे इमे ।
गौण्यौ शुद्धे च सादृश्यात् सम्बन्धान्तरतोऽपि च ॥ २४ का

एतौ भेदौ सादृश्याद् गौणौ, सम्बन्धान्तरतः शुद्धौ भवत इत्यर्थः ।

प्रामाणिकानां वचनादाग्रहसहिता प्रयोजनवती लक्षणैव प्रयोजिका सार्थिका, न तु रूढ़ि-लक्षणा । एतन्मते रूढ़िलक्षणा व्यर्थेति बोध्यम् ।

सा प्रयोजनवती लक्षणा सारोपा । भक्तमत उदाहरणममृतं श्रीकृष्णगुणश्रवणं, अन्यमते तु 'गौर्वाहीक' इति ।

सूत्रस्यादिनेत्यस्य व्याख्या—आरोप्यमाणेनेत्यमृतेनेत्यर्थः । चरम इत्यस्य व्याख्या—आरोपविषय इति कृष्णकथाश्रवण इत्यर्थः । अन्तर्निगीर्णे सतीति—नेदं कृष्णकथा-श्रवणमपि त्वमृतमेवेति वाक्य एवकारेण कृष्णकथाश्रवणस्य निषेधे सतीत्यर्थः । सारोपा-स्थले त्वमृतकृष्णकथाश्रवणयोरभेदप्रतीत्या द्वयोरेव वाक्ये प्रवेशः । न तु साध्यवसानास्थल इवापरस्य निषेधः । अयं वाहीको न भवत्यपि तु गौरेवेत्युदाहरणं भक्तभिन्नानां ज्ञेयम् ।

---

(प) अत्र भक्तकृते ग्रन्थे श्रीकृष्णनामकथाश्रय एवोदाहरणविन्यासः, तेनातदर्थमुदाहरण-मन्यत उपादीयत इत्यन्य इत्यभिधानम् । 'पञ्चानां सिन्धुषष्ठानामन्तरं ये समाश्रिताः । वाहीका नाम ते देशा न तत्र दिवसं वसेत् ॥" इति महाभारतीयकर्णपर्व्वस्थश्लोकाद्वाहीको नाम वर्ज्जनीयो देशविशेषस्तत्रत्यः पुरुषो वाहीक इति वा व्याख्या । अत्राज्ञत्वानाचारादि-साधर्म्म्यसम्बन्धः, अज्ञत्वानाचाराद्यतिशयबोधनं लक्षणायां प्रयोजनमिति स्थितिः ।

**साद्दृश्यहेतुका तूक्ता सम्बन्धान्तरहेतुका । २५ का।**

यथा 'भगवद्भक्तिर्महत्सङ्गः', 'भगवद्भक्तिरेवायम्'—अत्र कार्य्यकारणभावसम्बन्धः । 'आयुर्घृतं,' 'आयुरेवेद'मित्यन्ये । क्वचित्तादर्थ्यात् यथा—'कृष्णसेवार्थो व्यापारः कृष्णसेवा' । क्वचित् स्वस्वामिभावसम्बन्धात् यथा—'कृष्णस्य सखा कृष्णः' । क्वचित्तात्कर्म्यात् यथा—'कृष्णो गोपालनाद् गोपः' । सर्व्वत्र प्रयोजनं न रूढ़िः (फ) ।

**पराक्षेपः स्वसिद्ध्यर्थं परस्मिन् स्वसमर्पणम् ।**
**ययोस्ते लक्षणे शुद्धे प्रागुपादानलक्षणे ॥ २६ का**

इमे सारोपासाध्यवसाने द्वे द्विविधे भवतः । साद्दृश्यसम्बन्धेनारोपे सति द्वे गौण्यौ भवतः, सम्बन्धान्तरेणारोपे सति द्वे शुद्धे भवतः ।

महत्सङ्गो भगवद्भक्तिजनक इति लक्ष्यार्थः—इत्यत्र सारोपा । भक्तिरेवायमिति साध्यवसाना । भक्तिजनकानां मध्ये महत्सङ्गो यथा भक्तिजनकस्तथा नान्यः, एतादृशजनकतातिशयरूपप्रयोजनवतीयं लक्षणेति ज्ञेयम् । अयं व्यापारः कृष्णसेवेत्यत्र तादर्थ्यसम्बन्धे लक्षणा । कृष्णस्य सखा सुबलः कृष्ण एव, सख्यातिशय एव प्रयोजनम् । 'गोप'पदस्य रूढ़िशक्त्या गोपजातावेव प्रयोगः, तदतिरिक्ते गोपालनकर्त्तरि वैश्यजातौ गोपव्यवहारस्तु लाक्षणिक एव—यथा 'मण्डपं भोजये'त्यत्र 'मण्डप'शब्दो गृहे रूढ़िरपि मनुष्ये लाक्षणिकः । एतन्मतमाश्रित्याह—कृष्णः गोपालनाद्गोपो न भवति, किन्तु गोपजातिरेव । तेन गोपजातेर्यथा कर्मान्तरं विहाय गोपालनेऽत्यासक्तिस्तथा श्रीकृष्णस्यापि गोपालने आसक्त्यतिशय एव लक्षणायाः प्रयोजनम् । सर्व्वत्र सारोपासाध्यवसानास्थले प्रयोजनवती लक्षणा न रूढ़िः ।

पुनर्लक्षणायाः भेदद्वयमाह—स्वस्य सिद्ध्यर्थं पराक्षेपः, यथा 'कुन्ताः प्रविशन्ती'त्यत्र कुन्तस्याचेतनस्य प्रवेशसिद्ध्यर्थं परस्य पुरुषस्याक्षेपः—तत्रोपादानलक्षणा ज्ञेया । एवं 'गङ्गायां घोष' इत्यत्र परस्मिंस्तीरे गङ्गागुणस्य शैत्यपावनत्वादेः समर्पणम्—तत्र लक्षणा-

---

(फ) 'पुंयोगादाख्यायाम्' (४।१।४८) इति सूत्रव्याख्यानावसरे दर्शितं भाष्यकृत्कैयटादिमतमप्येवम् । तथा च नागेशः—तात्स्थ्यात्तथैव ताद्धर्म्यात्तत्सामीप्यात्तथैव च । तत्साहचर्य्यात्तादर्थ्याज्ज्ञेया वै लक्षणा बुधैः ॥" तात्स्थ्यात् यथा—'मञ्चाः हसन्ति' । ताद्धर्म्यात् यथा—'कृष्णो गोपालनात् गोपः' । तत्सामीप्यात् यथा—'गङ्गायां घोषः' । तत्साहचर्य्यात् यथा—'कुन्ताः प्रविशन्ति' । तादर्थ्योदाहरणन्तु मूल एव । एवमपि रसगङ्गाधरे ।

प्राग्वर्त्तिनी उपादानलक्षणपदे ययोस्ते। तेनोपादानलक्षणा लक्षणलक्षणा चेत्यर्थः। उपचारेणामिश्रत्वाच्छुद्धे। पृथक्त्वेन वर्त्तमानयोर्द्वयोरैक्यारोप उपचारः। तत्र 'वेणुर्गायति', 'वीणाः श्रुतिमनुकुर्व्वन्ती'ति, वेण्वादिभिः स्वसिद्ध्यर्थं स्वस्ववादकानां परेषां श्रीकृष्णललितादीनामाक्षेपः कृत इत्युपादान-लक्षणा। यत्र यत्राविनाभावोऽर्थापत्तिर्व्वा तत्र तत्र नोपादानलक्षणा प्रयोजनरूढ़्योरभावात्। यथा 'गौरनुबन्ध्य' इति श्रुतिचोदितमनुबन्धनं कथं मे स्यादिति जात्या व्यक्तिराक्षिप्यते नतु शब्देनोच्यते, 'विशेष्यं नाभिधा गच्छेत् क्षीणशक्तिर्व्विशेषणे' इति न्यायात् (ब)। उक्तञ्च वाक्यपदीये—'गौः स्वरूपेण न गौर्नाप्यगौर्गोत्वाभिसम्बन्धात्तु गौ'रिति। एवं क्रियतामित्यत्र कर्त्ता, कुर्व्वित्यत्र कर्म्म, प्रविश पिण्डीं गृहं भक्षयेत्यादिष्वाक्षेपः एव। 'पीनो

लक्षणा ज्ञेया। एतादृशे द्विविधे एव लक्षणे शुद्धे ज्ञेये। प्रागुपादानलक्षणे इत्यस्य व्याख्यामाह—प्राग्वर्त्तिनीति। द्वयोरैक्यारोप इति—'गौर्व्वाहीक' इति स्थल उपचार इत्यर्थः। वेणुरिति—वेणोः स्वातन्त्र्येण गानासम्भवाद्वेणुपदेन श्रीकृष्णस्याक्षेपः कृतः। वीणाः गानशास्त्रोक्तां श्रुतिमनुकुर्व्वन्ति। यत्रेति—यत्र जातिव्यक्त्योरविनाभावो व्याप्तिरूप-सम्बन्धस्तत्र जात्या व्यक्तिराक्षिप्यते। 'पीनो देवदत्तो दिवा न भुङ्क्ते'—अत्राप्यर्थापत्त्या रात्रिभोजित्वसिद्धिः। अतस्तत्र तत्र स्थले नोपादानलक्षणा। तत्र हेतुः—लक्षणाबीजयोः प्रयोजनरूढ़्योरभावात्। 'गो'पदस्य व्यक्तौ लक्षणायां न प्रयोजनं, न वा रूढ़िः। प्रयोजनं विनैव सर्व्वत्र वृथा लाक्षणिकप्रयोगस्तु विशेषदर्शिनामनुचित इति बोध्यम्। एतदेवाह—यथेति। श्रुत्युक्तं गोपदार्थस्य गोत्वस्य मत्कर्त्तृकं बन्धनं कथं स्यादिति पुरुषस्य परामर्शे

(ब) 'गौरनुबन्ध्य' इत्यत्रोपादानलक्षणेति मण्डनमिश्रादीनां मतं, तन्न विचारसहमित्युपरिष्टा-देव दर्शितम्। 'गौरनुबन्ध्योऽजोऽग्निषोमीय' इत्यादि श्रुतिर्व्विवाहे गवालम्बनविधिवाक्यम्। अनुबन्ध्य आलभ्यो हन्तव्य इति यावत्। एवंविधस्थलेऽभिधयैव जात्याक्षिप्तव्यक्तिभाण-मिति दर्शितमेवैतल्लौकिकवाक्यपक्षे १८ कारिकास्थवृत्तौ, वैदिकवाक्ये चात्र मूलस्थ-प्रतीके—तेन व्यक्तिप्रतीतिप्रकारोऽतिरोहितार्थ एव। वाक्यपदीयवाक्यस्य स्फुटतरा व्याख्या पण्डितराजेन कृता। सैवात्र दर्श्यते—'गौः सास्नादिमान् धर्म्मी स्वरूपेणाज्ञातगोत्वकेन धर्म्मिस्वरूपमात्रेण न गौर्न्न गोव्यवहारनिर्व्वाहकः, नाप्यगौर्न्नापि गोभिन्न इति व्यवहारस्य निर्व्वाहकः—तथा सति दूरादनभिव्यक्तसंस्थानतया गोत्वाग्रहदशायां गवि गौरिति गोभिन्न इति वा व्यवहारः स्यात् स्वरूपस्याविशेषात् घटे गौरिति गवि चागौरिति वा व्यवहारः स्यादिति भावः। गोत्वाभिसम्बन्धात् गोत्ववत्तया ज्ञानात् गौर्गोशब्दव्यवहार्य्य' इति।

देवदत्तो दिवा न भुङ्क्ते'—रात्रौ भुङ्क्त इत्यर्थापत्त्यैव गम्यत इत्यादिषु नोपादानलक्षणा। केवलं 'कुन्ताः प्रविशन्ती'त्यादिषु सा। 'गङ्गायां घोष'-इत्यादौ शैत्यपावनत्वादि स्वगुणसमर्पणलक्षणेन लक्षणलक्षणा।

**पूर्व्वैश्चतुर्भिर्भेदैः सा द्वाभ्यामाभ्याञ्च षड्विधा। २१। (भ)।**

पूर्व्वैः सारोपादिभिः, आभ्यामुपादानलक्षणालक्षणलक्षणाभ्याम्।

**गूढ़व्यङ्ग्या गतव्यङ्ग्या व्यक्तव्यङ्गेति सा त्रिधा॥ २८ का**

सा लक्षणा। गतव्यङ्ग्येति नाद्रियते। गूढ़व्यङ्ग्या यथा—

उत्कीर्णैरिव चित्रितैरिव नवोङ्किन्नैरिवोद्यद्दयः-

कुन्दे विभ्रमितैरिव स्मरकलाशाणे निशातैरिव।

जाते सति जात्या व्यक्तिराक्षिप्यते, नतु गोशब्देन शक्त्या लक्षणया वा व्यक्तिरुच्यते॥ विशेषणे गोत्वे क्षीणा पर्य्यवसिता शक्तिः सामर्थ्यं यस्यास्तथाभूताभिधा विशेष्यं गो-व्यक्तिं न गच्छेत्, विशेष्ये न तिष्ठतीत्यर्थः। उक्तञ्च वाक्यपदीये व्याकरणे—गौर्गोव्यक्तिः स्वरूपेण सास्नादिमत्वादिना न गौत्वं गोपदार्थः, नाप्यगौत्वं गोभिन्नानामश्वादि-पदानामर्थः, किन्तु गोत्वाभिसम्बन्धात् गोत्वजातिसम्बन्धाक्षेपवशात् गौर्गोपदजन्यशाब्दबोध-विषयः। यथा गोपदस्थले आक्षेपलभ्यव्यक्तौ प्रयोजनाद्यभावाल्लक्षणा नास्ति, तथैव 'कटः क्रियता'मित्युक्ते कर्त्राक्षेपलभ्यस्तत्रापि लक्षणा नास्तीत्याह—क्रियतामिति। एवं त्वं कुर्व्वित्युक्त कटं कर्म्माक्षेपलभ्यम्। प्रविशेत्युक्ते गृहं कर्म्माक्षेपलभ्यम्। पिण्डीमन्नादि-ग्रासमित्युक्ते भक्षयेति क्रियाक्षेपलभ्या—इत्यादिष्वाक्षेप एव, न तु लक्षणा, प्रयोजनरूढ्यो-रभावादिति भावः। केवलमिति—वेणुर्गार्यति। 'कुन्ताः प्रविशन्ती'त्यादौ सा उपादानलक्षणा। शक्त्या कुन्तविशिष्टा इत्युक्ते कुन्तस्य विशेषणत्वेनोपलक्षणतया कदाचित्तद्रहितस्यापि पुरुषस्य प्रवेशसङ्गावात्; अतः कुन्तस्य प्राधान्येन प्रवेशार्थं 'कुन्ता' इति लाक्षणिकं पदमुक्तम्। एवमेव सर्व्वत्र लक्षणायां प्रयोजनं ज्ञेयम्।

पूर्व्वैरिति—गौणशुद्धभेदेन सारोपा द्विविधा, तथा साध्यवसानापि द्विविधा, एवं क्रमेण चतुर्भिर्भेदैरित्यर्थः।

---

(भ) एवमपि काव्यप्रकाशे। एतन्मते रूढ़िप्रयोजनाभ्यां भेदाधिक्यं नाङ्गीकृतम्। विद्याधरेण प्रयोजनलक्षणाया एते षड् भेदाः, रूढ़िलक्षणा एकैवेति सप्तविधैव लक्षणो-क्तम्। दर्पणकृदादयस्तु रूढ़िप्रयोजनाभ्यामारोपाध्यवसानाभ्यां तथोपादानलक्षणाभ्यां प्रत्येकस्य भेदस्यान्योन्ययोजनेन (२×२×२=८) अष्टविधत्वं तस्याः स्वीकुर्व्वन्ति। पश्चात् गौणशुद्धाद्यनेकभेदहेतुत्वेन 'एवमशीति—(८०) प्रकारा लक्षणे'ति निष्कृष्टं स्वमतमाहुः। निर्व्वन्धातिशयवद्भिस्तु तत्रैव द्रष्टव्या इत्यास्तां विस्तरः।

मग्नोन्मग्नतयालसैरिव भृशं लावण्यवापीजले
कैयं केलिकलानिधिः सुवल ! मे चेतो हरत्यङ्गकैः (म) ॥ १

अत्रोत्कीर्णादीनां लाक्षणिकानां पदानां व्यङ्ग्यं गूढ़तया प्रकाशते। तथाहि—'उत्कीर्णे'ति निर्म्माणविशेषः, 'चित्रिते'ति नानावर्णत्वात् करचरणनयनभ्रूलतादिषु ये ये वर्णास्तैश्चित्रितत्वं, 'नवोद्भिन्ने'त्यङ्कुरत्वारोपेण कोमलत्वं, 'उद्यद्वयःकुन्दे'ति सुवलितत्वं, 'स्मरकलाशाणे'ति स्मरकृतशाततया चेतोभेदकत्वं, 'मग्नोन्मग्नतये'ति लावण्याधिक्यम्। इदन्त्वस्पष्टमेव।

अगूढ़ं यथा—

लीलाविलासमहुरिमगरिमा आहीरअकुमारिआणं।
कण्हाणुराअगरुणा विअड्ढभाअं पढ़ाइदो झत्ति ॥ २

अत्र पाठित इत्यगूढ़व्यङ्ग्यम्।

अथ का नाम व्यञ्जनेति व्यञ्जनालक्षणमाह—

नाद्रियत इति—तथाच गूढ़व्यङ्ग्या व्यक्तव्यङ्ग्येति द्विविधैव लक्षणा (म)।

हे सुवल! केयं केलिकलानिधिरङ्गकैर्मे चेतो हरति। कथम्भूतैः? उत्कीर्णैरिव उत्कीर्णत्वमत्रेव वर्द्धकिकृतकाष्ठादिपुत्तलीनां निर्म्माणसौष्ठवातिशयः, तेनाङ्गस्य निर्माणविशेषो ध्वनितः। उद्यद्वय एव कुन्दः 'कुंद' इति प्रसिद्धस्तत्र भ्रमिं प्राप्तैः। स्मरस्य कलारूपे शाणे 'खरात्' इति प्रसिद्धे निशातैस्तीक्ष्णीकृतैः, तेन कन्दर्पकृततीक्ष्णत्वेनाङ्गस्य चेतोभेदकत्वमानीतम्। लावण्यरूपा या वापी दीर्घिका तस्या जले भ्रमणातिशयेन मग्नोन्मग्नतयालसैः शोभमानैः। अनेन लावण्याधिक्यं ध्वनितम्।

लीलाविलासेति—लीलाविलासमधुरिमगरिमा आभीरकुमारिकाणाम्। कृष्णानुरागगुरुणा विदग्धभावं पाठितो झटितिॆ॥ विदग्धभावं वैदग्ध्यम्। पाठिता इति—तेन श्रीकृष्णप्रेयसीषु वैदग्ध्यादिकं सर्व्वं शीघ्रमयत्नेनैव स्वयं प्रकाशितमभूदिति व्यक्तव्यङ्ग्यम्।

---

(म) ग्रन्थकृत्कृतद्विधाविभागो मम्मटमतमनुसृत्य। वृत्तौ 'गतव्यङ्ग्यस्त्विह नाद्रियत' इति ग्रन्थकृता स्वयमेवाभिहितत्वात् तृतीयस्य भेदस्यापरिगणनं कृतं टीकाकृता, तच्च दर्पणादिदर्शितभागस्वारवक्ताभिप्रायकमिति प्रतिभाति।

(य) 'आराद्राधां वीक्ष्य सुवजमेतदाह कृष्णः' इति साहित्यकौमुदीटीकायाम् (२.८)। 'अङ्गकै'रिति 'क' प्रत्ययेन बालाया वयःसन्धिमारूढ़ाया वा राधाया वर्णनमित्युन्नेयं भवति।

**अभिधालक्षणाक्षेपतात्पर्य्याणां समाप्तितः ।**
**व्यापारो ध्वननादिर्यः शब्दस्य व्यञ्जना तु सा (र)॥ २९का**

'गङ्गायां घोष' इत्यत्र 'गङ्गा'शब्दः प्रथमं वाचकत्वेनाभिधावृत्तिकः, अन्यथान्वयाभाव एव न स्यात्। अनन्तरमभिधासमाप्तौ लक्षणामाश्रित्य तटं लक्षयति। तदनन्तरं लक्षणासमाप्तौ व्यञ्जनामाश्रित्य शैत्यपावनत्वादिकं प्रयोजनं व्यनक्ति। लक्षणायाः सव्यङ्ग्याव्यङ्ग्यतया निरूपितत्वात् सव्यङ्ग्य-लक्षणैव व्यञ्जनाजननी,—

Kavyaprakasa II.

"प्रयोजनेन सहितं लक्षणीयं न लक्षयेत् (15)।
ज्ञानस्य विषयो ह्यन्यः फलमन्यदुदाहृतम्॥"

अभिधेति—समाप्तित इति—अभिधादिजन्यबोधसमाप्त्यनन्तरं ध्वननादिर्ध्वन्यर्थबोधस्यादिः कारणं यो व्यापारो वृत्तिविशेषः सा शब्दस्य व्यञ्जनेत्यर्थः। 'तत्'पदं क्वचिदुद्देश्यलिङ्गं क्वचिच्च विधेयलिङ्गं गृह्णातीति नियमेनात्र विधेयलिङ्गग्रहणात् 'से'ति स्त्रीलिङ्गम्। अन्यथेति—अन्यथा लक्षणास्थले प्रथमतोऽभिधाजन्यबोधस्यास्वीकारेऽन्वयाभावो लक्षणाबीजमन्वयानुपपत्तिर्न स्यात्—प्रथमतोऽभिधया गङ्गापदार्थे घोषपदार्थस्यान्वयानुपपत्तिज्ञानादेव लक्षणायाः प्रवृत्तिः, अतोऽभिधाया अभावे लक्षणैव नास्तीति भावः। ननु व्यञ्जनया यादृशार्थबोधो भविष्यति तादृशार्थबोधो लक्षणयैव भविष्यति, अलं व्यञ्जनायाः स्वतन्त्रवृत्तित्वस्वीकारेणेत्याह—लक्षणाया इति। लक्षणा हि द्विविधा—व्यङ्ग्यसहिता व्यङ्ग्यरहितेति च। तत्र व्यङ्ग्यसहितैव लक्षणा व्यञ्जनाजननी व्यञ्जनावृत्तिजन्यज्ञानोत्पादिकेति पूर्व्वपक्षः। तत्र समाधानमाह—प्रयोजनेन शैत्यपावनत्वेन सहितं लक्षणीयं तीरं न लक्षयेत् न लक्षणाजन्यबोधविषयो भवेत्। अभिधाया निवृत्त्यनन्तरमन्वयानुपपत्तिज्ञानाद्यथा लक्षणायाः प्रवृत्तिस्तथा लक्षणाया निवृत्त्यनन्तरमहो अनेन विशेषदर्शिना गङ्गातीरे घोष इत्यनुक्त्वा 'गङ्गायां घोष' इति प्रयोगः कथं कृतः? तस्माल्लक्षणाव्यङ्ग्यं शैत्यपावनत्वादिकमेतदभिप्रेतं भविष्यतीति

---

(र) तार्किकैः कैश्चिद्व्यञ्जनायाः स्वतन्त्रवृत्तित्वं न स्वीक्रियते। व्यञ्जना शाब्दी आर्थी चेति द्विधा। सा च पुनरभिधामूला लक्षणामूलेति भेदेनापि भिन्ना। अत्र कारिकायां शाब्द-व्यञ्जनाया एव परिग्रहः। नैयायिकैरभिधामूलाया व्यञ्जनायाः क्वचिदभिधायां क्वचित् तात्पर्य्यवृत्तौ, लक्षणामूलायाः शाब्दव्यञ्जनाया लक्षणायाश्चान्तर्भावः स्वीक्रियते। तन्मतखण्डन-पद्धतिस्तु मूलग्रन्थ एव सुस्पष्टा। अधिकस्तु लक्षणामूलशाब्दव्यञ्जनास्थले एष युक्तिबन्धो

---

(15) 'लक्षणीयं न युज्यते' इति सर्व्वेष्वेव मुद्रितकाव्यप्रकाशपुस्तकेषु पाठः। स्मृतिपथमुपनीतमेतत् पद्यं ग्रन्थकर्त्तोदाहृतं, अतो न किल तस्वतो वैलक्षण्यम्।

इत्युक्तेः, 'शब्दबुद्धिकर्म्मणां विरम्य व्यापाराभाव' इत्युक्तेश्चाभिधालक्षणयोरुपक्षीणत्वात्, आकाङ्क्षादिमत्पदकदम्बस्य वाक्यत्वे वाक्यार्थस्यैव तात्पर्य्यार्थत्वे वाक्यं विनाप्येकस्य च पदस्य पदांशस्यापि व्यञ्जकत्वेन ध्वनिकाव्याङ्गीकृतेस्तात्पर्य्यार्थस्याप्यनादरात्, व्यञ्जना नाम तुरीया वृत्तिरङ्गीकार्य्यैव ।

परामर्शाद्व्यञ्जनावृत्त्या शैत्यपावनत्वादिबोधो भवति, नत्वेकस्मिन्नेव क्षणे लक्षणया शैत्यपावनत्वादिविशिष्टतीरबोधः सर्व्वेषामनुभवसिद्ध इति भावः। अत्रार्थे प्राचीनानां सम्मतिमाह—ज्ञानस्येति अभिधालक्षणाजन्यज्ञानविषयः प्रवाहतीरादिरन्यो व्यङ्ग्यार्थाद्भिन्नः, फलं व्यङ्ग्यार्थशैत्यपावनत्वादि अन्यदभिधालक्षणयोरविषय उदाहृतं प्राचीनैरिति शेषः। ननु 'गङ्गायां घोष' इत्यत्राभिधालक्षणाभ्यां प्रवाहतीरबोधानन्तरं 'गङ्गा'पदात् (16) पुनर्लक्षणयैव शैत्यपावनत्वादिबोधो भवतु, किं व्यञ्जनास्वीकारेणेत्यत: प्राचीनानां वचनान्तरमाह—शब्दबुद्धीति। वाचनिकलाक्षणिकशब्दादीनां विरम्य अभिधया लक्षणया वा सकृच्छाब्दबोधमुत्पाद्येत्यर्थः व्यापाराभावः पुनरभिधया लक्षणया वा अर्थान्तरबोधे सामर्थ्याभावः, किन्तु स्वतन्त्रव्यञ्जनावृत्त्या अर्थान्तरबोधे सामर्थ्यमस्तीति भावः। तथा च यादृशवृत्त्या सकृच्छाब्दबोधो जातस्तादृशवृत्त्या पुनस्तत्पदजन्यशाब्दबोधो नोत्पद्यत इति सिद्धान्तः। उपक्षीणत्वात्—शैत्यपावनत्वादिबोधेऽप्रयोजकत्वादित्यर्थः। ननु लक्षणातिरिक्ता या तात्पर्य्यवृत्तिस्तयैव शैत्यपावनत्वादिबोधो भवतु, कथं व्यञ्जनायाः स्वतन्त्रवृत्तित्वं स्वीकर्त्तव्यम्? तत्राह—आकाङ्क्षादीति। आकाङ्क्षायोग्यतासत्तियुक्तपदसमूहात्मकत्वं वाक्यत्वं, तादृशवाक्यार्थत्वमेव तात्पर्य्यत्वं, अतस्तादृशवाक्यार्थस्यैव तात्पर्य्यार्थत्वे सिद्धे यत्रैकपदस्य पदांशस्य वा ध्वन्यर्थबोधकत्वं, तत्रैकपदस्य तात्पर्य्यवृत्तेरसम्भवाद्व्यञ्जनायाः स्वतन्त्रवृत्तित्वं स्वीकरणीयमिति। तुरीयेति—अभिधालक्षणातात्पर्य्यातिरिक्ता चतुर्थी वृत्तिर्व्यञ्जना स्वीकार्य्यैवेत्यर्थः।

---

यदेकत्र शब्दे एकस्या लक्षणायाः स्वीकारात् परं तस्मादेव शब्दात् लक्षणान्तरस्य कल्पने हेत्वभावः, प्रयोजनपरम्परावन्धेऽनवस्थापातश्च। यदाहुर्म्मम्मटभट्टाः स्वग्रन्थे—

नाभिधा समयाभावात् हेत्वभावान्न लक्षणा।

तथा च—लक्ष्यं न मुख्यं, नाप्यत्र वाधो, योगः फलेन नो।

न प्रयोजनमेतस्मिन्, न च शब्दः स्खलद्गतिः॥

अपरञ्चैतत्—

एवमप्यनवस्था स्याद् या मूलक्षतिकारिणी।

वैयाकरणैः स्वीकृता 'च' 'वा' प्रभृतिनिपातानां द्योतकतापि आलङ्कारिकैरुपस्थापिताया व्यञ्जकतायाः समकक्षैवेत्यलमतिविस्तरेण। प्रतीच्यैरपि काव्यतत्त्वविद्भिः व्यञ्जनात्मकव्यापारस्य

---

(16) 'पदं' इति (क) (ग) (घ) पुस्तकेषु, 'पदे' इति (ख) पुस्तके च अनादरणीयः पाठः।

तथाहि —

भणिओ वल्लअवइणा अज्ज सुओ महुपुरीं गंदा।

इअ भणिअं अज्जाए पिअइ वहू सवणपुडएण॥ २

इत्यत्र 'पिबती'ति पदं लाक्षणिकं, तेन गृहशून्यत्वमस्या अभिलषितमित्यस्यार्थस्य पुनर्व्यञ्जनां वृत्तिमाश्रित्य, व्यञ्जकं भवति।

अथ यत्रैकपदस्यैव ध्वनिना ध्वनिकाव्यमिदमिति व्यवहारस्तत्रैकपदस्य तात्पर्य्यासम्भवाद्व्यञ्जनावृत्तिः स्वीकार्य्येति पूर्व्वमुक्तं, तत्रोदाहरणमाह—तथाहीति। भणितो वल्लवपतिना अद्य सुतो मधुपुरीं गन्ता। इति भणितमार्य्यया पिबति वधूः श्रवणपुटकेन॥ वल्लवपतिना व्रजराजेन, आर्य्यया जटिलया। पिबतीति—शब्दस्य पानासम्भवात् 'पिबती'ति पदं सादरश्रवणे लाक्षणिकं, तेन लाक्षणिकपदप्रयोगेनास्या वध्वा गृहशून्यत्वं गृहपतिराहित्यमभिलषितमिति निश्चितम्। एताद‍ृशगृहशून्यत्वरूपार्थस्य पुनर्व्यञ्जनावृत्तिमाश्रित्य व्यञ्जकं 'पिबती'ति लाक्षणिकम् पदमेव भवति।

अथान्विताभिधानवादिनां मतेऽपदार्थानां शाब्दबोधे सर्व्वथा भानं नास्ति, तन्मते विशेषणविशेष्ययोः शाब्दबोधे सम्बन्धभानार्थं विशेषणान्वित एव विशेष्यपदस्याभिधा स्वीकरणीया—विशेषणादिपदं केवलं तात्पर्य्यमात्रग्राहकम्। एवं सति विशेषणान्वितेऽभिधेव लक्ष्यव्यङ्ग्यार्थान्वितेऽपि विशेष्यपदस्याभिधा वक्तव्या, अलं लक्षणाव्यञ्जनारूप-

---

(Suggestiveness) क्वचिच्छब्दोत्थापितत्वेऽपि प्राधान्येनार्थद्वारैव सहृदयहृदयानुभूतिपदवीमधिरोहतः सत्ता गुरुता च स्वीक्रियते। एवमपि व्यञ्जनावृत्तिप्रस्थानपरमाचार्य्या ध्वनिकाराः 'काव्यस्यात्मा स एवार्थः' (१।५) इत्यभिदधति। [Suggestiveness is the very soul of poetry.]

( Cf. Pope :—Where more is meant than meets the ear.)

तैरपि 'वाक्यं रसात्मकं काव्यम्' 'औचित्यं रससिद्धस्य स्थिरं काव्यस्य जीवित'मिति च मन्यमानैर्लोकोत्तरचमत्कारप्राणो रस एव व्यञ्जनायाः सारतया स्वीकृतः सबहुमानं निर्द्दिष्टश्च। अत्रार्थे दिङ्मात्रस्तेषामुक्तयोऽत्रापेक्षिकमतसमालोचनासाहाय्यकार्थमुदाह्रियन्ते; विस्तरस्तु तदाकर एव द्रष्टव्यः—

(1) 'I should certainly lay it down that *there is nothing so eloquent as real passion*, standing, where it ought, in enthusiastic *afflatus* of inspired madness and filling the phrase with a sort of Delphic rapture.—Longinus—'*On the Sublime* Translated in Dr. Saintsbury's *Loci Critici.*

(2) *All good poetry is the spontaneous overflow of powerful feelings* .. It takes its origin from emotion recollected in tranquillity.—Wordsworth in his Preface to *Lyrical Ballads.*

ये तु 'सोऽयमिषोरिव दीर्घदीर्घोऽभिधाव्यापार'—इत्यभिदधति (ख), त एवं प्रष्टव्याः—किं भवद्भिरभिधाया दीर्घव्यापारत्वेन लक्षणाव्यञ्जनयोरिव खण्डनं क्रियते, किं व्यञ्जनाया एव? आद्यश्चेत्तदा 'गङ्गायां घोष' इत्यत्र 'गङ्गाया'मित्यत्रान्वयायोगान्मुख्यार्थबाधेऽभिधैव नास्ति, तदभावात् कथं तस्या दीर्घदीर्घत्वं येन तटो लक्षणीयः? द्वितीयश्चेत्तदा 'पिअइ वह सवणपुडएण' इत्यत्र वचनस्य पेयत्वरूपमुख्यार्थबाधे लाक्षणिकतया लक्षणया सादरश्रवणरूपं लक्ष्यमर्थं जनयित्वा 'पिबती'ति शब्द उपक्षीणः। गृहशून्यत्वमस्या अभीष्टमित्यपरोऽर्थः केन प्रत्याय्यताम्? उपक्षीणत्वे तु शब्दबुद्धिकर्मणां विरम्य व्यापाराभाववादिन एव साधकाः।

स्वतन्त्रवृत्तिद्वयस्वीकारेण। एतन्मतं दूषयितुमुपन्यस्यति—ये त्विति। इषोर्बाणस्य वेगाख्यसंस्कारवशाद्दीर्घदीर्घक्रियारूपव्यापार इवाभिधाया अपि स्वसामर्थ्यवशात् सोऽयं लक्षणाव्यञ्जनारूपदीर्घव्यापारः स्वीकर्त्तव्य इति येऽभिदधति वदन्ति, त एवं प्रष्टव्याः। आद्यश्चेदिति—गङ्गाघोषयोः सम्बन्धभाणार्थं घोषान्विते प्रवाहे गङ्गापदस्याभिधा वाच्या—तत्र गङ्गायां घोषस्यान्वयासम्भवान्मुख्यार्थबाधेनाभिधैव नास्ति, कुतो लक्ष्यार्थव्यङ्ग्यार्थयोर्भाणार्थमभिधाया दीर्घदीर्घव्यापारस्य सम्भावनापि? ननु गङ्गायां घोषस्यान्वयासम्भवाल्लक्षणायाः स्वतन्त्रवृत्तित्वमस्तु, व्यङ्ग्यार्थेऽनुपपत्त्यभावात् कथं व्यञ्जनायाः स्वतन्त्रवृत्तित्वं स्वीकरणीयमिति द्वितीयपक्षस्यार्थः;—तमपि दूषयति—द्वितीय इति। ननु 'पिबती'ति पदमेव लक्षणया सादरश्रवणमुक्त्वा पुनर्लक्षणया गृहशून्यत्वरूपव्यङ्ग्यार्थं कथयिष्यतीत्यत आह—उपक्षीणत्वे त्विति, पुनर्लक्षणयार्थान्तरबोधस्यासामर्थ्ये त्वित्यर्थः।

---

(2) 'A poem is the *very magic of life expressed in its eternal truth*.—Shelley in his *Defence of Poetry*.

गुणदोषालङ्काराणामिव व्यञ्जनायाश्चापि परिवृत्तिसहत्वासहत्वाभ्यामार्थत्वेन शाब्दत्वेन च यथाक्रमं व्यपदेशः। लक्षणामूलशाब्दव्यञ्जनायास्तु न सम्यक् परिवृत्त्यसहता; यतो 'गङ्गायां घोष' इत्यत्र "भागीरथ्यां घोष' इति प्रयोगेऽपि लक्षणामूलव्यञ्जना सिद्धा। अत्र परिवृत्त्यसहत्वयुक्तिपक्ष इत्थं विपरिणमनीयो यत् 'गङ्गा'दिशब्दानां परिवृत्तिसहत्वेऽपि लाक्षणिक'गङ्गा'दिशब्दानां परिवृत्त्यसहत्वमेवेति वालबोधिन्यां काव्यप्रकाशटीकायां ततो भट्टनागेशस्याशयमनुसृत्य भट्टवामनाचार्यचरणाः।

(ख) एतद्धि भट्टमतोपजीविनां लोल्लटप्रभृतीनां मतम्। तेषामयमाशयः—'यथा बलवता प्रेरित इषुरेकेनैव वेगाख्येन व्यापारेण वर्मच्छेदमुरोभेदं प्राणहरणञ्च रिपोर्विधत्ते, तथैक एव शब्द एकेनैवाभिधाख्यव्यापारेण पदार्थस्मृतिं वाक्यार्थानुभवं व्यङ्ग्यप्रतीतिञ्च विधत्ते।

नन्विदमनुमानेनैव साधनीयं, किं व्यञ्जनया ? तथाहि 'इअ भणिअं अज्जाए पिअइ वहू सवणपुडएण' इत्यत्रेयं गोपवधूः पत्युर्गृहान्तरितत्वाभिकाङ्क्षिणी, श्वश्रूक्तगृहपतिप्रवासश्रवणे साभिलाषत्वात् । या नैवं सा नैवं यथा तदितरेति केवलव्यतिरेकी हेतुरिति चेन्न—साभिलाषत्वहेतोः प्रमाणान्तरादप्राप्तेरसिद्धत्वं, अनुमानान्तरात्तत्प्राप्तौ प्रसाध्याङ्गत्वञ्च ।

किञ्च पत्युर्गृहान्तरितत्वाकाङ्क्षित्वमेवास्या न साध्यं, अपि तु गृहशून्यत्वे सति कृष्णोऽत्राभिसार्य्य इति वस्त्वेव । तत् कुतो लभ्यतामिति चेत् पुनरनुमानान्तरं कार्य्यं—तथाहि इयं स्वगृहाधिकरणकृष्णाभिसारकाङ्क्षिणी, श्वश्रूक्तपतिप्रवाससादरश्रवणे सति पत्युर्गृहान्तरितत्वं प्रति साभिलाषत्वादिति चेन्न, गृहशून्यत्वे साभिलाषत्वं हेतुः कृष्णाभिसारकाङ्क्षित्वसाध्यं

नन्विति—इदं गृहं विहाय पत्युरन्यत्र गमनमस्या अभिलषणीयमनुमानेनैव साधनीयम् । अनुमानप्रकारमाह—तथाहीति । 'इति भणितमार्य्यया पिबति वधूः श्रवणपुटकेने'त्यत्रेयं गोपवधूरिति पक्षोद्देशः । पत्युर्गृहान्तरितत्वं गृहव्यवधानं गृहादन्यत्र गमनमिति यावत् । तथा च पत्युर्गृहत्यागपूर्व्वकान्यत्रगमनाभिलाषित्वं साध्यमिति भावः । श्वश्रूक्तगृहपतिप्रवासश्रवणे साभिलाषत्वादिति हेतुप्रयोगः । अत्रान्वये दृष्टान्ताभावेनान्वयसहचरज्ञानजन्यान्वयव्याप्तिज्ञानासम्भवात् ; अतो व्यतिरेकव्याप्तिज्ञानमाह—या नैवमिति । या वधूः पत्युर्गृहान्तरित्वकाङ्क्षिणी न भवति, सा श्वश्रूक्तगृहपतिप्रवासश्रवणे साभिलाषा न भवति । तथा च साध्याभावव्यापकीभूताभावप्रतियोगित्वरूपव्यतिरेकव्याप्तिज्ञानमेवात्र हेतुरिति भावः । तत्र दृष्टान्तो यथेति । तदितरा कृष्णानुरागिणी या वधूस्तद्भिन्ना पतिविषयकानुरागवतीत्यर्थः । केवलेति—केवलव्यतिरेकव्याप्तिविशिष्टो हेतुरित्यर्थः । अत्रानुमाने हेत्वसिद्धिरूपदोषमाह—नेति । न च लक्षणया सादरश्रवणस्य बोधे सति स्वयमेव पत्युः प्रवासेऽभिलाषस्यापि बोधो भविष्यति, कथं साभिलाषत्वरूपहेतुज्ञानस्यासिद्धिरिति वाच्यं, अनभिलषितवस्तुनोऽपि सादरश्रवणसम्भवात् । यथा केनचिदुक्तस्य 'अद्य तव

---

अतो व्यङ्ग्यत्वेनाभिमतस्यार्थस्य वाच्यत्वमेवे'ति व्यक्तिवादिना 'शब्दबुद्धिकर्म्मणा'मित्यादि न्यायमनुसृत्य उपरिष्टात् प्रदर्शितया दिशा तत्र दत्तमेवोत्तरमित्यलं चर्व्वितचर्व्वणेन । वस्तुतस्तु व्यञ्जनाया अभिधादितो नैयत्तया, अपि तु ईदृक्तयैव भेदो भवति, अतो व्यञ्जनावृत्तिः सिद्धैव । 'यस्योच्चारणमात्रेणे'त्यादौह दर्शितात् 'शब्दव्यापारविचारा'द्याप्तग्रन्थसमुद्दिष्टाच्चाभिधालक्षणात् नैतदायातीत्यपि बोध्यम् । न चाभिधादिप्रतीतादर्थादतिरिक्तं (व्यञ्जनागम्यं यत् किञ्चन) न जातु बोध्यत इति वाच्यम्, तथात्वे नूनमनुभवसिद्धस्यापलापप्रसङ्ग इत्यलमतिविस्तरेण ।

प्रति नैकान्तिकः, तदन्यथापि तत्सम्भवात् । प्रकरणवशादिति चेत्, पूर्व्ववद्दोषापत्तिः ।

हिअअं ज्जेव्व अगच्छं माणंसिणि ण उण दे अंगं ।
आलिंगंति पआणं गहरा पडिविंबिअं कण्हं ॥ ४ ॥

इत्यत्रास्याः पादनखरा इति मानेनावृतसर्व्वाङ्गत्वं निमीलितनयनत्वञ्च, अन्यथा चरणोपान्तगतस्य कृष्णस्य दर्शनासहिष्णुतोपपत्तेः । पश्चात् सखीवचसा ससम्भ्रमं पदसम्बरणञ्च, तदनु च मानस्य शैथिल्यं, कृष्णस्य च प्रणयजविनयमाहात्म्याच्चरणान्तिकमागतस्यापि तत्स्पर्शाक्षमत्वं, सख्याश्च कृष्णपक्षपातित्वं, स्वसखीमानक्षये साग्रहत्वञ्चेत्यादीनि वस्तूनि एकयैव व्यञ्जनया गम्यन्ते; भवद्भिरत्र कत्यनुमानप्रयोगाः कर्त्तव्याः ? तेन लाघवाद्व्यञ्जनैव श्रेयसीति स्थितम् । (व)

ग्रामं राजा धक्ष्यती'ति वचनस्य ग्रामदाहेऽभिलाषाभाववत्पुरुषकर्त्तृकसादरश्रवणमनुभवसिद्धं, तद्दृष्टान्तेन पत्युः प्रवासेऽभिलाषाभावेऽपि तस्याः सादरश्रवणसम्भवात् । ननु व्यभिचाराभावसम्पादकनानाविशेषणविशिष्टहेत्वन्तरेण साभिलाषत्वस्यानुमानं कार्य्यं, तदा तु न दोष इत्याह—अनुमानान्तरादिति । तस्य साभिलाषत्वरूपज्ञानस्य प्राप्तौ प्रसाध्याङ्गत्वं प्रसाध्याङ्गत्वरूपदोषस्य प्रसङ्ग इत्यर्थः । अनुमानान्तरेण साभिलाषत्वरूपहेतुं प्रसाध्य तस्य हेतोः प्रकृतानुमानेऽङ्गत्वमेव दोषः । तथाहि साभिलाषत्वरूपसाधकस्याव्यभिचारिहेतोर्ज्ञानार्थं पुनरप्यनुमानान्तरं कार्य्यमिति रीत्यानवस्थाप्रसङ्गात् ।

व्यञ्जनावृत्तेरस्वीकारे दोषान्तरमप्याह—किञ्चेति । अनुमानप्रकारमाह—तथाहीति । इयं वधूरिति पक्षः । स्वगृहाधिकरणककृष्णाभिसारकाङ्क्षित्वं साध्यम् । श्वश्रूक्तपतिप्रवाससादरश्रवणसमानकालीनपतिप्रवासविषयकाभिलाषवत्त्वादिति हेतुः । अत्रानुमाने हेतोर्व्यभिचारदोषमाह—नेति । पत्युः प्रवासे सादरश्रवणसमानकालीनगृहशून्यत्व-

---

(व) व्यक्तिवादिस्थापितव्यञ्जनाख्यवृत्तिरनुमिताविवान्तर्भवतीति व्यक्तिविवेककारादीनां राद्धान्तः । तैस्तु काव्येऽनुमितिपदस्यार्थग्रह इत्थं दर्शितः—

वाच्यस्तदनुमितो वा यत्रार्थोऽर्थान्तरं प्रकाशयति ;
सम्बन्धतः कुतश्चित् सा काव्यानुमितिरित्युक्ता ॥

एवमेव अनुमितिपदस्यार्थग्रहकौशलतः

अनुमानेऽन्तर्भावं सर्व्वस्यैव ध्वनेः प्रकाशयितुम् ।
व्यक्तिविवेकं कुरुते प्रणम्य महिमा परां वाचम् ॥

## अर्थोऽपि व्यञ्जको ज्ञेयः (ग)—३० का

अर्थ इति जात्यपेक्षया। वाच्यलक्ष्यव्यङ्ग्यास्त्रय एवार्था गृह्यन्ते। क्रमेणोदाहरणानि—

अज्जे घरकरणिज्जं सव्वं णिव्वाहिदं ज्जेव्व।

एण्हिं समसमणत्थं जउणाइं सिणाणमादिसस्सु (घ)॥ ५

विषयकाभिलाषवत्त्वरूपहेतुस्तादृशसाध्यं प्रति नैकान्तिको व्यभिचारी। व्यभिचारमेव स्पष्टयति—तदिति। कस्याश्चित् श्रीकृष्णाभिसारे आकाङ्क्षाया अभावेऽपि पतिं प्रति द्वेषादेव पतिप्रवासेऽभिलाषसम्भवात्। ननु गोपीनां प्रकरणवशाद्धेनौ कृष्णानुरागित्वं विशेषणं देयं, अतोऽन्यस्त्रियान्तदभावादेव न व्यभिचार इत्याह—प्रकरणेति। पूर्ववदिति—हेतुघटकस्य कृष्णानुरागित्वपतिप्रवाससाभिलाषत्वादेर्ज्ञानार्थं पुनरप्यनुमानान्तरस्वीकारेण पूर्ववत् प्रसाध्याङ्गत्वरूपदोषापत्तिरित्यर्थः। व्यञ्जनावृत्तेरस्वीकारमते पुनरपि दोषान्तरमाह—किञ्चेति। मानिनीं श्रीराधिकां प्रति श्रीकृष्णपक्षपातिनी काचित् सख्याह—हिमर्त्तं इति। हृदयमेव अनच्छं मनस्विनि! न पुनस्तेऽङ्गम्। आलिङ्गन्ति पदानां नखराः

---

इति स्वकीयप्रतिज्ञायाः स्थापने प्रयासस्तेन कृतः। स च न सफलः समजनीति निपुणवेदिनां मतं, यदाह तट्टीकाकृत् प्रकृतग्रन्थव्याख्यानावसरे—'यथास्मै रोचते विश्वं तथेदं परिवर्त्तते' इति न्यायेनात्रातिप्रौढ़तया ग्रन्थकारो निजायत्तां पदार्थव्यवस्थां कर्त्तुमारब्ध' इति, 'तदेतदस्य विश्वमगणनीयं मन्यमानस्य स्वात्मनः सर्व्वोत्कर्षशालिताख्यापन'मिति च (व्यक्तिविवेके ४९ पृः)। विस्तरस्तु तत्रैव द्रष्टव्यः। दर्पणकृता विश्वनाथेनापि स्वग्रन्थे (५म परिच्छेदे) सर्व्वं समासेन समालोचितम्। प्रसिद्धेऽर्थेऽनुमितिपदस्य व्यवहारश्चेत्, तदा व्याप्तिग्रहाभावात् हेत्वाभासः। मूलक्षतिकारिण्यनुमानपरम्परानुवन्धिनी नितरामनवस्थापत्तिश्च। अतो व्यञ्जनास्वीकारः सुतरामपरिहार्य इत्यालङ्कारिकमतस्थितिः।

(ग) 'एकस्य व्यञ्जकत्वे तदन्यस्य सहकारिते'ति न्यायादर्थस्यापि शब्दस्येव त्रैविध्यमायाति। वस्तुतस्तु अर्थव्यञ्जनैव व्यञ्जनायाश्चरमांशः, तस्मादेव काव्यस्य काव्यत्वं, यदवलम्ब्य प्राचः प्राहुः—'काव्यस्यात्मा ध्वनिरिति'। 'प्रत्यक्षदृष्टे कामिमिथुने तच्चेष्टयानुमितरत्यादौ चाक्षादानुदयेन शब्दान्वयव्यतिरेकानुविधायित्वाच्छब्दोऽपि व्यञ्जकत्वे निमित्तं, किन्तु पर्य्यायान्तरेणापि तदुपस्थितौ व्यङ्ग्यप्रतीतेः शब्दस्याप्रधानतार्थस्य च प्राधान्यमिति तन्मुखेन व्यपदेशः, 'प्राधान्येन व्यपदेशा भवन्ती'ति न्यायादिति काव्यप्रकाशोद्द्योते। तथाचैकत्र शब्दमुखेनैव चमत्कारबोधोऽन्यत्र त्वर्थद्वारैवेति पृथगनयोर्द्योतनसामग्री।

(घ) 'इ—हि—आरा विंदुजुआ ए-ओ-सुद्धा अ वस मिलिआ वि लहू' इति पिङ्गलनागमतेनात्र 'जउणाइं' इत्यत्र पञ्च मात्रा एव ग्रहीतव्याः, न षट्। तेनात्र उभयोरेवाहयोः

अत्र निश्चिन्ताहं यमुनास्नानच्छलेन तत्तटे खेलन्तं कृष्णमवलोक्य तत्रैव विश्रमणं करोमीति वाच्यार्थेनैव व्यज्यते ।

लक्ष्यस्य यथा—

'भणिश्रो वल्लग्रवइणा' इत्यादौ 'पिग्रइ वल्ल सवणपुडएण' इत्यत्र श्वश्रूक्त-पतिप्रवाससादराकर्णनं लक्ष्यम्, तेन स्वगृहशून्यत्वे सति कृष्णोऽत्राभिसार्य्य इति व्यङ्ग्यम् ।

व्यङ्ग्यस्य यथा—

इध वुंदावणमज्झे णीसंकणिसुत्तमोरमग्रणिग्ररो ।
अलिमेत्तभुत्तकुसुमो रमणिज्जो जामुणो कुंजो ॥ ६

अत्र निर्ज्जनत्वं व्यङ्ग्यं, तेन समुचितमिदमेव सङ्केतस्थानं, हे सखि ! तदत्रैव कृष्णः सङ्गमनीय इति व्यङ्ग्यान्तरम् ।

प्रतिविम्बितं कृष्णम् ॥ हे मनस्विनि मानिनि । नखरा इति पदेन नखरेष्वेव प्रतिविम्बितं न त्वन्याङ्गेषु । इदन्त्वन्याङ्गानामावरण एव सम्भवतीत्याह—मानेनावृतसर्व्वाङ्गत्वमिति । अन्यथा नयनस्यामीलने प्रणामार्थं चरणोपान्तगतस्य कृष्णस्य दर्शनेन सद्यः श्रीकृष्णस्य सम्मुखस्थितावसहिष्णुतोपपत्तेः, असहिष्णुता स्यादित्यर्थः । तथा च श्रीकृष्णस्य प्रणामोद्यममालक्ष्यैव तत उत्थायान्यत्र गमनं प्रसज्जेतेति भावः । कृष्णस्य चेति—विनयवशाच्चरणनिकटं प्राप्तस्यापि कृष्णस्य मानभङ्गं विना चरणस्पर्शाक्षमत्वं 'प्रतिविम्बित-मालिङ्गन्ती'त्यनेन ध्वनितम् । मानक्षये साग्रहत्वं आग्रहेण सह वर्त्तमानत्वम् ।

अर्थ इति—तथा च यथा पदस्य व्यञ्जनावृत्तिरुक्ता तथा पदजन्यार्थस्यापि, एवं वाच्य-लक्ष्यव्यङ्ग्यार्थानां व्यञ्जनावृत्तिः सम्भवतीत्यर्थः । नन्वर्थोऽपीत्येकवचनं न सम्भवतीत्यत आह—जात्यपेक्षयेति । वस्तुतस्तु त्रय एवार्था इति बहुवचनमेव । अज्ज इति—आर्य्य ! गृह-करणीयं सर्व्वं निर्व्वाहितमेव । इदानीं श्रमशमनार्थं यमुनायां स्नानमादिश्यताम् ॥ वाच्यार्थे-नैवेति—अत्र श्लोके पदस्य व्यञ्जनावृत्तेरभावा'दत्र निश्चिन्ताह'मित्यादि व्यङ्ग्यार्थो वाच्यार्थस्यैव भवति, न तु पदस्येत्यर्थः ।

---

सप्तविंशतिर्मात्राणाम्, अतः प्राकृतपैङ्गलोक्त 'गाहू'च्छन्दस्तत्र । गीतिरित्यपरैः कृता संज्ञास्य । एवमपीतरत्र प्राकृतभाषानिवद्धजातिषु मात्रागणनायां लघुगुरुभावविषये विशेषनियमादि-रवधेयः । अनुष्टुपोऽर्थोऽवस्याविन्यासश्च—'धीरसमीरे यमुनातीरे वसति वने वनमाली'ति 'हरिरिह मुग्धवधूनिकरे विलासिनि विलसति केलिपरे' इति च श्रीमज्जयदेवगोस्वामि-चरणाः । अतएव गोपवालाया यमुनासमाश्रये तात्पर्य्यम् ।

## नानार्थानाञ्च भेदकाः।

**संयोगाद्याः—** ३१ का

नानार्थानां शब्दानां नियमं प्रति संयोगादय एव भेदका निर्द्धारका भवन्ति। आदिशब्देन वियोगादयश्च।

तथाहि—

**संयोगश्च वियोगश्च विरोधः सहचारिता।**
**सान्निध्यमन्यशब्दस्य देशः सामर्थ्यमौचिती।**
**लिङ्गमर्थः प्रकरणं कालो व्यक्तिरिमा दिशः॥ ३१ (क) का**

क्रमेणोदाहरणानि यथा—

सकौस्तुभो भाति विधुः शोते विधुरकौस्तुभः;—संयोगवियोगौ।

रामार्ज्जुनौ तथा कर्णार्ज्जुनौ सह नियुध्यतः (ख);—विरोधः।

लक्ष्यस्येति—'भणितो वल्लवपतिने'त्यादौ 'पिबति वधूः श्रवणपुटकेने'त्यत्र सादरश्रवणं लक्ष्यार्थः, तेन लक्ष्यार्थेन व्यञ्जनावृत्त्या 'स्वगृहशून्यत्व' इत्यादि व्यङ्ग्यार्थो ज्ञेयः।

इध इति—इह वृन्दावनमध्ये निःशङ्कनिशुम्भमयरन्ध्रगनिकरः। अलिमात्रभुक्तकुसुमो रमणीयो यामुनः कुञ्जः॥ तेन व्यङ्ग्यार्थेन 'समुचित'मित्यादि व्यङ्ग्यार्थान्तरं बोध्यम्।

ननु नानार्थ'विधु'प्रभृतिशब्दानां कदाचित् कृष्णादिवाचकता, कदाचिच्चन्द्रादिवाचकत्वं, अत्र नियामकाभावः—नापि शक्तिलक्षणादीनां कस्या अपि नियामकता सम्भवतीत्यतो संयोगवियोगादिरेवात्र नियामक इत्याह—नानार्थानाञ्चेति। एतन्मते तात्पर्य्यस्य वृत्त्यन्तरस्य संयोगवियोगादिरेवात्र नियामक इत्याह—नानार्थानाञ्चेति। एतन्मते तात्पर्य्यस्य वृत्तित्वाभावेन तज्ज्ञानस्य कारणता नास्ति (ङ)। नानार्थस्थले व्यञ्जकपदसमभिव्याहारेण व्यञ्जनावृत्त्यैव निर्व्वाह इति ज्ञेयम्। नियमं प्रतीति—'सकौस्तुभो भाति विधु'रित्यत्र 'विधु'शब्दार्थस्य श्रीकृष्णस्यैव बोधो, नतु चन्द्रस्यैतादृशनियमं प्रतीत्यर्थः। दिशो दिग्दर्शन-मात्रम्। 'शोते' इति कौस्तुभवियुक्तो विधुः शेत इत्यत्रापि कृष्णस्यैव बोधो, नतु चन्द्रस्य; चन्द्रे

---

(ख) 'नियुध्यत' इत्यतङ्प्रयोगः 'युध्यती'ति प्रयोगवदन्यथा समाधेयः। तथाचाहुः सिद्धान्तकौमुदीकाराः—'कथं युध्यतीति ? युधमिच्छतीति क्यच्'। अथवा चान्द्रादिमतेनात्र परस्मैपदोपपत्तिः—'चान्द्रादयस्तु मन्यन्ते सर्व्वस्मादुभयं परम्' इति न्यायसुधाकृदुक्तेः।

(ङ) 'तात्पर्य्याख्यां वृत्तिमाहुः पदार्थान्वयबोधने' इत्यभिहितान्वयवादिभिरङ्गीकृता तात्पर्य्यवृत्तिः वाक्यार्थरूपस्य पदार्थान्वयस्य बोधिका, नातः प्रकृतस्थले तस्या अवकाशः। 'नापदार्थो वाक्यार्थे' इत्यभिदधतामन्विताभिधानवादिनां मते तु तात्पर्य्याख्यवृत्त्यन्तर-

राधामाधवयोः क्रीड़ा मधुमाधवयोर्दिने ;—सहचारिता ।

कृष्णस्य मुनिवर्य्यस्य ; —अन्यशब्दस्य सान्निध्यम् ।

व्रजेऽसौ परमेश्वरः ;—असौ श्रीनन्दः व्रजे राजेत्यर्थः—देशः ।

मधुना कोकिलो मत्तः प्रमत्ता मधुना वधूः ;—सामर्थ्यमौचिती च ।

उत्पद्य हृदये तस्याः पीड़को मकरध्वजः ;—लिङ्गम् ।

कामत्वे पीड़कत्वमेव लिङ्गम् ।

स्थाणुः कृष्णगुणामोदी ;—अर्थः ।

देवो जानाति मे मनः ;—अत्र प्रकरणवशाद्युष्मदि ।

कौस्तुभस्य संयोगाभावाद्वियोगोऽप्यसम्भवः, 'नासंयुक्तस्य वियोग' इति नियमादिति भावः । 'रामार्ज्जुनौ युध्यत' इत्यत्र परशुरामसहस्रार्ज्जुनयोरेव बोधः, नतु दशरथपुत्रपाण्डुपुत्रयोः, शास्त्रे तयोर्विवादाश्रवणात् । एवं कर्णार्ज्जुनावित्यत्र न सहस्रार्ज्जुनस्य बोधः, किन्तु पाण्डवस्यैव । 'राधामाधवयो'रिति द्वितीयमाधवशब्दोऽत्र वैशाखवाची, तत्सहकारेण मधुशब्दश्चैत्रवाची, नतु वसन्तवाची । कृष्णस्येति—'मुनिवर्य्य'पदसन्निध्यात्कृष्णशब्दोऽत्र वेदव्यासवाची, नतु कृष्णवाची । मधुनेति—वसन्तस्य कोकिलवधोर्मत्ततोत्पादने सामर्थ्यमौचित्यञ्च वर्त्तते, न तु 'मधु'शब्दस्यार्थान्तररूपमदिरायाः । 'मकरध्वज'पदेनात्र कन्दर्पस्यैव बोधो न तु समुद्रस्य, तस्य हृदये पीड़ाजनकत्वाभावात् । 'स्थाणु'शब्देन महादेवस्यैव बोधो, न तु शाखापल्लवादि-

---

कल्पना नास्ति, तन्मतमाश्रित्य टीकाकृतैदभिहितमिति चेदोमिति ब्रूमः । एवमेव तेषां भट्टानां मतम्—

"शब्दवृद्धाभिधेयांश्च प्रत्यक्षेणात्र पश्यति ।
श्रोतुश्च प्रतिपन्नत्वमनुमानेन चेष्टया ॥
अन्यथानुपपत्त्या तु बोधेच्छक्तिं द्वयात्मिकाम् ।
अर्थापत्त्यावबोधेत सम्बन्धं त्रिप्रमाणकम् ॥"

इति प्रतिपादितया सरण्या 'अन्वयव्यतिरेकाभ्यां प्रवृत्तिनिवृत्तिकारि वाक्यमेव प्रयोगयोग्य'मिति वाक्यस्थितानामेव पदानामन्वितैः पदार्थैरन्वितानामेव सङ्केतो गृह्यते इति विशिष्टा एव पदार्था वाक्यार्थः, नतु पदैरभिधया प्रतिपादितानामर्थानामाकाङ्क्षायोग्यतासत्तिवशाद्भासमानो विशिष्टः सम्बन्धरूपोऽर्थोऽपदार्थोऽपि तात्पर्य्याख्ययातिरिक्तया वृत्त्या स्वीकृतो वाक्यार्थो वाक्यप्रतिपाद्यो भवतीति । वस्तुतस्तु संयोगादीनां पदार्थनियन्तृत्वे नियामकत्वमङ्गीकृत्य तत एव साक्षात् (न वृत्त्यन्तरकल्पनागौरवेण) पदघटितवाक्यार्थबोधो जायतामिति पक्षमनेकाभियुक्तसम्मतं मनसि निधायाधातनटीकाकृता कृतस्तात्पर्य्याख्यवृत्त्यन्तर-

चित्रभानुर्विभातीति दिनेऽर्कौ निशि पावकः ;—कालः।

शास्त्रे भागवतं भागवतः स्याद् भगवज्जने ;—व्यक्तिः।

एष्वभिधालक्षणयोरनवसरत्वात् संयोगादेरेव व्यञ्जकता।

रहितशुष्कवृक्षस्य, तस्य कृष्णगुणामोदिपदार्थत्वाभावात्। कमप्यादरणीयं पुरुषं प्रति केनाप्युक्तम्—'देवो जानाति मे मन' इति, अत्र प्रकरणवशा'द्देव'शब्दो युष्मदर्थक एव, न तु 'राजा भट्टारको देव' इत्यभिधानात् राजबोधकः। पावकोऽग्निः। व्यक्तिरिति—व्यक्तिशब्देनात्र पुंनपुंसकादिलिङ्गमेव बोध्यम्—तथाहि नपुंसकलिङ्गत्वे भागवतं शास्त्रं, पुंलिङ्गत्वे भागवतो वैष्णव इत्यर्थः। एष्विति—'विधु'शब्दस्य नानार्थत्वेन कृष्णचन्द्रयोरुभयोर्बोधकत्वात् कौस्तुभसंयोगरूपव्यञ्जकपदसान्निध्याद्व्यञ्जनावृत्त्यैव श्रीकृष्णमात्रबोधकत्वमिति ज्ञेयम्। एवमन्यत्र।

---

युदासप्रयासः। तत एवेयं 'एतन्मते' इत्यादौ दर्शिता वैदग्धी। न चान्विताभिधानपक्ष एवालङ्कारिकसम्मत इत्येतावता मन्तव्य इत्यलमभिज्ञानां मान्यानां व्याख्यानोक्तौ कटाक्षनिक्षेपेण। 'यत्परः शब्दः स शब्दार्थ' इति न्याय आश्रीयते चेत्, तदा नानार्थशब्दस्थले व्यञ्जनावृत्तिसमाश्रयणस्य न किमपि प्रयोजनम्। नन्वत्र तात्पर्य्यंशब्दस्यार्थान्तरे प्रयोग इति, तेन प्रस्तुते न कापि बाधा—इति तु न साधीयान् कल्पः; तथात्वे दर्पणकृदुक्तेरनुसरणं कृत्वा ब्रूमः—'किमिदं तत्परत्वं नाम ? तदर्थत्वं वा, तात्पर्य्यवृत्त्या तद्बोधकत्वं वा ? आद्ये न विवादः, व्यङ्ग्यत्वेऽपि तदर्थतानपायादि'त्यादि (५म परिच्छेदे)।

'न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते।
अनुविद्धमिव ज्ञानं सर्व्वं शब्देन भासते॥'

इति हरिकारिकातः शब्दादेव यथा कयापि दिशा विशेषस्मृतिहेतुः पर्य्यवसेयः। 'इमा दिश' इति दिग्दर्शनमेतत्। तेन 'एतावन्मात्रस्तनी' इत्यादौ हस्तादिचेष्टातः स्तनादीनां कमलकोरकाद्याकारत्वं, 'इतः स दैत्यः प्राप्तश्री'रित्यादौ 'इत' इत्यनेन 'मत्त' इत्यपदेशादिश्च लभ्यते। एतच्च सर्व्वमभियुक्तनिर्द्देशादेव भवति—तत्रापि व्यक्तिविशेषतारतम्येनार्थबोधप्रणालीभेदः, यदाहुः—

'यत्नेनानुमितोऽप्यर्थः कुशलैरनुमातृभिः।
अभियुक्ततरैरन्यैरन्यथैवोपपद्यते॥' इति

'संयोगो विप्रयोग'श्चेत्यादि वाक्यपदीयकारिकायां स्वराणामपि विशेषस्मृतिहेतुत्वं स्वीकृतम्। अत्र तु 'काव्यमार्गे स्वरो न गण्यते' इत्यालङ्कारिकसम्प्रदायपरिगृहीतान्नायात्र तेषां परिगणनं कृतम्।

तथा—

अद्यालोकि घनप्रभः सखि ! मया कश्चिद्विहारक्रमे
लोलत्केशरमालिकाविलुलितग्रीवो हरिः कानने।
यः सद्यस्तनकुम्भिकुम्भनिकरत्रोटे नखभ्रंशिभि-
र्मुक्तौघैर्धवलीकरोति यमुनातीरे निकुञ्जस्थलीः (च)॥ ७

अत्रानेकार्थशब्दानामनेकसंसर्गस्य व्यञ्जकता।

अधुना काव्य उदाहरणमाह—अद्येति। हे सखि ! अद्य कानने विहारक्रमे गमनपरिपाट्यां कश्चिद्धरिः सिंहो मयालोकि। कीदृशः? घना निविड़ा प्रभा यस्य तथाभूतः। पुनः कीदृशः? लोलन्ती चाञ्चल्ययुक्ता या केशराणां स्कन्धस्थितरोमविशेषाणां मालिका श्रेणी, तया विलुलिता मर्द्दिता अर्थात् तया विशिष्टा ग्रीवा यस्य सः। यः सिंहः कुम्भिकुम्भनिकराणां हस्तिकुम्भसमूहानां सद्यस्तने तत्क्षणोत्पन्ने त्रोटे नखकरणकविदारे सति त्रोटसमये नखैः करणैर्भ्रंशिभिरधःपतितैर्मुक्तासमूहैर्निकुञ्जस्थलीर्धवलीकरोति। पक्षे कानने वृन्दावने विहारक्रमे प्रेयसीभिः सह विहारपरिपाट्यां स्थितो हरिः श्रीकृष्णो मयालोकि। कीदृशः? घनस्य मेघस्येव प्रभा यस्य सः। पुनश्च लोलन्ती या केशराणां नागकेशराणां माला तया विलुलिता ग्रीवा यस्य सः। यः श्रीकृष्णः सद्यस्तत्क्षणे स्तनरूपाणां हस्तिकुम्भसमूहानां नखाघातेन त्रोटे सति तत्समये हारत्रोटनान्नखभ्रंशिभि-र्मुक्तासमूहैर्यमुनाकुञ्जस्थलीर्धवलीकरोति। अत्र विशेषणीभूतानां 'घन' 'विहार' 'केशर' पदादीनामनेकार्थसम्बन्धेन विशेष्यस्य नानार्थ'हरि'पदस्याप्यर्थद्वयमात्रबोधकत्वं, न त्विन्द्रादिबोधकत्वमिति ज्ञेयम्।

---

(च) 'द्व्यर्थैः पदैः पिशुनयेच्च रहस्यवस्तु' इति कामकलायां विदग्धविधानात्तदनुरूपस्थले नर्म्मनिपुणप्रगल्भनारीवचनरचनेऽस्मिन्ननेकार्थशब्दप्रयोगेनेष्टार्थान्तरसिद्धिः। वनविहारिणोहि श्रीकृष्णस्यैवंरूपेण वर्णनमन्यत्रापि प्रसिद्धं यथा गीतगोविन्दे (८।६) 'भ्रमति भवानवलाकवलाय वनेषु' इत्यादि। अत्र यद्यपि "नानार्थ'हरि'पदस्याप्यर्थद्वयमात्रबोधकत्व"मिति टीकाकृता मूलतात्पर्य्यनिर्णयार्थमुक्तं, तथापि न तेन प्रस्तुतो मूलकृदाशयोऽभिव्यक्त इति मन्यामहे। वस्तुतस्तु 'दुर्गालङ्घितविग्रहो मनसिजम्' (साहित्यदर्पणे २य-परिच्छेदे) इत्यादि श्लोकवदत्राप्यभिधामूला व्यञ्जना वरीवर्त्तीत्येदर्थमेवेहोपन्यासः। प्रकरणेनाभिधया 'हरि'पदस्य सिंहरूपेऽर्थे नियन्त्रिते व्यञ्जनयैव कृष्णरूपोऽर्थो बोध्यते। अत्र च स हरिः हरिः सिंह इवेति च द्योत्यते।

एवमनुकरणशब्दानाञ्च व्यङ्ग्यं प्रति वाक्यार्थ एव व्यञ्जकः । यथा—

आसां रासविलासलास्यलहरीमास्वाद्य वाद्यच्छला-
त्ताधिक् ताधिगिति प्रभाष्य मुरजः स्वर्नर्त्तकीर्निन्दति ।
ते-नाना-गरिमाधमा इति मुहुः पाठस्वरोच्चारणा-
त्तासां हन्त जुगुप्सते भगवती वाणी च गानक्रमान् ॥ ८

अत्र ते नानेति पाठः, गरिमाधमा इति गान्धार-ऋषभ-मध्यम-धैवत-पुनर्मध्यमा इति तानविशेषस्वराः, ताभ्यां ते, नानाविधो योऽगरिमा तेनाधमा इत्यर्थो व्यज्यते । (ङ)

## अथार्थानां व्यञ्जकत्वस्य हेतवः । ३२का

अथार्थानां सामान्यत्वेन प्रागुक्तानां वाच्यादीनां व्यञ्जकत्वे विशेषहेतव उच्यन्ते ।

अथ यत्र मृदङ्गादीनां निरर्थकध्वन्यात्मकशब्दोत्पत्तिर्ज्ञायते तत्र कवयस्तु यथाकथञ्चिद्वर्णात्मकशब्दस्य सादृश्यमुपलभ्य निरर्थकध्वन्यात्मकशब्देऽपि सार्थकत्वमारोप्य काव्यं कुर्व्वन्तीत्याह—एवमिति । मृदङ्गस्था येऽनुकरणशब्दा वर्णात्मकशब्दस्य सदृशत्वेन प्रतीयमाना व्यक्तध्वन्यात्मक 'ताधिगि'तिशब्दास्तेषां सार्थकत्वेनारोपविषयीभूतानां 'स्वर्नर्त्तकीर्धिगि'ति यो वाक्यार्थः, स तु व्रजसुन्दरीणां सर्व्वोत्कर्षरूपव्यङ्ग्यार्थं प्रति व्यञ्जक इत्यर्थः । मुरजो रासस्थमृदङ्गः । तासां व्रजसुन्दरीणां रासज्ञापक'तेनाना' इति कण्ठस्थः पाठः । एवं 'गरिमाधमा' इत्यक्षराः स्वरा गान्धरादिस्वरवाचका इत्यर्थः । तथाच व्रजसुन्दर्य्यो यथा रासबोधकां'स्तेनाना' इत्यक्षरान् पठन्ति, तथैव 'ते नाना' इत्युच्चारणानन्तरं गान्धारादिस्वरबोधकान् 'गरिमाधमा' इत्यक्षरान् पठन्ति । सरस्वती तु तैरेवाक्षरैरकारं प्रश्लिष्य गन्धर्व्वाणां गानक्रमान् जुगुप्सते निन्दति । एतदर्थमेव स्पष्टतयाह—अत्रेति । तानविशेषस्वरा तानविशेषस्वरवाचका इत्यर्थः । सरस्वतीकृतमर्थमेवाह—ताभ्यामिति, पाठस्वराभ्यामित्यर्थः । ते गन्धर्व्वाः । गरिमा गुरुत्वं, तद्भिन्नं नीचत्वं, तथाच व्रजसुन्दर्य्यपेक्षया गानशास्त्रे नीचत्वेन गन्धर्व्वा अधमा इत्यर्थः श्लेषेण व्यज्यत इति भावः ।

इदानीं पूर्व्वोक्तवाच्यलक्ष्यव्यङ्ग्यार्थानामुत्कृष्टसमभिव्याहारवशादुत्कृष्टध्वनिबोधकत्व-

(ङ) 'नाना अगरिमे'ति वाणीपक्षे सभङ्गश्लेषः । 'ताधिक् ताधिक्' 'ते नाना' इत्यादिशब्दा वङ्गभाषायां तानस्वरबोधने प्रयुज्यन्ते, तैरेव शब्दैरत्र व्यङ्ग्यमयकाव्यरचनम् । एवं पदकल्पतरु-प्रभृति-वैष्णवाचार्य्यसङ्कलितेषु वङ्गीयसाहित्यपदसंग्रहग्रन्थेषु वैष्णवकवीनामनुकरणशब्देभ्यः काव्योपादनाहरणमनेकश आलोक्यते ।

बोद्धव्यवक्तृप्रकृतिकाकुप्रकरणैः सह ।
देशकालादयश्चार्थे वैशिष्ट्याद्व्यङ्ग्यबोधकाः ॥ ३३का

तत्र 'यातासि स्वयमेवे'त्यादौ (१म किरणे ७ श्लोके) तदानयनार्थं न गतासि, अपि तूपभोगार्थमिति बोद्धव्यवैशिष्ट्यम्। यां प्रतीयमुक्तिः, सा बोद्धव्या योग्या। अयोग्या चेद्भवति तदा ध्वन्यर्थो न सङ्गच्छते। वक्तृवैशिष्ट्यं प्रकृतिवैशिष्ट्यं प्रकरणवैशिष्ट्यञ्चात्रैव। वक्त्री श्रीराधा—सा सर्व्वश्रेष्ठत्वरूपवैशिष्ट्यवती। प्रकृतिश्च तस्याः सखीः प्रति स्नेहात् श्रीकृष्णाङ्ग-सङ्गप्रापणं व्याजेन करोतीति यदतस्तस्या वैशिष्ट्यम्। तथाविधप्रकरणञ्च तत्र मन्तव्यं, तेन तद्वैशिष्ट्याच्च द्वितीयध्वनिपल्लवः।

काकुवैशिष्ट्यं यथा—

अइ जासि जाहि विविणं रित्तं घेत्तूण कुसुमभाअणं सुमुहि (ढ़)।
पच्चाअमिस्सि तुमं ण केवलं भाअणेण पूणेण ॥ ९

माह—अर्थेति। अर्थानां वाच्यलक्ष्यव्यङ्ग्यार्थानां व्यञ्जकत्वे विशेषा बोद्धव्यादयो हेतव उच्यन्ते। यमुद्दिश्य वदति स बोद्धव्यस्तस्य वैशिष्ट्ये उत्कर्षे सति ध्वन्यर्थाः प्रवर्त्तन्ते। एवं यो वक्ता तस्योत्कर्षे सति ध्वन्यर्थाः प्रवर्त्तन्ते। एवमन्यत्रापि ज्ञेयम्।

अत्र 'यातासी'ति पद्यं पूर्व्वमेवोत्तमोत्तमध्वनिकाव्योदाहरणे उपन्यस्तम्। तदान-यनार्थं पद्मकानयनार्थम्। वैशिष्ट्यस्य फलतोऽर्थमाह—बोद्धव्येति। तथाच वैशिष्ट्यपदस्य योग्यत्वमेवार्थं इति भावः। वक्तृप्रकृतिप्रकरणानां वैशिष्ट्यञ्चात्रैव श्लोके ज्ञेयम्। यत् यतः सखीं प्रति स्नेहात् सैवं करोति, अतस्तस्याः प्रकृतेर्व्वैशिष्ट्यादहवो ध्वन्यर्थाः सम्भवन्ति। एवं प्रकरणवैशिष्ट्यादपि ज्ञेयम्। तथाहि प्रकरणन्तावत् प्रियसखीमेनां श्रीकृष्णेन सह सङ्गमयितुं तेनैव सह श्रीराधया प्रागेव युक्तिः कृता, यदासौ मया प्रहीयते तदास्याः सङ्गः करणीय इत्यादयो ध्वनयोऽत्र ज्ञेयाः।

अइ जासीति—अयि यासि याहि विपिनं रित्तं गृहीत्वा कुसुमभाजनं सुमुखि!

---

(ढ़) अत्र द्वितीये पादे आर्य्याद्वितीयपादतोऽतिरिक्तानां तिसृणां कलानां विन्यासात्

जेमया सहइ कणअतुला तिलतुलिअं अद्ध अद्धेण।
तेमण सहइ सवणतुला अवच्छंदं छंदभंगेण ॥

( प्राकृतपैङ्गले १।६७) इति विधानेन छन्दोभङ्गाशङ्का न कार्य्या, 'बसो बि तुरिअ पढ़िओ दो तिसि बि एकक जाणेहु' इति पिङ्गलनागेन स्वयमेवानुमोदितत्वात्।

अत्र न केवलं कुसुमभाजनेनैव पूर्णेनागमिष्यसि, अपि तु पूर्णेन मनोरथेनापीति नञ्काकुद्योत्यम् ।

देशवैशिष्ट्यं यथा—

> जउणासीअरसिसिरा कमलवणीपवणधूअकिसलअग्गा । (अ)
> जह वल्लीघरपल्ली धसा पेक्खंति तं देसं ॥ १०

अत्र देशवैशिष्ट्यश्लाघया कृष्णेन सह तत्र मां रमयेति सखीं प्रति काचित् स्वमनोरथं प्रकाशयति ।

कालवैशिष्ट्यं यथा—

> एण्हिं जलहरसमए रमणिज्जा रअणवलहीओ ।
> णिवडन्तवारिधारा गहीरतरमुहरगब्भकुहराओ ॥११

अत्र क्व कृष्णमानेष्यामीति सङ्केतमिङ्गितेन पृच्छन्तीं सखीं प्रति नेदानीं कुञ्जो रमणीय:, अपि तु प्रकृतं वलभीभवनमेवेति कालवैशिष्ट्येन व्यङ्ग्यम् ।

आदिशब्दात् प्रसिद्धिवैशिष्ट्यं यथा—

> करकिशलयलीलाम्बुजनिमीलनोन्मीलनातिकुतुकिन्या ।
> दक्षिणमक्षि मुरारे: पिधीयते मुच्यते च सिन्धुजया (आ) ॥१२

प्रत्यागमिष्यसि त्वं न केवलं भाजनेन पूर्णेन ॥ नञ्पदोच्चारणे या काकुस्तया द्योत्य'मपि तु पूर्णेने'ति ध्वन्यर्थरूपं वस्तु ।

जउणेति । यमुनाशीकरशिशिरा कमलवनीपवनधूतकिशलयाग्रा । यत्र वल्लीगृहपल्ली धन्या: प्रेक्षन्ते तं देशम् ॥ वल्लीभिर्न्निर्मितानि कुञ्जगृहाणि तेषां पल्लीसमूहो यत्र वृन्दावनदेशे तिष्ठति तं देशं धन्या जना: पश्यन्ति ।

एण्हिमिति । इदानीं जलधरसमये रमणीया रत्नवलभ्य: । निपतद्वारिधारागभीरतरमुखरगर्भकुहरा: ॥ अत्र वलभीशब्द: 'वालाघर' ( चिलेर् छाद ) इति प्रसिद्ध: सर्व्वोपरिस्थगृहविशेषवाचक: । निपतद्वारिधारया गभीरतरमुखरा घोरशब्दविशिष्टा: कुञ्जगह्वरच्छिद्रा: । एतेन कुञ्जस्यारमणीयत्वमुक्तम् ।

---

(अ) अत्रापि पूर्व्ववत् द्वितीयपादे एकस्या कलाया अतिरेकान्न छन्दोभङ्ग:, 'जइ दीहो विअ वसो लहुजीहा पढ़इ होइ सो वि लहू' इत्यभिधानात् । 'कमलवणी'त्यत्र ह्रस्वेकारपठने तु नाधिक्यमात्रत्वम् । 'कृदिकारादक्तिन' इति गणसूत्रेण ह्रस्वत्वमपि सम्भवति ।

(आ) लक्ष्मीवक्षो मिथो वदन्त्येतदिति साहित्यकौमुदीटीकायां कृष्णानन्दिन्याम्

अत्र मुरारेर्द्दक्षिणमक्षि प्रसिद्धिवैशिष्ट्यात् सूर्य्यात्मकमिति व्यज्यते ।

*॥ इत्यलङ्कारकौस्तुभे शब्दार्थवृत्तित्रयनिरूपणो नाम

द्वितीयः किरणः ॥*

करकिशलयेति—करपल्लवस्थलीलाकमलस्य निमीलनोन्मीलने मुद्रणे विकसने च कुतुकिन्या खिन्नुजया लक्ष्म्या भगवतो दक्षिणनेत्रं कदाचित् पिधीयते आच्छन्नं क्रियते, कदाचिन्मुच्यते च। तथा च सूर्य्यरूपं दक्षिणनेत्रं यदाच्छन्नं क्रियते तदा चन्द्ररूपवामनेत्रस्य दर्शनेन लीलाकमलं मुद्रितं भवति। यदा तु मुच्यते तदा सूर्य्यदर्शनेन लीलाकमलं प्रफुल्लं भवतीत्यर्थः। भगवतो दक्षिणनेत्रस्य सूर्य्यत्वं सर्व्वशास्त्रे प्रसिद्धं, अतः प्रसिद्धिवैशिष्ट्यादेव नेत्रस्य सूर्य्यत्वं ध्वनितमिति ॥ * * *

---

(३।२) स्थितम्।

"विपरीअरए लच्छी बम्हं दठ्ठूण णाहिकमलट्ठं।
हरिणो दाहिणणअणं रसाउला झत्ति ढक्केइ ॥"

इति काव्यप्रकाशोदाहृतपद्यमस्या आर्य्याया मूलं, परमत्र न मनागपि श्लीलताभङ्ग इति वैष्णवकवेरौचित्यसिद्धिं प्रकटयत्येतत्। परमेतन्मन्तव्यं यत् 'जलकेलितरलकरतलमुक्त' (सा. दर्पणे ५म परिच्छेदे) इत्यादौ तदनुरूपश्लोकान्तर इवात्रापि नानुमानतोऽर्थान्तरप्रतीतिः, अपि तु व्यञ्जनावशादेवेति। युक्तिश्च तत्र दर्पण एव आलोकनीयेति ॥

## अथ तृतीयकिरणः ।

अथ 'ध्वनिरसव' इति काव्यप्राणत्वेन निरूपितस्य ध्वनेर्भेदमाख्यातुं ध्वनिशब्दस्य व्युत्पत्तिमाह—

**शब्दार्थादिभिरन्यैश्च ध्वन्यतेऽसाविति ध्वनिः । ३४ का**

ध्वननं ध्वनिः, ध्वन्यतेऽनेनेति ध्वनिः, ध्वन्यतेऽस्मिन्निति ध्वनिरिति भावकरणाधिकरणसाधनोऽपि ध्वनिर्भवति । तन्निरासार्थं ध्वन्यतेऽसाविति कर्मसाधन एवेति प्रतिजानीते । तदेव किमित्याह—

**रसो भावस्तदाभासो वस्त्वलङ्कार एव च ।**
**भावानामुदयः शान्तिः सन्धिः शबलता तथा ।**
**सर्वं ध्वनिस्तस्मिन्त्वे काव्यस्तु ध्वनिरुच्यते ॥ (क) ३५ का**

शब्दार्थादिभिरिति —शब्दाश्चार्थाश्च वाच्यलक्ष्यव्यङ्ग्याश्च, आदिशब्देन श्लेषस्य वै पदार्थान्तरसम्बन्धस्य, एवमन्यैरनुकरणशब्दैर्ध्वन्यते व्यञ्जनावृत्त्या बोध्यतेऽसौ शैत्यपावनत्वादिरूपोऽर्थो 'ध्वनिः' कर्मसाधनमेव । न तु ध्वननं ध्वनिरिति भावसाधनं, तथा सति ध्वन्यर्थविषयकज्ञानेऽपि 'ध्वनि'व्यवहारापत्तेः । न वा ध्वन्यतेऽनेनेति करणसाधनं, तथा सति ध्वनिकरणे काव्येऽपि 'ध्वनि'व्यवहारापत्तेः । न वा ध्वन्यतेऽस्मिन्नित्यधिकरणसाधनं, तथा

---

(क) भावार्थे'ध्वनि'पदपरामर्शो यथा ध्वन्यालोके चतुर्थोद्योते—'यत् काव्यतत्त्वविषयं स्फुरितप्रसुप्तकल्पं मनःसु परिपक्वधियां यदासी'दित्यादौ । व्यापारार्थककरणसाधन'ध्वनि'पदपराम्रष्टस्य वस्तुनो निर्देशश्चन्द्रालोके (७।२)—'साम्मुख्यं विदधानायाः स्फुटमर्थान्तरे गिरः । कटाक्षा इव लीलाढ्या व्यापारो व्यञ्जनात्मकः ॥' अधिकरणसाधनस्य 'ध्वनि'पदस्योल्लेख 'इदमुत्तममतिशयिनि व्यङ्ग्ये वाच्याद्ध्वनिर्बुधैः कथित' इति मम्मटकारिकायाम् । वस्तुतस्तु साधारण्येन कर्मसाधन एवायमुद्दिष्टः—तथात्वे रसभावादिषु वस्त्वलङ्कारादिषु च व्यङ्ग्यार्थेष्वेव 'ध्वनि'पदव्यवहारः । यदाह ध्वनिकारः—'काव्यस्यात्मा स एवार्थस्तथा चादिकवेः पुरा । क्रौञ्चद्वन्द्ववियोगोत्थः शोकः श्लोकत्वमागत' इत्यादौ । एवं काव्ये 'ध्वनि'पदप्रयोग उपचारत एवेति सम्यक् । तथा च ध्वन्यालोके—'वाच्यवाचकसंमिश्रः शब्दात्मा काव्यमिति व्यपदेश्यो व्यञ्जकत्वसाम्यात् ध्वनिरित्युक्तः ।' एवमपि—'प्रत्ययैरनुपाख्येयैर्ग्रहणानुगुणैस्तथा । ध्वनिप्रकाशिते शब्दे स्वरूपमवधार्यते ॥' तेन व्यञ्जकौ शब्दार्थावपीह 'ध्वनि'शब्देनोक्तावित्यभिनवगुप्तपादाः ।

रसाख्यध्वनेरन्ये ध्वनयस्तु प्राणा, रसाख्यस्तु ध्वनिरात्मेत्यवधेयः (ख)।

रसादयः पश्चाद्दर्श्यन्ते। सम्प्रत्यस्तुभूतानां ध्वनीनां भेदा दर्श्यन्ते।

**उभयोरभिधामूललक्षणामूलयोस्तयोः॥**

**अविवक्षितवाच्योऽन्यस्तत्र वाच्यं द्विधा भवेत्॥ २६ का**

तयोर्ध्वन्योरन्यो लक्षणामूलो ध्वनिरविवक्षितवाच्यः स्यात्। तत्राविवक्षितवाच्ये ध्वनौ वाच्यं द्विधा भवतीत्यर्थः।

किन्तत् द्वैधमित्याह—

**अर्थान्तरोपसंक्रान्तमत्यन्तं वा तिरस्कृतम्। २७ का**

एकं वाच्यमजहत्स्वार्थतयाऽपरार्थेनोपसंक्रान्तं भवति, अन्यज्जहत्स्वार्थतया स्वविपरीतेनार्थेनाक्रान्तं भवतीति द्वैधम्। क्रमेणोदाहरणानि—

सति ध्वनिविषयकज्ञानाधिकरणे पुरुषेऽपि 'ध्वनि'व्यवहारापत्तेः। तस्मात् कर्म्मसाधनेन श्रोत्रपावनत्वाद्यर्थ एव 'ध्वनि'शब्दो योगरूढ़िरिति भावः।

तदेवेति—तत् ध्वनतेः कर्म्मध्वनिपदबोध्यं किमित्यपेक्षायामाह—रस इति। तदाभासौ रसाभासो भावाभासश्च, वस्तु श्रोत्रपावनत्वादि. उपमाद्यलङ्कारश्च। व्यभिचार्य्यादिभावानामुदय उत्पत्तिश्च शान्तिश्च सन्धिश्च शबलता च। सर्व्वमिति—एते सर्व्वेऽर्था 'ध्वनि'पदवाच्या इत्यर्थः। काव्ये 'ध्वनि'व्यवहारस्तु न मुख्यः, किन्तु लाक्षणिकत्वाद्गौण एवेत्याह—तज्जनीति। तस्य ध्वन्यर्थस्य जनिरुत्पत्तिर्यस्मात्तथाभूतत्व इत्यर्थः। एवं सति ध्वनिजनकत्वेनैव काव्ये 'ध्वनि'व्यवहारो, न तु साक्षात्।

ननु काव्यपुरुषस्य कदाचित् ध्वनयः प्राणाः कदाचिदात्मेत्युच्यते, तत्र को निर्द्धार इत्यपेक्षायामाह—रसाख्येति। रसाख्यध्वनिभिन्ना ये ध्वनयस्ते प्राणाः, रसाख्यध्वनिस्त्वात्मैवेति व्यवस्थया न दोषः। अस्तुभूतानां वस्त्वलङ्काररूपाणां ध्वनीनाम्।

तयोः प्राणात्मरूपयोर्द्ध्वन्योरुभयोरेवाभिधामूललक्षणामूलयोर्म्मध्येऽन्यो लक्षणामूलो ध्वनिरविवक्षितवाच्यो भवेत्।

---

(ख) 'काव्यस्यात्मा ध्वनिरिति' 'अर्थः सहृदयश्लाघ्यः काव्यात्मा यो व्यवस्थितः' इत्यादिषु ध्वनिकारवाक्येषु, 'शब्दार्थौ वपुरस्य विबुधैरात्माभ्यधायि ध्वनि'रित्यादौ चार्व्वाचीनानां कारिकाबन्धे ध्वनेरेव काव्यात्मत्वेन व्यपदेशः। 'वाक्यं रसात्मकं काव्य'मिति दर्पणकृतः काव्यलक्षणे, 'काव्यस्यात्मा स एवार्थस्तथा चादिकवेः पुरा। क्रौञ्चद्वन्द्ववियोगोत्थः शोकः श्लोकत्वमागतः।' 'ध्वन्यात्मन्येव शृङ्गारे ते हेया इत्युदाहृताः।' 'रसादिमय एकस्मिन् कविः स्यादवधानवान्' इत्यादिध्वनिकारकारिकासु 'रस आत्मा परे मनः' (अलङ्कारशेखरे

फलमपि फलं माकन्दानां सिता अपि ताः सिता
अमृतममृतं द्राक्षा द्राक्षा मधूनि मधून्यपि।
सह तुलयितुं तेनैतेषां न किञ्चन युज्यते
सुवल! यदयं सारङ्गाक्ष्या भवत्यधरोऽधरः॥ १

अत्र द्वितीय'फला'दिशब्दा निन्द्याद्यर्थसंक्रान्ताः। तथाहि—फलं नानावस्थं पाक एव कदाचिन्मधुरं भवति, तेन निन्द्यमेव। सिताः पाकपौनःपुन्येनैव निर्म्मला भवन्ति, नत्वारम्भ एव। अमृतं देवैरपि पीयते। द्राक्षा पूर्व्ववदेव। मधूनि सरघोच्छिष्टानि। अधरस्त्वधर एव, सर्व्वाण्येतान्यधरयतीत्यधरः। 'सह

श्रीकृष्णः सुवलं प्रत्याह—फलमपीति अत्र द्वितीय'फल'शब्दः कदाचित्कमधुरे लाक्षणिकः। तथा च माकन्दानामाम्राणां फलं कदाचिन्मधुरमिति लाक्षणिको वोधः। पश्चादाञ्जनावृत्त्या फले निन्द्यत्ववोधो (१) लक्षणामूलः। अत्र द्वितीयलाक्षणिक'फल'पदेन फलत्वरूपेण फलवोधो न भवति, अतएवायं ध्वनिरविवक्षितवाच्यः स्यात्; अथच प्रथम'फल'पदस्य फलरूपार्थो वाच्यः (2) व्यङ्ग्यभूतनिन्द्यत्वेन संक्रमितश्च भवति। एवमेव सर्व्वत्र 'सिता'दिपदेऽपि वोध्यम्। सिता मिछ्रि' इति प्रसिद्धा। हे सुवल! तेन राधिकाया अधरेण सह तुलयितुं तेषामाम्रादीनां मध्ये किञ्चन वस्तु न युज्यते। अमृतं देवैर्निकृष्टैरपि पीयत इति हेतोरमृतस्यापि निन्द्यत्वम्। द्राक्षा पूर्व्ववत् पाकावस्थायामेव मधुरा।

२य मरीचौ) इत्याद्यर्व्वाचीनवचने च रसस्यैवात्मताख्यापनम्। एवं पुनः 'न हि तच्छून्यं (रसध्वनिशून्यं) किञ्चित् काव्यमिति; यद्यपि च रसेनैव सर्व्वं जीवति काव्यम्' (ध्वन्यालोकलोचने द्वितीयोद्द्योतव्याख्यायाम्) इत्यभिनवगुप्तपादानां, 'प्रवन्धानां जीवितभूतो रस' इति प्रतापरुद्रयशोभूषणकाराणाञ्च निर्द्देशात् रसस्य प्राणत्वमपि सूचितमिति। इत्यालङ्कारिकमतानैक्ये (वस्तुतस्तु न मतानैक्यविलसितमेतत्, किन्तु शब्दप्रयोगानवधान-विजृम्भितमेवेति दिक्) श्रीमत्कर्णपूरगोस्वामिपादा आत्मरूपेण रसस्य, प्राणत्वेन च ध्वनेरभिधानमिच्छन्ति। स्वनामधन्यानां ध्वनिकारप्रकाशकृदादीनां काव्यात्मत्वतल्लक्षण-भेदादिनिर्द्देशप्रसङ्गेषु स्वस्वमतासङ्गतिर्द्दृश्यतेति कैश्चिदनवद्यमभिहितम्। परमतदूषयिता दर्पणकृदपि नात्र विषये सावधान इवाभाति—यतस्तेन 'वाक्यं रसात्मकं काव्य'मिति लक्षणं कृतं, पश्चात् काव्यस्य ध्वनिगुणीभूतव्यङ्ग्यरूपेण द्विधा विभागः कृतः, 'ध्वनिस्तत् काव्यमुत्तम'-मित्यभिधानेन वस्त्वलङ्कारध्वनीनां रसध्वनेरिवोत्तमता आयाति, तेन काव्यस्य नियतरूपेण रसात्मता व्याहतेति स्वमतविरोधस्तस्य स्फुट एव। एवमादिकं वैमत्यमालोक्य ग्रन्थकृताल

(१) 'निन्द्यत्ववोधे' इति निन्दनीयः पाठः (क) (ख) (घ) पुस्तकेषु।

(2) 'फलरूपवाच्यः' इति (ख) (घ) पुस्तकयोः पाठः।

तुलयितुं तैनैतेषां न किञ्चन युज्यत' इति विशेषवचनादुपमेयद्वितीयपदे स्तुत्यर्थएव व्यङ्ग्यः, न तूपमानद्वितीयपदवद्धेयांशता ।

यथा वा—

प्रेम्णा विद्रुतमेकवद्यदुभयोस्तन्मानसं मानसं
सर्व्वास्वेव दशासु यन्नवनवं तत् सौहृदं सौहृदम् ।
यत् क्षणास्य विनोदभूरहरहस्तद्यौवनं यौवन-
न्तद्विच्छेदविधौ न यत् परिचयस्तज्जीवनं जीवनम् ॥ २ (ग)

द्वितीय'मधु'पदस्य सरघोच्छिष्टे लक्षणा, 'सरघा मधुमक्षिका'। अधरस्त्वधरयति स्वापेक्षया सर्व्वाण्येव स्वादुवस्तूनि निकृष्टयतीत्यर्थः। विशेषवचनादिति—उपमेयस्या'धरोऽधर' इति वाक्यस्य द्वितीये'ऽधर'पदे स्तुत्यर्थो व्यङ्ग्यः, न तूपमानीभूतानां 'फलमपि फल'मित्यादिवाक्यानां द्वितीय'फला'दिपदस्येव हेयांशतारूपार्थो व्यङ्ग्यः। अत्र सर्व्वत्रोपमानस्य तिरस्कार एव व्यङ्ग्यो वोध्यः।

माथरविरहेण व्याकुला श्रीराधा ललितां प्रत्याह—उभयोः कान्तयोः प्रेम्णा विद्रुतं सत् यदेकवद्भाति तन्मन एव मानसं मनःपदवाच्यम्। अत्र द्वितीय'मानस'पदस्य (3) मनःपदवाच्यत्वरूपेण लक्षणा, अतएव द्वितीय'मानस'पदेऽविवक्षितवाच्यत्वसिद्धिः। तेन लाक्षणिकपदेन मनसः श्लाघनीयत्वरूपोऽर्थो व्यङ्ग्यः। तथाच प्रथम'मानस'पदस्य मनोरूप-वाच्यः व्यङ्गीभूतश्लाघनीयत्वरूपार्थान्तरेण संक्रमितश्चेति भावः। श्रीकृष्णविच्छेदे सति यस्य जीवनस्य न परिचयो न विद्यमानता, तज्जीवनं जीवनम्।

---

'ध्वनिरस्तव आत्मा किल रस' इति निपुणमभिधानं कृतम्। न चैत्य' तस्य कुत्राप्यसङ्गति-रित्यनिन्दितमेवेतत्मन्यामहे।

(ग) भक्तिप्रङ्गमनसस्तत्रभवतः कविकर्णपूरस्यायमनवद्यः सरस्वतीनिस्यन्दः, भगव-द्विच्छेदचिन्ताज्वरोच्छ्वासत एवास्योद्भवः 'त्रिभुवनमेव तन्मयं विरहे' इति न्यायात्। एवमप्यन्यत्र (४र्थ किरणे १म श्लोके) "दृष्टा भागवता .." इत्यादौ 'वत विधे! वामाय तुभ्यं नमः' इत्यन्ते प्रवन्धे श्रीकृष्णचैतन्यचरणसङ्गभङ्गविधुरता वर्णिता। श्रीमच्चैतन्यप्रभुपादाना-मपि शिक्षाष्टके 'युगायितं निमेषेण चक्षुषा प्रावृषायितम्। शून्यायितं जगत् सर्व्वं गोविन्दविरहेण मे॥' इतीयमेवावस्था प्रकटिता। वस्तुतस्त्वेवंविधभक्तानां नित्यलीला-सक्तगोपाङ्गनानामिव परमात्मरूपिणः साक्षाद्भगवतो न कदापि तत्त्वतो विच्छेदः—यदुक्तं व्रजनारीनित्यासक्तिवर्णनप्रसङ्गे स्कन्दपुराणे—'वृन्दारण्ये विहरता सदा रासादि-विभ्रमैः। हरिणा व्रजनारीणां विरहोऽस्ति न कर्हिचित्॥' श्रीकृष्णचरणे सर्व्वस्वसमर्पणं

---

(3) 'द्वितीय 'मनः' पदस्य' इति सर्व्वेष्वेव पुस्तकेषु पाठः। स च मूलाननुगतत्वादनुपादेयः।

स्वविपरीतार्थेनाक्रान्तं यथा—

सौभाग्यमेतदधिकं मम नाथ कृष्ण ! प्राणैर्मयातनि सुखं प्रणयेन कीर्त्तिः।
दृष्टश्चिरादसि कृपापि तवेयमुच्चैर्न स्मर्य्यते न भवतात्मगृहस्य मार्गः॥ २

अत्र 'सौभाग्य'मित्यसौभाग्यं, 'सुख'मिति दुःखं, 'कीर्त्ति'रकीर्त्तिः, 'कृपा'ऽकृपा, 'आत्मगृहस्ये'ति परगृहस्य स्वविपरीतेनाक्रान्तम्। (घ)

**ध्वनिर्यस्त्वभिधामूलस्तत्र वाच्यं विवक्षितम्।**
**तथापि व्यङ्ग्यनिष्ठं स्यात् स च द्वैविध्यमृच्छति।**
**कोऽपि लक्ष्यक्रमव्यङ्ग्योऽलक्ष्यव्यङ्ग्यक्रमोऽपरः॥ ३८ का**

अभिधामूलध्वनौ तु विवक्षितमपि वाच्यं व्यङ्ग्यनिष्ठम्। स च ध्वनिर्लक्ष्य-व्यङ्ग्यक्रमोऽलक्ष्यव्यङ्ग्यक्रमश्चेति द्विविधः—लक्ष्यं क्रमप्राप्तं व्यङ्ग्यं यत्र स तथा,

काचित् खण्डिता श्रीकृष्णं प्रति सोल्लुण्ठवचनमाह—एतत्तवागमनं ममाधिकसौभाग्य मधिकसौभाग्यजनकमित्यर्थः। त्वदिच्छेदे मम प्राणैः कर्त्तृभिः सुखमतनि विस्तृतमकारि। एवं मद्विषयकेण तव प्रणयेन मम कीर्त्तिरतनि। चिराद्बहुकालानन्तरं त्वं दृष्टोऽसि, तेन मयि कृपाऽपि (4) त्वयातनि। मद्गृहं तवात्मगृहं, तादृशात्मगृहस्य मार्गस्त्वया स्मर्य्यत इति न, अपि तु स्मर्य्यत एव। अत्रेति—'सौभाग्य'पदस्यासौभाग्ये लक्षणा, 'सुख'पदस्य दुःखे लक्षणा। एतादृशक्लेशेऽपि यस्मात् प्राणा न निर्गतास्तत एव मत्प्राणा मद्दुःखदायका इति भावः। मद्गृहं तव परगृहं, न तु स्वगृहम्। सर्व्वत्र विरुद्धलक्षणाभिर्मद्विषये त्वं प्रेमशून्य इत्यर्थो व्यज्यते। तथा च स्वस्मिन्नायकस्य प्रेमशून्यत्वरूपो व्यङ्ग्यो लक्षणामूलः, तथा वाच्यार्थस्य तिरस्कारः स्पष्ट एवेति भावः।

---

तत्सेवायां तत्परता च परानन्दाय मोक्षायैव च। विद्रुतिः खलु माधुर्य्यात्मा, सौहृदस्य नवनवत्वं नित्यमभ्यर्थनासाधुत्वाय, अतो व्यङ्ग्यार्थपरिपुष्टिः। लक्षणामूलोऽयं ध्वनिर्यथा तथोपरिष्टाद्दर्शितमिति।

(घ) इदमेवान्यैरत्यन्ततिरस्कृतवाच्यमिति कथ्यते। उदाहरणान्तरे च 'निःश्वासान्ध इवादर्शश्चन्द्रमा न प्रकाशते' इत्यन्तं रामायणपद्यं, 'या निशा सर्व्वभूतानां तस्यां जागर्त्ति संयमी' इत्यादि भगवद्गीताश्लोकश्च। लक्षणामूलध्वनिपरिग्रहेण लक्षणान्वयव्यतिरेकानु विधायित्वमेवास्य ध्वनेर्निदानमिति पक्षः स्वीकृतः। निरूढ़लक्षणावत्पदघटितकाव्यीय-ध्वनिरेवानाङ्गीकृत इति, अन्यथा तु गुणीभूतव्यङ्ग्यत्वमस्फुट-सन्दिग्धप्राधान्य-तुल्य-प्राधान्यादिसंज्ञकं व्याहतं स्यादित्यनुपदमेव मूलतः स्फुटीभविष्यति।

---

(4) 'महती कृपापि' इति (क) (ख) पुस्तकयोः पाठः।

अलक्ष्यो व्यङ्ग्यस्य क्रमो यत्र स तथा । क्रमस्तु विभावादिभिर्व्यज्यमान एव रसः, न तु विभावादय इति । लाघवाच्छत्तपत्रशतीयुगपद्वेधाभिमानवत् यत्र क्रमो न लक्ष्यते स तावदक्रमः । (ङ)

**रसो भावस्तदाभासो भावशान्त्यादिरक्रमः । ३९का**

रसादिस्त्वक्रमोऽलक्ष्यक्रमव्यङ्ग्य इत्यर्थः । आदिशब्दाद्भावोदयभावशावल्य-भावसन्धयः । अयमसंलक्ष्यक्रमव्यङ्ग्यो रसनिरूपणे दर्शयिष्यते । सम्प्रति लक्ष्यक्रमव्यङ्ग्यो दर्श्यते—

**यत्रानुध्वनिना व्यङ्ग्यं लक्ष्यते क्रमपूर्व्वकम् ।**
**स तु लक्ष्यक्रमव्यङ्ग्यः शब्दार्थोभयशक्तिभूः ॥ ४०का**

विवक्षितमपीति—विवक्षितमपि वाच्यं व्यङ्ग्यनिष्ठं व्यङ्ग्यपर्य्यवसानं स्यादित्यर्थः । तथाच वाच्यार्थस्य विवक्षायामपि व्यङ्ग्यार्थस्यैव प्राधान्यं, न तु वाच्यार्थस्येति भावः (ङ) । लक्ष्यमिति—वस्त्वलङ्कारादिरूपव्यङ्ग्यार्थानां हृदये उत्पत्त्यन्तर्ज्ञानरूपक्रमः सर्व्वेषां लक्ष्य इत्यर्थः । अलक्ष्य इति—रसादिरूपव्यङ्ग्यार्थानां हृदये उत्पत्त्यन्तर्ज्ञानरूपक्रमो न लक्ष्य इत्यर्थः । ध्वनिविषयकज्ञानस्योत्पत्त्यादिना ध्वनेरप्युत्पत्त्यादिव्यवहारः । अत्र दृष्टान्तो लाघवादिति—शतपत्रस्य कमलस्य शतसंख्यकपत्राणां सूच्या वेधे जाते सति प्रत्येकपत्रस्य यः प्रत्येकवेधस्तस्योत्पत्त्यादिक्रमो लाघवात् सूचीकरणकवेधनिष्ठशैघ्र्यान्न लक्ष्यः । अतएव मया युगपदेकक्षण एव सर्व्वेषां वेधः कृत इति तेषामभिमानो यथा, तथात्रापि रसादि-व्यङ्ग्यानामुत्पत्त्यादिक्रमोऽपि न लक्ष्यः ।

---

(ङ) क्रमस्त्विति—एतमेवाभिप्रायं मनसि निधाय भगवता मुनिनोक्तं 'विभावानुभाव-व्यभिचारिसंयोगाद्रसनिष्पत्ति'रिति । सर्व्वं तच्च 'रस'किरण एव नियतं विशदीभविष्यति । 'विभावादिभि'रित्यत्रादिपदस्य बहुवचनस्य च सार्थकतातएव स्फुटा—'एवञ्च विभावादीनां दण्डचक्रादिन्यायेन सम्भूयैव कारणत्वं, न तु तृणारणिमणिन्यायेनैकैकस्ये'ति मन्तव्यम् । विभावाद्याः कारणान्येव, 'रसोद्बोधे विभावाद्याः कारणान्येव ते मताः' ( सा. दर्पणे ३य परिच्छेदे )। अक्रम इति—असंलक्ष्यक्रम इति यावत् । 'अत्र व्यङ्ग्यप्रतीतेर्व्विभावादि-प्रतीतिकारणकत्वात् क्रमोऽवश्यमस्ति, किन्तु नासौ निपुणेनापि लक्षयितुं शक्यः ।' कथं तावदस्याक्रमस्य ध्वनेर्न्निरतिशयानन्ददतया बहुविषयतया च सहृदयहृदयं सततमेवाधि-कुर्व्वत एकत्वेन गणना क्रतेति न दुरूहः प्रश्नः । 'एषु रसादिषु चैकस्यापि भेदस्यानन्तत्वात् सङ्ख्यातुमशक्यत्वादसंलक्ष्यक्रमव्यङ्ग्यध्वनिर्न्नाम काव्यमेकभेदमेवोक्त'मिति विश्वनाथः ।

अनुध्वनिरणुरणनं ध्वनेरेव दीर्घदीर्घभावः प्रतिध्वनिरिव वा। स तु लक्ष्यक्रमव्यङ्ग्यः शब्दशक्तिभूरर्थशक्तिभूः शब्दार्थोभयशक्तिभूश्चेति त्रिधा।

**आद्यो द्विधैवालङ्कारवस्तुनोर्द्योतनाद्भवेत् ॥४१का**

आद्यः शब्दशक्तिभूर्द्विधैव भवेत्। 'एव'कारस्तु अर्थशक्तिभववच्छब्दशक्तिभवोऽपि द्वादशेति परमतं व्यावर्त्तयति (च); अथवाऽलङ्कारस्यैव, वस्तुन एव, नान्यतरविशिष्टस्येत्यर्थः।

तत्रालङ्कारद्योतकः शब्दशक्तिभूर्यथा—

आशामात्रे विलसदुदयः पद्मिनीचक्रबन्धुः
सिद्धाभोगः सततमनिशामोदमैत्रीकषायः।

अनुरणनमिति—यथा घण्टादीनामेकनादोत्तरमपरनादानां क्रमो ज्ञायते, यथा वा ध्वन्युत्तरं प्रतिध्वनिर्ज्ञायते, तथैव येषां ध्वनीनामुत्पत्त्यादिक्रमो लक्ष्यते, स लक्ष्यक्रमव्यङ्ग्यः।

अथवेति—'आद्यो द्विधैवे'त्यत्र 'एव'कारोऽलङ्कारवस्तुनोरित्यनन्तरमेव योजनीयम् (च)। तथा चालङ्कारस्यैव द्योतनात्, न तु वस्तुविशिष्टालङ्कारस्य; एवं वस्तुन एव द्योतनात्, न त्वलङ्कारविशिष्टस्य वस्तुनः। एवं सति केवलालङ्कारस्य द्योतनात्, तथा केवलवस्तुनो द्योतनादाद्यो द्विधा भवतीत्यर्थः।

आशामात्र इति—अयं क्षपारूपश्चन्द्रो रोचिःपूरैः कान्तिप्रवाहैः शीततां जाड्यं हरतु। प्रसिद्धचन्द्रस्तु शीततां करोति। तथाऽयं भजतां जनानामाशामात्र एव विलसन्नुदयो यस्य सः। अत्र शब्दमात्रश्लेषेणाशाशामात्रे दिक्सामान्य उदयः, प्रसिद्धचन्द्रस्य तु पूर्व्वाशायामेवोदयः। अयं पद्मिनीसमूहानां बन्धुः, स तु द्वेषी। अयं सततं सिद्ध आभोगः परिपूर्णता यस्य तथाभूतः, स तु कदाचित् पूर्णिमायामेव सिद्धाभोगः। अनिशं निरन्तरमामोदमैत्रीकषाया यस्य तथाभूतः। 'कषाय'शब्दोऽत्र माधुर्य्यवाची, 'मधुरेऽपि कषायः स्यादि'त्यनुशासनात्। अत्रापि शब्दमात्रश्लेषेण निशाभिन्नेऽपि काल आमोदादयो

---

उत्पलशतपत्रव्यतिभेदे क्रमोऽतिशीघ्रजन्यत्वादलक्ष्यः, अत्रापि कार्य्यकारणपरम्परा तदभिव्यक्तितो रसभोगप्रणाली च न संलक्ष्यत इति तु न रिक्तं वचः।

(च) परमतमिति—नैतन्मते प्रसिद्धैरालङ्कारिकैरास्था स्थाप्यते, नास्य मतस्योल्लेखलेशोऽपि प्राचीनप्रसिद्धग्रन्थेषूपलभ्यते। मूलमेतन्मतस्य न तावत् दुर्निरूपम्—यतः 'अर्थस्य व्यञ्जकत्वे तच्छब्दस्य सहकारिते'ति न्यायेन अर्थबोधप्रसङ्गे सर्व्वत्रैव शब्दस्य साचिव्यम्, अतोऽर्थशक्त्युद्भवध्वनिभेदस्य प्रत्येकस्य प्रतिरूपकमेकं शब्दशक्त्युद्भवध्वनिकायमस्तीत्यनुमानम्, तेन द्वादशधैव शब्दशक्त्युद्भवोऽपि विभजनीय इति मतम्। टीकाकृता 'एव'कारस्य द्वितीयपक्षव्याख्यावलम्बनेन मतस्यास्योल्लेखयोग्यत्वमपि व्याहतमिति दर्शितमिति मन्यामहे।

রাধাশ্লেষাদিষু নিরবধিব্যাপৃতঃ শোণপাদো
রোচিঃপূরৈর্হরতু ভজতাং শীততাং কৃষ্ণচন্দ্রঃ (ক)॥ ৪

অত্র শব্দশক্ত্যাঽদ্ভুতশ্চন্দ্র ইতি প্রসিদ্ধচন্দ্রাদ্ব্যতিরিক্তৈরখিলৈর্গুণৈর্ব্যতিরেকা-লঙ্কারো ধ্বনিতঃ। যদ্যপ্যসৌ ধ্বনিত্বেনালঙ্কার্য্য এব, তথাপি ব্রাহ্মণশ্রমণ-ন্যায়েনালঙ্কার এব (জ)। এবমন্যেঽপি।

যস্য সঃ, প্রসিদ্ধচন্দ্রস্য তু নিশায়ামেব। রাধায়া আলিঙ্গনাদিকর্ম্মসু নিরবধিব্যাপার-যুক্তঃ, স তু রাধাশ্লেষাদিনক্ষত্রেষু কদাচিৎ সংযুক্তঃ। অয়ং শোণপাদো রক্তচরণঃ, স তু শ্বেতপাদঃ। অত্র 'পাদ'শব্দঃ কিরণবাচী। অত্রাশাদিশব্দানাং পরিবৃত্ত্যসহত্বাদেব শব্দশক্ত্যুদ্ভবো ধ্বনিরিতি জ্ঞেয়ম্।

অলঙ্কার্য্যোঽলঙ্কারাশ্রয় এব, ধ্বনেস্তু প্রাণত্বাৎ, প্রাণস্য চ শরীরারম্ভকত্বাৎ; শরীর-ন্ত্বলঙ্কারাশ্রয় এব, ন ত্বলঙ্কাররূপং, কথং ব্যতিরেকালঙ্কারস্য ধ্বনিরূপত্বমিত্যাক্ষেপঃ। শ্রমণোঽবধূতঃ—যদ্যপ্যবধূতস্য বর্ণাশ্রমাদিকং কিমপি নাস্তি, তথাপি পূর্ব্বদৃষ্টস্য ব্রাহ্মণস্য স্মরণাৎ ব্রাহ্মণভিন্নেঽপ্যবধূতে কদাচিদ্ব্রাহ্মণোঽয়মিতি প্রতীতির্যথা জায়তে, তথালঙ্কারভিন্নেঽপি ধ্বনাবলঙ্কারপ্রতীতির্জায়ত ইতি ভাবঃ।

---

(ক) শ্লোকেঽস্মিন্ 'পদ্মিনী' 'মৈত্রী' 'মোদ' 'কষায়'শব্দাঃ কৃষ্ণপক্ষে ব্যাখ্যায়াং পারিভাষিকাঃ পারিভাষিককল্পা বা। পদ্মিনী খলূত্তমা স্ত্রীজাতিঃ। 'অনিশামোদে'ত্যত্র সভঙ্গাভঙ্গশ্লেষঃ, মোদ ইতি কৃষ্ণপক্ষে। 'মোদ' 'মৈত্রী' 'কষায়' পদৈশ্চিত্তবৃত্তীনাং মৈত্রীকরুণামুদিতাখ্যানাং পরিগ্রহঃ, ন তু পাপিষূপেক্ষালক্ষণায়া 'উপেক্ষা'য়া অপি—স খলু ধর্ম্মঃ বৈষ্ণবমতানমু-মোদিতঃ। 'কষায়'পদেন মাধুর্য্যং, ততঃ গৌণ্যা বৃত্ত্যা করুণায়া বোধঃ। ভজতাং নিত্যভক্তানামিতি যাবৎ। অত্র 'মাত্রে' 'বন্ধুঃ' 'সততম্' 'অনিশং' 'নিরবধি' 'শোণ' ইত্যেতেষাং পদানাং পদাংশানাং বৈষ্টার্থবোধে সাচিব্যং স্ফুটমেব। 'আশামাত্রে বিলসদুদয়ঃ' ইত্যস্য সন্দর্ভাংশস্য ব্যাখ্যাঽন্যথাপি বিধেয়া। যদৈব ভক্তানাং ভগবন্তং সাক্ষাৎকর্ত্তুং প্রবলতরার্ত্তিরা-কাঙ্ক্ষা বা জায়তে, তদৈব স প্রকটো ভবতি, বিভূতিরূপেণাংশকলাত্বপক্ষাবলম্বনেঽবতাররূপেণ বা। সর্ব্বত্রৈব তস্য প্রকাশঃ—'তস্য ভাসা সর্ব্বমিদং বিভাতী'তি শ্রুতিঃ। অনন্তা তদ্বিভূতিপরম্পরা—'অনন্তবীর্য্যামিতবিক্রমস্ত্বং সর্ব্বং সমাপ্নোষি ততোঽসি সর্ব্বঃ' ইতি শ্রীশ্রীগীতাস্মৃতিঃ অবতাররূপেণ ভক্তাশাপূরণাকাঙ্ক্ষিণা তদুদয়স্তত্রৈবাভিহিতঃ—'ধর্ম্ম-সংস্থাপনার্থায় সম্ভবামি যুগে যুগে' ইতি।

(জ) তদুক্তং কাব্যপ্রদীপে 'প্রকাশ'গ্রন্থব্যাখ্যাবসরে 'নন্বাদ্বৃতৈষূপমাদীনাং প্রাধান্যং ন বা? আদ্যে কুতস্তেষামলঙ্কারত্বং, অন্যানলঙ্করণাৎ, দ্বিতীয়ে কুতোঽস্য কাব্যস্য ধ্বনিত্বং ব্যঙ্গ্যস্যাপ্রাধান্যাদিতি চেৎ, ন; পূর্ব্বং (বাচ্যত্বদশায়াম্) অয়মলঙ্কার আসীদিত্যেতাবতাঽ-

दधती समधुपरागं परिमलमेकान्तसुकुमारा ।

गुणकलिता (5) ललिते ! मम भूषितकण्ठा त्वमेव वनमाला ॥ ५

अत्र शब्दशक्त्या कवेर्व्वनमालाललितयोः साधर्म्म्यं निरूप्य प्रयासे व्युपरते सति वस्तुभूतः कश्चिदर्थः स्फुरति । स च—त्वमेव वनमाला, नान्येति ; त्वां प्रत्येव मे समादरः, न तस्याम् ; तेन त्वदालिङ्गनमेव मे प्रेय इति वस्तु ।

**अर्थशक्त्युद्भवोऽर्थस्तु व्यञ्जकः स्वयमुद्भवो ।**

**कवेः प्रौढोक्तिनिष्पन्नो वक्तुस्तत्कल्पितस्य च ॥ ४२ का**

अर्थशक्त्युद्भवो यो ध्वनिः स त्रिधा भवति—स्वतःसम्भवो, कविप्रौढोक्ति-निष्पन्नशरीरः, तन्निबद्धवक्तृप्रौढ़िनिष्पन्नशरीरश्च (भ)। तत्र स्वतःसम्भवो

हे ललिते ! भूषितकण्ठा सती त्वमेव मम वनमाला। मधुपस्य भ्रमरस्यानुरागेण सह वर्त्तमानं परिमलं सुगन्धं दधती, ललितापक्षे तवाधरमधुपानकर्त्तुर्म्ममानुरागेण सह वर्त्तमानं परिमलं दधती। गुणः सूत्रं वैदग्ध्यादिश्च । प्रेय इति अभीष्टमित्यर्थः, इति वस्तुध्वनिः 'मधुपा'दिशब्दानां परिवृत्त्यसहत्वाच्छब्दशक्त्युद्भवः।

तन्निबद्धवक्तृप्रौढ़ीति—तेन कविना स्वकृतश्लोके निबद्धा उक्ता ये वक्तारस्ते दूतीनायिका-प्रभृतयो बहवो भवन्ति। तेषां प्रौढ़ोक्तिभिर्न्निष्पन्नं शरीरं यस्य सः। अर्थशक्त्युद्भवो यो ध्वनिरिति—सूत्रे'ऽर्थशक्त्युद्भवोऽर्थस्तु व्यञ्जक' इत्यत्र व्यञ्जकपददृष्ट्याऽत्रापि व्याख्यायां व्यञ्जको यो ध्वनिः स त्रिविध इति व्याख्येयम्। एवं सति यत्र काव्ये ध्वनेर्द्ध्वन्यन्तरोद्गारो

---

लङ्कारव्यपदेशात्—यथा ब्राह्मणपूर्व्वबौद्धसन्न्यासिनि ब्राह्मणव्यपदेशः। नन्वेवं व्यपदेश-समर्थनेऽप्यलङ्कारध्वनित्वं न समर्थितमिति चेत्, न—'अलङ्कार'पदेन (अलङ्कारध्वनिशब्दगतेन) तद्योग्यताया (अलङ्कारजातीयरूपायाः) विवक्षितत्वात्, न चैवं रसादिध्वनावप्यलङ्कार-ध्वनित्वप्रसङ्गः, संलक्ष्यक्रमस्यैव तादृशस्य (कदाचिदलङ्कारस्य) तथा (अलङ्कारध्वनि-व्यपदेश्यतया) अभिप्रेतत्वात्। वस्तुतस्तु प्राधान्याप्राधान्ये व्यङ्ग्यस्य वाच्यापेक्षयैव, न तु रसापेक्षयापि, तदपेक्षया सर्व्वत्र गुणीभावात् ; तथा चोपमादीनां रसाङ्गतयाऽलङ्कारत्वं, वाच्यापेक्षया प्राधान्यञ्चेति न दोषलेशावकाश' इति।

(भ) रसगङ्गाधरकृता जगन्नाथेन तत्पूर्व्वतरैश्च कैश्चित् कविनिबद्धवक्तृप्रौढ़ोक्तिनिष्पन्न-शरीरस्य ध्वनेः कविप्रौढ़ोक्तिनिष्पन्नाद्भेदात् पृथक् सत्ता न तावत् स्वीकृता। तदसत्—यदाहुर्द्दर्पणकाराः—'न खलु कवेः कविनिबद्धस्येव रागाद्याविष्टता। अतः कविनिबद्ध-

---

(5) 'गुणगुम्फिता' इति (क) (ख) (छ) पुस्तकेषु पाठः। तथात्वे तु आर्य्यायास्तृतीये पादे त्रयोदश मात्राः, मात्राधिक्यञ्च प्रागुप्रदर्शितदिशा कथमपि समर्थनीयम्।

न केवलं कविभणितिमात्रनिष्पन्नः, व्यवहारेऽपि समुचितत्वेन सम्भाव्यमानः । अन्यौ कविना तन्निबद्धवक्त्रा च प्रतिभामात्रेण व्यवहारासिद्धावपि निर्म्मितौ ।

**वस्तुत्वालङ्कृतित्वाभ्यान्ते द्वैविध्येन षट् स्मृताः । ४३का**

ते त्रयो भेदा वस्तुरूपतयाऽलङ्काररूपतया च षट्प्रकाराः स्युः ।

**वस्तुना वस्त्वलङ्कारावलङ्कारेण तेषु चेत् ।**

**व्यज्येते अप्यलङ्कारवस्तुनी(6) द्वादशापि तत् ॥४४का**

तेषु षड़्विधेषु चेत् यदि वस्तुना वस्तु चालङ्कारश्च व्यज्यते, अलङ्कारेणालङ्कारो वस्तु च व्यज्यते, तत् तदा द्वादशापि भवन्तीत्यर्थः । क्रमेणोदाहरणानि—

वर्त्तते ताद्दशोत्तमोत्तमकाव्यस्थितोत्तमध्वनेरेव लक्षणम् । अस्यैव द्वादश-भेदा वक्तव्याः । यत्र ध्वनेर्द्वन्यन्तरं नास्ति केवलध्वनिमात्रं, तदर्थं लक्षणान्तरमनुसन्धेयम् । अन्याविति—स्वतःसम्भविध्वनिभिन्नौ कविवाङ्निष्पन्नकविनिबद्धवक्तृवाङ्निष्पन्नध्वनी इत्यर्थः । तौ तु कविना कविनिबद्धवक्त्रा च प्रतिभामात्रेण स्ववचनेनैव निर्म्मितौ । तत्र तत्र लोकव्यवहारासम्भवेऽपि चतुर्म्मुखस्येव कविरेव स्वतन्त्रसृष्टिकर्त्तेति भावः । अतएवोक्तं काव्यप्रकाशे—'नियतिकृतनियमरहिता'मिति ।

षट्प्रकाराः स्युरिति—षड्भेदास्तु सामान्याकारेणापातत एवोक्ताः, किन्तु वक्ष्यमाणद्वादशभेदस्यान्तर्गता एव, न तु तदपेक्षया स्वतन्त्राः, अतएव षड्भेदानां स्वतन्त्रोदाहरणं न

---

वक्तृप्रौढ़ोक्तिः कविप्रौढ़ोक्तेरधिकं सहृदयचमत्कारकारिणीति पृथक् प्रतिपादिते'ति' । अपि च न खलु कविः सर्व्वदैव स्वकाव्यनिबद्धपात्रमुखेण स्वकीयामेवाभिप्रायप्रणालीमाविष्करोति । प्रौढ़ोक्तिरध्यवसायमूलातिशयोक्त्यलङ्कारप्राणभूतेति ज्ञेयम् । वस्तुतस्तत्र 'प्रौढ़ोक्ति'पदेन सर्व्वविच्छित्तिजीवातुभूतस्य प्रसिद्धस्यातिशयोक्तिचक्रस्यैव परिग्रह इत्यभिधानेऽपि न किमपि वैयर्थ्यम्—यथाह्याचार्य्यदण्डी स्वनिबन्धे—'अलङ्कारान्तराणामप्येकमाहुः परायणम् । वागीशमहितामुक्तिमिमामतिशयाह्वयाम् ॥' (२२२०)। यद्वात्र 'प्रौढ़ोक्ति'पदेन 'वक्रोक्तिजीवित'कृता कुन्तकेण संज्ञान्तरकल्पनयेतरव्यावर्त्तकत्वेन परिच्छिन्नाया वक्रोक्तेरेव निर्द्देशः—तथा च तत्पद्यं 'प्रसिद्धं मार्गमुत्सृज्य यत्र वैचित्र्यसिद्धये । अन्यथैवोच्यते सोऽर्थः सा वक्रोक्तिरुदाहृता ॥' 'सैषा सर्व्वत्र वक्रोक्तिरनयार्थो विभाव्यते । यत्नोऽस्यां कविना कार्य्यः कोऽलङ्कारोऽनया विना ॥' इति च । 'प्रौढ़ोक्ति' पदस्य तात्पर्य्यग्रहे पण्डितराजजगन्नाथपादानां प्रहेलिकाप्रायमप्यभिधानमतीव चमत्कारीत्यतोदार्श्यते—'यदेवोच्यते तदेव व्यङ्ग्यं, यथा तु व्यङ्ग्यं न तथोच्यते' इति ।

---

(6) 'वस्त्वलङ्कारवस्तुनी' इति (ख) पुस्तके वर्ज्जनीयः पाठः ।

गोउलमहिंदणंदण सुसघरे एत्थ मा पविस ।

अज्ज सहीए सामी गोमी दूरं गओ गोट्ठं ॥ ६ (ञ)

अत्र स्वामी, न तु प्रियः । गोमी वह्वीनां गवां पतिः, तेन शीघ्रं नायास्यति । दूरं, न तु नेदीयः, अतश्चिरं व्याप्यास्या गृहं शून्यं भावि । तेनात्र निःशङ्कमेव प्रविश्य विलस्यतामिति वस्तु ।

श्रूयते परिमले मलशब्दो मेखलादिषु खलाद्यभियोगः ।

चन्दनादिरस एव हि पङ्को नीवीकेशरसनादिषु वन्धः ॥ ७ (ट)

अत्र कवेरप्रयासरचनावलात् (7) व्रजलोके मलाद्यभावो वस्तुभूतोऽर्थः स्वतःसम्भवी, तेन स्वभावोक्त्यलङ्कारः—इति द्वेधा ।

गञ्जनान्न हि विभेषि गुरूणां खञ्जनाक्षि ! यमुनामधुनागाः ।

अञ्जनाभ इह कुञ्जर एकः कञ्जनालदलभञ्जनकारी ॥ ८

वृत्तम् । क्रमेणेति—तत्र स्वतःसम्भविनो ध्वनेर्व्वस्त्वन्तरव्यञ्जकं वस्तुरूपं प्रथमभेदमाह—गोउलेति । गोकुलमहेन्द्रनन्दन ! शून्यगृहेऽत्र मा प्रविश । अद्य सख्याः स्वामी गोमान् दूरं गतो गोष्ठम् ॥ अतश्चिरकालं व्याप्यास्या गृहं शून्यं भविष्यतीति वस्तुध्वनिः, तेन वस्तुध्वनिना'त्र निःशङ्क'मित्यादि वस्तुध्वनिरित्यर्थः ।

अलङ्कारव्यञ्जकं वस्तुरूपं द्वितीयभेदमाह—श्रूयत इति । व्रजे मलाद्यभाव एव वस्तुभूतो व्यङ्ग्यः, तेन वस्तुना स्वभावोक्त्यलङ्कारो व्यङ्ग्य इत्यर्थः ।

अञ्जनेति—अञ्जनस्येवाभा कान्तिर्यस्यैवम्भूत एकः कुञ्जरः । कमलनालस्य दलभञ्जनक, कृष्णपक्षेऽतिशयोक्त्या सुन्दरीणामधररूपदलस्य भञ्जनकारी ।

---

(ञ) प्राकृतस्य छायायां 'गोमी'त्यस्य 'गोमानि'ति विपरिणतिः कृता टीकाकृता ! स्वकृतप्रयुक्तपदेन चूर्णके दर्शितेन 'गोमी'त्यनेन न विपरिणतेरवकाश इति मन्यते । यद्यपि 'चन्द्रगोमी'त्यादि संज्ञावाचकत्वेनैव प्राचीनैः'गोमि'पदस्य सिद्धत्वं स्मर्य्यते, तथापि कदाचित्क-प्रयोगवलादस्यार्थविवक्षायामपि पदस्यास्य समर्थनं परवर्त्तिवैयाकरणमतानुमोदितमेव । 'स्वामी मुग्धतरो वनं घनमिद'मित्यादाविवात्रापि 'स्वामि'पदस्य चरितार्थता वोध्या ।

(ट) अत्र श्लोकस्य पूर्व्वार्द्धेऽनुप्रासवद्वचनरचनातो न ध्वनेः शब्दशक्त्युद्भवत्वमेव वाच्यम्—'परिमल'पदं मलान्तं, 'मेखला'पदञ्च खलान्तं, न च तस्मादेव भावादत्र व्यञ्जनोद्गता । उत्तरार्द्धेत एव तत् स्फुटं भवति, यतो न तत्र स शब्दालङ्कारोल्लासः । अत्र 'मलशब्दः' 'खलाद्यभियोग' इति पदद्वयेनान्यदपि व्यञ्जनावोध्यं चमत्कारकारणमस्ति, यत केवलं

---

(7) 'वचनवलात्' इति (ख) (छ) पुस्तकयोः पाठः ।

अत्र सखीं प्रति सखी वदति—'खञ्जनाक्षी'ति सम्बोधनमर्य्यादया सखीरूपो वक्ता। 'अधुने'त्यकालेऽपि यदगास्तेन स्नातुं नागाः, कृष्णाङ्ग-सङ्गायैवागा इति काव्यलिङ्गालङ्कारः, तेन त्वं 'गुरूणां गञ्जनान्न बिभेषी'ति गुरुगञ्जने तव भयं नास्ति यथा कृष्णाङ्गसङ्गविरह इति वस्तु ध्वन्यते। एवं 'कुञ्जर' इति कृष्णनामापह्नवेनापह्नुत्यलङ्कारेण कृष्णकुञ्जरयोः सादृश्य-व्यञ्जनादुपमालङ्कारस्य—इति स्वतःसम्भविनः श्लोकत्रयेण चातुर्व्विध्यम् (ठ)।

कविप्रौढ़ोक्तेश्चातुर्व्विध्यं यथा—

स्पन्दते यदि पदादि तदासां स्पन्दते मधुरिमामृतधारा।
सङ्गतः पवनजाद्व्रततीनामङ्गतो मधुकणा इव भूमौ ॥ ८

अत्र कविप्रौढ़ोक्तिरेव, न पूर्व्ववत् स्वतःसम्भवी स चार्थः। यासां पदादि स्पन्दनमात्रेणाप्येवं माधुर्य्यरसप्रतिपत्तिरित्यहो आसां लोकोत्तरतेति वस्तु-भूतोऽर्थः। स च तासां रासादिनृत्यविधौ वा कीदृश इति वस्तु व्यनक्तीति

स्पन्दत इति—आसां व्रजसुन्दरीणां पदाद्यङ्गं यदि स्पन्दते चलति, तदा माधुर्य्यामृतं स्यन्दते स्रवति। न पूर्व्ववत् स्वतःसम्भवीति—माधुर्य्यस्यामूर्त्तत्वात्तस्य धारापतनासम्भवेन लोकव्यवहारे समुचितत्वाभावान्न स्वतःसम्भवीत्यर्थः।

---

वङ्गभाषाभाषिणामेव वेद्यम्। अत्र यद्यपि 'तत्र चान्यत्र च प्राप्तौ परिसंख्या विगीयते' इति मीमांसकपरिगृहीतपरिसंख्यावत्पदकदम्बक इवालङ्कारिककल्पितपरिसंख्या-ऽलङ्कारवति प्रवन्धेऽलङ्कारतो वस्तुभूतस्य व्रजलोके मलाद्यभावरूपस्यार्थस्य स्फुरणं सम्भवि, तथापि वस्तुत एव साक्षादलङ्कारव्यञ्जनेति ग्रन्थकृतो विवक्षा न यादृच्छिकी। अन्यत्र मूले च स्वभावोक्तिपदेनालङ्कारिकनिरूढ़स्वभावोक्त्यलङ्कारस्य न प्रायशः स्वीकारः, अपि तु स्वभावस्यालौकिकस्यापि पदार्थवैशिष्ट्यस्योक्तिर्व्विच्छित्तिमुखेनाभिधाननिर्व्वाह इति निर्व्वचनेनाध्यवसायमूलाया अतिशयोक्तेरेव ग्रहणं समर्थ्यत इति मन्यामहे। एवमपि काव्यप्रकाशे 'गाढ़कान्तदशनक्षते'त्यादि माघकविपद्ये तुल्ययोगितालङ्कारा-च्छब्दनिर्व्वचनमूलार्थसहितान्न त्वालङ्कारिकलक्षितात् 'समुच्चया'लङ्कारस्य व्यञ्जनोक्ता—तत्र तट्टीकाकृद्भिः कैश्चिदस्यायमेवाशयः सूचित इति तत एव द्रष्टव्यम्।

(ठ) अत्र स्वतःसम्भविनाऽलङ्कारेण (एकत्र काव्यलिङ्गापरत्रापह्नुत्या) वस्त्वलङ्कृतिश्च यथाक्रमं ध्वन्यते। एवमादिषूदाहरणेष्वलङ्कारा इतरतः स्वविच्छित्तिमाददाना अपि विच्छित्तिवैशिष्ट्यमर्थस्य सन्दर्भस्य वा समावहन्तीति तु न चित्रम्। यदाहू रसगङ्गाधरकृतः—'अलङ्कारा हि वाच्यसौन्दर्य्यसारा प्रायशः स्वान्तर्गतं प्रतीयमानं पृष्ठतः कुर्व्वन्तो'ति।

वस्तुना वस्तु। उत्तरार्द्धे व्रततीनां पवनजात् सङ्गान्मधुकणा इवेति तासामपि व्रततिभिरुपमेत्युपमालङ्कारेण स्वभावोक्त्यलङ्कारो ध्वनित इति द्वेधा। (ङ)

गोकुले कुलजबालवधूनां श्यामधामनि मनोरथभाजाम्।
नोज्जगाम न जगाम विरामं सौहृदं हृदय एव जुघूर्णे॥ १०

अत्र कविप्रौढ़ोक्तिः। 'नोज्जगामे'ति लज्जाधिक्यं वस्तु। 'न जगाम विराम'मिति सौहृदस्य दार्ढ्यातिशयो वस्तु। तेन तेन 'हृदय एव जुघूर्णे' इति हृदयक्षोभातिशयो घूर्णनत्वेनोत्प्रेक्षित इत्युत्प्रेक्षालङ्कारश्च।

स्तुमः किन्त्वामम्भोधरसुभग! शम्भोरधिशिरः
पदाम्भोजस्याम्भो यदकृत पदम्भोस्तव ततः।
उमायै दत्त्वार्द्धं वपुरपरमर्द्धञ्च भवते
गुणेभ्यो निर्म्मुक्तः स परमभवद्‌ब्रह्म परम!॥ ११

अत्र कविप्रौढ़ोक्तिः। तत्र शम्भोरधिशिरो यद्यस्मात्तव पादाम्भः पदमकृत, तेन त्वमन्य एव कोऽपि सर्व्वोपरि वर्त्तमानः स्तवविषयो नेत्यतिशयोक्त्यलङ्कारः।

गोकुल इति—श्यामधामनि श्रीकृष्णे मनोरथभाजां पूर्व्वरागवतीनां कुलजबालवधूनां सौहृदं नोज्जगाम नोन्नतं बभूव, लज्जया ताभिर्न व्यक्तश्चक्र इत्यर्थः। कविप्रौढ़ोक्तिरिति—सौहृदस्यामूर्त्तत्वेन घूर्णनक्रियाया असम्भवादितिभावः। तेन तेनेति-वस्तुयुङ्गद्वये-नेत्यथः, उत्प्रेक्षित इति—उत्प्रेक्षालङ्कारो व्यङ्ग्य इत्यर्थः।

स्तुम इति—भो अम्भोधरसुभग! मेघ इव सुन्दर श्रीकृष्ण! यद्यस्मात्तव पदाम्भोजस्याम्भः गङ्गा महादेवस्याधिशिरः शिरसि पदमास्पदमकृत, तत एव हेतोस्त्वां सर्व्वोत्कृष्टं किं स्तुमः? तव चरणोदकस्पर्शेन स महादेवो गुणेभ्यो मुक्तः सन् परं ब्रह्माभवत्, हे परम!। ननु देहसत्त्वे कथं महादेवस्य परब्रह्मरूपत्वमिति चेदत आह (8)—उमायै इति। महादेवस्य परमेश्वरत्वेन देहस्य नित्यत्वान्न नाशसम्भवः, अतः कविप्रौढ़ोक्तिः।

श्लोकेऽत्रानुप्रासगरिमाऽर्थचमत्कारसहकारी, 'अद्यालोकि धनप्रभः सखि! मये'त्यादिसन्दर्भे कृष्णस्य सिंहरूपेण वर्णनमिव ऽपि तस्य कुञ्जरत्वेन वर्णनं समयोपयोगि सरसतावहञ्चेति विदग्धजनसंवेद्यम्। नायिका चात्र अभिसारिका मध्या प्रगल्भा वा, 'नद्यादीनां तटी तथा' (सा. द. ३य परिच्छेदे) इति निर्द्देशानुसारेण यमुनातटमत्राभिसारस्थानमिति च ज्ञायते।

(ङ) 'व्रजभामिनीर्ध्यानेनानुभूय कर्णपूरः कविर्व्वर्णयती'ति साहित्यकौमुदीटीकायाम् (३।१७)। अत्रापि मूले 'स्वभावोक्ति'पदं न निरूढ़लक्षणाघटितम्। यद्यपि व्रततिभिरित्य-

(8) 'परब्रह्मरूपत्वमित्यत आह' इति (ख) (घ) (ङ) पुस्तकेषु पाठः।

तेन 'उमायै दत्वार्द्धं वपुरपरमर्द्धञ्च भवत' इत्यादिना स वपुर्व्विरहेण परं ब्रह्माभवत्, त्वन्तु वपुष्येव परं ब्रह्मेति वस्तु—इति कविप्रौढ़ोक्तिश्चतुर्थी।

कविनिबद्धवक्तृप्रौढ़ोक्तिर्यथा—

परिपुट्टे परिपुट्टं झीणे झीणं समम्मि समं।

माहव ! तीए अंगं तुज्झ सिणेहेण घड़िअं व ॥ १२

अत्र साऽयुषा जीवतीति न, अपि तु तव स्नेहेनैवेति वस्तु। 'तुज्झ सिणेहेण घड़िअं व्वे'ति तस्या अङ्गन्त्वत्स्नेहोपादानमित्यङ्गान्तराद्व्यतिरिक्त-न्तदङ्गमिति व्यतिरेकालङ्कारः—इति वस्तुनाऽलङ्कारः।

श्रुतियुगमभिधत्ते श्रीलवृन्दावनेऽसौ-

त्यनुदिशमिति नेत्रद्वन्द्वमात्मा हृदीति।

परिपुट्टे इति—परिपुष्टे परिपुष्टं चीणे चीणं समे समम्। माधव! तस्या अङ्गं तव स्नेहेन घटितमेव॥ हे माधव! तव स्नेहे परिपुष्टे सत्यस्या अङ्गमपि परिपुष्टं भवति, अतस्तव स्नेहेन निर्म्मितमस्य अङ्गमङ्गान्तरात् पञ्चभूतारब्धादङ्गान्तराद्व्यतिरिक्तमित्यर्थः—इति वस्तुना व्यङ्गोऽलङ्कारः। अत्र कविनिबद्धवक्त्री दूती। यद्यपि लोकव्यवहारे देहस्य स्नेहारब्धत्वाभावात् प्रौढ़ोक्तिस्तथापि ह्लादिनीशक्तिरूपाणामासां देहस्य प्रेमारब्धत्वेन स्नेहारब्धत्वं नासम्भवमिति वोध्यम्।

माधवविरहेणात्यन्तव्याकुला काचिद्व्रजसुन्दरी श्रीकृष्णमुद्दिश्याह—श्रुतियुगमिति। हे महात्मन् श्रीकृष्ण! 'अरे मत्कर्णद्वय! भवद्भ्यां श्रीकृष्णो दृष्ट' इति मया पृष्टं श्रुतियुगं 'त्वं वृन्दावने वर्त्तसे' इत्यभिधत्ते। तथा च साऽनुरागेणश्रुत्वा 'निरन्तरं कृष्णो वृन्दावने वर्त्तते' इति कर्णेन शृणोतीति भावः। पुनर्मया पृष्टं नेत्रद्वन्द्वं 'त्वं सर्व्वासु दिक्षु वर्त्तसे' इति वदति। तथा च साऽनुरागाधिक्यात् सर्व्वत्रैव कृष्णं नेत्रेण पश्यतीति भावः। पश्चान्मया पृष्ट आत्मा वुद्धिः 'त्वं हृदये वर्त्तसे' इति वदति। तथा च सा वुद्ध्या निरन्तरं त्वां हृदये पश्यतीति भावः। तेषां वचने मम निर्द्धारो न जातः—अतस्त्वं पृच्छ्यसे, निश्चयं कृत्वा वद, त्वं कुत्र भवसि? कथय एतावत्पीडायामप्यान[illegible]

पमालङ्कारेण तासां तन्वङ्गत्वकोमलत्वादिवस्तुन एव द्योतनं, तथापि तदध्यासमूलभूताति-शयोक्त्यलङ्कारमुखेणेत्यलङ्कारस्यैव व्यङ्गत्वाभिधानं, 'प्राधान्येन व्यपदेशा भवन्ती'त्यभियुक्त-निर्द्देशात्। मधुररससर्व्वस्वस्य भगवतस्तादृशानां तद्वल्लभानाञ्च वर्णनं वैष्णवकविसम्प्रदायस्य स्वभावसिद्धम्। 'ঢল ঢল কাঁচা অঙ্গের লাবণী অবনী বহিয়া যায়' इत्यादि वङ्गभाषा-निवद्धपदजातमत्र निदर्शनम्।

क्व नु भवसि महात्मन्! ब्रूहि कष्टासवोऽमी
त्वदनुसरणपान्थाः कण्ठ एव भ्रमन्ति॥ १३ (ढ)

अत्र कविनिबद्धानुरागिबाला वक्त्री। अस्याः प्रौढ़ोक्तौ शब्दप्रत्यक्षानुभवरूपं प्रमाणत्रयं परस्परव्याहतमपि सर्व्वमेव प्रमाकरणम्। न कुत्राप्यप्रामाण्यमिति वस्तु, तेन च त्वं व्यापकोऽसीति वस्तु, तेनैकस्य सर्व्वानुगतत्वाद्विरोधे विरोधालङ्कारो व्यतिरेको वा। 'क्व नु भवसी'ति प्रश्नेन सन्देहालङ्कारः, तेन 'महात्मन्नि'ति कदाचिद्यदि न ब्रूषे, तदा कपटी त्वमिति हेत्वलङ्कारः। तेन 'कष्टासवोऽमी त्वदनुसरणपान्थाः कण्ठ एव भ्रमन्ती'ति, प्राणास्त्वदनुसरणे तव पश्चाद्गमने पान्थाः पथिकाः सन्तस्त्वद्वार्त्तामप्राप्य स्वस्थानन्त्यक्ता कण्ठ एव भ्रमन्ति। अत्र यद्यपि लोकव्यवहारदृष्ट्यैकव्यक्तेरेकस्मिन् क्षणे स्थलत्रयवर्त्तित्वस्यासम्भवेन तज्ज्ञानस्यासम्भवात् प्रौढ़ोक्तिस्तथाप्यचिन्त्यैश्वर्य्य श्रीकृष्ण एकक्षणे स्थलत्रयवर्त्तित्वं नासम्भवमित्याह—अस्याः प्रौढ़ोक्ताविति। प्रमाणत्रयं परस्परव्याहतं, एकक्षणे स्थलत्रयवृत्तित्वस्य प्रमात्मकज्ञानजननेऽसमर्थमपि सर्व्वमेव प्रमाणत्रयं प्रमाकरणम्। कृष्णे न कस्यापि वस्तुनोऽसम्भवः, अतो न कुत्राप्यप्रामाण्यमिति वस्तु व्यङ्ग्य वस्तुरूपमेको भेदः। पुनस्तेन व्यापकत्वरूपवस्तुनैकस्य परिच्छिन्नस्य सर्व्वत्रानुगतत्वविरोधेन विरोधालङ्कारः। यद्यपि परमेश्वरत्वेन नायं विरोध (१) इत्युच्यते, तथापि व्यतिरेकालङ्कारस्तु भवत्येवेत्याह—व्यतिरेको वेति। एतादृशः पुरुषोऽन्यो नास्तीति पुरुषान्तराद्विलक्षणोऽयमिति व्यतिरेकालङ्कार इत्यर्थः। तथा च वस्तुव्यङ्गोऽलङ्कार इति द्वितीयो भेदः। तेन सन्देहालङ्कारेण—तथा च मत्सन्देहनिवर्त्तकं वाक्यं यदि न ब्रूषे तदा त्वं न महात्मा किन्तु कपटीति हेत्वलङ्कारः। तेनालङ्कारव्यङ्गोऽलङ्कार इति तृतीयो भेदः। तेन हेत्वलङ्कारेण मत्प्राणाः कण्ठ एव घूर्णन्ते, अतो निर्णीय कथ्यतामिति वस्तु व्यङ्ग्यम्।

---

(ढ) पद्यमेतत् कविकर्णपूरगोस्वामिनो गुरोः सुगृहीतनाम्नः श्रीमदाचार्य्यश्रीनाथस्य। अयमेवावस्थाविनिवेशः प्रेमोन्माद इति वैष्णवैर्गीयते। श्रीराधाभावभावितानां श्रीकृष्णचैतन्यचरणानां नीलाचलवर्त्तिनामित्थमेवावस्था तच्चरितेषु प्रकटिता। एवमपि लोके नायकनायिकादयः स्वदयितानासुदन्तादिग्रहणायापरनिर्द्दिष्टदेशादिमार्गेषु तथा तदात्मीयतो संवादसद्भावाद्याकाङ्क्षन्ते, पश्चात्त विरहव्याकुलाः 'प्रासादे सा पथि पथि च सा पृष्ठतः सा पुरः सा पर्य्यङ्के सा दिशि दिशि चा से'त्यादि जल्पितमालापयन्तः मनःसु, अन्विष्यन्तोऽपि नाप्नुवन्तः स्वभवने स्वस्मिन्नेव वा प्रतिनिवर्त्तन्ते।

---

(१) 'यदि परमेश्वरत्वे नायं विरोधः' इति (क) पुस्तके, 'यद्यपि परमेश्वरत्वेन चायं विरोधः' इति (ङ) पुस्तके पाठः।

न्मदसवः स्वस्थानं त्यक्तवन्त एव निर्णयमज्ञात्वा कलह एव घूर्णन्ते, अतो निर्णीय कथ्यतामिति वस्तु । इदं पद्यमस्मद्गुरोः—इति कविनिबद्धवक्तृप्रौढोक्तिश्चतुर्थी ।

शब्दार्थभूरेक एव— ४५ का

शब्दार्थोभयशक्त्युत्थो ध्वनिरेक एव । केषाञ्चिन्मतेऽत्रापि वस्त्वलङ्कार-सद्भावादनेकविधत्वं स्यात्, तन्निरासाय 'एव'कारः । किन्तु तन्मतम् न सङ्गच्छत इति न तेन लिखिष्यमाणभेदादाधिक्यमपि भेदानाम् । (ण)

यथा—

अशेषसन्तापहरो जनभृतां सदावलाकामदमेदुरद्युतिः ।

त्विषाञ्चयैर्माधव ! जीवनप्रदो भवान् भुवं श्यामयते घनो नभः ॥ १४

परमतेऽत्रापि वस्त्वलङ्कारसद्भावः (त) । यथा वा—

तथा चालङ्कारव्यङ्ग्य वस्त्विति चतुर्थो भेदः । एवं सत्येकस्मिन्नेव श्लोके चतुर्द्धा भेदो द्रष्टव्यः । अतएवैतत्पद्यं कवेरतिशयशक्तिद्योतकमिति ज्ञेयम् ।

तन्मतं न संगच्छत इति न, अपि तु संगच्छत एव (ण) । तेन तन्मते लिखिष्यमाण-भेदादपि भेदानामाधिक्यमपि वोध्यम् ।

उभयशक्त्युद्भवस्य ध्वनेरुदाहरणमाह—यथेति । हे माधव ! भवांस्त्विषाञ्चयैः कान्ति-समूहैर्भुवं श्यामयते श्यामं करोति, मेघस्तु त्विषाञ्चयैराकाशं श्यामयते । एवमबलानां कामदश्चासौ स्निग्धद्युतिश्चेति तथाभूतो भवान्, मेघोऽपि वलाकया वकपङ्क्त्या शोभा-जन्यमदो यस्य तथाभूतश्चासौ स्निग्धद्युतिश्चेति । मेघपक्षे जीवनं जलम् । अत्र मेघ-कृष्णयोरुपमालङ्कार एव व्यङ्ग्यः, न तु व्यङ्ग्यान्तरम् । स चोपमालङ्कारो 'वलाका'-'जीवना'दिरूपपरिवृत्त्यसहपदव्यङ्ग्यत्वाच्छब्दशक्त्युद्भवः, तथा देहधारिणामशेषसन्तापहर इति परिवृत्तिसहविशेषणपदजन्यार्थव्यङ्ग्यत्वादर्थशक्त्युद्भवश्च ज्ञेयः । परमतेऽत्रापि कष्टेन वस्त्वादिध्वनिसद्भावः स्वीक्रियत इत्युभयशक्त्युद्भवस्योदाहरणान्तरमाह (त)—यथा वेति ।

---

(ण) अत्रोभयशक्त्युत्थध्वनेरनेकविधत्वं पूर्व्वतरप्रसिद्धालङ्कारिकचक्रमतानुसारिणा कविकर्णपूरेण न स्वीकृतमिति मूले कारिकातः, 'केषाञ्चि'दिति वृत्तौ निर्देशात्, 'कि'न्त्विति तत्र प्रयोगाच्चोपपद्यते । तथाप्यसार्व्वत्रिकं ग्रन्थकारानभीष्टमपि मतं प्रमाणीकुर्व्वद्भिः टीकाकृद्भिरुभयपक्षावलम्बनव्याजेन सामञ्जस्यसाधनाय चेष्टितमिति द्रष्टव्यम् । सर्व्वत्रैव संलक्ष्यक्रमव्यङ्ग्यध्वनावुभयशक्त्युत्थत्वमिति यदत्र कैश्चिदुच्यते, न तच्चारु । यदाहुरुद्द्योतकाराः काव्यप्रकाशटीकायाम्—'एतेन शब्दार्थयोरन्यतरस्य व्यञ्जकत्वेऽपरस्यापि सहायत्वेनोक्तत्वात् सर्व्वत्रैवोभयशक्तिमूलत्वमित्यपास्तं, योऽर्थो व्यञ्जकस्तद्बोधकशब्दस्य, यः शब्दो व्यञ्जकस्त-द्बोध्यार्थस्यापि व्यञ्जकत्वमिति तदाशया'दिति ।

(त) केषाञ्चिन्मते उभयशक्त्युद्भवे ध्वनावपि वस्तुतो वस्तुनोऽलङ्कारस्य च, अलङ्कारा-

मध्वन्तकृत् सुमनसामामोदैर्घ्राणतर्पणः।
राधाद्यपरपर्य्यायो माधवः कस्य न प्रियः ॥ १५

## वाक्येऽष्टादशधा त्विमे । ४६ का

इमेऽष्टादशधा ध्वनयो वाक्ये भवन्तीत्यर्थः। अष्टादशधास्तु तु—अविवक्षितस्य वाच्यस्य द्वौ भेदावर्थान्तरसंक्रमितमत्यन्ततिरस्कृतश्चेति। विवक्षितवाच्यस्य षोड़श—असंलक्ष्यक्रमव्यङ्ग्य एकः, संलक्ष्यक्रमव्यङ्ग्यश्च पञ्चदश। तत्र शब्दशक्त्युद्भवो द्वौ, अर्थशक्त्युद्भवो द्वादश, उभयशक्त्युद्भव एकः।

## वाक्य एव द्विशक्त्युत्थः—४७ का

शब्दार्थोभयशक्त्युद्भवो ध्वनिर्व्वाक्य एव। 'इह कुंदावणमज्झे' (२य किरणे ६ श्लोकः) इत्यादि तदुदाहरणम्।

काचिद्वनसुन्दरी गुरुजनशङ्कया श्लेषेण स्वसखीमाह—हे सखि! माधवो वैशाखः कस्य न प्रियः; पक्षे श्रीकृष्णः। मधोश्चैतस्यान्तकृत्, वैशाखस्य प्रथमदिनारम्भ एव चैत्रस्यान्तदर्शनादिति; कृष्णपक्षे मधुनाम्नो दैत्यस्यान्तकृत्। सुमनसां स्वोद्भवपुष्पाणामामोदैर्ब्बनानां घ्राणं तर्पयतीति, पक्षे शोभनं मनो यासान्तासां सुन्दरीणामामोदैः स्वीयाङ्गगन्धैर्घ्राणं तर्पयतीति। 'राधादि'शब्द एवापरपर्य्यायो यस्य सः, 'वैशाखे माधवो राध' इत्यभिधानात्; पक्षे राधाया एवाद्यः प्रथमः, परः श्रेष्ठः, पर्य्यायः परिस्पन्दमनुगतिर्यस्य सः। अत्रापि वैशाखकृष्णयोरुपमालङ्कारो व्यङ्ग्यः—स च परिवृत्त्यसह-'मध' 'सुमनः' 'राध'पदव्यङ्ग्यत्वाच्छब्दशक्त्युद्भवः, तथा परिवृत्तिसहा'न्तकृदामोदघ्राणतर्पणा'दिविशेषणपदजन्यार्थव्यङ्ग्यत्वादर्थशक्त्युद्भवश्च।

वाक्य इति—परस्परासक्तिमत्पदनिचयघटितत्वं वाक्यत्वम्। तथाच पूर्व्वोक्तानि सर्व्वाण्येवोदाहरणानि वाक्य एव दत्तानि, न तु स्वतन्त्रैकैकपद इति भावः। अष्टादशप्रकाराणां गणनामाह—अष्टेति। षोड़शप्रकाराणां विवक्षितवाच्यानां गणनामाह—असंलक्ष्यक्रमेति। पञ्चदशप्रकाराणां संलक्ष्यक्रमव्यङ्ग्यानां गणनामाह—तत्र शब्दशक्त्युद्भव इति। तेषां ध्वनीनां मध्ये शब्दार्थोभयशक्त्युद्भवो ध्वनिस्तु वाक्य एव सम्भवति, न तु पदे।

---

वस्तुनोऽलङ्कारस्य चेत्यादिकया दिशा ध्वनेरनेकविधत्वं सम्भवति। तन्मते 'अशेषसन्तापहर' इत्यादौ श्लेषालङ्कारबलेनोपमा व्यङ्ग्या, ततश्च 'सन्तप्तानां त्वमसि शरण'मिति श्रीकृष्णस्य मेघस्येव सर्व्वाभीष्टपूरकत्वरूपं वस्तु ध्वनितम्। तत्तु गौणरूपेण भवतीति 'कष्टे'नेत्युक्तं टीकाकृता। एवमेव द्वितीयोदाहरणस्यालङ्कारमात्रव्यङ्ग्यमयस्याप्यवतारणमिति टीकाकृदुद्भावनम्। वस्तुतस्तूदाहरणद्वयमेवैककक्षामधिरोहति, अतोऽत्र टीकायां 'स्वीक्रियते' इति पदात् पश्चात् 'इति'पदस्य निरर्थकमुद्देश इति प्रतिभाति।

पदे सप्तदशापरे । ४८ का

उभयशक्त्युत्थं विनाऽपरे सप्तदश पदेऽपीत्यर्थः । तथा च—

Dhvanyaloka—under III. 2. 'पदद्योत्येन सुकवेर्ध्वनिना भाति भारती ।
एकेनैव प्रसूनेन नवेवोद्यानकेतकी ॥' इति (थ)

तत्र दिङ्मात्रमुदाह्रियते ।

पार्षदाः पार्षदा यस्य लक्ष्मीर्लक्ष्मीः कृपा कृपा ।
अवतारोऽवतारश्च स देवः केन सेव्यते ॥ १६

अत्र द्वितीय'पार्षदा'दिशब्दा निरन्तरपार्श्वस्थत्वनिरपायत्वनिरुपाधित्व-जन्ममरणाभावरहितत्वेष्वर्थान्तरेषु संक्रमिताः ।

तदुदाहरणमिति—तेषामष्टादशप्रकाराणामुदाहरणमित्यर्थः ।

उभयशक्त्युद्भवं विनाऽपरसप्तदशप्रकाराणां पूर्व्वं वाक्य उदाहरणानि दत्तानि, पदेऽप्युदाहरणानि सम्भवन्तीत्याह—उभयेति । ननु यत्किञ्चित्पदध्वनिना वाक्यसमुदाये (10) कथमुक्तमत्वयव्यवहारस्तत्राह—पदेति । पदद्योत्येन ध्वनिना सुकवेर्भारती काव्यरूपा वाणी भाति यथोद्यानस्था नवीना केतक्येकेनैव पुष्पेण भाति । केतकीवृक्षस्य नवीनदशायामेव शोभातिशय इति भावः ।

तत्र पदे । पूर्व्वोक्तलक्षणामूलव्यङ्ग्यभेदस्यार्थान्तरसंक्रमितवाच्यस्य केवलपद उदाहरणमाह—पार्षदा इति । अत्र द्वितीय'पार्षद'पदस्य सदा पार्श्वस्थितत्वे लक्षणा, तथा चान्येषां पार्षदापेक्षया भगवत्पार्षदस्य सर्व्वोत्कर्षो ध्वनितः, इति लक्षणामूलो व्यङ्ग्य

(थ) यत्रैकस्य पदस्य शक्तेः प्राधान्यमन्येषामानुगुण्यमात्रं तत्र पदाश्रयता ; यत्र तु विभिन्नपदानां क्रियाकारकरूपाणां शक्तेस्तुल्यता, तत्र वाक्याश्रयतेति विवेकः । एकस्यैव पदस्य परिदृत्तिसहत्वासहत्वयोरुभयोर्युगपदसम्भवान्नोभयशक्तिमूलभेदस्य वाक्यव्यतिरेकिस्थले सम्भवः, अतः पदपदांशद्योतितध्वनयः सप्तदशैव । एषां पूर्व्वतो व्यतिरिक्ततया विच्छित्तिवैशिष्ट्यवशादेव पृथक्गणना मन्तव्या, यदुक्तं ध्वन्यालोकेऽधोदर्शितपरिकरश्लोकोदाहरणेन (३।२) :—'पदानां स्मारकत्वेऽपि पदमात्रावभासिनः । तेन ध्वनेः प्रभेदेषु सर्व्वेष्वेवास्ति रम्यता ।' मूलोद्धृतं पद्यं ध्वन्यालोकस्थितपद्यस्य रूपान्तरमितीव प्रतिभाति । मुद्रितध्वन्यालोकपुस्तके पाठस्त्वित्थम् दृश्यते—"विच्छित्तिशोभिनैकेन भूषणेनेव कामिनी । पदद्योत्येन सुकवेर्ध्वनिना भाति भारती ।" दर्पणोद्धृतपाठस्तु 'एकावयवसंस्थेन भूषणेनेव कामिनी'त्यादि ।

(10) 'काव्यसमुदाये' इति (क) (ख) पुस्तकयोः पाठः ।

तवानुकम्पा तु तवैव शोभते ममापि दौर्ज्जन्यमहो ! ममापि हि ।
रतिर्न्न दीर्घा मम, दीर्घमेव ते प्रेम, प्रियाऽहं तव कृष्ण ! किं ब्रुवे ॥ १७

अत्रानुकम्पा अननुकम्पा, दौर्ज्जन्यमदौर्ज्जन्यं, न दीर्घा दीर्घा, दीर्घं अदीर्घं, प्रिया अप्रियेत्यन्ततिरस्कृतम्—इत्युभयं पदगमग्रम् । 'फलमपि फलं माकन्दाना'मित्यादौ ( ३य किरणे १म श्लोके ) 'सौभाग्यमेतदधिक'मित्यादौ ( ३य किरणे ३य श्लोके ) चोभयोर्व्वाक्य एव विश्रान्तिरिति भेदः । (द)

एकस्मिन्नेव 'पार्थद' पद उत्कर्षाद्यर्थेन संक्रमितत्वादर्थान्तरसंक्रमितश्च ज्ञेयः । एवं द्वितीय'लक्ष्मी'पदेनानपायित्वे लक्षणा—तया च भगवत्सम्पत्तिरेवानपायिनी, अतः सर्व्वोत्कृष्टेति ध्वनिः । द्वितीय'कृपा'पदेन निरुपाधित्वे लक्षणा, तया च भगवत्कृपैव सर्व्वोत्कृष्टेति ध्वनिः । द्वितीया'वतार'पदेन जन्ममरणभावराहित्ये लक्षणा—तया च भगवदवतार एव सर्व्वोत्कृष्ट इति ध्वनिः ।

अत्यन्ततिरस्कृतवाच्यस्य केवलपद एवोदाहरणमाह—तवेति । काचिन्मानिनी श्रीकृष्णं प्रति सोल्लुण्ठवचनमाह—तवानुकम्पा कृपा तवैव शोभते । अत्रा'नुकम्पा'पदस्याकृपायां विपरीतलक्षणा, तया च कठोरत्वदोषेण त्वं दुष्ट इति ध्वनिः । वाच्यार्थस्य तिरस्कारः स्पष्ट एव । 'दौर्ज्जन्य' पदस्य सौजन्ये विरुद्धलक्षणा, तया च स्वस्योत्कर्ष इति ध्वनिः । मम रतिर्न्न दीर्घा विरुद्धलक्षणया दीर्घेत्यर्थः । तव प्रेम दीर्घं विरुद्धलक्षणयाऽदीर्घमित्यर्थः । तवाहं प्रियेत्यत्र 'प्रिया'पदस्याप्रियायां लक्षणा, तया च मम निकटे तवागमनमनुचितमित्युपालम्भो ध्वनिः । 'फलमपि फलं माकन्दाना'मिति पूर्व्वोक्तोदाहरणस्य द्वितीय 'फल'पदस्याधरापेक्षया निन्द्यत्वध्वनौ 'सह तुलयितु' तेनैतेषां न किञ्चन

---

(द) 'अत्यन्तासत्यपि ह्यर्थे ज्ञानं शब्दः करोति हि' इति न्यायेनात्र विपरीतलक्षणासमाश्रयणा'दनुकम्पा'दिपदेभ्य इष्टार्थबोधः । तस्मादतिनिष्ठुरस्त्वं, भक्ते त्वदेकशरणे च मयि न ते कृपालेश इत्यहो इहानिष्टमनाचरतो मम पूर्व्वजन्मदुष्कृतंधारेत्यात्मतिरस्कारश्च । एवमेव 'रविसंक्रान्तसौभाग्यस्तुषाराविलमण्डलः । निःश्वासान्ध इवादर्शश्चन्द्रमा न प्रकाशते ॥' इति रामायणपद्ये, 'या निशा सर्व्वभूतानां तस्यां जागर्त्ति संयमी । यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः ॥' इति श्रीमद्भगवद्गीतापद्ये च पदत एव विरुद्धार्थप्रतीतिः, अतस्तत्कृत्य एव ध्वनिरित्यलम् । एवमपि 'तं वक्त्रं' इत्याद्यनन्तरोदाहृते पद्ये तादृगनुभवैकगोचरताद्योतकानां 'तदा'दिपदानामेव प्राधान्यम्, अन्येषान्तु तदुपकारित्वमेवेति मुख्यतः पदमूल एव व्यपदेशः, 'प्राधान्येन व्यपदेशा भवन्ती'ति न्यायात् । 'तन्मञ्जुमन्दहसितं श्वसितानि तानि सा वै कलङ्कविधुरा मधुराननश्री'रित्यादिपण्डितराजकृतश्लोक इवेहापि सर्व्वनामपदानां व्यञ्जकता वोध्या ।

तं वअणं सो एफंसो तं रूअं तं सरीरसोरब्भं ।
ते अहरमहुरिमाणो दाणिं हालाहलं जाअं ॥ १८

अत्र 'तदा'दिपदान्यनुभवगोचरानर्थान् प्रकाश्य पूर्व्वममृतवदासीत् सर्व्वमिति वस्तु प्रकाशयन्तीति पदगतो ध्वनिः ।

शब्दशक्त्युद्भवो यथा—

मुग्धे ! पद्मिनि ! कुलजे ! मा कार्षीरत्र विश्वासम् ।
अनवस्थितोऽतिमदतः सोऽयं साक्षादनेकपः कृष्णः ॥ १९

अत्रा'नेकप'शब्द एकार्थोऽपि कविनिबद्धवक्तृप्रौढ़ोक्तिवशादनेकार्थतां गतः सन् 'मुग्धे' इत्यादि सम्बोधनत्रयार्थेन साधनेन साध्यं स्वगतमनवस्थत्वादिकम्—यथा त्वं मुग्धा, अयमनवस्थितः, त्वं कुलजा, अयमतिमदः, त्वं पद्मिनी, अयमनेकपो हस्तीत्यर्थत्रयं बोधयति । अनेकं पातीति, अनेकेन पिबतीति च,—'पद्मिनी'ति नायिकाविशेषः, कमलिनीति च । त्वं कुलजा, अयमनेकं पिबतीति मत्तत्र, तेनात्र विश्वासं मा कार्षीर्यतोऽतिमदतोऽनवस्थितः । मदो दानं गर्व्वश्च, तेनास्य सङ्गात् करिसङ्गादिव पद्मिन्यास्तव विमर्द्दो भविष्यतीति वस्तु, तेन चानवस्थितत्वेनातिमदत्वेन चायन्त्वामवश्यं मर्द्दयिष्यतीति

युष्यते' इति वाक्यान्तरस्यापेक्षा वर्त्तते; एवमन्येषां न्यूनताबोधकस्य 'अधरोऽधर' इति वाक्यस्यापेक्षा वर्त्तते, अतो न तत्र केवलपदमात्रे ध्वनिरिति । 'सौभाग्यमेतदधिक'मिति पूर्व्वोक्तोदाहरणस्य'सौभाग्या'दिपदानां विरुद्धलक्षणया प्रेमशून्यत्वरूपध्वन्यर्थबोधे 'न स्वर्यते न भवतात्मग्रहस्य मार्गे' इत्यादि बहुवाक्यानामपेक्षा वर्त्तेत इति न पदमात्रे ध्वनिः ।

अभिधामूलध्वनेः प्रभेदस्य शब्दशक्त्युद्भवस्य पदमात्रे क्रमेणोदाहरणद्वयमाह—तं वअणमिति । तद्वचनं स स्पर्शस्तच्छरीरसौरभ्यम् । तेऽधरमधुरिमाण इदानीं हालाहलं जातम् ॥ अत्र वाक्यान्तरापेक्षां विना केवल'तत्'पदेनैव वचनादीनामन्यतत्वं ध्वनितम् । 'चाश्चामात्रे विलसदुदय' इति ( ३य किरणे ४ श्लोके ) पूर्व्वोक्तपद्ये प्रसिद्धचन्द्राद्व्यतिरेकालङ्कारध्वनावनेकवाक्यानामपेक्षा स्पष्टैवेति ।

मुग्ध इति—हे मुग्धे ! अत्र कृष्णो विश्वासं माकार्षीर्यतोऽयमनवस्थितो एव इत्यर्थः । एवमतिमदादनेकपो मत्तहस्ती च । न'न्वनेकप'शब्दोऽनेकजनपालनकर्त्तरि रूढ़िरेव, तत् कथमवयवव्युत्पत्त्या तस्य हस्तिबोधकत्वमित्यत आह—अत्रेति : असम्भवोऽप्यर्थः कविनिबद्धवक्तृप्रौढ़िवशात् सम्भवतां प्राप्नोति, अतो'ऽनेकप'शब्दस्य हस्तिवाचकत्वं नासम्भवमिति बोध्यम् । मुग्धे इत्यादीति—हे मुग्धे ! हे पद्मिनि ! हे कुलजे ! इति सम्बोधनानां

वस्त्वन्तरञ्च । हस्तिसाधर्म्यादुपमालङ्कारः, अनवस्थित इति हेत्वलङ्कारः, अनेकस्य भर्त्तेति स्वभावोक्त्यलङ्कारः—इत्यलङ्कारव्यञ्जकः शब्दशक्त्युद्भवः पदगतः ।

पदगतार्थशक्त्युद्भवः स्वतःसम्भवी यथा—

णिहुअणकधाहिं धण्णा णिअपरिवारं सुहावेंति ।

अप्पाणं पि ण हु तदा सुमरइ दाणिं भणादु किं भोदी ॥ २०

अत्र न ता धन्यास्त्वमेव धन्या, तासां सखीभ्यो वयमतिसुखिन्यः ; त्वदानन्दावेशादेव वयमकथनेऽपरानन्दभाजः, तास्तु तत्कथयैवेति 'धन्या'पद-गतः स्वतःसम्भवी । अपरे तूह्याः, ग्रन्थगौरवभयान्नोदाह्रियन्ते । वाक्यगताः पूर्व्वमेव कियन्तो दर्शिताः ।

मुग्धत्वपद्मिनीत्व (११) कुलजात्वरूपार्थत्रयेण साधनेन साधवचनेन श्रीकृष्णगतमनवस्थिता-त्वाद्यर्थत्रयं साध्यं यथासंख्येन बोधयति । तथाहि तव मौग्ध्यं विलोक्यैव तस्य धार्ष्ट्यं प्रादुर्भवति, न तु सर्व्वदा धृष्टः । एवं तव कुलजात्वमाकर्ण्यैव मत्तो भवति, न तु सदा मत्तः । एवमन्यत्रापि त्वं मुग्धा, अयमनवस्थितो धृष्टः । 'अनेकप'शब्दस्य व्युत्पत्त्या नानार्थत्वमेव बोधयति—अनेकमिति । अनेकवधूजनं पाति स्वाङ्गसङ्गदानेन रक्ष-तीति व्युत्पत्त्या 'अनेकप'शब्दा'नेकवधूपति'शब्दयोस्तुल्यार्थत्वा'दनेकप'शब्देनानेकवधूपतिः श्रीकृष्णो बोध्यः । एवमनेकमधरं पिबतीति व्युत्पत्त्याऽपि कामोन्मत्तः कृष्ण एव बोध्यः । तथाऽनेकेन स्त्रीपुत्रादिना पिबतीति व्युत्पत्त्या हस्ती बोध्यः—मत्तहस्तिनः स्वभाव एवायं यत् स्त्रीपुत्रादिभिः सहैव जलं पिबति, तान् पाययति च । यद्वाऽनेकाभ्यां शुण्डमुखाभ्यां पिबतीति । हस्तिपक्षे मदो दानं मदजलमित्यर्थः, कृष्णपक्षे मदो गर्व्वः । तेन चेति—तेन वस्तुरूपव्यङ्ग्येनेत्यर्थः । अनवस्थितत्वेन धूर्त्तत्वेनातिमदत्वेन च हेतुनाऽयं श्रीकृष्णस्त्वां न त्यक्ष्यति, किन्त्ववश्यं मर्द्दयिष्यत्येवेति वस्त्वन्तरं व्यङ्ग्यम् । अनवस्थितत्वेन हेतुना भाविमर्द्दन-स्यानुमानाद्धेत्वलङ्कारश्च व्यङ्ग्यः । वस्तुतस्तु श्रीकृष्णोऽनेकस्य जगतो भर्त्तत्यनेकपशब्देन स्वभावोक्त्यलङ्कारश्च बोध्यः । पदगत इति—अत्र पदस्वराद्यन्वितपदद्वयघटितवाक्यं विनैव केवल'पद्मिनी'पदेन केवला'नेकप'पदेन च तत्तद्व्यङ्ग्यबोधो जायत इति भावः ।

णिहुअणेति—निधुवनकथाभिर्धन्या निजपरिवारं सुखापयन्ति । आत्मानमपि न खलु तदा स्मरति इदानीं भणतु किं भवती ॥ 'निधुवन'शब्दो नायिकानायकयोः सम्भोगवाची ।

---

(११) 'मुग्धात्वपद्मिनीत्वे'त्यादि (ख) (ङ) पुस्तकयोः पाठः । गुणवचनत्वविवक्षायां पुंवद्भावः, असत्यात्वे 'मुग्धा'पदेन तज्जातीयस्त्रीमात्रबोधकत्वे न तथेति विशेषः ; तदा 'मुग्धात्वे'त्यादिरेव पाठः ।

पञ्चविंशत्ततो भेदाः— ४९ का

ततोऽष्टादशभिः सप्तदशभिश्चेत्यर्थः ।

—प्रबन्धेऽप्यर्थशक्तिभूः । ५० का

अर्थशक्त्युद्भवो द्वादशविधो ध्वनिः प्रबन्धेऽपि ।

सप्तचत्वारिंशदतः— ५१ का

अतो हेतोः सप्तचत्वारिंशद्भवति । प्रबन्धे दिङ्मात्रमुदाह्रियते—

सहंति गंधं वि ण वे जणाणं णवप्पसूआ सअला हि गाओ ।

ण तेण दोहो ण पअप्पसंगो अज्जे वहूओ तुह विसवेंति ॥ २१

अत्र वधूभिः प्रेषिता श्वश्रूधात्री नप्त्री तासां श्वश्रूं प्रति कथयति । तच्छ्रुत्वा सापि जरती तामाह—

करेमि किं णत्तिणि धत्तिआए वएस्सरीं लंभिअ विसवेहि ।

तुह्माण सव्वं मह गोहणादिधणं जणाओ वि सुहं च दुक्खं ॥ २२ (घ)

न ता धन्या इति—तासां प्रेम्णोऽल्पप्रमाणत्वेन सम्भोगजन्यानन्दस्याप्यल्पप्रमाणत्वम् । तथा च तासां सम्भोगसमये देहाद्यनुसन्धानसत्त्वात् सखीनामग्रे तत्समयोचितवृत्तान्तकथनं सम्भवति, तव त्वानन्दानां सम्मर्द्देनेनात्मानुसन्धानमेव नासीत्, कुतः सखीनामग्रे विप्रोषवार्त्ताकथनसम्भावनापि, अतस्ताभ्यः सखीभ्यः सकाशादयमतिसुखिन्यः । अत्र वाक्यं विनैव केवल 'धन्या'पदेन स्वतःसम्भवी ध्वनिर्व्वोध्यः । अपरे कविप्रौढ़ोक्तिकविनिवद्धवक्तृ-प्रौढ़ोक्त्यादयो ध्वनयः पदनिष्ठाः स्वयमेवोह्याः । वाक्यगता ध्वनयस्तु पूर्व्वं कियन्त एव दर्शिताः, न तु तत्रापि विस्तरः कृतः ।

---

(घ) 'धत्तिआए' इति प्राकृते स्वार्थिकः 'क'प्रत्ययः । युष्माकमित्यर्थे 'तुह्माण,' 'तुह्माणं' 'तुह्माण' 'तुह्माणं' इत्यादि प्रयोगाः प्राकृतरूपावतारे लक्षिताः, अतो नात्रासाधुत्वम् । एवमपि 'कुमरेण उत्तं' इति चतुर्थपद्यस्य तृतीयचरणे सन्धभावो न दोषाय 'बहुल'मिति तत्रैव संहिताविभागे निर्द्देशात् । प्रबन्धेऽत्र श्रीकृष्णानयनस्यावश्यम्भावितद्योतनेन वल्लवाङ्गनानां मनोरथसम्पूर्त्तेस्तात्पर्य्यं ध्वनितम् । स च भगवान्दोहकुशलस्तथा नवनीतभिक्षुरिति च वर्ण्यते । तथा च 'नवनीलमेघरुचिरः परः पुमानवनीमवाप्य धृतगोपविग्रहः । नवनीयकीर्त्तिरमरैरपि स्वयं नवनीतभिक्षुरधुना स चिन्त्यते' इति श्रीविल्वमङ्गलपद्ये तत्स्वरूपोक्तिः । अत्रापि वृत्तौ यदपह्नुतिस्वभावोक्त्युत्तरनिश्चयाख्यालङ्काराणां निर्द्देशः, स च प्राक्प्रतिपादितया दिशाऽमीषां निवृत्तार्थमभिलक्ष्यीकृत्य—वस्तुतस्तु नामीषां सर्व्वेषां स्वीकारोऽत्र सर्व्वालङ्कारिकसम्मत इति ज्ञेयम् ।

सुदुप्पओहा मह सव्वगाओ पुत्ता विदूरे किमहं करेमि।

विलोअणादो तुह णंदणस्स सुदुप्पओहा वि सअंपओहा ॥ २३

इति जरत्युक्तरान्ते गोष्ठेश्वरीं गत्वा तया यदुक्तं तत् कथयति—

एव्वं क्खु ताए भणिदा गदाहं वएस्सरीं उत्तवदी समत्थं।

उत्तेण ताए कुमरेण उत्तं गोसंप्पओहो मम ण क्खु होइ ॥ २४

इति चतुःसंवादप्रवन्धे वधूभिः कृष्णसन्दर्शनार्थमुपायमनविच्य प्राकरणिकदुःप्रदोहगोदोहाभावप्रसङ्गः श्वश्रूं प्रति विज्ञापितः। अत्रापह्नुतिनामालङ्कारः,(12) तया च दोहोपायश्चिन्तयित्वा हे धात्रिकानप्त्रि! गोष्ठेश्वरीं गत्वा विज्ञापयेत्युत्तरं कृतमित्युत्तरालङ्कारः। ततश्च 'सुदुःप्रदोहा मम सर्व्वगाव' इति स्वभावोक्तिरलङ्कारः। 'विलोकना'दित्यादिनाऽतिशयोक्तिः, तया च

तत इति -तथा च पूर्व्वोक्तवाक्यगताष्टादशभिस्तथोभयशक्त्युद्भवध्वनेस्तु केवलपदगतत्वासम्भवात्तत्र पदगततत्प्रदशभिश्च मिलित्वा पञ्चत्रिंशद्भेदाः सिद्धा इति भावः। चतुर्भिः पञ्चभिर्व्वा श्लोकैः सिद्धा या कल्पनाकथा सा प्रवन्धः (न)। तत्रार्थशक्त्युद्भवे द्वादशविधो ध्वनिः सम्भवति।

सहंतीति—सहन्ते गन्धमपि न वै जनानां नवप्रसूता सकला हि गावः। न तेन दोहो न पयःप्रसङ्ग आर्य्ये! वध्वस्त्वां विज्ञापयन्ति॥

करेमीति—करोमि किं नप्त्रि! धात्र्या व्रजेश्वरीं लब्ध्वा विज्ञापय! युष्माकं सर्व्वं मम गोधनादिधनं जना अपि सुखञ्च दुःखम्॥ सुदुष्प्रदोहा मम सर्व्वगावः पुत्रा विदूरे किमहं करोमि। विलोकनात्तव नन्दनस्य सुदुःप्रदोहा अपि स्वयंप्रदोहाः॥

जरत्या उक्त्यनन्तरं गोष्ठेश्वरीनिकटं गत्वा तत्सर्व्वं कथितं, पश्चात्तया गोष्ठेश्वर्य्या यद्यदुक्तं तत् सर्व्वं पुनर्व्वधूनिकटे आगत्य धात्र्या नप्त्री कथयति—एवमिति। एवं खलु तया भणिता गताऽहं व्रजेश्वरीमुक्तवती समस्तम्। उक्तेन तया कुमारेणोक्तं गोसंप्रदोहो मम न खलु भवति॥ गोशब्दः प्रभातकालवाची।

---

(न) चतुर्भिः पञ्चभिर्व्वेत्युपलक्षणम्—तच्च प्रकृतोदाहरणानुकूलमिति नानर्थक्यापातः। एवमपि प्रकाशकृदुदाहृते महाभारतीयकर्णपर्व्वस्थगृध्रगोमायुसंवादे चतुःश्लोक्यां 'प्रवन्ध'-पदस्य सिद्धता। वस्तुतस्त्वर्थपरम्पराघटितवाक्योच्चयमात्र एव 'प्रवन्ध'पदस्य रूढ़िः, तदर्थेके च सन्दर्भे सर्व्वत्रार्थशक्त्युद्भवो ध्वनिरेवेति महाकविसन्दर्भसञ्चयोऽत्र प्रतिपाद्यते। अत्र विषये ध्वनिकृन्मतमेव प्रमाणम्।

---

(12) 'अत्रापह्नुतिनामालङ्कार' इत्यंशः (ग) (छ) पुस्तकयोर्नोपलभ्यते।

सुखदोहे परिश्रमस्तस्य न भविष्यतीति वस्तु। गोसंप्रदोहः प्रभातप्रदोहो मत्तो न भवतीति निश्चयालङ्कारेण सायंदोहस्तु मया कर्त्तव्य इति वधूना-माशयं ज्ञात्वा छलेन सङ्केतः कृत इति वस्तु—इति चतुःश्लोक्या समुदितः प्रबन्धो हि मुख्यो व्यञ्जकः।

तथाहि जनानां गन्धमपि न सहन्त इत्यन्यैरदोह्यत्वं वस्तु, तत्र 'नव-प्रसूते'ति हेतोर्हेत्वलङ्कारः—तेन कृष्णं विना नासान्दोह इति श्वश्र्वा कृष्ण आनायितव्य इति वस्त्वन्तरम्। 'न तेन दोह' इत्यनेन पयोऽभावाद्यमक्रियाः स्मः—अत्र मा कोपं कार्षीरिति च वस्त्वन्तरम्। 'तुहाण सव्व'मित्यादिना विनयमहिम्ना कृष्णोऽवश्यं व्रजेश्वर्या प्रेषयितव्य इति वस्तु।

एवं नाटकादिषु चेति तद्भेदकथनेनानन्त्यप्रसङ्ग इति नात्र लिखितः। एवं प्रबन्धेऽप्यन्य एकादशापि बोद्धव्याः।

—पदांशाद्या रसाञ्जकाः। ५२का

पदांशवर्णरचना इति त्रितयमपि रसस्य व्यञ्जकं भवति। रसोऽत्रा-संलक्ष्यक्रमः।

चतुःसंवादेति—वधूभिः सह धात्रीनप्त्र्याः संवादः प्रथमः, पश्चाद्धात्रीनप्त्र्या सह जरत्याः संवादो द्वितीयः, तदनन्तरं व्रजेश्वर्या सह धात्रीनप्त्र्याः संवादस्तृतीयः, तदनन्तरं व्रजेश्वर्या सह श्रीकृष्णस्य संवादश्चतुर्थः—इत्येवंक्रमेण चतुःसंवादो ज्ञेयः। अतिशयोक्ति-रिति—विलोकनमात्रादेव प्रथमन्ता दुग्धा भविष्यन्ति, पश्चात् कृष्णस्ता धोक्ष्यतीति कार्य्यकारणविपर्य्ययात्माऽतिशयोक्तिरियञ्चतुर्थी। मुख्यो व्यञ्जक इति—पूर्व्वोक्ता व्यङ्ग्या न प्रधानीभूताः, अतएव प्रबन्धोऽमुख्यव्यङ्ग्यपरोऽपि सम्भवतीत्यर्थः।

मुख्यव्यङ्ग्यानेवाह—तथाहीति। तत्रेति—व्यङ्ग्ये वस्तुन्यदोह्यत्व इत्यर्थः आनन्त्येति—अनन्तध्वनिभेदप्रसङ्ग इति हेतोरत्र न लिखितः।

पदांशाद्या इति—ते रसस्य त्रयोभेदाः—एवं प्रबन्धस्थल एको भेदः, एवं क्रमेण चत्वारो भेदाः सिद्धाः। ननु वस्त्वलङ्कारादयोऽपि पदांशादीनां ध्वनयः सम्भवन्ति, तत् कथं पदांशादीनां रसमात्रव्यञ्जकत्वमुक्त्वा चतुर्द्धा भेदः कृत इत्यत आह—रसोऽत्रेति। रसशब्दो-ऽत्रासंलक्ष्यक्रमसामान्य एवोक्तः, न तु रसमात्रे। अतः पदांशादिजन्यवस्त्वलङ्कारादयोऽप्य-संलक्ष्यक्रमा भवन्तीति न दोषः। तथा च रसो हि वाक्यजन्यपदजन्यपदांशादिजन्यबोध-सामान्य एवासंलक्ष्यक्रमः; वस्त्वलङ्कारादयस्तु पदांशवर्णरचनाजन्यबोध एवासंलक्ष्यक्रमाः, न तु वाक्यजन्यबोधे पदजन्यबोधे वाऽसंलक्ष्यक्रमाः;—अतएव रसेन सह वस्त्वलङ्कारादीना-

तेन तस्य त्रयो भेदाः, प्रबन्धेऽपि स कथ्यते । ५३का

सः—असंलक्ष्यक्रमः ।

भेदास्तेनैकपञ्चाशत्—  ५४का

तेन पूर्व्वलिखितसप्तचत्वारिंशता चतुर्भिरेतैश्चैकपञ्चाशद्भवति ।

पदांशाः पदैकदेशाः । ते च—

प्रकृतिः प्रत्ययः कालो वर्त्तमानादिरेव यः ।

सम्बन्धो वचनञ्चापि पुरुषव्यत्ययोऽपि च ॥

तद्धितञ्चोपसर्गश्च निपातः सर्व्वनाम च ।

कर्म्मभूताधिकरणमव्ययीभाव एव च ।

तथा पूर्व्वनिपातश्च पदांशाः परिकीर्त्तिताः ॥ ५४(क) का ।

रचना च त्रिधा दीर्घमध्यरिक्तसमासतः ॥ ५४(ख) का

दीर्घसमासा मध्यसमासाऽसमासा चेत्यर्थः ।

वर्णा मृदुकठोराद्यास्ते पश्चात् प्रतिपादिताः । ५४(ग) का

आद्यशब्दान्मधुराः । एषां व्यञ्जकत्वे दिङ्मात्रमुदाहरणम् ।

तत्र प्रकृतेर्यथा—

मा कुरु मानिनि ! मानं सुहृदां वचनं प्रविशय श्रवणे ।

गोकुलमहेन्द्रतनयो भवतु सनाथः प्रसादमासाद्य ॥ २५ (प)

भेतावानेव भेदः । पदांशप्रकृत्युदाहरणे 'माकुरु मानिनि ! मान'मिति पदे 'कृञ्'धात्वर्थस्य कृतेरैच्छिकत्वेन मानस्य न साहजिकत्वं, अतोऽपराधाभावाद्विभावनाऽलङ्कारः । क्रमेण प्रत्ययादिजन्यवस्त्वलङ्कारव्यङ्ग्यस्यातिगूढ़त्वेन तत्र तत्रासंलक्ष्यक्रमो ज्ञेयः । वाक्यजन्ये पदजन्ये च बोधे वस्त्वलङ्कारव्यङ्ग्यस्यातिस्पष्टत्वेन तत्र तत्र लक्ष्यक्रमः, अतो न किमप्यनुपपन्नमिति भावः । एवमेव प्रकृतिप्रत्ययवर्त्तमानादिकालादिजन्यबोधेऽपि वस्त्वलङ्कारादीनामसंलक्ष्यक्रमत्वं ज्ञेयम् ।

---

(प) महामानिनीं श्रीराधां ललिताद्याः प्रबोधयन्तीत्यमिति साहित्यकौमुदीटीकायाम् (४।१६)। तत्र न केवलं प्रकृतेर्व्यञ्जकताऽपि तु प्रत्ययस्यापि, तच्च मूल एव दर्शितम् । एषां प्रकृतिप्रत्ययादीनां व्यञ्जकत्वे प्रमाणसाधनोदाहरणाद्यखिलमेव सविस्तरं

अत्र 'क्षण्'प्रकृत्या कृतेरैच्छिकत्वं, तेन त्वन्मानकरणं त्वदिच्छाधीनमेव, न तु साहजिकं, तस्यापराधाभावात्—तेन विभावनाऽलङ्कारः; तस्मान्मा कुरु त्यजेत्यर्थः। सुहृद्वचनन्तव श्रवणं प्रविशदपि न प्रवेष्टुं शक्नोति, त्वन्मनसः श्रवणेन सहासंयोगात्। तत्प्रवेशाय मनो दीयताम्। सुहृत्सम्बन्धित्वेन वचनस्य श्रवणप्रवेशो युक्त एवेति 'णिच्' प्रत्ययध्वनिः।

प्रत्ययस्य यथा—

आणिअ भअणदुआरं धरणीए पाइआणि कुसुमाइं ।
पिअसहि ! किं ति बिसीदसि पुणो वि चल तत्थ कुसुमत्थं ॥ २६

एवं सति रसस्योदाहरणमग्रे रसग्रन्थे वक्ष्यति, अतः प्रत्ययादिजन्यवस्त्वलङ्कारव्यङ्ग्यानामुदाहरणान्याह—मा कुरु मानिनीत्यादि। तव प्रसादं प्राप्य श्रीकृष्णः सनाथो भवत्वित्यन्वयः। अर्थात् 'क्षण्'धात्वर्थः कृतिरुपाय एव सम्भवति, नतु फले। तत्रायं क्रमः—आदौ तृप्तिरूपफल इच्छा, तदनन्तरं फलस्योपाये भोजन इच्छा, तदनन्तरन्तादृशेच्छाधीनभोजनरूपोपाये कृतिः, तादृशकृत्यनन्तरं भोजनक्रियासिद्धिः। भोजने जाते तृप्तिरूपं फलं स्वत एव भवति, न तु फले कृतिः सम्भवति—अन्यथा भोजनं करोतीत्यत्र तृप्तिं करोतीत्यपि प्रयोगः स्यात्। एवं सति मानस्यापराधजन्यफलरूपत्वस्वीकारे तत्फलरूपमाने कृतिर्न सम्भवति। कृतेरसम्भवादेव 'मानं न कुर्व्वि'ति मानविषयककृतिनिषेधोऽपि न सम्भवति, इत्यतो 'मानं मा कुर्व्वि'ति वाक्येन मानस्यापराधजन्यफलत्वं न बुध्यते, किन्तु श्रीकृष्णेन सह परिहासार्थं स्वेच्छया मानस्य कृत्रिमत्वमेव बुध्यत इत्याह। अत्र 'क्षणि'ति—'क्षण्'प्रकृत्या मानविषयककृतेरैच्छिकत्वं श्रीकृष्णेन सह परिहासार्थमेव कृत्रिमेच्छाजन्यत्वमिति, न तु साहजिकं, न त्वपराधजन्यफलरूपम्। तत्र हेतुः—तस्य श्रीकृष्णस्यापराधाभावादिति द्वितीयं व्यङ्ग्य वस्तु, तेन वस्तुव्यङ्ग्यवस्तुना विभावनाऽलङ्कारो बोध्यः, कारणं विना कार्य्योत्पत्तिर्व्विभावनेति तल्लक्षणम्। एतादृशगूढार्थानुसन्धानेन वस्त्वलङ्कारादिध्वनिबोधो जायत इत्यसंलक्ष्यक्रमत्वमेषां वस्त्वादीनामुचितमेव। एवमुत्तरोत्तरपदांशानामुदाहरणे सर्व्वत्रासंलक्ष्यक्रम एव ज्ञेय इति भावः।

---

ध्वनिप्रस्थानव्याख्याननिरतिशयकुशाला'दालोक'ग्रन्थादालोकनीयम् (३।१६)। 'आहारे विरतिः समस्तविषयग्रामे निवृत्तिः परे'त्यादिश्लोके तत्रोदाहृत इव कुत्र कुत्राप्येकस्मिन्नेवैषां बहूनां कारणानां सन्निवेशो दृश्यते। स च कदाचित् ध्वनिसाङ्कर्य्येण कदाऽपि ध्वनिसंसृष्ट्या वा द्योतत इति न पृथगेव तन्निर्द्देशो भावो। एषु स्थलेष्वधिकतरं वैचित्र्यमिति तत्त्वविदां तत्त्वम्। तत्र तेषां मध्ये ध्वनेर्ध्वन्यन्तरोद्गार एव ग्रन्थकृल्लक्षितसुत्तमोत्तमं काव्यम्।

अथ कुसुमाहरणच्छलेन वृन्दावनं गत्वा सङ्केतस्थले कृष्णमनागतं वीक्ष्य कुसुमान्यादायैव गृहमागतां पुनः सङ्केतमुरलीस्वनश्रवणानन्तरं पुनर्गमनोत्कण्ठया व्याजेन पातितकुसुमां काञ्चित् प्रति हृदयज्ञा सखी वदति—प्रियसखि! किमिति विषीदसि? भूमिपतितानि देवदेयानि न भवन्ति, पुनरपि तत्र कुसुमार्थं गच्छ। मया ते गुरुजनो बोधनीयः, न किञ्चिदपि ते भयमिति 'णिच्'प्रत्ययस्यैव ध्वनिः।

कालस्य यथा—

सहजमरुणं नेत्रद्वन्द्वं, स्वभावत एव ते
सततमुरलीध्मानक्रीड़ाविधौ व्रणितोऽधरः।
वनविहरणे रात्रौ गात्रं सकण्टकलाञ्छनं
कथमिव कृतः स्वामिन्! स्वात्माऽपराधविसंष्ठुलः (फ)॥ २७

आणिअ भअणेति—आनीय भवनद्वारं धरण्यां पातितानि कुसुमानि। प्रियसखि! किमिति विषीदसि पुनरपि चल तत्र कुसुमार्थम्॥ 'णिच्'प्रत्ययस्येति—'पातितानी'त्यत्र 'णिच्'-प्रत्ययस्येत्यर्थः।

भोः प्राणप्रिये! ममापराधाभावेऽपि मिथ्यापराधं प्रकल्प्याधिकं क्रुध्यसि चेत्, भवतु त्वद्वचनेनैवाधुना ममापराधकल्पनं, तथापि त्वत्कृपैव मम निस्तारकारणमिति श्रीकृष्णे वदति सति, नाधुना तवापराधो जातः किन्तु मन्निकटागमनात् पूर्व्वमेवेति स्पष्टीकर्त्तुं काऽपि मानिनी सोल्लुण्ठवचनमाह—हे कृष्ण! तव नेत्रद्वन्द्वं सहजमरुणं, न तु कस्या अपि प्रियाया अधररागेणारुणं, तव गात्रं कण्टकचिह्नेन सह वर्त्तमानम्। हे स्वामिन्! स्वात्मा स्वदेहः कथमपराधेन विसंष्ठुलोऽसमीचीनः कृत इति सम्भोगचिह्नस्य

---

(फ) यद्यपि नयनयुगलस्य साहजिकेनारुणत्वेनाधरस्य नियतव्रणितत्वेन वनविहरणरतत्वात् गात्रस्य कण्टकितत्वेन चापाततः नायकस्यानपराधतापक्षः स्फुटीकर्त्तुं सम्भाव्यते, तथाऽप्यत्र निष्ठाप्रत्ययस्य याथार्थ्यबलात्तैरेव कारणैर्नायकस्यापराधः स्फुट इति, न स कथमपि निह्नोतुं शक्य इति च व्यज्यते। तथाहि मदितरनायिकामदरागरञ्जितादधरतोऽरुणिमा तव नयनयोरिह चुम्बनदाने संक्रान्तः, तत्तुष्टिनिधुवनादिकृते प्रयस्तो मुरलीध्वनिः, मत्तो भीतिस्तत्सङ्गमं प्रति परमेकान्तचित्तस्य तत्रावसरप्रसरत्वेन रात्रेः, स्थानान्वेषणनिपुणेन त्वया तदर्थमरण्यस्याश्रयः, इति सर्व्वं विशदं प्रतिभाति मे इति नायिकाकूतम् आशयः—अतो धूर्त्तो धृष्टश्च त्वं, न त्वयि विश्वासलेशोऽपि स्थापयितुं शक्य इत्यहो मे दुर्भाग्यं तव च दौर्ज्जन्यम्।

अत्र 'क्वत' इति 'क्त'प्रत्ययेनोक्तातीतकालेन मत्सम्मुखागमनात् पूर्व्वमेवात्मनस्तवापराधविसंष्ठुलता जाता। ततः परमेव मत्सम्मुखमागतोऽसीत्यतिशयोक्त्यलङ्कारः, तेन च मां प्रति तव भयाधिक्यं, तां प्रति प्रेमाधिक्यमिति वस्तु।

सम्बन्धस्य यथा—

अइ पिअसि गोविआणं पेअं कण्हस्स अहरपल्लअं मुरलि !।
णिअपरविवेअकुसला अम्हो णो होंति सच्छिद्दाः॥ २८

अत्र 'गोपिकाना'मेवेति स्वस्वामिभावसम्बन्धः, गोपिकाभिरेव पातुं युज्यते, न त्वयेति व्यतिरेकालङ्कारः। अर्थान्तरन्यासेनापि त्वं छिद्रवती, वयमच्छिद्रा इति व्यतिरेकः।

वचनस्य यथा—

विलासचेष्टाः सखि ! केशिनाशिनो हलाहलाभाः प्रदहन्ति मे मनः।
कृन्तन्ति मर्म्माणि गुणा घुणा इव प्रेमा विकारी हृदि हृद्रणो यथा॥२८ (ब)

स्वदर्शनेऽपि यत्त्वं मिथ्या वदसि, तत्र मयि विषये तव भयमेव कारणमित्याह—मां प्रतीति।

अइ पिअसीति—अयि पिबसि गोपिकानां पेयं कृष्णस्याधरपल्लवं मुरलि !। निजपरविवेककुशला अहो नो भवन्ति सच्छिद्राः॥

हृद्रणो यथा हृदि नानाविधपीड़ामयं विकारं करोति तथैव मयि विषये श्रीकृष्णस्य प्रेमा मम हृदि विकारी भवति। मय्येवेति—मयि विषय एव तस्य प्रेमा, नान्यत्र—ततो मद्हृदये नानाविधविकारमुत्पादयतीत्यर्थः। अत्रेति—पूर्व्वं 'विलासचेष्टा' एवं 'गुणा' इत्यत्र बहुवचनमुक्तं, अत्र तु 'प्रेमे'त्येकवचनप्रयोगेन सम्भावितो यः क्रमभङ्गदोषः, सोऽत्र नास्ति, प्रत्युत ध्वन्यर्थबोधकत्वेन गुण एवेत्यर्थः।

काचित् पुष्पाहरणमिषेण वृन्दावनस्थं श्रीकृष्णं द्रष्टुं स्वसखीं त्वरयति—गत इति। सूर्य्योऽस्तङ्गतः, अत एव घर्म्मोऽपि विरतः, तस्माच्छीघ्रं पुष्पाण्यानीय शशिखण्डचूड़े

(ब) 'अपत्ये यत्तादृक् दुरितमभवत्तेन महते'त्यादि भवभूतिपद्ये, 'तथैव तीव्रो हृदि शोकशङ्कुर्मर्म्माणि कृन्तन्नपि किं न सोढ़' इति तस्यैव श्लोकार्द्धे इतरत्र च शोकादित एव अभितहृदयताऽवन्तुदत्वं वा वर्ण्यते। अत्र तु विलासचेष्टानां हलाहलाभतया, गुणानां घुणत्वेन, प्रेम्णो व्रणरूपेणापाततो विसदृशादर्शनादस्माः नवीनप्रेमिकत्वं दुःखहवेदनत्वञ्च वस्तु व्यज्यते। 'विषमप्यमृतं क्वचिद्भवेदमृतं वा विष'मिति न्यायेन कोमलादपि कठोरताऽपातो गुणानां घुणत्वादिकं सर्व्वं यत् किमपि सम्भाव्यते।

अत्र 'प्रेमे'त्येकवचनं प्रेम्न एकनिष्ठत्वव्यञ्जकं, तेन तस्य मय्येव प्रेमा, अतएव विकारी। अत्र वचनक्रमभङ्गदोषो गुण एव।

पुरुषव्यत्ययस्य यथा—

गतोऽस्तमर्को विरतश्च घर्म्मो वनं न दूरे(12) सुलभञ्च पुष्पम्।

चलन्तु पुष्पाहरणाय सर्व्वाः पूजाऽस्तु देवे शशिखण्डचूडे ॥ ३०

अत्र चलाम इत्यर्थे 'चलन्तु'—उत्तमपुरुषव्यत्ययेन प्रथमपुरुषनिर्द्देशः, तेन यूयमेव वयमित्यपृथग्भावो वस्तु। 'देवे शशिखण्डचूड़े' इति पृथग्-ध्वनिः—देवेशश्चासौ शिखण्डचूड़श्चेति।

तद्धितस्य यथा—

चिरविरहदहनदग्धं प्रियसखि! भस्मेव भावि वपुरेतत्।

तदनेन विरचनीयं तत्करमुकुरस्य मार्जनं त्वयका ॥ ३१

अत्र 'त्वयके'ति तद्धितेन 'अक' प्रत्ययेन मद्विच्छेदे त्वमपि शोच्या भविष्यसि —मत्प्रणयेन त्वमेतावन्तं कालन्तदङ्गमार्ज्जनसौभाग्यभाजनमासीः, मयि मृतायान्तु ते तथाविधसौभाग्यं क्व? तेन यदि मुकुरादिमार्ज्जनयोग्यता भवति तदेवं कार्य्यमिति शोच्यता व्यज्यते।

उपसर्गस्य यथा—

पतत्यस्ने सास्रा भवति पुलके जातपुलकाः

स्मिते भाति स्मेरा मलिनिमनि जाते सुमलिनाः।

महादेवे पूजाऽस्तु प्रवृत्ता भवत्वित्यर्थः। श्लेषेण देवेशश्चासौ शिखण्डचूड़श्चेति, तस्मिन् श्रीकृष्णे। पृथग् ध्वनिरिति—श्लिष्टार्थस्यापि ध्वन्यन्तर्गतत्वादिति भावः।

तद्धितेन 'अक'प्रत्ययेनेति—निन्दार्थक 'अक' प्रत्ययेनेत्यर्थः। मत्प्रणयेनेति—त्वयि विषये मम प्रणयातिशयं ज्ञात्वैव श्रीकृष्णेन स्वस्याङ्गमार्ज्जनसौभाग्यन्तुभ्यं दत्तं, मयि मृतायान्तु तादृशसौभाग्यसम्भावनैव नास्ति। यदि कदाचिन्मुकुरमार्ज्जनकर्म्मणि योग्यतायाः प्राप्तिः स्यात्तदा मद्देहभस्मनैव कार्य्यमित्यर्थः।

कदाचिद्दोलिकोत्सवे मिलितानां यूथेश्वरीणां समाजङ्गता वृन्दा भङ्ग्या सखीनां प्रेमोत्कर्षं ख्यापयितुङ्किमपि प्रस्तौति-पततीति। हे मृगदृशः! यदा स्वाल्यः सम्मुख-वर्त्तिन्यो न तिष्ठन्ति तदैव दर्पणमानीय तत्र प्रतिबिम्बितं स्वस्वमुखन्दृष्ट्वा सुखेऽभिव्यक्त

(12) 'वनं विदूरे' इति (ख) पुस्तके पाठः।

अनासाद्य स्वालीर्मलिंकुरमभिवीक्ष्य स्ववदनं
सुखं वा दुःखं वा किमपि कथनीयं मृगदृशः ॥ ३२ (भ)

अत्र 'सु'पसर्गेण मालिन्यातिशयो व्यज्यते, तेन च सखीनां प्रणयाधिक्यम् ।
निपातस्य यथा—

दट्ठूण तस्स वअणं क्खणमेत्तेण क्खु हारिअं हिअअं ।
एव्वं बिअ अच्चरिअं तुरिअं लद्धं अ तहिअअं ॥ ३३

अत्र 'च' रूपनिपातेन तुल्ययोगिताऽलङ्कारः (म) निजहृदयहारणसमकाल-मेव तद्हृदयं लब्धं, अतोऽहं हृदयशून्या नाभवमिति तस्य हृदयं मद्हृदयमिति वस्तुना द्वयोरेवौत्सुक्यं वस्तु प्रतीयते ।

सुखं वा दुःखं वा युष्माभिरस्माकमग्रे कथनीयं, आत्मच्छेदग्रवर्त्तिन्यस्तदा दर्पणेन किं प्रयोजनं, ता एव दर्पणस्थानीयाः। तासां दर्पणसाधर्म्म्यमाह—पततीति। युष्माकमश्रुजले पतति सति ता अपि साश्राः। एवं स्वालीरनासाद्याप्राप्य।

दट्ठूणेति—दृष्ट्वा तस्य वदनं च्चणमात्रेण खलु हारितं हृदयम्। एवमिवाश्चर्य-न्त्वरितं लब्धञ्च तद्हृदयम्॥ अत्र 'लब्धञ्चे'त्यत्र 'च' शब्दरूपनिपातेन तुल्ययोगिता-रूपोऽलङ्कारो व्यङ्ग्यः। 'च' शब्दगम्यन्तुल्ययोगित्वमेवाह—निजहृदयेति। अव्ययसामान्य-स्यैव निपातसंज्ञा, ततः 'च' शब्दस्यापि निपातत्वं ज्ञेयम्। तद्हृदयं मद्हृदयमिवेति वस्त्वलङ्कारेण द्वयोरौत्सुक्यं ध्वनितम्।

---

(भ) अत्र वृन्दाया अभिधाननैपुण्येनालीनां दर्पणस्थानीयत्वं प्रस्तूयते। गोपीवृन्दमध्य-मणिर्योषिद्वृन्दारिका वृन्देव दूती परं सर्व्वत्र प्रेमपरवशानां नायिकानामुज्ज्वलनीलमणौ-र्नायकस्य च दर्पणस्थानीयाऽभिमतदुर्गतभावप्रकाशिकेति वैष्णवकाव्यरसरसिकैः स्वीकार्य्यम्। भावातिशये जाते न खलु कोऽपि स्वाशयं वाचा प्रकाशयितुं समर्थो भवति, किं पुनर्भाव सागरप्लवमानाः परमानन्दसन्दोहदोहदा गोपिकाः। स खलु चिद्विकारः 'परिच्छेदातीतः सकलवचनानामविषयः'। अत्र तु 'सु' पदस्योपसर्गत्वख्यापनं वैयाकरणमतानवधान-विजृम्भितं, 'उपसर्गाः क्रियायोगे' इत्यनुशासनात्। 'मलिना' इति धातुजत्वेनाच्चिप्रमिति चेन्न, अमनोज्ञत्वात्, कष्टकल्पनाश्रयत्वाच्च। 'परिच्छेदातीतः सकलवचनानामविषय' इत्यादि भवभूतिपद्य, 'आहारे विरति'रित्यादि पद्येऽपि यथाक्रमं प्रकाशकता दर्पणकता चोप-सर्गाणां प्रादीनां व्यञ्जकत्वं दर्शितमिति दिक्।

(म) परमते नात्र प्रस्तुताप्रस्तुतयोरेकधर्म्माभिसम्बद्धत्वरूपस्तुल्ययोगिताऽलङ्कारः, अपि तु सहोक्तेराभासः, तुल्यकालं योग 'तेन सहेति तुल्ययोगे' इत्यादि वैयाकरणप्रयोग इव यौगिकार्थे तु तुल्ययोगस्य सम्भवः। मतं तद्विचारितं विध्वस्तञ्च प्रकाशटीकालङ्गा-

सर्व्वनाम्नो यथा—

मध्ये सूक्ष्मधियः सखीपरिषदो धृत्वा सखीभूमिका-
मभ्यङ्गाय गृहीतपाणिकमलं स्पर्शेन मां जानती ।
अङ्गे ! दूरमपेहि नासि कुशला स्नातुञ्च वाञ्छाद्य मे
नेत्यन्तःकुपिता यदीहितवती तत् केन विस्मर्य्यते ॥ २४

अत्र यत्तद्भ्यां वागगोचरत्वं व्यङ्ग्यम् ।

कर्म्मभूताधिकरणस्य यथा—

अधिवससि तस्य हृदयं प्रियसखि ! राधे ! स चापि तव हृदयम् ।
द्वाविव पूर्णहृदयौ प्रविशामो वां कथं हृदये ॥ २५

अत्राधारस्य कर्म्मभूतत्वे सर्व्वव्यापनं व्यङ्ग्यम्—'ग्रामे वसती'ति ग्रामैकदेशो गम्यते, 'ग्राममधिवसती'ति ग्रामं व्याप्यैवेति चमत्कारः । (य)

कदाचिद्राधाया मानभङ्ग उपायान्तरमप्रेक्ष्य स्वयमेव स्त्रीवेशं धृत्वा तस्या निकटङ्गतवतः श्रीकृष्णस्य तदानीञ्जातो य आनन्दातिशयस्तमौत्सुक्येन श्रीकृष्णः सुवलं प्रत्याह—मध्य इति । सूक्ष्मधियः सखीसभाया मध्ये तासां साहाय्येन सखीभूमिकां, तैलमर्द्दनकारिणी या सखी तस्या भूमिकां वेशं, धृत्वा तैलाभ्यङ्गाय गृहीतं राधायाः पाणिकमलं येन तथाभूतं मां स्पर्शेन जानती—नेयं स्त्री किन्तु पुरुषः कृष्ण एवेति ज्ञानवती—राधाऽह—हे अङ्गे ! त्वं नवीना भवसि, तैलाभ्यङ्गकर्म्मणि न कुशला, तस्माद्दूरमपेहि । स्वकौशलमभिव्यक्तीकर्त्तुमुद्यन्तं मां वीक्ष्य पुनः कुपिता सत्याह—मम स्नातुमद्य वाञ्छा नास्ति, इत्यन्तःकुपिता सा स्नानसमये यच्चेष्टितवती तच्चेष्टितं केन विस्मर्य्यते ।

अधीति—परस्परवासेनोभयोर्हृदये पूर्णे भवतः, अतस्तत्रावकाशाभावेन कथं सखीनां प्रवेशः सम्भवतीति ।

---

सुद्योतप्रभाकाराभ्यां 'गाढ़कान्तदशनक्षतव्यथे'त्यादिमूलधृतपद्यालोचनप्रसङ्गे, विचारप्रकारस्तत्रैव द्रष्टव्यः । पद्येऽत्र वक्तुः प्रौढ़ोक्तिरेव सर्व्वालङ्कारजीवातुभूता तदाशयं पिहितापिहितमुचितं दर्शयतीत्यलङ्कारभेदवैमत्यं न दुर्व्बोधत्वाय कल्पत इत्यप्यूहनीयम् ।

(य) 'महिलासहस्सभरिए' इत्यादि पद्य इवात्रापि कविनिबद्धवक्तृप्रौढ़ोक्तिश्चमत्कृतिमावहति । 'क्रियाव्याप्यं कर्म्मे'त्यनुशासनादाधारस्य स्ववलतः कर्म्मत्वे भूतेऽर्थचमत्कारोऽवश्यम्भावीति भावः । एवमपि विशिष्टकारकलक्ष्यभूतेऽनुशासनमनुल्लङ्घ्य कारकान्तरप्रयोगे तथोपपदविभक्तीनां प्रयोगेनायाताया व्यञ्जकताया: लक्ष्याणि ध्वन्यालोककाव्यप्रकाशादिग्रन्थेष्ववलोकनीयानि । वस्तुतस्त्वत्र 'ग्रामं व्याप्ये'ति कर्म्मभूतत्वेऽर्थकल्पनं कथञ्चित् याद‍ृच्छिकमिव प्रतिभाति, न हि सर्व्वत्र कर्म्मतो क्रियायाः सामग्र्येण व्याप्तिर्व्बोध्यते ।

अव्ययीभावस्य यथा—

कत्यायान्ति कति प्रयान्ति कति वा तिष्ठन्ति मूर्त्ता इव
प्रौढ़ानन्दमहोत्सवा यदितरे श्रीद्वारकायाम्भुवि ।
सौरत्नैरनुसौधरत्ननिकरं निश्चिन्तमाक्रीड़त-
स्ते याताः किल वासरा मम सखे ! येषु व्रजे क्रीड़ितम् ॥ ३६

पूर्व्वनिपातस्य यथा—

आनन्दातिशयेन विस्मृतिवशाद्ध्वस्तानुपूर्व्वीक्रमा-
च्छेकच्छेकशुकाङ्गनाभिरुदयत्कौतुहलं स्मारिता ।
श्रीराधाहरिकेलिकौतुककथा प्रातः सखीमण्डले
प्रत्यावर्त्तयति गतामपि निशां साक्षाद्विधत्ते च तौ ॥ ३७

अत्राल्पस्वरत्वेन चार्च्चितत्वेन च 'हरि'शब्दस्यैव पूर्व्वनिपात उचितः, तदन्यथाभावे 'श्रीराधे'ति पूर्व्वनिपातो हि तस्या वैदग्ध्यातिशयद्योतकः। —इति पदांशाः। रचनाया वर्णानाञ्च रीतिग्रन्थे व्यञ्जकत्वं दर्शयिष्यते।

द्वारकास्थः श्रीकृष्णो मधमङ्गलमाह—हे सखे! यद्यस्माद् अस्यादानन्दादितरे मम मूर्त्ता इव प्रौढ़ानन्दमहोत्सवा द्वारकाभुवि कति वाऽयान्ति, कति वा प्रयान्ति, कति वा तिष्ठन्ति? किन्तु येषु वासरेषु मया व्रजे क्रीड़ितं ते वासरा दिवसा याता एव, तेषाम्पुनरागमनाभावात्। मम कथम्भूतस्य—सौरत्नैः सहानुसौधरत्ननिकरं सौधरत्ननिकर आक्रीड़तः। अत्र वीप्सायामव्ययीभावसमासः, तेन चाष्टोत्तरशतषोड़शसहस्रसौधव्यापकत्वं क्रीड़ाया व्यज्यते।

एकदा प्रातःकाले श्रीराधाया निकटे सुहृत्पक्षमपक्षाणां समाजे जाते, भो ललिताऽद्याः सख्यः! अद्यरात्रिसम्बन्धिनीं निकुञ्जराजयोर्व्विलासवार्त्ताङ्कथयतेति सुहृत्पक्षश्यामलया पृष्टा ललिताऽद्याः कथयितुम्प्रवृत्ता अपि तदानीमानन्दावेशेन विलासानां कस्यचित् कस्यचित् भागस्य विस्मरणादानुपूर्व्वीक्रमेण यदा वक्तुं न शेकुस्तदैव गृहपालिताः शुकाङ्गना रात्रौ कुञ्जमध्ये दृष्टचरीं समस्तलीलां यथास्थितानुपूर्व्वीक्रमेण ताः स्मारयन्ति स्मेत्याह—आनन्देति। आनन्दातिशयेन ललितादीनां जाता या विलासांशस्य विस्मृतिस्तया ध्वस्तो य आनुपूर्व्वीक्रमस्तस्मात्तादृशयतिक्रमसमसहमानाभिश्छेकच्छेकशुकाङ्गनाभिः—छेका विदग्धा याश्छेकशुकाङ्गना गृहपालितशुकाङ्गनास्ताभिः उदयत्कौतुहलं यथा स्यात्तथा स्मारिता श्रीराधाकृष्णयोः केलिकथा कर्त्रीं गतामपि निशां पुनः प्रत्यावर्त्तयते, तौ राधाकृष्णावपि साक्षात्करोति। 'श्रीराधा'शब्दापेक्षया 'हरि'शब्दस्याल्पस्वरत्वात् एवं सर्व्वेषां व्रजवासिनां रचकत्वेनार्च्चितत्वाच्च 'हरि'शब्दस्यैव पूर्व्वनिपात उचितः।

—ते तावद्भिः पृथक् पृथक् ।

गुणनीयाः— ५५क

त एकपञ्चाशद्भेदा एकैकन्तावद्भिरेकपञ्चाशता गुणनीयाः, शुद्धत्वेन केवलं वर्त्तमानत्वाभावाद्यावत्स्वप्रभेदं मिश्रत्वयोग्यत्वाच्च ।—

—तेन चन्द्रव्योमर्त्तुपञ्चसंख्यकाः (२६०१) ॥ ५५

सङ्करेण त्रिरूपेण संसृष्ट्या चैकरूपया ।
चतुर्गुणे कृते वेदखवेदककुभः (१०४०४) स्मृताः ॥
शुद्धभेदैर्युतास्ते स्युः शरेषुयुगखेन्दवः (१०४५५) ॥ ५६

इति पूर्वैर्विलिखितं न सर्वेषामुदाहृतिः ।
भवेद्योग्यत्वमात्रत्वादाधिक्यमपि गण्यते (२) ॥

अथ।तैकपञ्चाशद्ध्वनिभेदानां मध्य एकैकध्वनिभेदो यदि पञ्चाशद्ध्वनिभिः स्यात्तदैकैक एव भेद एकपञ्चाशत्संख्यको भवति। एवंक्रमेणानन्तभेदा भवन्ति। तत्रायं क्रमः—एकपञ्चाशद्भेदानां मध्य एकैकभेदो यदा पञ्चाशद्भेदैः सह कथ्यमानसंशयास्पदतारूपसाङ्कर्य्यविशिष्टः स्यात्तदैकपञ्चाशद्भेदा एव एकपञ्चाशदङ्कैः पूरणीयाः; तथा सति मिलित्वा चन्द्रव्योमर्त्तुपञ्चसंख्यका ध्वनयः स्युः। एवं यदैकैकभेदः पञ्चाशद्ध्वनिभिः सहानुग्राह्यानुग्राहकतारूपसाङ्कर्य्यविशिष्टः स्यात्तदाऽपि पूर्वरीत्या पुनश्चन्द्रव्योमर्त्तुपञ्चसंख्यका ध्वनयः स्युः यदा त्वेकव्यञ्जकसंश्लेषरूपसाङ्कर्य्यविशिष्टः स्यात्तदाऽपि चन्द्रव्योमर्त्तुपञ्चसंख्यकाः स्युः। एवमेकैकभेदो यदि पञ्चाशद्ध्वनीनां संसृष्ट्या विशिष्टः स्यात्तदा पुनरपि चन्द्रव्योमर्त्तुपञ्चसंख्यकाः ध्वनयः स्युः। एवं क्रमेणैकैकभेदस्यैकपञ्चाशदङ्कैर्वारचतुष्टयं पूरणे कृते मिलित्वा वेदखवेदकि-

---

(२) एकस्मिन्नपि प्रबन्ध एकविधध्वनिसम्भवेन स्वस्य स्वेन योजनं नासम्भवीति कृत्वा प्रकाशकृदादिमतमनुसृत्येयं गणना। दर्पणकारादयस्तु विभिन्नगणनाप्रणालीमनुसृत्य 'वेदखाग्निशराः शुद्धैरिषुबाणाग्निसायकाः' इति संख्यां दर्शयन्ति। तत्रेयं युक्तिरधोदर्शिता च गणनापद्धतिः—प्रथमन्तावदेकपञ्चाशद्भेदाः, (क ख ग·····ङ ढ ञ ञा···) 'क' भेदस्य येन केनाप्येकपञ्चाशत एकतमेन ग्रहणयोग्यत्वात्, ततः पञ्चाशत्, 'ख' भेदस्य 'ख' भेदादारभ्य येन केनाप्यपरेषां पञ्चाशद्भेदानामेकतमेन ग्रहणयोग्यत्वात्, न तु प्राक्प्रदर्शितेन 'क' भेदेन ग्रहणे नूतनस्य संसृष्टभेदस्य सम्भवः, तस्य प्रथममेव गृहीतात् 'क ख' भेदादव्यतिरेकात् (प्रकाशकृदनुसारिणां मते ध्वनिभेदगणनावलायां 'क' 'ख'—समवायिभेदात् 'ख' 'क'—समवायिभेदस्य विभिन्नता, विश्वनाथमते न तथेत्येव गृहीतसंख्याभेदस्य मूलम्)।

तत्र त्रिरूपः सङ्करो यथा —

संशयास्पदताऽनुग्राह्यानुग्राहकताऽपि च ।

एकव्यञ्जकसंश्लेषः सङ्करस्त्रिविधो मतः (ल) ॥ ५८ का

संख्यका ध्वनयः सूरिव्यर्थमेव दाभ्यां सूत्राभ्यामाह । शुद्धेनेति—तेषामुदाहरणमुत्तमकाव्ये किं वोत्तमोत्तमकाव्ये ज्ञेयस् ! तत्र तत्र शुद्धकेवलैकध्वनेरसम्भवात् किन्तु त्रयाणाञ्चतुर्णां समाहारानां वा ध्वनीनां साङ्कर्यमवश्यं स्वीकरणीयमित्यर्थः । यावत्प्रभेदमिति—एकपञ्चाशद्ध्वनीनां यावन्तः प्रभेदास्तेषां परस्परमिश्रत्वस्य साङ्कर्यस्य योग्यत्वादवश्यस्वीकर्त्तव्यत्वादित्यर्थः । अत्र चन्द्रयोमर्त्तपञ्चसंख्या आपातत एवोक्ताः, वस्तुतो वक्ष्यमाणानां

---

एवं दर्पणकृत्सूचितगणनायां (५१ + ५० + ४६ ··· + ३ + २ + १) × ४वा ५३०४ सङ्कीर्णभेदाः, शुद्धैः सह गणनायां ५३५५ भेदाः । एषां काव्यभेदानां सर्वेषां सत्ता सम्भवत्येव, परं लक्ष्यानामुदाहरणानां प्रदर्शनं निष्प्रयोजनमिति विस्तरभिया न कैरपि चेष्टितम् । वस्तुतस्तु एषां बहुत्वकथन एव तात्पर्य्यमालङ्कारिकाणां, न तु संख्यामात्राभिधान इति निपुणैर्विभावनीयम् —यदाहुर्ध्वनिकारा ध्वनिगुणीभूतादिसर्वविधकाव्यसमष्टिभेदप्रदर्शनावसरे—'स गुणीभूतव्यङ्ग्यैः सालङ्कारैः सह प्रभेदैः स्वैः । सङ्करसंसृष्टिभ्यां पुनरप्युद्द्योतते बहुधा ।' एतदेव लक्ष्यं मनसिकृत्याभिहितं कौस्तुभकारैरत्र मूलकारिकायां —'योग्यत्वमात्रत्वादाधिक्यमपि गण्यते ।' नेह तेनातिरिक्तसंख्याऽनयनवैदग्धी जिज्ञासूनामुत्कटकौतूहलनिवृत्तये लक्षिता यथा तत्प्राचीनैस्तदर्वाचीनैश्च कैश्चिन्निबन्धकृद्भिः । तत्र निदर्शनार्थमस्माभिर्दिङ्मात्रं लक्ष्यते, तद् यथा—प्रकाशटीकाकृतो भीमसेनदीक्षिताः ४, ५१, ६९० शुद्धसंकीर्णविशेषसमेता ध्वनिभेदाः, ८, १४५ गुणीभूतव्यङ्ग्यभेदाः—साकल्येन ३४, ०६, २३, ६०० काव्यभेदा इति कथयन्ति । तदेदं मन्तव्यं न तावत्तद्गणनाप्रकारः (स च सुधासागराख्ये तत्कृतटीकाग्रन्थे द्रष्टव्यः) सम्यङ्, न चापीयं गणनानुरक्तिर्गुणपक्षां काममपि सूचयति । एतस्मादपि भेदाद्यवान्तरविषये निरतिशयनिर्बन्धवद्दृष्ट एवाधुनिकैः पाश्चात्यपण्डितैरर्वाचीनालङ्कारिकनिबन्धमात्र एव यदनाम्या स्थाप्यते, अतिमात्राममितिबहुदपि न तच्चितम् । इ च निर्बन्धो रसभावादिविशेषणकल्पे नायकनायिकादिविभागक्रमे दशरूपकसाङ्गाद्यालोचनप्रसङ्गे स्फुटमेव विभाव्यते, इत्यलं बहुना ।

(ल) सर्व्वत्रैव तिलतण्डुलन्यायेन संयोगयोगतः संसृष्टिः, क्षीरनीरन्यायेन समवायसङ्गतः सङ्कर इति संसृष्टिसङ्करयोर्वैलक्षण्यम् । अलङ्कारादिलक्षणस्थलेऽप्येतदेव तत्त्वम् । तत्र सङ्करस्य सर्वत्रैव त्रयः संस्थाः—सन्दिग्धत्व एका, अङ्गाङ्गित्वेऽपरा, एकाश्रयस्थितत्वे तृतीया—सर्वमेतद् यथास्थानं यथायोगं दर्शितमिति न लक्षणोदाहरणाय चेष्टितमस्माकं प्रयोजनन्तया सावसरम् !

उदाहरणम्—

पद्मिन्यहं कुमुदिनी किल सैव सत्यं
सत्यं भवांश्च मधुसूदन एव मत्तः ।
वामेन तामसुखयन्निशि दक्षिणेन
प्रातः प्रबोधयति मामपि लोचनेन ॥ ३८

अत्र 'पद्मिन्या'दिशब्दार्थयोः शब्दार्थशक्त्युद्भवानुध्वनिः सङ्करनयम् ।

तथाहि मां प्रति भवतोऽनुरागो महान्, यतो मां दक्षिणेनोदारेण लोचनेन दर्शनेन प्रबोधयति ; तां प्रति तथा नानुरागः, यतो वामेन दर्शनेन तां निश्यसुखयत्—अत्र हेत्वलङ्कारो व्यङ्ग्यः,यतोऽहं पद्मिनी, सा कुमुदिनी— पद्मिन्यपेक्षया कुमुदिनी निकृष्टैव । किं वाऽहं नाम्नैव पद्मिनी, न तु वस्तुत

ध्वनीनां भेदचतुष्टयानामन्तर्भूता एव, न तु ततः पृथक् पृथक् । अन्यथा पृथग्विवक्षायां 'चतुर्गुणे शते' इत्यादि ग्रन्थोक्तसंख्याया असङ्गत्यापत्तिः, यतस्ततोऽप्यनन्तकोटिगुणसंख्याया आधिक्यापत्तिः स्यात् । ननु यत्रापरकाव्ये शुद्ध एक एव ध्वनिस्तत्रापि वाच्यार्थस्य चमत्कारे तत्काव्यस्य मध्यमत्वमुक्तम् ; एवं सति तत्र तत्र शुद्धैकपक्षाश्रद्धनयः कस्यां गणनायां निविष्टाः स्युरित्यपेक्षायान्ताङ्शशुद्धैकपक्षाश्रद्भेदा अपि स्वातन्त्र्येण गणनायां निवेशनीया इत्यभिप्रायेणाह—शुद्धभेदैरिति । इति पूर्वैरिति—पूर्वाचार्यैरपि न ताः सर्वा एवोदाहृताः न तैरप्येतावत्संख्यकानां ध्वनीनामुदाहरणानि स्वग्रन्थे कथितानि, अतएव बाहुल्यभयान्मया नोक्तानीत्यर्थः । भवेदिति—कस्यापि निपुणस्य साङ्कर्याणामवान्तरभेदं प्रकल्प्यातोऽप्यधिकसंख्याया आनयने सामर्थ्यञ्चेत्तदेतत्संख्यकध्वनिभ्योऽप्यधिकाधिकसंख्यका ध्वनयो भवन्तीति ज्ञेयमिति ।

एकव्यञ्जकेति—एकव्यङ्ग्यमात्रबोधकः शब्दश्लेष इत्यर्थः । यस्य शब्दश्लेषस्यैकैव व्यञ्जना स एकव्यञ्जकसंश्लेषः । यत्र तु शब्दश्लेषस्यैकव्यञ्जनानन्तरं स्वातन्त्र्येणापरव्यञ्जनाप्रवेशस्तत्र संसृष्टिरिति द्वयोर्भेदो बोध्य इति ।

प्रातःकाले काऽपि खण्डिता नायिका मानभङ्गार्थं विनयनत्यादिकं कुर्वन्तं श्रीकृष्णं प्रत्याह—पद्मिनीति । श्लोकव्याख्यां स्वयमेव करिष्यति । शब्दार्थेति—शब्दशक्त्युद्भवार्थशक्त्युद्भवयोर्ध्वन्योरित्यर्थः ।

अत्र प्रथमतः संशयास्पदतारूपसङ्करमाह—तथाहीति । अत्र 'दक्षिण'शब्दस्योत्कृष्टार्थकत्वं, 'वाम'शब्दस्य निकृष्टार्थकत्वम् । एवं 'लोचन'शब्दस्य दर्शनार्थकत्वमिति श्लिष्टार्थमभिप्रेत्याह—मां प्रतीति । संशय इति—यत्र निश्चयाभावेनायं वा ध्वनिरयं वा ध्वनिरिति संशयस्तत्र संशयास्पदता ज्ञेया । पुनरनेनैव श्लोकेनानुग्राह्यानुग्राहकतारूप

इति—अन्यथा मय्येव त्वमनुरक्तोऽभविष्यः। सा नाम्नैव कुमुदिनी, न तु वस्तुत इति च सत्यं, अन्यथा तस्यां नानुरक्तोऽभविष्य इति संशयः। अथ पद्मिन्यहं कुमुदिनी सैवेति रूपकालङ्कारेण तद्धेतूपन्यासद्वारा प्रातर्मां प्रबोधयति, निशि तामसुखयदिति हेत्वलङ्कारो व्यङ्ग्यः। भवान् 'मधुसूदन' एवेति, मधुसूदनस्य भ्रमरस्य तवोभयतः समरागतया न दोषः, किन्तु ममैव दोषः—यतोऽहं पद्मिनी, पद्मिन्याः प्रातरेव भ्रमरेण सह सन्दर्शनमिति 'मधुसूदन'शब्दद्योत्येन वस्तुना पुनरपि रूपकालङ्कारो ध्वनितः—इत्यनयोर्मिथोऽनुग्राह्यानुग्राहकतया सङ्करः (व)। एवं मधुसूदन एव भवान्मत्तः स्वतन्त्रः, मद् त्वन्नियोगे धातुः। तव कुत्रापि नापेक्षेति स्वभावोक्त्यलङ्कारेण तव दक्षिणचक्षुः सूर्य्यात्मकं, यतस्तेन पद्मिनीं मां प्रबोधयसि, वामन्तु चन्द्रात्मकं, येन कुमुदिनीं तामसुखयः—इत्येकस्मिन्नेव व्यञ्जके 'मधुसूदन' पदसंश्लेष एकव्यञ्जनाऽनुप्रवेशः।

सङ्करमाह—अथेति। हेतूपन्यासेति—मम पद्मिनीरूपत्वे प्रातः प्रबोधनमेव हेतुः तस्याः कुमुदिनीरूपत्वे निशि सुखाश्रयत्वमेव हेतुरिति। एवं 'मधुसूदन'पदस्य भ्रमरार्थकत्वेन भ्रमरस्योभयत्र साम्येन तस्य दोषाभावे पुनस्तस्याः पद्मिनीत्वरूपकालङ्कार एव प्रयोजकः—अतएव ध्वनिद्वयस्यानुग्राह्यानुग्राहकतारूपसङ्करोऽपि ज्ञेय इत्यर्थो 'मधुसूदन' शब्दद्योत्येनेत्यादि। वस्तुनेति—दोषाभावेनेत्यर्थः। पुनरप्यनेनैव श्लोकेनैकव्यञ्जकसंश्लेषरूपसङ्करस्योदाहरणमाह—एवमिति। मधुसूदनः परमेश्वर एव भवान्—परमेश्वरस्येव दक्षिणनेत्रस्य सूर्य्यत्वं, वामनेत्रस्य चन्द्रत्वं, नान्येषामिति 'मधुसूदन'शब्दश्लेषस्यैकैव व्यञ्जनेति भावः। इत्येकस्मिन्निति—नेत्रयोः सूर्य्यचन्द्रत्वमात्रैकव्यङ्ग्यबोधके 'मधुसूदन'शब्दश्लेष एक-एव व्यञ्जनाऽनुप्रवेश इत्यर्थः।

---

(व) एकत्र पद्मिन्युत्तमजातीया स्त्री, सा ह्येव पद्मिनी, अपरत्र मधुसूदनः मधुनाम्नोऽसुरस्य भेत्ता, स एव मधु सूदयतीति व्युत्पत्त्या भ्रमरः—तथा च माघपद्ये 'दलदलितसरघः प्रथसे मधुसूदनस्त्वमिति सूदयन् मधु।' अतएवात्रार्थशक्त्युद्भवो रूपकालङ्कारो व्यङ्ग्यः। इहोत्तरत्र व्यञ्जनागम्यात् 'भ्रमर'रूपाद्वस्तुनः पुनरपि व्यञ्जनया लब्धस्य रूपकालङ्कारस्याङ्गित्वसम्बन्धो न दुर्बोधः, परं स्फुट एवाऽत्र मतं—अतोऽत्रानुग्राह्यानुग्राहकतासङ्करः। पूर्वत्रापि 'पद्मिन्यहं'मित्याद्यंशे 'पद्मिनी'पदद्योत्येन वस्तुना प्राक्प्रदर्शितेन रूपकालङ्कारेण 'प्रातः प्रबोधयती'त्याद्यंशसमर्थितेन भावेन स एव सङ्करोऽन्यथोपपादयितुं शक्यः। ग्रन्थकृन्मते तु तत्र सन्दिग्धत्वसङ्करः स चापरिप्रदर्शितरीत्या।

अथ दक्षिणेन सरलेन दर्शनेन मां प्रबोधयसि, तेन ते मयि रागो नास्ति —वामेन कुटिलेन तामनुबध्नासि, तेन तस्यामेव राग इति वस्तुना मधुसूदनो भ्रमरो ज्ञानशून्यस्तत्रापि मत्त इति स्वभावोक्तिः। तथाविधस्य तव कुतो विवेकः, तेन त्वमविदग्धोऽसीति स्वभावाख्यानाक्षेपयोः (13) संसृष्टिः। एवं पदवाक्यद्योत्यैर्गर्वधैर्यदैन्यग्लानिनिर्वेदावहित्थाऽऽदिभावध्वनिभिश्च संसृष्टिः (अ)—उक्तस्त्रिरूपः सङ्करः संसृष्टिश्च।

यथा वा—

उच्छूनस्तनितस्य सर्वसुखदः कृष्णाम्बुदस्योदयो
वाताः शीकरवाहिनः सुमनसां वीथी विकाशं गता।
स्निग्धा भूर्गत एव सञ्जुरभरः श्यामायमाना दिशः
स्फीतं गोकुलमुन्मदाश्च सरितः शीता गिरिद्रोणयः॥ २९

पुनरप्यनेनैव श्लोकेन संसृष्टेरुदाहरणमाह—अथेति। अत्र कल्पे 'दक्षिण'शब्दः सरलार्थकः, 'लोचन'शब्दो दर्शनार्थको ज्ञेयः। सरलनेत्रेण नायिकाया अवलोकनमौदासीन्यव्यञ्जकं, कुटिलनेत्रेणावलोकनन्तु प्रेमव्यञ्जकमिति रसशास्त्रप्रसिद्धिः। तत्र 'मधुसूदन'शब्दश्लेषस्य प्रथमतो ज्ञानशून्ये व्यञ्जनावृत्तिः। पुनर्व्यङ्ग्यस्याविवेकावैदग्ध्यादिरूपाक्षेपार्थे व्यञ्जना। अतएवैकव्यञ्जकसंश्लेषाङ्गो दो ज्ञेयः। तत्र 'मधुसूदन' पदश्लेषस्य केवलचन्द्रसूर्यमात्र एकैव व्यञ्जनेति। उक्त इति—एकस्मिन्नेव श्लोके त्रिरूपः सङ्कर उक्तः, संसृष्टिश्चोक्तेत्यर्थः।

संसृष्टेरुदाहरणान्तरमाह—यथा वेति। काचित् सखी गोवर्द्धनस्य निकटवर्त्तिनि नगरे स्थितां स्वयूथेश्वरीं गुरुजनसमीपस्थां दृष्ट्वा गोवर्द्धनकन्दरासङ्केतस्थं श्रीकृष्णान्तां ज्ञापयितुं व्याजेन देवाद्गोवर्द्धनोपर्य्युदितं मेघं लक्ष्यीकृत्य वदति—उच्छूनेति। हे सखि!

(अ) 'पद्मिन्यह'मित्यादिश्लोके ध्वनिसंसृष्टिः। तत्र संलक्ष्यक्रमव्यङ्ग्यस्यालङ्कारयुगलस्य स्वभावोक्त्याक्षेपाभिधस्य संसृष्टिः, तथाऽसंलक्ष्यक्रमव्यङ्ग्यस्य भावध्वनिकदम्बकस्यापि संसृष्टिः। 'पद्मिन्यह'मिति स्वकीयोत्कर्षख्यापनेन गर्वः, तस्यामेव तव राग इत्यवगच्छन्त्यपि नायिकाऽहं त्वां प्रति सानुरागेति धैर्य्यं, ज्ञानशून्यस्त्वं, तथाऽपि त्वयि मे प्रेमेति ग्लानिः, धिङ् मां येवंविधासद्दशकारिणि विश्वसिति यद्वा धिङ् मां त्वत्प्राप्तिमलभमानां वराकीमिति निर्वेदः, नायकस्य ज्ञानशून्यताऽविष्कारेणेषल्लक्ष्येऽपि भावगुप्त्यापरपर्य्यायावहित्थादयो बहवो भावाः श्लोकादेवातो निपुणैरवसेयाः। एषां भावध्वनीनां शान्त्युदयसन्धिशबलताऽऽदि विविधभेदेन विवेचनमुत्तरत्र 'रस' किरणे, अतो नात्र मूले तत्प्रपञ्चः।

(13) 'स्वभावाख्यानाक्षेपयोः' इति (क) (ग) (ङ) पुस्तकेषु पाठ उपलभ्यते।

अत्र शब्दशक्त्युद्भवार्थशक्त्युद्भवध्वन्योः संसृष्ट्या ध्वनिसंसृष्टिः, तथाऽलङ्काराणां वस्तूनाञ्च संसृष्टिः ।

तथाहि गुरुसमीपस्थितां गोवर्द्धननिकटनगरनागरीं प्रति गिरिकन्दर-सङ्केतस्थं श्रीकृष्णं विज्ञापयितुं व्याजेन दैवोपनतं मेघोदयं लक्ष्यीकृत्य काचित् सखी वदति । वाच्यार्थः स्फुट एव । अत्रोद्दीपनविभावः स्फुटो भवंस्तुल्य-योगिताऽलङ्कारं व्यनक्ति । कृष्णस्य सङ्केतस्थोऽम्बुदोदयश्चाभूदिति यौगपद्य-प्रतिपत्त्या तुल्ययोगिता, कर्मधारयोपलक्षणतृतीयातत्पुरुषमात्रयोः संसृष्टिः । कृष्णाम्बुदयोः साधर्म्यादुपमाऽलङ्कारो व्यङ्ग्यः । 'उच्छूनस्तनितस्ये'ति उच्छून गर्ज्जितत्वेनाम्बुदस्य वर्षुकत्वं, तेन च शीघ्रमभिसरेति वस्तु व्यङ्ग्यम्—हे 'उच्छूनस्तनि ! तस्ये'ति सभङ्गश्लेषेण संबोध्यमानजनस्य प्रौढ़त्वं, तेन स्तन-भाराक्रान्ततया गमनमान्थर्य्यं, तेन न च मातः परं विलम्बनीयमिति ध्वनि-प्रतिध्वन्यनुध्वननं, 'तस्ये'ति सर्वनाम्नो महिम्ना कृष्णस्य परमदुर्लभता, तया च बहुवल्लभत्वम् । 'सर्वसुखद' इति हेतोर्हेत्वलङ्कारो व्यङ्ग्यः (घ), तस्मान्नातः परं विलम्बः कार्य्यं इति वस्तु । 'वाताः शीकरवाहिन' इति स्वभावाख्यानं,

सर्वेषां व्रजविलासिनां सुखदः कृष्णवर्णस्य मेघस्य गोवर्द्धनोपर्य्युदयो जातः । कथम्भूतस्य ?—उच्छूनं घोरं स्तनितं गर्ज्जितं यस्य । एवं सर्वेषां सुखदाः पवना अपि शीकराञ्जलकणान् वोढ़ुं शीलं येषान्तथाभूताः सन्तश्चलन्तीति शेषः । एवं सुमनसां मालतीनां वीथ्यो विकाशं वर्षासमयं प्राप्य प्रफुल्लताङ्गता । तथा व्रजवासिनां निदाघजन्यसञ्ज्वरभरोऽपि गतः । मेघैरेव दिशः श्यामायमाना बभूवुः—अतएव समस्तं गोकुलमपि स्फीतमानन्देन प्रफुल्लम् । एवं सरितो नद्योऽपि वर्षाकालीनजलानां संमर्द्देनानन्दवशादुन्मत्ता बभूवुः । गोवर्द्धनद्रोण्यो-ऽपि शीतला जाताः । तस्मात् सर्वप्रकारेणास्माकं व्रजवासिनां सुखसमयो जातः । वाच्यार्थः स्पष्टः । श्लिष्टार्थस्तु—हे उच्छूनस्तनि ! गोवर्द्धने कृष्णेन सह मेघस्योदयो जातः । मेघादीनामुदयकथनेनोद्दीपनविभावज्ञापनद्वाराऽभिसार उत्कण्ठां वर्द्धयति । स्निग्धेति—मानाद्यभावेन त्वमपि स्निग्धाऽभूरित्यर्थः । अत्रोद्दीपनेति—'कृष्णाम्बुद'पदस्य कर्मधारय-समासेन मेघस्योद्दीपनविभावत्वं स्फुटं व्यङ्ग्यीभवत् श्रीकृष्णेन सह मेघस्योदय इति तृतीया-तत्पुरुषेण तुल्ययोगिताऽलङ्कारं व्यनक्ति । तुल्ययोगितामेवाह—कृष्णस्येति । कर्म्मधारयेति—

---

(घ) 'अभेदेनाभिधा हेतुर्हेतोर्हेतुमता सहे'त्यपरैर्विश्वनाथादिभिरभिहितो हेत्वलङ्कारो नार्थं, परं निष्पादकहेतुगर्भकार्यलिङ्गाख्यप्रसिद्धालङ्कारस्यैवात्र 'हेतु'पदेन परिग्रह इति

तेन सुरतश्रमजलकणाहारिण्येते भविष्यन्तीति वस्तु। सुमनसां मालती-नामिति पूर्ववत् स्वभावाख्याने, तेन सुमनसां मानरहितानामन्यासामङ्गनानाञ्च वीथी कृष्णोऽभिसर्त्तव्य इति यो विकाशः प्रसादस्तं गतेति वस्तु, तेन च यावत् काऽपि तं नाभिसरति तावत्त्वमभिसरेति वस्तु। 'स्निग्धा भू'रिति चरण-सञ्चरणसुखदत्वं, परञ्च स्निग्धाऽभूस्त्वव मनसि वाऽस्यञ्च नास्ति, तत् कथमपरं विलम्बस इति वस्तु। स्निग्धत्वे हेतुः 'गत एव सञ्चरभर' इति हेत्वलङ्कारः, तेन च त्वदाकारेणैव मया त्वदन्तःकरणं ज्ञातमिति स्वचातुर्य्यप्रकटनम्। 'श्यामायमाना दिश' इत्यलक्ष्या भूत्वा गमिष्यसि, तेन न काऽपि शङ्केति वस्तु। व्यङ्ग्यपदे—गोकुलं व्रजस्थलो स्फीतं जनाकीर्णं, तेनात्र तमानेतुं न शक्नोमि। सरितो यमुनाद्या उत्पूराः, तेन तत्तटादौ च न सङ्केतयोग्यता, तर्हि पारिशेष्यात् 'शीता गिरिद्रोणय' इति भङ्ग्या तत्रैवाभिसारः क्रियतां, तत्रै-वागतोऽस्ति कृष्ण इति व्यञ्जकानां संसृष्टिरेव।

एवंविधा एव ध्वनय उत्तमोत्तमकाव्यलक्षणबीजम्। ध्वनेर्व्यापारयुगलं ध्वननमनुध्वननञ्च। यत्र केवलं ध्वननं तदुत्तमं काव्यं, यत्तु तु ध्वननानुध्वनने

—कृष्णस्वासावम्बुदश्चेति कर्मधारयपदं, एवं कृष्णेन सहाम्बुदोदय इत्युपलक्षणतृतीयातत्पुरुषपदञ्च, माता कारणं ययोः एतम्भूतयोरुद्दीपनविभावत्वतुल्ययोगित्वरूपयोर्ध्वन्योः संसृष्टिः कर्मधारयपक्षे 'कृष्णे'ति विशेषणेन मेघरूपोद्दीपनस्य वैलक्षण्यं बोधयति। स्तनस्योच्छूनताकथनेन संबोध्यमानस्य स्वयूथेश्वरीजनस्य प्रौढ़यौवनत्वमानीतम्। यमुनाद्या इति—उन्नताः पूराः प्रवाहा यत्र तथाभूताः। तेनेति—प्रवाहाधिक्येन तासां नदीनामादौ पारे सङ्केतयोग्यता न सम्भवतीत्यर्थः।

ध्वनेरिति—उत्तमध्वनेरुत्तमोत्तमध्वनेश्चेत्यर्थः। 'त्वामस्मि वच्मो'त्यादौ वर्त्तमानो-ऽहन्त्वां वच्मीत्यर्थः। अत्र'स्मि'पदेनाहमुत्प्रेक्षते'त्यर्थान्तरसंक्रमितवाच्यध्वनिः। एवं 'स्निग्धश्यामले'ति पद्ये 'लिप्त'पदेनानिष्टमेघागमनरूपार्थान्तरसंक्रमितवाच्यार्थध्वनिः, तेन चास्मिन् घनागमे सीता कथं जीविष्यतीत्यनुध्वनिः। रामोऽहमिति—रमते रमयतीति वा व्युत्पत्तिसिद्ध'रामो' न भवामि, किन्तु नाम्नैव 'रामः' अतोऽत्रात्यन्ततिरस्कृतवाच्यार्थो

८

प्रतिभाति। दण्डिप्रभृतयः प्राचस्तमेव 'हेतु'पदेनोल्लिखन्ति। एवमपि प्रायुरत्र चाल-ङ्कारोद्देशे 'हेतु'पदप्रयोगोऽत्र ग्रन्थ एतत्प्रसङ्गे स्मर्त्तनीयः।

*Quoted* in Kavyaprakasa *under* Ullasa IV.

तदुत्तमोत्तमम् । प्राचीनैस्तु सर्वेषामुत्तमत्वं लिख्यते, तत्तु नास्माकमभीष्टम् (ख) यतः 'त्वामस्मि वच्मीत्या'दौ वचेरर्थान्तरसंक्रमितवाच्यध्वनेः, 'स्निग्धश्यामलकान्तिलिप्तवियत्' इत्यादिष्वानुध्वननरूपार्थान्तरसंक्रमितात्यन्ततिरस्कृतसंस्पृष्ट्या च महाध्वनेरेक एवास्वादश्चेल्लभ्यते, तैर्लभ्यतां नाम न त्वस्माभिः ।

* इत्यलङ्कारकौस्तुभे ध्वनिनिर्णयो नाम तृतीयः किरणः ॥ *

ध्वनिः । एवं विप्रलम्भरसादिरूपा बहवो ध्वन्यनुध्वनयो वर्त्तन्ते । अत'स्त्वामृस्मी'ति काव्यापेक्षयाऽस्य काव्यस्योत्तमत्वमिति विवेचनीयम् । पद्यमिदं काव्यप्रकाशकृता स्वग्रन्थे धृतम् ॥ इति—

---

(ख) 'ध्वनेर्ध्वन्यन्तरोद्गारे तदेव ह्युत्तमोत्तम'मिति प्रागेव प्रदर्शितं वैलक्षण्यबीजं ग्रन्थकृता । ध्वनिकारमम्मटादिभिरापाततः ध्वन्युत्थापितानुध्वननादिगर्भीनान्तद्व्यतिरिक्तानाञ्च सर्वेषामेव ध्वनीनामुत्तमकाव्यत्वं स्वीकृतम्, न तद्रुचिरमिति कर्णपूरगोस्वामिनामापत्तिः ! व्यञ्जकताया आस्वादस्य तारतम्यं स्फुटमेव, ततोऽत्र विभिन्ना भागकल्पना । रसगङ्गाधरकारेणाऽप्युत्तमोत्तमाख्यतत्कृतभेदस्य काव्यस्योत्तमाख्यादपराद्व्यतिरिक्तस्य सत्ता स्वीकृता—तन्मतञ्च प्रागेवास्माभिरितरत्र दर्शितम् । 'तैर्लभ्यतां नाम, न त्वस्माभि'रिति सोत्प्रासनिर्देशोऽनैव्यावोचितः—स तु मान्यानामपि प्राचां मतमत्र मनागनादरणीयमिति स्वमताविष्कारायैवोद्दित इति ।

———

## अथ चतुर्थकिरणः ।

अथ गुणीभूतव्यङ्ग्यानि कियन्ति भवन्तीत्याकाङ्क्षायां तेषां भेदानाह—
यद्यपि 'मध्यमे तत्र मध्यम'मिति ( १म किरणे ६ष्ठ कारिकायाम् ) पूर्वोक्तस्य मध्यमकाव्यस्यैव गुणीभूतव्यङ्ग्यत्वं, तथापि ध्वनेरवैशिष्ट्ये वैशिष्ट्ये च द्वित्वन्तरोपाधितो गुणभावाद्गुणीभूतत्वमिति 'च्वि'र्थं एव द्वैविध्यं बोधयति (क)।

ननु काव्यप्रकाशकृतोत्तमव्यङ्ग्येभ्यः सकाशाद्भिन्नान्येव गुणीभूतव्यङ्ग्यान्युक्तानि, स्वमते तु मध्यमकाव्यस्यैव गुणीभूतत्वं, तथात्वे मध्यमकाव्यस्य पूर्वोक्तयुक्त्या शब्दार्थयोर्वैचित्र्य सत्युत्तमताकथनानुपपत्तिरित्याह—यद्यपीति। तथापीति—ध्वनेरवैशिष्ट्येऽवरत्वे सति वैशिष्ट्ये च ध्वनेर्मध्यमत्वादौ च सति तथाऽपराङ्गत्ववाच्यपोषकत्वादिगुणयोगादुत्तमध्वनेरपि (1) गुणीभूतत्वमिति, तथा सत्येकस्यैव मध्यमकाव्यस्य शब्दार्थानां वैचित्र्ये सत्युत्तमत्वं, तस्यैवोत्तमकाव्यस्यापराङ्गत्ववाच्यपोषकताऽऽदिगुणसूचकपदान्तरसमभिव्याहारे सति गुणीभूतत्वम् ; अतो न विरोधः। एतदर्थमेव 'गुणीभूत'पदस्यान्तर्भूतेन 'च्वि'प्रत्ययेन बोधयति—'च्व्य'र्थ एवेति। न गुणो गुणो भवतीति व्युत्पत्त्या पूर्वमगुणत्वं (2) पश्चाद्गुणयोगाद्गुणी-

---

(क) इह सर्वत्रालङ्कारशास्त्रे 'गुणीभूतव्यङ्ग्य'पदेन विशिष्टलक्षणलक्षितः काव्यभेद एव गृह्यते - पदञ्च तदतो योगरूढ़मित्यालङ्कारिकाणां स्वरसः। तत्रभवता कर्णपूरगोस्वामिना पदस्य यौगिकार्थमपकृष्य—अगुणो मुख्यो गुणोऽमुख्यो भवत्वेति व्युत्पत्त्या—मुख्यस्य व्यङ्ग्यस्य ध्वन्यपराभिधेयस्योपाधिभूतयोर्वैशिष्ट्यावैशिष्ट्ययोर्भेदसरणिमङ्गीकृत्य द्वैविध्यमस्य काव्यविशेषस्याङ्गीक्रियते। अवैशिष्ट्यपक्षे तु 'शब्दार्थवैशिष्ट्ये द्वे यातः पूर्वपूर्वताम्' (१म किरणे ७म कारिकायाम् ) इति कारिकालक्ष्यस्याविषयेऽवरत्वमायाति—न तत्र भेदकल्पना। शब्दार्थवैशिष्ट्ययोरेकतरस्य द्वयोर्वा वर्त्तमानत्वे व्यङ्ग्यस्य ध्वनेर्वाच्यान्न्यूनतया साम्येन वाऽनुत्तमत्वे 'स्फुटमपराङ्ग'मित्यादिनाऽष्टधा भेदकल्पनेति तत्रैव तत्प्रपञ्च इत्याशयेन मूलस्य प्रतीकावतारणा। इत्थं विशिष्टस्य गुणीभूतव्यङ्ग्यस्य 'ध्वनि' पदेन परामर्श आपातविसदृशोऽपि नानुचितो यथा 'काठिन्यं गुण एवे'त्यादौ ( ४र्थ किरणे ६ष्ठ श्लोके ) लक्ष्य। अत्र खलु कौस्तुभकृल्लक्षित उत्तमः काव्यभेद इति तत्रैव मूले दर्शितम्। वस्तुतस्तु 'गुणीभूतव्यङ्ग्य'पदस्यावान्तरोद्दिष्टकाव्यभेदार्थकल्पनागौरवादरं तस्यापेक्षिकत्वपक्षस्वीकारः—यत्रोत्तमोत्तमत्वं तत्र स्फुटत्वादिह लक्षितात् कारणात् गुणीभूतव्यङ्ग्यत्व उत्तमत्वं, यत्र

---

(1) 'अवरत्वे सति तथा चावरध्वनिस्थलेऽप्यपराङ्गत्ववाच्यपोषकत्वादिगुणयोगा'दिति (क) पुस्तके, 'अवरत्वे सति वैशिष्ट्ये च ध्वनेर्मध्यमत्वादौ च सति मध्यमकाव्यस्यापराङ्गत्वे'त्यादि मुद्रितपुस्तकेऽनवधानविजृम्भितः पाठः।

(2) 'अगुणत्वरूपोत्तमत्व'मिति (क) पुस्तके पाठ उपलभ्यते।

तत्रावैशिष्ट्ये भेदो नास्त्येकरूपत्वात्, द्वितीये तु भेदोऽष्टधेति सूत्रयति—

स्फुटमपराङ्गं वाच्यप्रपोषकं कष्टगम्यञ्च।
सन्दिग्धप्राधान्यन्तुल्यप्राधान्यकाकुगम्ये च।
अमनोज्ञञ्चेति गुणीभूतव्यङ्ग्यस्य भेदाः स्युः॥ ५९ का

क्रमेणोदाहरणानि—

दृष्टा भागवताः, कृपाऽप्युपगता तेषां, स्थितन्तैः समं,
ज्ञातं वस्तु विनिश्चितञ्च, कियता प्रेम्णाऽपि तत्रासितम्।
जीवद्भिर्न मृतं, मृतैर्यदि पुनर्मर्त्तव्यमस्मादृशै-
स्तत्पथ्येव न किं मृतं, बत विधे! वामाय तुभ्यं नमः (ख)॥ १

भूतत्वमिति द्वैविध्यं बोधयतीत्यर्थः। तत्रेति—अवैशिष्ट्यादवरत्वे सत्यगुणदशायामपि निकृष्टत्वेन, गुणदशायान्तु सुतरामतिशयनिकृष्टत्वात्, अतस्तत्रैकरूपत्वाद्भेदो नास्तीत्यर्थः।

सन्दिग्धेति—वाच्यार्थापेक्षया सन्दिग्धं प्राधान्यं यत्रेत्यर्थः। तथा च वाच्यार्थापेक्षया ध्वनेः प्राधान्यनिश्चय एवोत्तमतायाः प्रयोजकः, न तु सन्देह इति भावः। तुल्येति—वाच्यार्थध्वन्योस्तुल्यप्राधान्यमित्यर्थः।

अत्र ग्रन्थकार एव महाप्रभोः पार्षदानां मध्ये कस्यचित् कस्यचित् प्राकट्यं दृष्ट्वा विरहव्याकुलः सन्नात्मानं निन्दन्नाह—दृष्टा इति। तेषां कृपाऽप्यस्मादृशैः प्राप्ता। तैः सर्वसारत्वेन निश्चितं यद्वस्तु तदपि ज्ञातम्। तत्र तेषां निकट आसितं वासः कृत इत्यर्थः।

---

त्वत एवोत्तमत्वं, तत्र तस्मादेव कारणान्न्यूनतायां काव्यस्य मध्यमत्वं, यत्र ध्वनेर्मध्यमत्वं तत्रैतस्मादेव कारणात् गुणीभूतव्यङ्ग्यत्वे काव्यस्यावरत्वमिति तु न रिक्तं वचः। प्रोषोक्त-स्थलद्वये तथा 'प्रागुक्तध्वनिसंख्याः' (६०तमकारिकायाम्) इत्यादौ तत्र टीकायाञ्च साधारण्येन सर्वत्रैव 'ध्वनि'पदप्रयोगस्तु भाक्त एव। गुणीभूतव्यङ्ग्यस्यापेक्षिकार्थ-कल्पनापक्षः खलु ध्वनिकृतैवानुमोदितः—'प्रकारोऽयं गुणीभूतव्यङ्ग्योऽपि ध्वनिरूपताम्। धत्ते रसादितात्पर्यपर्यालोचनया पुनः'—इत्यादि। तदर्वाचीना आलङ्कारिका प्रकाश-कृदाद्या बहव एव 'गुणीभूतव्यङ्ग्य'पदस्य काव्यभेदत्वरूपे रूढिप्रयोगमुपपादयन्तोऽपि सबहुमानं ध्वनिकृतासुपरिदर्शितं मतमनुसरन्तीत्यास्तां तावत् पारिभाषिकपदप्रयोग-साधुत्वचिन्ता।

(ख) स्फुटमिति—काव्यप्रकाशादिनिबन्धेष्वेतदेव 'अगूढ'मिति भण्यते। एवं यदत्र 'कष्ट-गम्य'पदेनाभिहितं तस्य तत्र'स्फुट'मिति संज्ञा। स्फुटं सर्वजनसंवेद्यमतितरां प्रकाशम्। 'तादृशं वाच्यायमानतया न तथा चमत्करोति यथा कामिनीकुचकलसवद्गूढम्'—तदुक्तम्

अत्र 'जीवद्भि'रिति स्निग्धावस्थैः, 'मृतै'रिति तद्विपरीतावस्थैः—इत्यर्थान्तरसंक्रमितवाच्यं, तत्तु स्फुटमिति गुणीभूतम्।

यथा वा—

शयनसहचरीणां लोचनैरर्च्यमाना-

न्यतिरतिजयलक्ष्मीलक्ष्मभिः पक्ष्मलानि।

तेषां दर्शनकृपासहवासादिप्राप्तिरेव जीवनं, तादृशजीवनवद्भिरस्माभिर्न्न मृतम्। अधुना तेषां विरहे वयं मृता एव। मृतैर्यदि पुनर्मर्त्तव्यं तदोत्पत्त्यैव किं न मृतम्। तथा च जीवद्दशायां मरणं न जातं, अधुना मृतानामस्माकं पुनर्मरणं भविष्यत्येतदपेक्षयोत्पत्तिकाल एवास्माकं विधाता मरणं कथं न कृतं, तस्मात् प्रतिकूलाय विधात्रे नम इत्यर्थः। स्निग्धेति—सुखमयावस्थैरित्यर्थः। तद्विपरीतेति—दुःखमयावस्थैरित्यर्थः। तत्त्विति—स्निग्धावस्थत्वे मृतैरपि न दुःखद इति व्यङ्ग्यमित्यर्थः।

यथा वेति—मृगाक्षी स्वाङ्गैः करणैः स्वाङ्गानि स्वजत इव। एवमतिशयरविजये या लक्ष्मीः शोभा तस्याः सूचकैर्लक्ष्मभिश्चिह्नैः करणैः पक्ष्मलानि पुष्टानीव। पुनः कथम्भूतानि—शयनसमये परिचरणपराणाङ्किङ्करीणां लोचनैरर्च्यमानानि। 'अर्च्यमानानी'ति पदेन स्वसाफल्यमानसेन (3) सादरं दृष्टानीत्यर्थान्तरसंक्रमितं वाच्यं स्फुटम्। 'पक्ष्मलानी'ति पदेन

---

'आन्ध्रीपयोधर इवातितरां प्रकाशो नो गुर्ज्जरीस्तन इवातितरां निगूढः। अर्थो गिरामपिहितः पिहितश्च कश्चित् सौभाग्यमेति मरहट्टवधूकुचाभ' इति। न चैतेषां गुणीभूतव्यङ्ग्यभेदानां कथमपि ध्वनिभेदानां लक्षणाऽभिधोत्थापितानां मध्ये अन्तर्भावः शक्यः—यदाहुरुद्द्योतकाराः—'लक्षणामूलेत्यनेन लक्षणान्वयव्यतिरेकानुविधायीत्यर्थकेन निरूढलक्षणावत्पदघटितकाव्यीयध्वनेरस्फुटसन्दिग्धप्राधान्यतुल्यप्राधान्यासुन्दराणां व्युदासः, तेषु व्यङ्ग्योऽद्देशेन लक्षणाया अप्रवृत्तेः। काकाक्षिप्तेऽपि न लक्षणाऽनुपपत्त्यभावात्, गूढत्वेनागूढव्युदासः, 'प्राधान्य' इत्यनेनापराङ्गवाच्यसिद्ध्यङ्गयोर्व्युदास' इति।—स्फुटस्योदाहरणसुपरिदर्शितं ग्रन्थकृत्कृतचैतन्यचन्द्रोदयनाटके शेषाङ्के सन्निवेशितम्। वैष्णवसाहित्यपाथोनिधौ कचिद्भक्तानां भगवदवतारस्वरूपाणां महाप्रभुश्रीकृष्णचैतन्यपादानां प्राकट्यस्मृतेर्विरहव्याकुलता, कचिद्वा तेषां प्राकट्यदर्शनाभावेन भावविधुरता वरीवर्त्तीत्येतत् तत्तत्काव्यसुधारसोर्म्मिसुखव्यासञ्जनं सज्जना एव बुध्यन्ते। गोविन्दमुरारिशिवानन्दानन्दोक्तयः प्रथमोक्तेः प्रमाणं, द्वितीयोद्दिष्टे गोविन्ददासकविकृष्णदासकविराजादीनामार्त्तयः स्वकीयरचनामण्डलमण्डनायिता निदर्शनम्।

---

(3) 'स्वसाफल्यमनेने'ति (क) पुस्तके 'स्वसाफल्यमनने'ति, (ख) (ङ) पुस्तकयोः, 'स्वसाफल्यमानेने'ति (घ) पुस्तके, 'स्वसाफल्यमाननेने'ति (च) पुस्तके, 'स्वसाफल्यमानसेने'ति (ग) पुस्तके पाठः।

रहसि सबहुमानचुम्ब्यमानानि दृग्भ्यां
स्वजत इव मृगाक्षी स्वाङ्गकैः स्वाङ्गकानि ॥ २

अत्र 'अर्च्यमानानि' 'पक्ष्मलानि' 'चुम्ब्यमानानि' 'स्वजति' इत्यर्थान्तर-संक्रमितवाच्यानि, तानि तु स्फुटान्येव।

अपराङ्गं यथा—

कोपे यथाऽतिललितं न तथा प्रसादे
वक्त्रं, विधिस्तव तनोतु सदैव कोपम्।
इत्याकलय्य दयितस्य वचोविभङ्गीं
राधा जहास विहसत्सु सखीजनेषु (ग) ॥ ३

अत्र विप्रलम्भशृङ्गारो हास्यस्याङ्गम्। 'राधा विवर्त्तितविनम्रमुखी बभूवे'ति चेत्, तदा कोपप्रशमो व्रीड़ोदयश्चेति ध्वनिरेव स्यात्।

चित्रितत्वं व्यङ्ग्यं, तत् स्फुटं, तेन च सम्मर्द्दातिशयोत्थतनुम्लानिर्वस्तु व्यङ्ग्यम्। 'दृग्भ्यां चुम्ब्यमानानी'त्यासक्तिपूर्वकं दृष्टानि, तेनाहमद्य कृतार्थाऽस्मीति स्वसाफल्यं वस्तु व्यङ्ग्यम्। 'स्वजत' इति पदेन पुनः पुनः स्पृशतीत्यर्थान्तरसंक्रमितं वाच्यं, इति सर्वत्र स्फुटमेव।

अपराङ्गमिति—अपरस्य गौणरसस्याङ्गमित्यर्थः। वचसो विभङ्गीं श्रुत्वा। राधा विवर्त्तितेति—अस्य पद्यस्य (4) गुणीभूतत्वसूचकं 'राधा जहास विहसत्सु सखीजनेष्वि'ति चरणं विहाय 'राधा विवर्त्तिते'त्यादि चरणस्य प्रक्षेपे कृत अस्यैव काव्यस्योत्तमता भवेदित्यर्थः। न च पूर्वोक्तपद्यद्वयस्य गुणीभूतत्वसूचकवाक्यस्थल उत्तमताबोधकवाक्य प्रयोगः कथं न कृत इति वाच्यं, तत्पद्ययोर्गुणीभूतत्वेऽपि वाच्यार्थस्यातिचमत्कारित्वेन प्रक्षेपस्यानौचित्यात् (ग)।

---

(ग) अपराङ्गमिति—व्यङ्ग्यमिति शेषः—यत्र व्यङ्ग्यं वाच्यस्य रसभावतदाभासाना-मलङ्कारस्य वस्तुनश्चेत्युल्लिखितानामेकतमस्य व्यङ्ग्यभूतस्य कस्यचिदङ्गम्। अत्र मूलोदाहृते श्लोकद्वये रसाङ्गत्वरूपमपराङ्गं दर्शितम्। तदितरभेदापराङ्गलक्ष्याणि काव्यप्रकाशादितो लक्ष्याणि। तेषां केचन भेदा अत्रैव 'रस'किरणेऽनुपदं स्फुटीभविष्यन्ति। 'कोपे यथे'ति श्लोके कयाचित् गोप्याऽपरां प्रति कृष्णकृतस्य राधामानभङ्गस्य वर्णना। 'राधा जहासे'ति प्रयोगो स्वशब्दप्रत्यायितरसत्वनशादितरथाऽप्यवद्य इति विदग्धैर्निवेद्यम्। अतएवात्र परिवृत्ति-प्रदर्शने ग्रन्थकृतां तात्पर्य्यम्। 'दृष्टा भागवता' 'शयनसहचरीणा'मित्यादि पद्यद्वये वाच्यार्थस्य निरतिशयचमत्कारः, तेन तत्र परिवृत्तिर्न साधिता।

---

(4) 'पादस्ये'ति सर्वत्राप्यसङ्गतः पाठः।

यथा वा—

मुग्धे! परिहर मानं मानय वचनं प्रियालिवृन्दस्य।

यौवनमिदमम्भोरुहदलजलबिन्दूपमं विद्धि॥ ४

अत्रापि विप्रलम्भशृङ्गारध्वनिः शान्तरसस्याङ्गम्। 'अर्चय यौवनकुसुमैर्देवं कुञ्जे चर कमपी'त्युक्ते ध्वनिरेव स्यात्।

वाच्यपोषकं यथा—

क्वाहं गोधवधूः, स्मरायुतजयी गोपेन्द्रसूनुः क्व वा,

साद्धं तेन रतिर्ममाभवदिति भ्रान्तिः परं भण्यते।

इत्येवं गुरुकर्णगोचरतया सख्या समं निर्मितां

वाणीमन्यथयाञ्चकार पुलकी गण्डः कुरङ्गीदृशः (घ)॥ ५

अत्रा'न्यथयाञ्चकारे'त्यस्य वाच्यस्य गण्डस्य पुलकितत्वं प्रपोषकम्।

'इत्येवं गुरुकर्णगोचरतया सख्या समं जल्पने

रोमाञ्चोत्किरमञ्चलेन सुमुखी गण्डस्थलीमावृणोत्॥'

इत्युक्ते ध्वनिरेव स्यात्।

यथा वा—

काठिन्यं गुण एव येन भवती कान्तस्य केशग्रहं

स्नेहो दूषणमेव येन लभते दीपी दशा दग्धताम्।

मुग्ध इति—यौवनमिदं कमलदलस्थजलबिन्दुवन्नश्वरं विद्धीत्यनेन शान्तरसो मुख्यव्यङ्ग्यः, तस्याङ्गं शृङ्गाररसः, तेनायं ध्वनिर्गुणीभूतो ज्ञेयः।

क्वाहमिति—गोपानामिन्द्रस्य राज्ञः पुत्रस्तत्रापि स्मरायुतजयी कोटिकन्दर्पतोऽपि सुन्दरः स श्रीकृष्णो वा क्व। एवं तस्य प्रजा कश्चिन्निकृष्टो गोपस्तस्य वधूः तत्रापि तस्याग्रे कुरूपाऽहं वा क्व इति वाक्प्रयोगकाले 'कृष्ण'शब्दोच्चारणाज्जातो यो गण्डदेशे पुलकः स एव सख्या समं निर्मितां वाणीमन्यथयाञ्चकार मिथ्याभूताञ्चकार। गण्डस्थलीं कथम्भूतां?—रोमाञ्चोत्किरं रोमाञ्चव्याप्तामिति यावत्।

---

(घ) स्मरायुतजयीति—श्रीकृष्णः श्रीमद्भागवतपुराणे 'कोटिकन्दर्पदर्पहे'त्यादिना रासाध्यायां वर्णितः। तत्र टीकाकर्तां वैष्णवगोस्वामिचरणानां विश्वनाथचक्रवर्त्तिप्रभृतीनां व्याख्यैव 'साद्धं तेन रतिर्ममाभवदिति भ्रान्ति'रित्याद्यंशस्य सुतरां प्रकाशिका। अत्र वाच्यस्य सिद्धिरेव व्यङ्ग्याधीनेति वाच्यप्रपोषकत्वम्। 'गुरुकर्णगोचरतये'ति स्ववचनस्य

तुभ्यं कङ्कतिके ! नमोऽस्तु, धिगतिस्नेहामिति व्याजवा-
ग्विन्यासा चिकुरप्रसाधनविधौ कृष्णेन सा सस्वजे ॥ ६

अत्र विपक्षरमणीं प्रति काठिन्यादिदोषप्रसञ्जनेन प्रागल्भ्यातिशय-प्रकटनेन वाऽसूया। आत्मानं प्रति स्नेहमयत्वगुणारोपेण स्वाधिकसन्ताप-प्रकटनेन दैन्यम्। काठिन्यस्नेहयोर्गुणदोषत्वारोपेणात्यन्ततिरस्कृतवाच्य-ध्वनित्वम्। कङ्कतिकां प्रति विपक्षरमणीत्वारोपेण समासोक्तिः। 'तुभ्यं नमो'ऽ'तिस्निग्धां धिगि'ति हासनिर्वेदयोः शावल्यं—इत्येवं भूयसाऽपि लक्षणेनोत्तमोत्तममपि काव्यं 'व्याजवाग्विन्यासे'त्येकस्यैव पदस्य वाच्यस्य पोषकत्वादुत्तमोत्तमत्वं विहाय केवलगुणीभूतव्यङ्ग्यत्वेनोत्तमं जातं, किन्तु 'धिगतिस्नेहामितीषत्स्मितं जल्पन्ती चिकुरप्रसाधनविधा'वित्यादि चेत्तदा-ऽस्योत्तमोत्तमत्वमेव (ङ)।

मानानन्तरं सङ्कीर्णसम्भुक्ता पश्चात् स्वाधीनभर्तृका काचिन्नायिका श्रीकृष्णस्य केशप्रसाधनङ्कुर्वती कङ्कतिकां लक्ष्यीकृत्य व्याजेन तामाह—काठिन्यमिति। हे कङ्कतिके ! तव काठिन्यं गुण एव येन काठिन्येन हेतुना भवती श्रीकृष्णकेशग्रहं लभते। स्नेहस्ते दूषणमेव येन तैलरूपेण दैपी दीपसम्बन्धिनी दशा वर्त्तिका दग्धतां लभते। इति व्याजेन कङ्कतिकाभिधेय विपक्षरमण्या दोषव्यञ्जकस्य वचसो विन्यासो यस्याः सा। वाग्विन्यासं श्रुत्वा प्रसन्नेन श्रीकृष्णेन सस्वजे तया सहालिङ्गनञ्चक्र इत्यर्थः। प्रागल्भ्येति—केशाकर्षणरूपप्रागल्भ्यातिशयप्रकटनेनेत्यर्थः। गुणदोषत्वेति—काठिन्यं गुण इत्यत्र गुण-शब्दस्य दोषे लक्षणा, काठिन्यस्य निन्द्यत्वं ध्वनिः—एवं स्नेहोत्तर'दोष' ('दूषण'?)-शब्दस्यापि गुणे लक्षणा, स्नेहस्य सर्वोत्कर्षो ध्वनिः। ध्वनेस्त्वत्यन्ततिरस्कृतवाच्यत्वं ज्ञेयम्। नायिकात्वारोप एव समासोक्त्यलङ्कारः।

---

गुरुकर्णगोचरत्वमेव नायिकाया अभिमतं, तया स्वदोषक्षालनार्थं प्रयासः कृतः, अपराध-लवोऽपि तस्याः कथङ्कारं भवतीति कैमुतिकन्यायेनाभिधानम्।

(ङ) 'व्याजवाग्विन्यासे'त्येकस्यैव पदस्येति—'स्यादपुः सुन्दरमपि श्वित्रेणैकेन दुर्भग'मिति रीत्या ध्वनिकाव्यसाधनान्तरायो घटितः। एवं 'अनस्थाने भ्रान्तं कनकमृगतृष्णाऽन्धित-धिये'त्यादि भट्टवाचस्पतिमिश्रकृतपद्ये 'मयाऽप्तं रामत्व'मित्येकस्माद्व वाक्यप्रयोगाद्ध्वनित्वं व्याहतम्—तत्र तावदपराङ्गतया बाधा, अत्र तु वाच्यप्रपोषकत्वमुखेन। मूलाङ्किते पद्ये उत्तमोत्तमत्वं ध्वनेर्ध्वन्यन्तरोद्गारतः सम्भवि, तच्च न भूतमिति फलितमाह—उत्तमं जातमिति

कष्टगम्यं अस्फुटतया क्लेशगम्यमित्यर्थः। यथा—

त्वदभिरमिता द्वितीया जगत्यभूदद्वितीयैव।
अनुमतिरप्यननुमतिस्तिथिरतिथिर्मे निशाऽप्यनिशा॥ ७

अत्र विरोधाभासेन तव प्रकृतवैकृत्यकारिणी काऽपि शक्तिरस्तीति। 'द्वितीया' सपत्नीत्यर्थः, अतो मे ममा'नुमतिः' कलोनचन्द्रा पूर्णिमानिथिरनुमतिहीना सती 'अतिथि'रागतेत्यर्थः। निशाऽपि मेऽनिशा शाश्वत्यप्रभातेवासीदित्यर्थः। पर्यायप्राप्ताऽपि मे पूर्णिमातिथिस्त्वयाऽननुमतिः कृता अनादृतेति मम जीवनमेव व्यर्थमिति व्यङ्ग्यमस्फुटम्। 'प्रतिपदमहमप्रतिपदमुपागता त्वत्प्रभावेने'ति चेद्ध्वनिरेव—प्रतिपदं प्रतिव्यवसायमप्रतिपदमप्रतिपत्तिमहमुपागतेत्यर्थः।

सन्दिग्धप्राधान्यं यथा—

हे भद्र भाद्रपदमासचतुर्थिकेन्दो!
तुभ्यं नमोऽस्तु न कदापि मयाऽसि दृष्टः।
श्यामेन तेन कतमेन नवेन यूना
साकन्तथाऽपि मम किं प्रथितः प्रवादः (च)॥ ८

त्वदभिरमितेति—अत्र 'द्वितीयाऽ'द्वितीया' 'अनुमति''रननुमति'रिति सर्वत्र शब्दविरोधमात्रं, तेन विरोधाभासेन तव प्रकृतवैकृत्यकारिणी शक्तिरस्तीति परिहासो व्यङ्ग्यः। वास्तवार्थस्तु—द्वितीया मम सपत्न्यद्वितीयाऽभूत्, त्वद्दत्तसौभाग्यादिति भावः। 'कलाहीने साऽनुमति'रित्यभिधाना'दनुमति'पदं कलाहीनचन्द्रयुक्तपूर्णिमाबोधकम्। यथा चागामिन्यां पूर्णिमायां मया सह तव सङ्गोऽवश्यम्भावीति त्वयैव पूर्वं सम्मतिर्दत्ता, अधुना सा मम पूर्णिमा तिथिस्त्वत्ननुमतिहीना सत्यतिथिस्तादृशा तिथिभिन्ना भूत्वाऽगतेत्यर्थः। 'अनिशा'-

(च) सन्दिग्धप्राधान्यमिति—किं तावद्वाच्यं प्रधानमुत व्यङ्ग्यमिति संशयो यत्र नापाक्रियते यथा 'हे भद्र' इत्याद्युदाहृते पद्ये। भाद्रचतुर्थीचन्द्रो 'नष्टचन्द्र' इत्यादि लौकिकपरिभाषया गीयतेऽस्मद्देशीयैः—तद्दर्शनापवादनिराकरणार्थं कृष्णाचरितसंघटितं स्यमन्तकहरणाख्यानं पुराणवर्णितं श्रूयते; असमर्थपक्षे तत्सूचकं श्लोकमात्रं 'सिंहः प्रसेनमवधी'दित्यादि पठ्यते, जलगण्डूषं च दृष्टनष्टचन्द्रेण जनेन गृह्यते इति च रीतिः। अत्र मूलतः लोकसंस्कारः—स च नैकान्तिको हेतुरिति। गोप्याः विदितकृष्णानुरागायाः समाजलाञ्छितस्वचापललवमपह्नुवानाया नष्टचन्द्रमुद्दिश्य स्वगतोक्तिः। मम दुरदृष्टविलसितमेतत् पिशुनैर्जनैर्दुर्विनयदर्शनत्वेन ख्याप्यत इत्यहो अकारणनिष्ठुरो ज्ञातिवर्गः।

अत्र तव दर्शनेन प्रवादो भवतीत्यनैकान्तिकं, अपि तु तथाविधादृष्टद्वारैवेति । किं वा, नायं प्रवादः, सत्यैवेयं किंवदन्ती, यतो भवद्दर्शनमन्तरेणापि जनैश्चेदुद्घुष्यते—इति सन्दिग्धं प्राधान्यं यस्य । इदं गुणीभूतव्यङ्ग्यमप्यास्वादस्य चमत्कारितया ध्वनिधर्मं भजत इति न क्षताऽस्य परिवृत्तिः (क) ।

तुल्यप्राधान्यं यथा—

स्मरसमरसमाप्तौ वक्रतां भ्रूरहार्षी-
दजनिषत मृगाक्ष्या वीतलक्ष्याः कटाक्षाः ।

पदेन लक्षणया प्राप्स्यतीत्यर्थः । पर्य्यायप्राप्तेति—त्वत्कृतनियमप्राप्तेत्यर्थः । प्रतिव्यवसायमिति—व्यवसायो निश्चयः । तथाच यस्मिन् यस्मिन् दिवसे त्वया सङ्केतनिश्चयः कृतस्तस्मिन्नेव दिवसे त्वत्प्रभावेनाहमप्रतिपत्तिमुपागतेत्यर्थः ।

ऐकान्तिकं व्याप्तिस्तदभावोऽनैकान्तिकं, तथा च तव दर्शनादेव प्रवादो भवतीति न नियमः, यतो मय्येव तस्य व्यभिचारः, किन्तु प्रवादजनकीभूतादृष्टमेव कारणमिति ध्वनिः । किं वा त्वद्दर्शनादेव प्रवाद इति यथार्थ एव, तथापि त्वद्दर्शनं विना जनैश्चेदुद्घुष्यते तदा नायं प्रवादः, किन्त्वियं किंवदन्ती । सत्यैव—यतो मिथ्याप्रवादस्त्वद्दर्शनं विना न भवतीति नियमात्—इत्यपि ध्वनिः सम्भवति । अतो निश्चयाभावाद्गुणीभूतत्वम् ।

मानभङ्गानन्तरं सम्भोगसमयेऽपि मानाभासो वर्त्तते, सम्भोगान्ते सोऽपि नास्तीत्याह—स्मरसमरेति । अहार्षीत् तत्याज । मानसमये ये कटाक्षाः कान्तं लक्ष्यीकृत्य प्रवृत्ता आसन् त एवाद्य सम्भोगान्ते मानाभासस्याप्यपगमाद्वीतलक्ष्या अजनिषत—तथाच कान्तं लक्ष्यीकृत्य कटाक्षशरान्न क्षिपतीत्यर्थः । भ्रुवोर्वक्रतात्यागे उत्प्रेक्षामाह—कुसुमेषोः

---

(क) आस्वादस्येति—'प्रमाणस्वर्ण्यर्णंवात स्वाभिन्ने विदुषां मत'मिति लक्षितताया रसोपलब्धेस्तात्पर्य्यादत्र सन्दिग्धप्राधान्यमयगुणीभूतव्यङ्ग्यत्वेऽपि ध्वनित्वं सम्भवि, रसाद्यास्वादस्यैव काव्योत्कर्षकरत्वात् । यदाहुर्दर्पणकाराः—'यत्र वस्त्वलङ्काररसरूपव्यङ्ग्यानां रसाभ्यन्तरे गुणीभावः तत्र प्रधानकृत एव काव्यव्यवहार' इति । एवमप्यत्र तन्मते प्रकाशटीकाकृतां चण्डीदासपादानां प्रमाणपुरःसरं बलवदभिधानम्—'काव्यार्थस्याखण्डबुद्धिवेद्यस्य तन्मयीभावेनास्वाददशायां गुणप्रधानभावावभासस्तावन्नानुभूयते, कालान्तरे तु प्रकरणादिपर्य्यालोचनया भवन्नप्यसौ न काव्यव्यपदेशं व्याहन्तुमीशस्तस्यास्वादमात्रायत्तत्वादिति' । एवं सति बहूनामप्यत्रोदाहृतानां ग्रन्थकृत्कृतानां पद्यानां सरसकाव्यमध्यगतत्वालोचनप्रसङ्गे काव्यैकदेशे गुणीभूततया सन्निवेशेऽपि (केचिदस्यैव कवेश्चैतन्यचन्द्रोदयादिकाव्येष्वन्तर्भुक्ताः) न तावत् गुणीभावापात इति निष्कर्षः ।

धनुरिव कुसुमेषोर्ज्याविमुक्तं तदासी-

द्विविशुरिव निषङ्गे मुक्तशेषाः पृषत्काः ॥ ९

अत्रोत्प्रेक्षालङ्कारेणोपमालङ्कारो ध्वनितः—तौ स्वप्राधान्येन स्थिताविति तुल्यप्राधान्यम् ।

काकुगम्यं काक्वाक्षिप्तम् । तद्यथा—

कति न पतितं पादोपान्ते, न चाटु कतीरितं,

कति न शपथः शीर्णो दत्तः, कृता कति न स्तुतिः ।

तदपि न गतं वामे ! वाम्यं, लभस्व कृतार्थतां,

भवतु तव तु प्रेयान्मानो, न मानिनि ! माधवः ॥ १०

'न पतित'मपि तु पतितमेवेति नञ्काकुस्तयाऽऽक्षिप्तम् । नेदमचमत्कारि, तथापि

'कति निपतितं पादोपान्ते, कृतं कति चाटु वा,

कति कति मया शीर्णः शप्तं, कति स्तुतिरीहिता ।'

इति पठनीयम् ।

अमनोज्ञमसुन्दरम् । तद्यथा—

सुदपुव्वं वि णिआमं हरिणो मुरलीरअं सुणंतीए ।

जप्पंतीए गुरुहिं वाचात्थंभो वहुए सवुत्तो (ज) ॥ ११

कन्दर्पस्य धनुर्युद्धसमाप्त्यनन्तरं ज्यामुक्तं सत् यथा वक्रतां त्यजति । कटाक्षाणां तत्त्यागे उत्प्रेक्षामाह—कन्दर्पस्य मुक्तावशिष्टा बाणा युद्धसमाप्त्यनन्तरं निषङ्गे तूणे विविशुरिव ।

नञिति—नञ्रूपा या काकुस्तयाऽऽक्षिप्तं 'न पतितमपि तु पतितमे'वेति वस्तु । नेदमिति—यद्यप्यत्र चमत्कारसद्भावात् परिवृत्त्यपेक्षा नास्ति तथापि परिवृत्तावाग्रहेत्तामपि दर्शयतु—कति निपतितमिति ।

सुदपुव्वमिति—श्रुतपूर्वमपि निकामं हरेर्मुरलीरवं शृण्वन्त्याः । जल्पन्त्या गुरुभिः वाक्स्तम्भो वध्वाः संवृत्तः ॥ 'श्रुतपूर्वमपी'ति पदेन तत्कालीनमुरलीरवस्य सङ्केतजनकत्वरूपं वैशिष्ट्यं बोध्यते । गुरुभयेन सङ्केतस्थले गन्तुमशक्यत्वान्मोहेन वाक्स्तम्भो जातः—

(ज) 'वाणीरकुंजोड्डीणसउणिकोलाहलं सुणंतीए । घरकम्मवावड़ाए वहूए सीअंति अंगाइं ॥' इति जातिच्छायामुपजीव्य रचितेऽप्यत्राधिकतरं मनोज्ञत्वनिदानं वर्त्तत इति निपुणलक्षणे प्रतिभाति । तत्र मुरलीरवस्य साहजिकमाकर्षणमेव गरीयान् हेतुः—वैष्णव-

अत्र 'निकामं श्रुतपूर्व्वमपी'ति तत्कालीनमुरलीरवस्य सङ्केतकारित्वं व्यनक्ति। तेन गुरुभिः समं कथयन्त्या वध्वा वाक्स्तम्भो जातः—तत्र गन्तुमशक्यत्वान्मोहो जात इत्यर्थः। अत्र 'वाक्स्तम्भः संवृत्तः' इति वाच्यार्थ एव चमत्कारी, व्यङ्ग्यार्थस्तु सन्नपि तथा न चमत्करोति—इत्यसुन्दरम्। एवमन्येऽपि।

**प्रागुक्तध्वनिसंख्या एभिर्गुणितास्तथाष्टाभिः।**
**स्वयुगत्वंवह्निवसवो ध्वनिसाङ्कर्य्यात् पुनर्द्वेधा ॥ ६० का**

मुरलीरवस्य सङ्केतकारित्वरूपव्यङ्ग्यार्थे सन्नपि वाच्यार्थापेक्षया चमत्कारी नेत्यतो गुणीभूतव्यङ्ग्यत्वम् (5)।

'प्रागुक्तध्वनिसंख्ये'त्यारभ्य 'ध्वनिसाङ्कर्य्यात् पुनर्द्वेधे'ति सूत्रद्वयम् (भ)। तयोर्व्याख्यामाह—अष्टौ प्रकारा इति पूर्व्वोक्तैः परैश्चतुरगवन्दभेदैर्ध्वनिभिः सह गुणीभूतव्यध्वनीनां

---

साहित्यनिबन्धमाले मुरलीरवस्य सङ्केतकारित्वरूपेणोद्दीपनविभावतयाऽख्यानम्—अत्र तु गोपवधूहृदयहरणकारणान्तरे सत्यपि तस्यैव परामर्शः। 'जप्पंतीए गुरुहिं'—इति हेतुगर्भविशेषणेन बोधितो हेतुः। वाक्स्तम्भः खलु सात्त्विकभावानामन्यतमः, तेनानुत्साहेन श्रीकृष्णं प्रत्यनुरागातिशय्यप्रकटनमेव व्यङ्ग्यं वस्तु, तच्चानुभावेन-वाक्स्तम्भरूपेण यथा साधु भूतं तथा नान्येनोपायेनेति वाच्यार्थस्य चमत्कारातुलनया व्यङ्ग्यार्थस्यामनोज्ञत्वम्। एवमन्यत्रापि चमत्कारह्रास एव गुणीभूतव्यङ्ग्यस्य लिङ्गमिति स्थूलतो बोध्यम्। प्रमाणञ्च तत्राधोलिखितः श्लोकसंग्रहः—

'रसध्वनिर्न यत्रास्ति तत्र बन्ध्यं विभूषणम्।
मृताया मृगशावाक्ष्या किं फलं हारसम्पदा ॥"
... ... ... ... ...
"रसभावादितात्पर्य्यमाश्रित्य विनिवेशनम्।
अलङ्कृतीनां सर्व्वासामलङ्कारत्वसाधकम् ॥"
"ध्वन्यात्मभूते शृङ्गारे समीक्ष्य विनिवेशितः।
रूपकादिरलङ्कारवर्ग एति यथार्थताम् ॥"

(ध्वन्यालोके द्वितीयोद्योते)

(भ) सूत्रद्वयमिति—एककारिकायामन्तर्भुक्तमिति शेषः। ग्रन्थकृत्कृतटीकातः गुणीभूतव्यङ्ग्यानां संख्यानयनमार्गस्य तत् ज्ञायत एव। तत्र द्वितीयसूत्रस्य परिष्कारव्याख्या

---

(5) एवं (ग) पुस्तके। अन्येषु सर्व्वेष्वपि पुस्तकेषु 'सन्नपि वाच्यार्थापेक्षया चमत्कारी नास्ती'ति निष्कर्षः पाठ उपलभ्यते।

अष्टौ प्रकारा गुणीभूतव्यङ्ग्यध्वनयः शरेषुयुगखेन्दु-(१०४५५) भेदैर्ध्वनिभिः प्रत्येकमभिसम्बध्यन्ते । तेन खयुगर्त्तुवह्निवसवो (८३६४०) भवन्ति । एते पुनर्ध्वनिसाङ्कर्येण द्वेधा (१६७२८०) भवन्ति—तेन

**व्योमदिङ्नागपक्षार्कहयर्त्तुरजनीकराः ।**
**गुणीभूतव्यङ्ग्यभेदा विज्ञेया सूक्ष्मबुद्धिभिः (ञ) ॥ ६१ का**

*॥इत्यलङ्कारकौस्तुभे गुणीभूतव्यङ्ग्यनिर्णयो नाम चतुर्थः किरणः ॥*

मिलने कृते तथा च पूर्वोक्तशरेषुयुगखेन्दुसंख्यानामष्टभिरङ्कैः पूरणे कृते खयुगर्त्तुवह्निवसुसंख्यका ध्वनयः स्युरित्यर्थः । अथ च पूर्वोक्तध्वनिभिः सह गुणीभूताष्टध्वनीनां संसृष्टेरेक एव भेद उक्तः, त्रिरूपसङ्कराणान्तु सामान्यतोऽपि एक एव भेदो विवक्षणीयः, न तु भेदत्रयमित्यभिप्रायेणाह—तेन इति शरेषुयुगखेन्दुभेदानां गुणीभूताष्टध्वनिभिः साङ्कर्ये सति पुनरपि खयुगर्त्तुवह्निवसुसंख्यका ध्वनयः स्युरित्यर्थः । दिङ्नागा दिग्घस्तिनोऽष्टौ, अर्कस्य सूर्यस्य हयाः सप्त, ऋतवः षट्, रजनीकरश्चन्द्र एक इति ॥ * * *

---

टीकाकारेण दर्शिता, मूले तु 'ध्वनिसाङ्कर्येणे'ति पदस्यार्थप्रकटनार्थं प्रयासो न कृतः । एवमादिषु स्थलेषु गणनाप्रदर्शनं केवलं प्रौढोक्तिमूलभूतं, न तु तत् सर्वत्रैव सम्भवतीति चास्माभिः प्रागेव प्रदर्शितम् । 'अन्योन्ययोगादेवं स्यात् भेदसङ्ख्यातिभूयसी'ति पुनरप्युद्घोषते वहुधे'तिप्रायं कथनं निष्कलङ्कमित्येव विद्मः ।

(ञ) सुधासागरकाराणां भीमसेनदीक्षितानां मते गुणीभूतव्यङ्ग्यानामेव तावच्चित्राख्यव्यङ्ग्यरहितसहितानां परस्परसंश्लिष्टानां पञ्चचत्वारिंशद्भेदाः (९+८+७+ ...... २+१) । सजातीयविजातीयादिभेदैः परस्परसंश्लिष्टैस्तैः २०२५ (४५ × ४५) विधाः, तत्र 'सङ्करेण त्रिरूपेण संसृष्ट्या चैकरूपया'ते ८१०० (४ × २०२५) भेदाः सङ्कीर्णाः, ४५ शुद्धाः—साकल्येन गुणीभूतव्यङ्ग्यास्तावत् ८१४५ भेदाः । व्यङ्ग्यास्तु शरेषुयुगखेन्दु-(१०४५५) प्रमाणकाः, ते च प्रागेव गणिताः । अतो ध्वनिगुणीभूतव्यङ्ग्यानामुभयेषां परस्परसंयोगात् संसृष्टिसङ्करमेलनेन (१०४५५ × ४ × ८१४५) ३४,०६,२३,९०० सङ्कीर्णाः काव्यभेदाः सुधासागरे गणिताः । वस्तुतस्त्वयं गणनाप्रकारस्तत्तन्नामसङ्कलनवैदग्ध्यमात्रस्य यथा प्रकाशकस्तथा न काव्यरसास्वादनिपुणताया इति पूर्वमेवाभिहितमस्माभिः, अतः कृतमत्र तत्प्रपञ्चेन । एतेषां काव्यभेदानां 'गुणीभूतव्यङ्ग्यभेदा विज्ञेया सूक्ष्मबुद्धिभि'रिति मूलस्थान्तरकारिकायां गुणीभूतव्यङ्ग्यकाव्यरूपेण निर्देशो 'प्राधान्येन व्यपदेशा भवन्ती'त्यभियुक्तनीतिसरणिमनुसृत्य । तथाच तत्रभवन्तो मम्मटभट्टाः स्वनिबन्धे—'यद्यपि स नास्ति कश्चिद्विषयो यत्र ध्वनिगुणीभूतव्यङ्ग्ययोः स्वप्रभेदादिभिः सह सङ्करः संसृष्टिर्वा नास्ति, तथापि

प्राधान्येन व्यपदेशा भवन्तीति क्वचित् केनचिदप्युक्तमिति इति। ननु रसध्वनौ भावध्वनि-रवश्यं वाच्यः दीपकतुल्ययोगितादलङ्कारध्वनिरूपमाद्यलङ्कारान्तर्भूत इति, तथा च कश्चन प्रधानव्यङ्ग्यभेदमादाय ध्वनित्वं कश्चनाङ्गीभूतमादाय गुणीभूतव्यङ्ग्यत्वमिति निमित्तद्वय-समावेशादिनिगमनाविरह एकतरत्वकल्पने नास्ति तावद्युक्तिरिति न वाच्यं, यतः प्राधान्यख्यापनमतिशयितचमत्कृतिमत्तयैव भवति। तथाचाङ्गीभूतरसादीनां चमत्कृत्या-ऽतिशय्ये गुणीभूतव्यङ्ग्यत्वं, अङ्गिनस्तथात्वे ध्वनित्वमिति तद्विदां व्यवहारः। अत्र तु ग्रन्थे ध्वनिगुणीभूतव्यङ्ग्ययोरितरेतरसंयोगे व्यङ्ग्यार्थस्य न तथा चमत्कारप्रकारो लक्षितो यथा तस्यातिमिश्रत्वेन व्यङ्ग्यत्वे, स च युक्तिप्रकारः नासम्यङ्, अतोऽत्र प्रागेव दर्शितात् योगरूढप्रयोगलक्ष्याद् 'गुणीभूतव्यङ्ग्य'पदाद् गुणीभूतव्यङ्ग्यत्वमेषामायातीति सुप्रतीतं वचः। गुणीभूतव्यङ्ग्यमयं काव्यमखिलमलङ्कारशोभामादायैव प्रवर्त्तते, अतो 'रूपकादिमलङ्कारं वाच्यमाचक्षते परे" इति भामहोक्तदिशा तत्र तेषामलङ्काराणां वाच्यतया स्थितिर्न्न त्वन्तरङ्गतयोत्तमत्वसाधककल्पेन। इति —

---

## अथ पञ्चमः किरणः ।

अथा'त्मा किल रस' इत्युक्तस्य काव्यपुरुषस्यात्मनो रसस्याभिव्यक्ति-लक्षणं भरतमुनिसूत्रं प्रमाणयन्नाह—

'विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्ति'रिति का (क)

Bharata—Natyasastra. *Chap.* VI.

पूर्व्वं ध्वनिप्रकरणे रसात्मकध्वनिः काव्यपुरुषस्यात्मत्वेन कथितः, अतस्तस्य रसस्याभिव्यक्तिः साक्षात्कारस्तस्य लक्षणं ज्ञापकं भरतमुनिसूत्रं प्रमाणयितुमाह—अथेति।

---

(क) भरतोपज्ञं किल रसतत्वव्याख्यानमित्युपपादयन्तो हि तत्र भवन्त आलङ्कारिका आदावेव रसविवेचनप्रसङ्गे तन्मतमेवोदाहरन्ति—अत्रापि सैव पद्धतिः। मूलोक्तमतिप्रसिद्धमेकमेव सूत्रप्रतीकमुपजीव्य बहुधा वितन्यमानश्चिन्ताप्रवाहो रसशास्त्रस्य व्यापकतामुपपत्तिं भोगादिकञ्च प्रकाशयतितराम्—तत्र तावद्रसस्वरूपनिरूपणे उत्पत्तिवादिनां भट्टमल्लादीनाम्, अनुमितिवादिनां श्रीशङ्कुकप्रभृतीनां, भुक्तिवादिनां भट्टनायकपुरःसराणाम्, अभिव्यक्तिवादिनामालङ्कारिककुलचूड़ामणीनां सुगृहीतनाम्नामभिनवगुप्तपादानां राद्धान्ताः प्रकाशकारादीनां प्राचां ग्रन्थत एवालोकनीयाः—न च तेषामतो मूले प्रपञ्चः। कौस्तुभकृतस्तु आत्मवादिनां दर्पणकृदादीनां मतमेवानुसरन्ति, युक्तञ्चैतदिति पूर्व्वमेवावोचाम। तत्र रसस्य काव्यात्मतया तदुद्घाटनमुखेन दार्शनिकविचारादिर्नात्र दर्शितो मूले—तदानीन्तनगौड़ीयवैष्णवसम्प्रदायिनो रसतत्त्वमाविष्कुर्व्वाणा बहवः श्रीरूपसनातनादिगोस्वामिपादाः पृथगेव तन्मूलान्निबन्धान्विरचयामासुः, तत्र चार्व्वाचीनानां जिज्ञासूनां स्वत एवादरः सम्भवितेति न कृतस्तत्प्रकटनप्रयासः। अपि चालङ्कारशास्त्रस्य चेह रसस्वरूपात्माद्याविष्कारकल्पने न तावन्मुख्यतस्तात्पर्य्यं किमपि कल्पनीयम्। भरतनाट्यशास्त्र-ध्वन्यालोक-दशरूपक-रसार्णवसुधाकर-रसमञ्जर्य्यादिषु बहुषु निबन्धेष्वत एव न दार्शनिकतत्त्वनिरूपणादि लक्ष्यते—सा च प्रथिता प्रथाऽत्रापि वरीवर्त्तीति। तानेवोपजीव्य विश्लेषणमुखेनात्र रसकिरणे आलोकपातः। तत्र भावविभावादिपारिभाषिकपदानां लक्षणालक्षितार्थो नाट्यशास्त्रे (षष्ठाध्याये सप्तमाध्याये च) निपुणं दर्शितः। "यथा नानाव्यञ्जनौषधिद्रव्यसंयोगाद्रसनिष्पत्तिः......, तथा नानाभावोपगता अपि स्थायिनो

विभावयत्युत्पादयतीति विभावः कारणं, अनु पश्चाद्भावो भवनं यस्य सोऽनुभावः कार्य्यं, विशेषेणाभिमुख्येन चरितुं शीलं यस्येति व्यभिचारी सहकारी ;— एतेषां संयोगात् सम्बन्धाद्रसस्य निष्पत्तिरभिव्यक्तिः। कारण-

अभिव्यक्तिरिति—साक्षात्कार इत्यर्थः। या रसनिष्पत्तिसामग्री कारणकार्य्यसहकारित्वेन लोके कथिता सैव काव्ये नाट्ये चेत्यादि।

आलम्बनमिति—यदवलम्ब्य स्थायिनः प्रवृत्ता भवन्ति तदेवालम्बनं स्थायिनामाश्रयो भवतीत्यर्थः—यथा हासस्थायिन उदाहरणे वसन्तोत्सवमालम्ब्य मधुमङ्गलस्य वाक्यात् सर्व्वेषां प्रवृत्तो यो हासस्थायी तस्यालम्बनं वसन्तोत्सवः। यथा वाऽर्ज्जुनस्य भयस्थायिस्थले विश्वरूपप्रदर्शकः श्रीकृष्ण एवालम्बनम्। यद्यपि भक्तिरसान्तरसिद्धौ विभावस्थायिभाव-

---

भावा रसत्वमाप्नुवन्तीति।'... 'दृश्यते हि भावेभ्यो रसानामभिनिर्वृत्तिर्न रसेभ्यो भावानाम्' 'न भावहीनोऽस्ति रसो न भावो रसवर्जितः। परस्परकृता सिद्धिरनयो रसभावयोः' ...'यथा बीजाद्भवेद्वृक्षो वृक्षात् पुष्पं फलं यथा। तथा मूलं रसाः सर्व्वे ततो भावा व्यवस्थिताः।''...'वागङ्गमुखरागेण सात्त्विकेनाभिनयेन (? च। कवेरन्तर्गतं भावं भावयन् भाव उच्यते॥'' 'विभाव इति कस्मादुच्यते—विभावो विज्ञानार्थः। विभाव्यन्तेऽनेन वागङ्गसत्त्वाभिनया इत्यतो विभावाः।'' ''अथानुभाव इति कस्मादुच्यते—यदयमनुभावयति वागङ्गसत्त्वकृतमभिनयम्। लोकस्वभावसंसिद्धा लोकयात्रानुगामिनः। अनुभावा विभावाश्च ज्ञेयास्त्वभिनयैर्बुधैः॥''... 'योऽर्थो हृदयसंवादी तस्य भावो रसोद्भवः। शरीरं व्याप्यते तेन शुष्कं काष्ठमिवाग्निना।' ....'कथं स्थायिन एव भावा रसत्वमाप्नुवन्ति? उच्यते—यथा हि समानलक्षणास्तुल्यपाणिपादोदरशरीराः समानाङ्गप्रत्यङ्गाः कुलविद्याकर्म्मशिल्पविचक्षणत्वाद्राजत्वमाप्नुवन्ति, तत्रैव चान्येऽल्पबुद्धयस्तेषामेवानुचरा भवन्ति, तथा विभावानुभावव्यभिचारिणः स्थायिभावानुपाश्रिता भवन्ति। ....यथा नरेन्द्रो बहुजनपरिवारोऽपि स एव नाम लभते नान्यः सुमहानपि पुरुषस्तथा विभावानुभावव्यभिचारिपुरस्कृतः स्थायिभावो रसतां लभते।' 'व्यभिचारिण इति कस्मात्? उच्यते,—वि अभि इत्येतावुपसर्गौ चरनिर्धातुः विविधमाभिमुख्येन रसेषु चरन्तीति व्यभिचारिणः! चरन्ति नयन्तीत्यर्थः। कथं नयन्ति? उच्यते—यथा सूर्य्य इदं नक्षत्रममुं वासरं नयति—न च तेन बाहुभ्यां स्कन्धेन वा नीयते, किन्तु लोकप्रसिद्धमेतत्।'' इति नाट्यशास्त्रीया निर्द्देशा उपमानमुखेन अभिनयप्रकाशरूपकमिषेणैतान्येव पदानि सुगमयन्ति। 'सर्व्वेषां समवेतानां रूपं यस्य भवेद्बहु। स संगतो रसः स्थायी शेषाः सञ्चारिणो मताः॥' रसस्य सारत्वमितरत्र निर्णीतम्—'आनन्दात्मा यतो रस' इति मन्दारमरन्दे (८।३५)। 'रसे सारश्चमत्कारः सर्व्वत्रैवानुभूयते। तच्चमत्कारसारत्वे सर्व्वत्राप्यद्भुतो रसः।' इति

कार्य्यसहकारित्वेन लोके या रसनिष्पत्तिसामग्री सैव काव्ये नाट्ये च विभावादिव्यपदेशा भवतीति सम्प्रदायः (ख)।... कारणमत्र निमित्तम्।
रसादीनां या याः प्रक्रियाः कथिताः, तद्भिन्ना एवात्र ग्रन्थे प्रक्रिया आलङ्कारिकाणामनुरोधेनोक्ताः, अतएव काचित् काचित् प्रक्रिया नात्यन्तविचारसहाऽपि, तथाऽप्यप्राकृत-

---

धर्म्मदत्तोक्त्यनुसरणं दर्पणे, 'आनन्दः सहजस्तस्य (ब्रह्मणः) व्यज्यते च कदाचन। व्यक्तिः सा तस्य चैतन्यचमत्काररसाह्वया॥—आद्यस्तस्य विकारो यः सोऽहङ्कार इतीरितः। ततोऽभिमानस्तत्रेदं समाप्तं भुवनत्रयम्। अभिमानाद्रतिः सा च परिपोषमुपेयुषी। व्यभिचार्य्यादिसामान्याच्छृङ्गार इति गीयते॥' इत्याद्याग्नेये (३३८ अध्याये) रसपर्य्यालोचनप्रसङ्गे इत्थं दर्शितस्य रसस्यास्वादसुलभ आनन्द इति तत्पश्चादेव तदालोचनप्रसङ्गो मूले ग्रन्थकृता निहितः।.....

(ख) परमार्थतस्त्वखण्ड एक एव रसः, लोके च रसनिष्पत्तिसामग्रीसम्भारस्य स्फुरणेऽपि खण्डशस्तेषां रसोद्बोधकत्वरूपेण न सार्व्वत्रिको बोध इति तु सुप्रतीतं, परं काव्ये दृश्ये श्रव्ये च रसस्य प्रकाशशरीरमुपलभ्य विश्लेषणद्वारा तेषां खण्डतया बोधोऽभ्युपेयते, इति ह्यलङ्कारशास्त्रविदां प्रौलो। इयञ्च प्रक्रिया सामाजिकानां भक्तानान्तदितरेषाञ्च रत्यादीन् भावानास्वादाङ्कुरप्रादुर्भावयोग्यान्नितरां साधयतीति दार्शनिकमतमतिवर्त्तमानाऽप्यत्रलभ्यते। रसात्मकस्य वाक्यस्योपलब्धिरेव ब्रह्मसाक्षात्कारसोदरतया वर्ण्यते—सा च साधनादिकल्पनमन्तरेण न सम्पाद्या, अतो नात्र काचिद्विडम्बना। एवमेव वाक्यपदीयकारः स्वनिबन्धे 'शब्दोपहितरूपांस्तान् बुद्धेर्व्विषयतां गतान्। प्रत्यक्षानिव कंसादीन् साधनत्वेन मन्यते।'' रसनिष्पत्तिरिति—परमार्थतो रस एवास्वादाङ्कुरकन्दः, लौकिके तु बोधे षष्ठीसमासकल्पना—यदाहुर्द्दर्पणकाराः—'यद्यपि रसाभिन्नतया रसःस्यापि न कार्य्यत्वं, तथापि तस्य कादाचित्कतयोपचरितेन कार्य्यत्वेन कार्य्यत्वमुपचर्य्यते'' इति। काव्ये नाट्ये च आलङ्कारिकोपक्रमं विभावादिसंज्ञाकलापकमिति प्रागेव दर्शितमस्माभिः—भक्तिशास्त्रस्य, विशेषतो गौड़ीयवैष्णवपण्डितमण्डलीमण्डितस्य तस्यालङ्कारिकप्रक्रियादिशमनुसरतः (*Vide* the article on Bhakti by Sir G. Grierson in the Encyclopaedia of Religion and Ethics न विभिन्नः संज्ञ संहितादिः। तथाच भक्तिरसामृतसिन्धौ भक्तेः रसत्वेनालङ्कारिकसरणिमनुसृत्य प्रकाशः श्रीमद्रूपगोस्वामिपादैर्द्दर्शितः—तद्यथा विभावैरनुभावैश्च सात्त्विकैर्व्यभिचारिभिः। स्वाद्यतां हृदि भक्तानामानीता श्रवणादिभिः। एषा कृष्णरतिः स्थायिभावो भक्तिरसो भवेत्।'' कारणकार्य्येति—एतच्च लौकिकबोधप्रवृत्तिमनुसृत्य—यदुक्तं दर्पणे 'कारणं कार्य्यसञ्चारिरूपा अपि हि लोकतः। रसोद्बोधे विभावाद्याः कारणान्येव ते मताः।'' तत्त्वसाक्षात्कारस्य ज्ञानकक्षाधिरोहणवर्णनं नास्वाभाविकम्। (In man as he now exists, intuition is the fringe or *penumbra*

विभावादीनां स्वरूपमाह—

विभावो द्विविधः स्यादालम्बनोद्दीपनाख्यया ।
आलम्बनन्तदेव स्यात् स्थायिनामाश्रयो हि यत् ॥
यत्तानेवोद्दीपयति तदुद्दीपनमिष्यते ।
एभिरेव व्यञ्जकैस्तु त्रिभिरुद्रेकमागतैः ।
आस्वादाङ्कुरकन्दोऽसौ भावः स्थायी रसायते ॥ ६२ का

मुख्यरसवर्णनप्रसङ्ग एकैव प्रक्रिया भवतीति नासमञ्जसमिति ज्ञेयम् (ग)। यदिति—यदस्तु तान् स्थायिभावानुद्दीपयति प्रकाशयति तदुद्दीपनं—यथा हासस्थले विदूषकस्य मधमङ्गलस्य वैकृत्यम्। अत्रैवानुभावो नयनस्फारतादिः। एतन्मते सात्त्विका अप्यनुभावान्तर्गता एव न तु स्वतन्त्रा इत्यपि ज्ञेयम्। उद्रेकं प्रत्यक्षमागतैः प्राप्तैरेभिरेव व्यञ्जकैरसौ स्थायिभावो रसायते रसस्वरूपत्वेन परिणतो भवति। स्थायी कथम्भूतः? आस्वादाङ्कुरस्य रसास्वादरूपकार्य्यस्य कन्दो वीजरूपः। अथ स्थायिभावस्य नित्यत्वेन

---

of intellect') कारणकार्य्यादिवर्णनं साकल्यसंग्रहपरमिति स्फुटं, यदुक्तं काव्यप्रकाशटीकाकृद्भिः 'एवञ्च विभावादीनां दण्डचक्रादिन्यायेन सम्भूयैव कारणत्वं न तु तृणारणिमणिन्यायेनैकैकस्ये'ति।

(ग) नात्यन्तविचारसहाऽऽदि—एतच्च ग्रन्थकृता लक्षितं रसस्य प्राकृताश्रयतापत्तं भक्तिरसस्याप्राधान्यमित्याद्यखिलं भक्तिरसामृतसिन्ध्वादिवैष्णवप्रामाणिकनिवन्धेभ्यो वैमत्यं पश्यद्भिरुज्ज्वलनीलमणिटीकाकृद्भिर्गोस्वामिचक्रधुरीणैर्विश्वनाथचक्रवर्त्तिभिरनुपादेयत्वमिथेषा सकटाक्षपातं सूच्यते। कविकर्णपूरगोस्वामिपादाः खल्वपरगोस्वामिन इवाप्राकृताश्रयस्य रसस्य मुख्यत्वमङ्गीकुर्व्वाणा अप्यालङ्कारिकचक्रमतचारिणः सन्तस्तत्तत्पद्धतिञ्चानुसरन्ति। नैतदसुष्ठु—यतोऽखिलसामाजिकानामेकैव प्रवृत्तिर्न भविता, न च खलु सर्व्वैर्भक्तिस्तत्सायुज्यं वा काव्यस्य सारोज्जीव्यतया स्वीकर्त्तुं शक्यः। आलङ्कारिकाणां काव्यतत्त्वोद्बोध एव तात्पर्य्यं, काव्यस्य हि सर्व्वत्रैव सकलहृदयहारकं चमत्कारमाश्रित्यैव चरितार्थता, न तु भावप्रवणसम्प्रदायविशेषादरऽमुपनीय शास्त्रस्य शास्त्रकाव्यस्येव वा काव्यस्य महनीयता। न च खलु सर्व्वे भक्ताः—भक्तास्तु सम्प्रदायविशेषाः। आलङ्कारिकाणां निखिलकाव्यपद्धतिप्रकटनमेव लक्ष्यम् (Criticism stands like an interpreter between the inspired and the uninspired—Carlyle) अन्यथाऽशिष्टानां काव्ये विमुखीभावो भविता अतो ग्रन्थकृद्दर्शितप्रक्रियायां दोषाविष्करणं न सम्यक्।

एतेन रसस्य कारणकार्य्यादीनि नैतानि, अपि तु अनुभावस्य कार्य्यस्य कारणं विभावः—व्यभिचारी यः सोऽप्यनुभावस्य सहकारी ; त्रय एव समुदिताः सन्तः स्थायिनं रसीभावमापादयन्ति । स्थायी समवायि कारणम्, आलम्बनोद्दीपनविभावौ निमित्तकारणं, स्थायिनो विकारविशेषोऽसमवायिकारणं (१) रसाभिव्यक्तेरेव, न तु रसस्य (घ)।

अथ कोऽसौ भावः स्थायी भवतीति तं निरूपयति—

**आस्वादाङ्कुरकन्दोऽस्ति धर्म्मः कश्चन चेतसः।**
**रजस्तमोभ्यां हीनस्य शुद्धसत्त्वतया सतः॥**

तत्परिणामरूपस्य रसस्यापि नित्यत्वम्, अतो रसं प्रति न विभावादीनां कारणत्वादि सम्भवति, किन्त्वनुभावादीन् प्रति कार्य्यत्वकारणत्वसहकारित्वप्रत्वाऽनिर्व्वाहस्तु तेषामेव मध्य एकं प्रत्यन्यस्य कारणत्वमादायैवेत्याह—एतेनेति। ननु स्थायिनः परिणामित्वे (२) कथं नित्यत्वं, कथं वा परिणामावस्थाऽपन्नस्य रसस्य नित्यत्वमिति चेदुच्यते—यथा नित्यस्य श्रीकृष्णस्य परिणामरूपाणां बाल्यपौगण्डकैशोराणां नित्यत्वं किन्तु भक्तानां दर्शनोत्कण्ठाजगद्उद्धारादिप्रयोजनं निमित्तीकृत्य कदाचित्तेषां प्राकट्यं, सिद्धे च प्रयोजने कदाचित्तेषां प्रपञ्चागोचरत्वरूपमप्राकट्यञ्च, तथाऽत्रापि विभावादीनां मेलने सति भक्तहृदये रसस्य प्राकट्यं, तेषामन्तर्द्धाने सति रसस्याप्राकट्यं ज्ञेयम्—परन्तु प्राकृतवस्तुनि पूर्व्वदशां परित्यज्यैव तत्परिणामस्योत्पत्तिः, अप्राकृतवस्तुनि त्वचिन्त्यशक्त्या पूर्व्वदशापरित्यागं विनैव तत्परिणामस्य प्राकट्यम्, उभयोर्न्नित्यत्वादिति भेदो ज्ञेयः। असमवायिकारणमिति—स्थायिनो हेतुभूताच्चित्तस्य द्रवीभावरूपविकारविशेषो रसाभिव्यक्तेरेव समवायिकारणमित्यर्थः। न तु रसस्येति—स्थायिनो नित्यत्वात्तत्परिणामरूपरसस्यापि नित्यत्वमिति भावः।

धर्म्म इति—रजस्तमोभ्यां रहितस्य शुद्धसत्त्वतया सतो विद्यमानस्य चेतसः कश्चन धर्म्म एव स्थायी। रजस्तमसोरभावेन सामाजिकानामविद्याराहित्यं स्वत एवायातम्, अतस्तेषां सत्त्वमपि (३) न मायावृत्तिरूपमपि तु चिद्रूपमेव, अतएव तेषां रसास्वादकचित्तनिष्ठ-

---

(घ) न तु रसस्य—'रसो वै सः' इति श्रुत्या रसस्य नित्यशुद्धपरमपुरुषस्वरूपत्वेन न विकृतिमयत्वं सम्भवि। अतो विकारविशेषास्तस्य कारणानि न, परमभिव्यक्तिपक्षमुररीकृत्यैव कारणत्वकल्पनेत्यलं बहुना।

---

(१) 'विकारविशेषो समवायिकारण'मिति (ख) पुस्तके अनवधानपुरःसरः पाठो लभ्यते।

(२) 'स्थायिनः परिणामत्वे' इति मुद्रितपुस्तक एव नातिसङ्गतः पाठः।

(३) 'अतस्तेषां शुद्धसत्त्वमपी'ति (क) (घ) (ङ) पुस्तकेष्वधिकः पाठः।

**स स्थायी कथ्यते विज्ञैर्विभावस्य पृथक्तया ।**
**पृथग्विधत्वं यात्येष सामाजिकतया सताम् ॥ ६३ का**

सामाजिकतया सतां सामाजिकानामेक एव कश्चिदास्वादाङ्कुरकन्दो मनसः कोऽपि धर्म्मविशेषः स्थायी । स तु विभावस्योक्तप्रकारद्विविधस्य भेदैरेव भिद्यते (ङ) ।

अनुकार्य्याणान्तु स्वतन्त्रा एव स्थायिनो नानाविधाः । यथा—

**शृङ्गारे रतिरुत्साहो वीरे स्याच्छोकविस्मयौ ।**
**करुणाद्भुतयोर्हासो हास्ये भीतिर्भयानके ॥**
**जुगुप्सा बीभत्ससंज्ञे कोपो रौद्रेऽष्ट नाट्यगाः ॥ ६४ का**

धर्म्मोऽपि ह्लादिनीशक्तेरानन्दात्मकवृत्तिरूप एव, न तु जड़ात्मकः—तथात्वे स्थायिभावस्वरूपस्य जड़ात्मकतादृशधर्म्मस्य विभावादिभिः कारणैरानन्दात्मकरसरूपत्वानुपपत्तेः, न हि जड़परिणामरूप आनन्दो भवतीति। एक एवेति—ननु स्थायिभावरूपधर्म्मस्यैकत्वे कथमेकस्य स्थायिनो वीररस उत्साहत्वं, करुणरसे शोकत्वम्, अद्भुतरसे विस्मयत्वं भवति, परस्परविरुद्धानामेतेषामुत्साहत्वादीनामेकस्मिन् स्थायिरूपधर्म्मे वृत्तित्वाभावादित्यत आह—स त्विति।—स एकोऽपि धर्म्म उक्तप्रकारकद्विविधस्य विभावस्य भेदैरेव भिन्नो भवतीत्यर्थः। यथैक एव स्फटिको जवाकुसुमादिनानापदार्थानां सङ्गात् कदाचिद्रक्तः कदाचित् पीतः कदाचिच्छ्याम इत्यादिविविधाकारो भवति तथैवैक एव स्थायिरूपो धर्म्मो वीररसादिपोषकानां नानाविधविभावानां सङ्गात् कदाचिदुत्साहरूपः कदाचिद्विस्मयरूपः कदाचिच्छोकरूप इत्यादिविविधाकारो भवतीति भावः। एतादृशैकस्थायिरूप धर्म्मः प्रपञ्चान्तर्गतसामाजिकानां स्वच्छरतिमतामेव रसास्वादकः, न तु पार्षदानां, न वा तदनुगतानां साधकानां, तेषान्तु स्वतःसिद्धा एव ये ये स्थायिनो वर्त्तन्ते त एव रसास्वादका भवन्तीति ज्ञेयम् (ङ) ।

---

(ङ) स्थायिभावस्यालम्बनोद्दीपनविभावगतत्वेन बहुधा प्रकारो विभिन्नता च, तमाश्रित्य रसस्य प्रवर्त्तमानत्वात् रसोऽपि विविध इत्यायाति। स च प्रसिद्धः सिद्धान्त इतरथा सिद्धोऽप्यत्र विभावाद्याश्रयभेदे भेदस्तदाश्रितानां रसानां स्वत एव वरीवर्त्तीत्याशयेनात्र सूत्रे निहितः, इयञ्च पद्धतिरवतारिता। इतरथा सिद्धिर्यथा सिद्धाचार्य्यहेमचन्द्रचरणानामधोलिखित युक्तिसूक्तितो कथ्यते—"जात एव हि जन्तुरियतीभिः संविद्भिः परीतो भवति। तथाहि दुःखद्वेषी सुखास्वादानलालसः सर्व्वो रिरंसया व्याप्तः स्वात्मन्युत्कर्षमानितया परमुपहसति, उत्कर्षापायशङ्कया शोचति, अपायं प्रति क्रुध्यति, अपायहेतुपरिहारे समुत्-

एतेऽष्टौ स्थायिनोऽष्टासु नाट्यरसेष्विति केचित्। केचित्तु 'निर्व्वेदस्थायिभावोऽस्ति शान्तोऽपि नवमो रस' इति शान्तोऽपि नाट्ये रसः। भोजस्तु वत्सलप्रेमभ्यामेकादश रसानाचष्टे—वात्सल्ये ममकारः, प्रेमणि चित्तद्रवः स्थायी; एकादशैव दृश्ये श्रव्येऽपि च रसिक-संसदः प्रेष्ठाः (च)। (4)

Kavyaprakasa— Ullasa IV.

अनुकार्य्याणामिति—येषामनुकरणं नटाः कुर्व्वन्ति तेऽनुकार्य्या रामसीतादयः, तेषान्तु स्वतःसिद्धाः स्वतन्त्रा एव नानाविधाः स्थायिनो वर्त्तन्ते—तदेवाह—यथेति।

नाट्यरसेष्विति—लोके भयजनकव्याघ्रादिदर्शनाद्भयजन्यदुःखमेव जायते, न त्वानन्दात्मक-भयानकरसः—अतो नाट्य एव सामाजिकानां रस इति भावः (च)। एकादशैव रसा इति रसिकसंसदः सामाजिकस्य प्रेष्ठाः।

---

सहते, विनिपातादिभेति, किञ्चिदयुक्ततयाऽभिमन्यमानो जुगुप्सते, ततश्च परकर्त्तव्यवैचित्र्य-दर्शनादिस्मयते, किञ्चिज्जिहासुस्तत्र वैराग्यात् प्रशमं भजते। न हि कदाचिच्चित्त-वृत्तिवासनाशून्यः प्राणी भवती"ति। एष च भावानामुद्भावनप्रकारस्तदाश्रितरसस्य प्राक्तनालम्बनतापन्नसुपजीव्य सिद्धोऽप्यन्यमते सुतरामयुक्तो नेति विदुषामूहनीयम्। परं प्राक्तननायकगतो यो भावः स रसनिर्य्यासस्वादार्थमवतारिणि श्रीकृष्णे लक्षितश्चेदन्यथा विजृम्भते, एवमपि पार्षदसाधकाद्याश्रितो यः स इतरसामाजिकाश्रिताद्भावाद्भिन्नः। एवं चन्द्रचन्दनमलयमारुतादिगतो भावो विद्युच्छिन्नशीकरादिगताद्भिन्नः। एतत्तु चैतत्प्रसङ्गे स्मरणीयं यत् स्वच्छरतिमतामेव रसास्वादनं, नान्येषाम्। एवमपि धर्म्मदत्तः—

सवासनानां सभ्यानां रसस्यास्वादनं भवेत्।
निर्व्वासनास्तु रङ्गान्तःकाष्ठकुड्याश्मसन्निभाः॥ इति।

(च) कतरोऽयं भोजः शृङ्गारप्रकाशकर्त्ता तदितरो वेति न विदितं विदुषामपि, अत एकादशेति संख्यायां तन्मतानुयायिन्यां न किमपि तात्पर्य्यं समाकलनीयम्। शृङ्गारप्रकाशमतमुद्धृत्य मन्दारमरन्दे नवधा कल्पितानां रसानामैक्यं प्रतिपादितम्—तद्यथा—"अथ भोजनृपादीनां मतमत्र प्रकाश्यते। रसो वै स इति श्रुत्वा रस एकः प्रकीर्त्तितः। अतो रसः स्याच्छृङ्गार एक एवेतरे तु न॥" षड् रसा इति रसशास्त्रभिषजस्तदनुसारिणः केचिदलङ्कारमार्गगा अपि। शान्तवर्ज्जमष्टौ रसाः दृश्ये श्रव्ये च काव्ये इति भरतनाट्यशास्त्रानुसारिणो धनिकादयः। नव रसा इति भूयांसोऽभिनवगुप्तादयः। ते च सर्व्वे नाट्येऽपि, यदाहुः सङ्गीतरत्नाकरकाराः स्वनिबन्धस्यान्तिमाध्याये—'अष्टावेव रसा

---

(4) अत्र जर्मं 'वैलोरफकता रिया स्वलयोगविषयाऽसम्योगविषया चे'ति मुद्रितपुस्तके एवाधिकः पाठ उपलभ्यते।

तत्र रतिर्यथा—

रतिश्चेतोरञ्जकता सुखभोगानुकूल्यकृत्।
सा प्रीतिमैत्रीसौहार्द्दभावसंज्ञाश्च गच्छति॥ (क)
या सम्प्रयोगविषया सा रतिः परिकीर्त्तिता।
सम्प्रयोगः स्त्रीपुरुषव्यवहारः सतां मतः॥

रतिर्यथेति—चित्तस्य रञ्जनं द्रवीभावस्तज्जनकधर्म्मविशेष एव चेतोरञ्जकता। सैव सम्प्रयोगविषया चेत्तदा रतिरुच्यते—इयमेव चित्तस्य कठोरत्वं दूरीकृत्य कोमलत्वं द्रवीभावञ्चोत्पादयति। पूर्व्वं सामाजिकानां स्थायिरूपो यो धर्म्मो ह्लादिनीशक्ते-र्वृत्तिरूपेणोक्तस्ततोऽपि कोटिगुणितानन्दरागाया ह्लादिनीशक्तेः सारवृत्तिस्तद्रूपेयं रतिः—अस्या एव रतेः पाकात् पाकान्तरं प्राप्य चरमदशायां महारागपर्य्यन्तपाको भविष्यति। अतएव दशमस्कन्धे तादृशं महारागं दृष्ट्वा उद्धवः सचमत्कारमाह 'क्वेमाः क्व चैष परमात्मनि रूढ़भाव' इति। रूढ़भावस्यापरपर्य्यायो महारागो महाभाव इति च। सुखभोगेति—क्षुधा यथाऽन्नव्यञ्जनादीनां भोजनजन्यसुखस्यानुकूल्यं करोति तथेयं रतिरपि श्रीकृष्णस्य नामरूपगुणलीलाश्रवणदर्शनादिजन्यसुखभोगानामानुकूल्यं करोति। रति-मतां यथा श्रीकृष्णस्य नामगुणलीलाऽऽदिश्रवणदर्शनादिजन्यं सुखं जायते न तथा रति-शून्यानामिति ज्ञेयम्। सख्यस्य यत्किञ्चिद्वैलक्षण्यमादाय भेदत्रयमाह—सेति। सा रतिभिन्ना चेतोरञ्जकता संज्ञात्रयं गच्छति।

---

नाट्येष्विति केचिदभ्युदन्। तदचारु, यतः कश्चिन्न रसं स्वदते नटः॥' इत्यादिना नाट्येऽपि शान्तरसोऽस्तीति व्यवस्थापितम्। हरिहरकृते भर्त्तृहरिनिर्व्वेदे कृष्णमिश्रकृते प्रबोध-चन्द्रोदये च तस्याङ्गित्वेनोपलब्धिः वालचरितशाकुन्तलोत्तरचरितादौष्वितरेष्वङ्गत्वेनेति रसिकसंसदो राद्धान्तः। दश वत्सलसहिता इत्यन्ये। द्वादश दास्यसख्यवात्सल्ययुताः प्रसिद्धाः शृङ्गारादय इत्यर्व्वाचीना वैष्णवालङ्कारिका बहवः। अत्र तु सख्यस्य न विशिष्ट-रसकथायां गणना, रतावेव तस्यान्तर्भावनिर्द्देशात्—अन एकादशेति कथनम्। ते च श्रीमद्भागवते चाणूरवधप्रसङ्गे (१०।४३।१०) सूचिताः—यथा—

मल्लानामशनिर्नृणां नरवरः स्त्रीणां स्मरो मूर्त्तिमान्
गोपानां स्वजनोऽसतां क्षितिभुजां शास्ता स्वपित्रोः शिशुः।
मृत्युर्भोजपतेर्व्विराड़विदुषां तत्त्वं परं योगिनां
वृष्णीनां परदेवतेति विदितो रङ्गं गतः साग्रजः॥"

श्रीधरस्तु द्वादशापि रसानिहावर्णयदिति व्रजानन्दिनी। गोपानां स्वजन इति

**असम्प्रयोगविषया सैव प्रीतिर्निगद्यते ॥ ६५ का**

सैव चेतोरञ्जकता।

**सखिपत्न्यां पतिसखे द्रौपदीकृष्णयोर्यथा।**

**द्वयोः सखीषु सखिषु सैव मैत्री निगद्यते ॥ ६६ का**

द्वयोः स्त्रीपुरुषयोः--स्त्रीणां सखीषु, पुरुषाणां सखिषु।

द्रौपदीकृष्णयोः सख्यं प्रीतिरुच्यते। तथा स्त्रीणां सखीषु परस्परसख्यं मैत्र्युच्यते, एवं पुरुषाणां सखिषु परस्परसख्यञ्च मैत्र्युच्यते। इयं मैत्री परस्परस्कन्धादिषु हस्तादि-

---

सख्यद्वासयोः, स्वपित्रोः शिशुरिति वत्सलकरुणयोः, वृष्णीनां परदेवतेति दास्यस्य च सम्मतत्वात्। शेषाः नव सुलभ्याः। एते द्वादश रसाः सर्व्वेऽपि एकतो विपरिणमनीयाः। प्रेमवत्सलसख्यानां रतौ भावापरसंज्ञदेवताविषयकरतौ वाऽन्तर्भावः सुशकः। इतरेषां परिवृत्ती रत्नापणे कुमारस्वामिना दर्शिता। "चतुर्व्वर्गमध्ये सर्वप्राणिसुलभस्य कामस्य सर्व्वहृदयङ्गमत्वात् प्रथमं शृङ्गारः, ततस्तज्जन्यत्वेन हासः। ततस्तद्विरोधित्वात् करुणः। ततस्तन्निमित्तभूतोऽर्थप्रधानो वीरः। ततोऽर्थकामयोर्धर्म्ममूलत्वाद्धर्म्मप्रधानो वीरः। तस्य भीताभयप्रदानसारत्वात्तदनन्तरं भयानकः। ततस्तत्कारणभूतो वीभत्सः। वीराच्चिप्र-भयानकाद्यनन्तरं वीररसफलभूतोऽद्भुतः। त्रिवर्गफलकरसानन्तरं मोक्षफलकः शान्त इत्येवमुद्देश्यक्रमोपपत्तिः।" वैष्णवालङ्कारिकवर्य्यैः श्रीरूपगोस्वामिचरणैरपि तत्पूर्व्व-कृतिभिः कल्पितानां द्वादशानां रसानामेकत्वं प्रतिष्ठापितम्। स च भक्तिसंज्ञः, रतिरिति वहुलं तस्याख्या। 'सा द्वेधा रसज्ञैः परिकीर्त्तिते'ति तत्कृतरसामृतसिन्धौ। मुख्यशब्दः शान्तप्रीतिप्रेयोवत्सलमधुराख्ये शृङ्गारभेदे, गौणशब्देन इतरेषां वीरहास-करुणादीनां संप्राप्तिः। एवमप्युज्ज्वलनीलमणावुपक्रमे 'मुख्यरसेषु यः संक्षेपेणोदितो रहस्यत्वात्। पृथगेव भक्तिरसराट् स विस्तरेणोच्यते मधुरः॥' इत्येकेनाखिलस्य तस्य परामर्शः। 'मुख्यगौणानां, 'दृश्यश्रव्ययो'रेवं पृथक्करणमालङ्कारिकसम्प्रदायसिद्धं—यथा काव्यप्रकाशे—'अष्टौ नाट्ये रसाः स्मृताः' इति प्राक्, पश्चात् 'शान्तोऽपि नवमो रस' इति निर्द्देशः, दर्पणेऽपि 'इत्यष्टौ रसाः शान्तस्तथा मत' इति शान्तस्य पृथक्तया सूचनम्। श्रव्ये तु नवैवेत्यभिप्रायाभिधानमेतदिति केचित्। न तद्रुचिरमित्युक्तमेवेह प्राक्। नानुकार्य्यगतो रसः, अपि तु रस आत्मगत इत्यतो दृश्ये श्रव्ये च काव्ये समानसंख्यका एव रसाः—अतो मूले दृश्ये श्रव्येऽपीति प्रतीकम्।

(छ) रतिरेव सर्व्वमाक्रम्य तिष्ठति—अस्या एव रतेः शान्तप्रीत्यादिना पञ्चधा मुख्यत्वेन कल्पनं, वीरहासादिष्वष्टधा गौणत्वेनापि निर्द्देशः। रतेरित्थं भेदास्तत्प्रपञ्चस्तु नीलमण्यादिषु ग्रन्थेषु सूचितास्तत्रैव तत् द्रष्टव्यम्।

**मनोवृत्तिमयी प्रीतिर्म्मैत्री स्पर्शादिकोचिता।**
**निर्व्विकारा सदैकाभा सा सौहार्द्दमितीष्यते ॥(ज)॥ ६७का**

**सदैकाभा सदैकरूपा सा चेतोरञ्जकता सौहार्द्दम्—सा च स्त्रीसखीनां पतिसखीनाञ्च परस्परविषया।**

स्पर्शकर्म्मण्युचिता भवति, स्त्रीणां परस्परयथेष्टस्पर्शादिव्यवहारे दोषो नास्ति—एवं पुरुषाणामपि ज्ञेयम्। प्रीतिसौहार्द्दाभ्यामेतावन्मात्रविशेषो मैत्र्यां ज्ञेयः—तत्र तत्र स्त्रीपुरुषसख्ये स्वच्छन्दस्पर्शानौचित्यात् स्त्रीसखीनां स्त्रीणां पतिसखीनां पुरुषाणाञ्च परस्परविषया। निर्व्विकारेति—स्त्रीपुरुषयोः परस्परदर्शनेऽपि विकाररहितेत्यर्थः।

ननु श्रीकृष्णस्य देवोत्तमत्वेन सर्व्वव्यापकत्वादिरूपत्वेन स्तवकर्त्तुर्भक्तस्य यः स्थायी सः (5) सम्प्रयोगाविषयत्वाभावान्न रतिशब्दवाच्यः, किन्तु तस्य स्थायिनो 'भाव' इति स्वतन्त्रसंज्ञा

---

'विदग्धानां मिथो लीलाविलासेन हि यत् सुखम्।
न तथा सम्प्रयोगेन स्यादेवं रसिका विदुः॥'

इत्यसम्प्रयोगविषयाया स्त्रीजनालम्बनायाः पुरुषालम्बनायाश्च रतेः स्तुतिः श्रीरूपगोस्वामिचरणानां ग्रन्थे।

(ज) आन्तरं भावमुपजीव्य वर्त्तमानाया अपि रतेर्ब्बहिरभिव्यक्तिनो व्यक्तितोचिता। अस्याश्चेह लक्षितायाः प्रीतिर्म्मनोवृत्तिमयत्वकल्पनम्। मैत्र्यास्तु स्पर्शादिबाह्याभिव्यक्तिमत्त्वं, सौहार्द्दे त्वपरिवर्त्तनशीलत्वमेव मुख्यं लिङ्गं, विश्वासो मित्रभावश्च सख्यं द्विविधमीरितम्। अस्या अत्र वैष्णवशास्त्रदर्शितपद्धत्या आलम्बनभेदेन विभागः, विस्तरस्तु भक्तिरसामृतसिन्ध्वादौ द्रष्टव्यः। एषु भेदेषु केचित् कामानुगाया भक्तेर्व्विम्बानुविम्बभूताः, केचन सम्बन्धरूपायाः, इत्यादिविचारस्तु नात्र कृतः। भावः—एष सर्व्वातिशायिमाहात्म्यान्महाभावाख्याङ्गिन इत्यमन्यत्र लक्षितश्च—

'शुद्धसत्त्वविशेषात्मा प्रेमसूर्य्यांशुसाम्यभाक्।
रुचिभिश्चित्तमासृण्यकृदसौ भाव उच्यते॥' (भावभक्तिलहर्य्याम्)

मैत्र्यसख्ययोर्भेदो दर्शितः श्रीमद्रूपगोस्वामिचरणैः लक्षणप्रदर्शनव्याजेन यथा—

"भावज्ञैः प्रोच्यते मैत्रं विश्रम्भो विनयान्वितः।"
"विश्रम्भः साध्वसान्मुक्तः सख्यं स्ववशतामयः॥"

रतौ प्रीतिस्तु न तथा, रागस्य विभावो विलासो विस्तारश्च वर्त्तते। कृष्णार्ज्जुनयोः सौहार्द्दं—श्रीकृष्णरुक्मिण्योः प्रीती रतिर्व्वा।

---

(5) एवमेव सार्व्वत्रिकः पाठः। 'रतिशब्दवाच्य इति' इत्युक्ते त्वाकाङ्क्षापर्य्यवसानतया साधुः स्यात्।

**सैव देवादिविषया रतिर्भावश्च कथ्यते ॥ ६८ का**

सैव चेतोरञ्जकता — आदिशब्दाद्गुरुप्रभृतिश्च ।

**या सम्प्रयोगविषया साऽप्यवस्थाविशेषतः ।**

**पाकात् पाकान्तरं प्राप्य चरमे पर्य्यवस्यति ॥ (ञ) ६९ का**

श्रेयेत्याह—सैवेति । देवः श्रीकृष्णस्तस्य देवत्वसर्व्वव्यापकत्वादिरूपेण या चेतोरञ्जकता सैव भावः—अयमेव भक्तिरसो भवतीत्यग्रे वक्ष्यति (झ) । किन्त्वयं भावरूपस्थायी सम्प्रयोगविषया या रतिस्तस्याः परिणामरूपो यो भावस्तस्माद्भिन्न एव ज्ञेयः ।

अवस्थाविशेष इति —रत्युत्तरश्रवणकीर्त्तनादिभजनानां पौनःपुन्येन जातो यो रतेरुत्कर्षरूपावस्थाविशेषस्तं प्राप्येत्यर्थः, सा, रतिरुत्कर्षदशां प्राप्य प्रथमपाकाद्भावरूपेण

---

(झ) भक्तिरसो भविष्यतीति—एतच्च सम्प्रदायिमतानुसारेण—अलङ्कारनिवन्धे भक्तिरसस्य रतित्वेन भावतया वा निर्व्वाहो नातिदुःसाध इति पूर्व्वमेवावोचाम ।

"अन्याभिलाषिताशून्यं ज्ञानकर्म्माद्यनावृतम् ।
आनुकूल्येन कृष्णानुशीलनं भक्तिरुत्तमा ॥"

सा च भक्तिर्न्न सामाजिकमात्रहृदवर्त्तिनी, अतोऽलङ्कारशास्त्रे तमनुलक्ष्य भेदादिकल्पनं न यथार्थम् । कविकर्णपूरगोस्वामिपादास्तु क्वचिदुभयमतसामञ्जस्यसाधनमिच्छन्तः स्वकीयमतजाले असामञ्जस्यं जटिलताञ्चानयन्ति । यो भावोऽत्र रतेर्भेदत्वेनोक्तः स पश्चाद्भिन्नत्वेन गण्यत इति नातिसुन्दरं समाधानम् ।

(ञ) सर्व्वे एव भावा यथोक्तविवर्त्तभेदाः—चरमे विवर्त्ते महाभावस्य विलासः ।

'शृङ्गाररससर्व्वस्वं शिखिपुच्छविभूषणम् ।
अङ्गीकृतनराकारमाश्रये भुवनाश्रयम् ॥'

इति लीलाशुकोक्तौ सैव परिणतिरुपभोग्या । रसस्याभिव्यक्तेः परां काष्ठामालम्ब्यैवोक्तं रससर्व्वस्वे श्रीमद्भागवते प्रथमे—

'निगमकल्पतरोर्गलितं फलं शुकमुखादमृतद्रवसंयुतम् ।
पिबत भागवतं रसमालयं मुहुरहो रसिका भुवि भावुकाः ॥"

'प्रेम'पदेन साधारण्येन परिचिताया अस्या रतेः प्रकर्षतारतम्यात् क्वचित् संज्ञान्तराण्यपि प्रदर्श्यन्ते, ते चेत्थं निर्द्दिष्टा नीलमणौ—

"इयमेव रतिः प्रौढ़ा महाभावदशां व्रजेत् ।
या मृग्या स्यादिमुक्तानां भक्तानाञ्च वरीयसाम् ॥
स्याद्दृढ़ेयं रतिः प्रेमा प्रोद्यन्स्नेहः क्रमादयम् ।
स्यान्मानः प्रणयो रागोऽनुरागो भाव इत्यपि ॥

चरम पाके यतः पाकान्तरं नास्ति, यथेक्षुरसः सितोपलापाकावधिः ।

यदुक्तम्—

"यथेक्षूणां रसो ह्यामः पाकात् पाकान्तरैर्गुड़ः ।
गुड़ोऽपि पाकतः पाके चरमे स्यात् सितोपला ॥
तथा रतिर्भावपूर्व्वरागरागाख्यपाकतः ।
अनुरागः स प्रणयप्रेमभ्यां पाकमागतः ।
स्नेहपाकमथो याति महारागोऽयमुच्यते ॥"

Anantadasa's Rasa-sudhakara (?)

Sahityadarpana. Chap. III

'निर्व्विकारात्मके चित्ते भावः प्रथमविक्रिये'त्युक्ते रतेः पथमः पाको भावः ।

कोऽसौ रसो यस्याभिव्यक्तये विभावादीनां कारणत्वमित्यपेक्षायां(6) तत्स्वरूपमाह—

परिणतो भवति। अत्र पाकस्तु भजनस्य पौनःपुन्यमेव ज्ञेयम्। तत्र दृष्टान्तो यथेति—आमोऽपक्व इक्षुरसः पाकात् पाकान्तरैः पाकपौनःपुन्येन गुड़ो भवति, यथा च गुड़ एव पाकपौनःपुन्येन खण्डो भवति, तथा भावोऽपि भजनपौनःपुन्येन रत्यपेक्षयोत्कर्षदशां प्राप्य पूर्व्वरागो भवति, एवं क्रमेणोत्कर्षस्य परमकाष्ठाऽपन्नो महारागः आनन्दस्य परमावधिरूपः—एतादृशो महारागो गोपीनामेव, नान्येषां भक्तानाम्. अतएव 'कृष्णे क्र चैष परमात्मनि रूढ़भाव' इत्युक्तवता उद्धवेनाप्यस्यैव रूढ़भावत्वेनोत्कर्षः कृतः। एवम् 'आसामहो चरणरेणुजुषामहं स्या'मिति पद्येन गोपीनामेव चरणधूलिप्राप्तौ तृणजन्माकाङ्क्षा कृता, न तु कदापि रुक्मिणीलक्ष्मीप्रभृतीनां, कुत्रापि शास्त्रेऽदृष्टत्वात्। सितोपलेति—'मिस्त्र' इति प्रसिद्धाया मत्स्यण्डिकाया चरमपाकाज्जातः कश्चिदपूर्व्वपदार्थविशेषः पश्चिमदेशे प्रसिद्धः। निर्व्विकारेति—विकारोऽत्र विषयेऽत्यासक्तिः, तद्रहिते चित्त इत्यर्थः

---

बीजमिक्षुः स च रसः स गुडः खण्ड एव सः
स शर्करा सिता सा च सा यथा स्यात् सितोपला
अतः प्रेमविलासाः स्युर्भावाः स्नेहादयस्तु षट्।
प्रायो व्यवह्रियन्तेऽमी प्रेमशब्देन सूरिभिः ॥"

विस्तरस्तत्रैव द्रष्टव्यः। रसार्णवसुधाकरे त्वयमर्थ उपमानान्तरेण सूचितः—प्रेमविलासानान्तु सर्व्वेषां तत्र चात्रैव यथाक्रममेकैव संज्ञापरिपाटी। तथा च—

अङ्कुरपल्लवकलिकाप्रसूनफलभोगभागियं क्रमशः।
प्रेमा मानः प्रणयः स्नेहो रागोऽनुराग इत्युक्तेः ॥

---

6) एवं (ग) पुस्तके पाठः। अन्यत्र सर्व्वेष्वपि पुस्तकेषु 'कारणत्वमित्यपेक्षया' इति पाठः।

**बहिरन्तःकरणयोर्व्यापारान्तररोधकम्।**
**स्वकारणादिसंश्लेषि चमत्कारि सुखं रसः॥ ७० का**

अयन्तूत्तमप्रकृतीनामनुकार्य्याणां स्वतःसिद्ध एव (ट), काव्यादौ तु

अथ रससाक्षात्कारे परिपाटी यथा—आदौ श्रवणकीर्त्तनादिभजनानां पौनःपुन्यादानन्दरूपाया रतेराविर्भावः, तदनन्तरं विभावादिसमवधानदशायां ततः साक्षात्कारः, तदनन्तरं रतिरेव रसरूपा भवति, तदनन्तरं पुनस्तेरेव विभावादिभिः करणै रससाक्षात्कारः। एवं सति रतिसाक्षात्कारे यादृशानन्दाविर्भावस्ततोऽपि कोटिगुणितानन्दाविर्भावो रससाक्षात्कारे; एतदेवाह—वहिरिति। सम्प्रति रतिसाक्षात्कारे यादृशसुखानुभवः, एवं पूर्व्वस्मिन्ननेकपदार्थविषयका (7) ये ये सुखानुभवा आसन्, तेभ्यः सर्व्वेभ्यः सकाशात् कोटिकोटिगुणाधिको यो रसदशायामानन्दानुभवस्तस्माज्जातो यश्चमत्कारस्तद्विशिष्टं सुखं रस इति रसलक्षणम्। अथ कोऽसौ चमत्कार इत्याकाङ्क्षायामाह—यथा वहिर्व्वस्तूनामनेकेषां मध्ये कस्यचित् सर्व्वोत्कृष्टस्याद्भुतवस्तुनो दर्शनान्नेत्रस्य चमत्कारो जायते, तत्र चमत्कारपदार्थो नेत्रस्य स्फारतारूपः, तथैवात्राप्यन्तर्व्वस्तूनां मध्ये रसतादशायां कस्यचिदद्भुतसुखस्यानुभवाज्जाता चित्तस्य स्फारतैव चमत्कारः। चमत्कारि सुखं कीदृशं भवेदित्यपेक्षायां विशेषणमाह—वहिरिति। रसस्योदयदशायां वहिरिन्द्रियाणामन्तरिन्द्रियाणाञ्च रसानुपयोगिपदार्थमात्रे यो वृत्तिरूपो व्यापारस्तस्य रोधकं प्रतिबन्धकमित्यर्थः।—तथा च रससाक्षात्कारे कारणीभूतविभावादेरभावं, न तु तदानीमिन्द्रियाणां पदार्थान्तरस्य ज्ञानजनने सामर्थ्यमस्तीति भावः। तदेव पुनर्व्विशेषणान्तरेणाह—स्वकारणेति। स्वकारणादि विभावादि, (8) तस्य संश्लेषि,—तथा च विभावादिसहितस्यैव रसस्य साक्षात्कारो जायत इत्यर्थः। यथैकमेव दधि वस्तु सितामरिचकर्पूरादिनानावस्तुमिलितं सद्रसालाख्यं भवति, तस्यास्वादनकाले चित्तरसस्य प्रत्यक्षो भवति, तथेत्यर्थः।

अयन्त्विति—अयं रस उत्तमप्रकृतीनामप्राकृतानामनुकार्य्याणां भक्तानाम्। ननु

---

(ट) रसस्य स्वरूपलक्षणं तटस्थलक्षणञ्च दर्शितं टीकाकृताऽस्वादस्वभावसूचनेन विशेषणप्रपञ्चयाजेन च। एवंविधेषु स्वज्ञेयप्रमानद्वारा विशदीकरणं विना नान्या गतिः—सैव टीकायां दर्शिता। 'रसे सारश्चमत्कार' इति चमत्कारस्यैव प्राधान्यम्। दर्पणादिषु निबन्धेष्वस्यैव 'अलौकिकचमत्कारप्राणः कैश्चित् प्रमातृभिः। स्वाकारवदभिन्नत्वेनायमास्वाद्यते रसः॥' इत्यादि वाक्येन परामर्शो विहितः। चमत्कारीति—चमत्कारस्याप्राकृततैव बोधयित्री।

---

(7) एषोऽपि मार्ज्जितः पाठः। स च 'विशेषणमात्रप्रयोगो विशेष्यप्रतिपत्ता'विति न्यायेन समाधेयः।

(8) एवं (ग) (छ) पुस्तकयोः। अन्यत्र 'स्वकारणं विभावादि' इति पाठः।

सामाजिकानामेव—तेषां सर्व्वरसाभिव्यक्तिगाल्येक एव पूर्व्वोक्तः कश्चना-स्वादकन्दयेतोधर्म्मविशेषः स्थायी । तत्र युक्तिर्दर्शयिष्यते ।

**रसस्यानन्दधर्म्मत्वादैकध्यं, भाव एव हि ।**
**उपाधिभेदान्नानात्वं, रत्यादय उपाधयः ॥ (ठ) ७१ का**

रत्यादयः स्थायिनः । यथा नानाविधशरावसलिलतारतम्येऽपि तरणि-बिम्बप्रतिबिम्ब एक एव, तथोपाधिगत एव भेदः, नानन्दगतो रसस्य (9) । उक्तप्रकारेषु स्थायिषु कश्चिदुभयनिष्ठः, कश्चिदेकनिष्ठ उभयनिष्ठश्च । तत्र रत्यादिरुभयनिष्ठः, जुगुप्साऽऽदिरेकनिष्ठः, क्रोधादिरेकनिष्ठो द्विनिष्ठश्च—इत्यनु-कार्य्याणामेव, सामाजिकानामेक एवेत्युक्तत्वात् (ड) ।

यथा रत्यादीनां भावप्रत्ययरागादिरूपो नानाविधपाक उक्तस्तथा रसस्यापि कस्य पाकान्नाना-विधत्वं कथं नोक्तं, तत्राह—रसस्येति । आनन्दधर्म्मत्वाच्चरमानन्दरूपत्वादैकध्यमेक-विधत्वम् । यथा सितोपलायाः पाकान्तरं नास्ति, यथा वा महारागस्यापि चरमानन्दत्वेन पाकान्तरं नास्ति, तथैव रसस्यापि । अतैकस्य रसस्य न नानाविधत्वं ज्ञेयम् । भाव इति—नानात्वं प्राप्नोतीति शेषः 'यथा नानाविधशराव' त्यादिपाठः क्वाचित्को न सर्व्वसम्मतः ।

---

(ठ) यथैक एवाकाश उपाधिभेदात् घटाकाशपटाकाशादिसंज्ञया पृथक् पृथ-गुल्लिख्यते, तथैक एव रस आलम्बनोद्दीपनादिनानाविधोपाधिभेदेन कदाचिच्छृङ्गारतया कदाचिद्वीरत्वेन कदाचित् करुणाख्यया वा व्यवह्रियते । एवमेव रसामृतसिन्धुदर्शितपरि-भाषायां रतेर्गौणीमुख्याभेदेन संगमनम् । आनन्दस्तु सर्व्वत्रैव समानलक्ष्मा समानानुभव-प्रकारश्च—अतो वस्तुगत्या भिन्नसंज्ञत्वेऽपि न स्वरूपतो भिन्नता ।

(ड) सामाजिकानां पक्षे तत्तद्भावप्रपञ्चस्य न वस्तुतोऽनुभूतिः, अपि तु ततो जातस्याखण्डस्वरूपस्यानन्दस्यैवास्वादः । अनुकार्य्याणां शृङ्गाररसभाजां कदाचित् सम्भोगः, कदाचिद्विप्रलम्भः, कदाचिन्मानः, कदाचिच्चिन्ता वैक्लव्यं दैन्यं वा—तदुप-भुञ्जानानां सामाजिकानामेक एव आनन्दः सर्व्वत्र । एवं वीराद्भुतादिष्वितरेषु रसेषु । न चात्र सामाजिकबोधोपलक्ष्यमेवालङ्कारिकस्य शास्त्रमिति कृत्वा रसानां भागकल्पना विस्तरेण विचारादिश्च निन्द्यते, 'प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्त्तते' इति न्यायादत्रापि विश्लेषणमुखेन सामाजिकानां बोधोद्घाटने सौकर्य्यमूहनीयम् । अयमाशयो

---

(9) एष पाठः (क) (ग) पुस्तकयोर्नास्ति—टीकाकृतप्यस्य मूलान्तर्गतत्वे सन्दिहान इति प्रतीयते ।

प्राकृताप्राकृताभासभेदादेष त्रिधा मतः ॥ ७२ का

एष रसः प्राकृतो लौकिको मालतीमाधवादिनिष्ठः, अप्राकृतः श्रीकृष्ण-राधादिनिष्ठः । आभासस्त्वनौचित्यादिप्रवर्त्तितः । स चाभासस्त्रिविधः प्रसिद्धकृत्रिमसिद्धभेदात् । आद्यः प्राक् प्रसिद्धिमात्रोपहतः, न तु सम्पत्स्यमानः; स च रसाभासो भवन्नपि रसपोषकः—यथा नन्दनसम्बन्धप्रसिद्धौ मालत्या माधवे रतिपुष्टिरिति प्राकृते, अप्राकृते तु शिशुपालसम्बन्ध

प्राकृतेति—प्राकृते रस एव नास्ति (८), तदपि यत्त्रैविध्यमुक्तं तत् परमतानुसारेणेति ज्ञेयम् । प्राकृते ये रसं मन्यन्ते ते भ्रान्ता एव । यतोऽत्र कृमिविड्भस्मान्तनिष्ठेषु प्राकृतनायकेष्वतिनश्वरेषु रसो न भवति, विचारतो विभाववैरूप्यात्तद्विपरीतं घृणामयं वैरस्यमेवोत्पद्यते, तत्रैव रसं वर्णयन्तीत्यर्थः । अतएव ग्रन्थकारेणापि प्राकृतविषयकमेकमपि पद्यं नोदाहृतं, किन्त्वप्राकृत एव सर्व्वाणि पद्यान्युदाहृतानीति ज्ञेयम् । प्रसिद्धेति—रुक्मिण्या सह शिशुपालस्य सम्बन्धो लोकानां प्रसिद्धिमात्रेणैवोपहतः भ्रान्तानां प्रतीतिविषयः, न तु सम्पत्स्यमानः—स सम्बन्धो न तु सम्पन्नो भविष्यतीत्यर्थः । अतः शिशुपालस्य रुक्मिण्यां रतौ रसाभास एव । एवं परोढ़रमणीषु पुरुषस्य रतिरपि रसाभास एव, प्राकृतविषयत्वात् ।

---

यद्रसानामष्टधा विभागः कृतस्तदनुभावादिवहिःप्रकाशकत्वमवलम्ब्यानुकार्य्याणां नायकादीनां बहुत्वमनुसृत्य, न तु रसस्वरूपस्यानन्दस्योद्रेकतारतम्यतया वा भेदेन । रसास्वादिनामनुभवसाक्षिकानन्दस्य तदानीं वेद्यान्तरस्पर्शशून्यत्वेनालौकिकचमत्कारवत्तया च न भेदकल्पना सम्भवतीति तत्त्वम् । प्रकाशदर्पणकृदादयो वाढ़मेतन्मतपोषका अपि सामाजिकानामेक एव रस इति न स्फुटमभिदधति । तत्रेदमपि तदभिप्रायविलसितं सम्भवि यत्र खलु सर्व्वेषां रसानामानन्दमात्रा आनन्दप्रकृतिश्चैका, वीभत्सजुगुप्साऽदिषु शृङ्गार-करुणादित उपलब्धेः पृथक्त्वस्य निर्णेतुमशक्यत्वात् । वयन्तु सम्भावनामप्येतादृशीं न बहु मन्यामहे, कारणञ्च तत्र प्राक् प्रदर्शितमेव । न खलु वहिरावेष्टनभेदत आन्तरानन्दस्य स्वरूपभेदः कल्प्यः—एवमप्याधुनिकाः प्रतीच्याः काव्यतत्त्वविदः । (Cf. the views of B. Croce, Spingarn, Henderson and others).

(८) प्राकृते रस एव नास्तीति हि सम्प्रदायविदः, तन्मते श्रीकृष्ण एव रसः सम्भवी, नत्वितरस्मिन् प्राकृतजने । मतमेतदालङ्कारिकमतानुसारि नेति टीकाकृतैव सूचितम्—वस्तुतस्तु रसात्मवेदिनो ग्रन्थकृतः प्राकृते रसतत्त्वमपह्नोतुं न प्रभवन्तीति सर्व्वैर्ज्ञायत एव—तथापि स्वसम्प्रदायमतरक्षणमिदं चातुरीजालजृम्भणम् । सान्तानां जीवानामनन्तताज्ञानं तदैव जायते यदैव ते रसास्वादनसुलभमानन्दमुपभुञ्जते, अतः कथन्तेषामनधिकारः

प्रसिद्धो यौरुक्मिण्याः श्रीकृष्णे रतिपुष्टिः । क्वचित्तु नन्दनं प्रति मालती-वेशधारिणो मकरन्दस्य वाक्यप्रकटनादिः । सिद्धस्त्वनौचित्यप्रवर्त्तित एव—अनौचित्यञ्चैकस्या अनेककान्तनिष्ठत्वम् (ग) ; यदुक्तम्—

---

श्रुतस्थानवत्सर इति प्राकृतानामस्माकं न ज्ञानगोचरम् । यत्तु ग्रन्थकारेण प्राकृतविषय एकमपि पद्यं नोदाहृतमिति कृत्वा तस्य प्राकृते रसाभासत्वकल्पपक्षाङ्गीकरणं न तत् सम्यक्, अपि तु वैदग्ध्यमात्रमेव—यतोऽत्र ग्रन्थे श्रीकृष्णलीलामृतमेव वर्णनायमुदाहरणच्छलेनेति ग्रन्थकृतो हृद्गतो भावः—अतोऽत्र प्राकृतचरित्रवर्णनमप्रासङ्गिकमित्येव तस्य वर्जनं, न तु कारणान्तरमिति । प्राकृताश्रयस्य रसस्य सत्तामपह्नुवतां वैष्णवालङ्कारिकाणामियं हि शैली—यत्र प्राकृतचरितमुपजीव्य इतरेषामालङ्कारिकाणां मते रसो वर्त्तते, तत्र वैष्णवानां मते रसता न जातु सम्भवति । यत्र तु परमेश्वरगोचरतिस्थले वैष्णवानां मते रसस्यातरत्वर्विच्छिन्ना सत्ता, तत्रालङ्कारिकचक्रवर्त्तिन इतरे रसस्याभासत्वेन स्थितिमुपपादयन्ति । प्राकृते रसविकृतिमसहमानानां रीतिर्युक्तिस्यानन्दचन्द्रिकायामित्थं लक्षिता—'ननु तर्ह्येतल्लक्षणं प्राकृतनायिकासु दमयन्तीमालत्यादिष्वव्याप्तमिति चेदिष्टापत्तिरेव । 'रसो वै सः'' 'रसं ह्येवायं लब्ध्वाऽनन्दी भवती'त्यादिश्रुतिप्रतिपादितस्य साक्षाच्चिदानन्दघनस्य रसस्य विवृतिर्भवद्भिरप्राकृतीभगवत्प्रेयसीरालम्ब्य कृता तत्र मुह्यद्भिः कविभिर्यदि प्राकृतादिषु पिशितास्थिचर्ममयजरामरणादिमतीषु स्त्रीषु स रसः प्रत्यापयिष्यते, तर्हि वयं किं कुर्म्मः? तथा ह्युक्तं रसपद्यव्याख्यायाम् (भागवते १।१।१)—'तेने ब्रह्म हृदा य आदिकवये मुह्यन्ति यत् सूरयः । तेजोवारिमृदां यथा विनिमय' इति । य आद्यस्य रसस्य ब्रह्म तत्त्वमादिकवये भरताय तेने । यत्र रसतत्त्वे कवयः काव्यकृतो मुह्यन्ति, भ्रमणालक्ष्येऽपि प्राकृतरसलक्षणस्य सङ्गमनात् ।...'इत्यादि । कविकर्णपूरचरणास्तु प्राकृताश्रये रसस्य सत्तामितरालङ्कारिका इव स्वीकुर्वन्ति, परं तेषामपि मतेऽप्राकृताश्रय एव मुख्यो रसः । टीकाकृतो गोस्वामिचक्रवर्त्तिन एतदपि न सहन्ते, 'प्राकृते ये रसं मन्यन्ते ते भ्रान्ता एवे'त्यादि कटाक्षेण सूचयन्तः स्वमाग्रहं मतदार्ढ्यमेव वाञ्छन्ति । अप्राकृताश्रयस्य रसस्याभासतापक्षन्तु वयमितरत्रालोचयिष्यामः । 'प्राकृते रस एव नास्ती'ति तु सोत्प्रासमास्फालनं भक्तिशास्त्रव्याख्याने यथाकथञ्चित् औचित्यमावहतु, न तु कान्तासम्मिततया उपदेशप्रयुजि काव्ये तदाश्रितालङ्कारिकवचःप्रपञ्चे च तस्योपयोगः । अतेदमवधेयम्—अतिगहनस्वरूपे रसे प्राकृताश्रयतायास्तत्त्वास्वादादुच्चतरकक्षामधिरोहद्भिरपाकृतं सुप्राकृत एव, इति वैष्णवगोस्वामिमतस्याभ्रान्तत्वेऽपि व्यावहारिके प्रपञ्चरूपे न तस्य प्रयुक्तिर्व्यञ्जनात् प्राकृताश्रितानि कालिदासादिकृतकाव्यानि प्रत्यादरिणो विधानेत्युक्तं तस्य सम्यक्परिग्रहेण ।

(ख) अनौचित्यम्—'औचित्यं रससिद्धस्य स्थिरं काव्यस्य जीवित'मित्यौचित्यमेव प्राक् सर्व्वत्र गण्यते । पशुगतरतानुवर्तिपुरुषगतप्रीतेर्वा न कदापि कान्तासम्मितयोपदेश

'यद्यप्ययं रसाभासः परोढ़रमणीरतिः । Rasasudhakara ?
तथापि ध्वनिवैशिष्ट्यादुत्तमं काव्यमेव तत् ॥' इति

तथापि 'रसो भावस्तदाभासो भावशान्त्यादिरक्रमः' (३५ का)

इत्याद्युक्तदिशा 'आभासोऽपि चमत्कारदशायां ध्वनिभाग् भवेत्' इति ध्वनिमर्यादयैवोत्तमकाव्यत्वं, न त्वनौचित्यरीत्या—इति प्राकृते, अप्राकृते तु परोढ़रमणीरतिरिव सर्वोत्तमतया भूयसी श्रूयते, न तस्या अनौचित्यप्रवर्त्तित्वम्, अलौकिकत्वसिद्धेर्भूषणमेव न तु दूषणमिति न्यायात्, तर्कागोचरत्वाच्च (त)। तथा च—

सर्वोत्तमतयेति—शान्तिप्रभृतिपञ्चविधरतीनां मध्ये शृङ्गाररतिः सर्वोत्तमा। सा च रतिर्द्विविधा—स्वकीया रुक्मिण्यादिनिष्ठा, परकीया व्रजसुन्दरीनिष्ठा च तयोर्मध्ये परोढ़रमणी श्रीव्रजसुन्दरी तन्निष्ठा रतिः सर्वोत्तमेत्यर्थः। भूयसीति—सर्ववेदेतिहासपुराणादीनां सारभूते श्रीभागवते श्रीकृष्णेनोक्तं 'न पारयेऽह'मित्यादौ 'या मा भजन् दुर्जरगेहशृङ्खलाः संवृश्च्य' इत्यादि-तत्रैव श्रीउद्धवेनाप्युक्तं 'या दुस्त्यजं स्वजनमार्य्यपथञ्च हित्वे'त्यादि। उज्ज्वलनीलमणौ श्रीमद्रूपगोस्वामिभिरप्युक्तम्—'अत्रैव परमोत्कर्षः शृङ्गारस्य प्रतिष्ठित' इत्यादौ। महानुभावानां इष्यश्रयकाव्यादौ परकीया सर्वोत्तमोत्तमतया श्रूयत इत्यर्थः।

---

योनित्वं स्वाभाविकम्—प्राकृत एवेदम्, अप्राकृते तु सकललौकिकसीमामतिशयाने परमपुरुषे न काऽपि निन्द्यानिन्द्यताचिन्ता। अन्यत्र त्वेष विचारो न निहितः—अत्र सम्प्रदायमताविष्कारकल्पनामाकाङ्क्ष्य स निपुणं समाहितः। आभासस्य भेदप्रदर्शनमप्यस्य ग्रन्थकृत आलङ्कारिकमतसामञ्जस्यसाधने निर्बन्धं प्रकटयतितराम्। 'खिन्न' रसाभासं विनाऽन्ये भेदा एतैरपरालङ्कारिकैस्तथा सम्यं स्वीकृताः। 'सिद्ध'रसाभासस्यात्र वैणवमतप्रणालीमनुसृत्य चरमरसपक्षे स्थापनप्रयासः स्वस प्रदायमतं प्रति भक्तिकल्पनाकौतुकमुपपादयति। न चैवंकथने स्वमतविरोध औदासीन्यं वा हेतुः, यतश्चमत्कारलक्षणेन काव्यस्य उत्कर्षख्यापनादाभासस्यापि मुख्यत्वेन विपरिणतिर्नात्यन्तदूषणीया कृत्रिमो रसाभासः निसर्गप्रेमवतां गोपसुभ्रुवां गोकुलनन्दनस्य च पक्षे न कल्प्य इति न तस्य तद्भेदे निर्देशः।

(त) परोढ़रमणीरतौ रसो नु, अपि तु रसाभास एवेति सम्प्रदायविदामालङ्कारिकाणां राद्धान्तः—'परोढ़ां वर्जयित्वाऽत्र वेश्यां चाननुरागिणीम्। आलम्बनं नायिकाः स्यु'रिति दर्पणकृदुक्तेः, 'एकत्रैवानुरागश्च तिर्यङ्म्लेच्छगतोऽपि च। योषितो बहुसक्तिश्चेद्रसाभासस्त्रिधा मत' इति प्रतापरुद्रियमतस्थितेश्च। एवमप्यनर्वाचीनाः सर्वे कण्ठाभरणकल्लोलाद्याः, रसशास्त्रविशारदा बहवो रूढभङ्गभानुदत्ताद्यश्च परोढ़रमणीरतौ रस एव

'अलौकिकाश्च ये भावा न तांस्तर्केण योजयेत् ।' इति च । Mahabharata—Udyoga-Parvan

व्रजवधूनां कृष्णैकतानमानसत्वेन स्वपतिनिष्ठत्वाभावात्तेषाञ्च मायाकलिततच्छायाऽनुगोपनेन तदङ्गसङ्गमात् प्रत्युत केवलानुरागमात्रोपाधितया चेतोरञ्जकतया शुद्धत्वमेव ।

---

न रसाभास इति प्रेमावालङ्कारिका भक्तिमार्गचारिणः श्रीमद्रूपगोस्वामिप्रभृतयः। कौस्तुभकृत्तु रसाभासो भवन्नप्यसौ रसपोषक इति सुचिन्तितं स्वसमीहितं प्रकाशयन्नपि स्वसम्प्रदायमतरक्षार्थं झाक् निर्बन्धवानिव प्रतीयते। परोढ़ारमणीरत्याश्रयं काव्यमुत्तमं काव्यमेवेत्यत्र तु न विभिन्नमतावलम्बिनोरप्येतयोः कापि विप्रतिपत्तिः - ध्वनिवैशिष्ट्यमेव काव्यत्वेनोपन्यस्य उभयैरपि तैः गाथासप्तशती-अमरुशतक-शृङ्गारशतक-पद्यावल्यादिस्थितानां पद्यानां सत्काव्यत्वेनाङ्गीकृतत्वात्। अप्राकृतविषयकपरोढारमणीरतिपक्षे च नास्माकं रसोऽसौ रसाभासो वेति निर्बन्धातिशयः, यतः सकलसहृदयहृदयावर्ज्जनकारिणि रसनिर्यासस्वादार्थमवतारिणि साक्षाद्रसकदम्बे 'कृष्णस्तु भगवान् स्वय'मिति भागवतसंहितोदिते किमनेनालोकप्रपञ्चकलिते इव मृषाविवादशौण्डेन। धन्यम्मन्यजीवनानां गोपाङ्गनानां भगवता श्रीकृष्णेन सह 'वृन्दारण्ये विहरता सदा रासादिविभ्रमैः। हरिणा व्रजनारीणां विरहोऽस्ति न कर्हिचित् ॥' इति स्कन्दपुराणीयोपदेशामृतादनाद्यनन्तसम्बन्धत्वं, "कात्यायनि महामाये महायोगिन्यधीश्वरि । नन्दगोपसुतं देवि पतिं मे कुरु ते नमः ॥" इति सङ्कल्पमाचेरुर्या गोकुलकुमारिकाः । तास्तत्र कियतीनान्तु पतिभावो हरावभूत् ॥ '... इति, 'गान्धर्वरीत्या स्वीकारात् स्वीयात्वमिह वस्तुतः ॥' इति च भवतामभिधानात् 'यातावला व्रजं सिद्धा मयेमा रंस्यथ क्षपाः ।' ... "भविष्यामि पतिर्हि वः' इत्यादि श्रीमद्भागवतदर्शनाच्च भगवतः पतित्वमेवास्तु, 'या दुस्त्यजं स्वजनमार्यपथञ्च हित्वे'त्यादि 'या मा भजन् दुर्जरगेहशृङ्खलाः' इत्यादि तद्वत्याशयात् 'दृष्ट्या केशव ! गोपरागहृतया किञ्चिन्न दृष्टं मया तेनात्र स्खलितास्मि नाथ ! पतितां किं नाम नालम्बसे' इत्याद्यभियुक्तोक्तेश्च सिद्धमौपपत्यमेवास्तु वा तस्य, नास्माकं काव्यरसरसिकानां किमपि वक्तव्यमवक्तव्यं वा तत्रास्ते। 'परमिममुपदेशमाद्रियध्वं निगमवनेषु नितान्तखेदखिन्नाः। विचिनुत भवनेषु वल्लवीनामुपनिषदर्थमुलूखले निबद्धम्' इति तमुद्दिश्य भक्तिप्रकर्षविलोकनेन भवन्त इव वयमप्योमिति ब्रूमः। अप्राकृताश्रये उज्ज्वलतायां रतिः "बहु वार्यते यतः खलु यत्र प्रच्छन्नकामुकत्वञ्च। या च मिथो दुर्लभता सा परमा मन्मथस्य रतिः ॥" इत्यधुनाऽस्मद्विलुप्तवन्मुनिनिबन्धे या प्रशंसा न तया काऽप्यस्माकमिष्टापत्तिरिति। केवलं निर्बन्धवद्भिर्भवद्भिरानन्दचन्द्रिकायाम् 'अनन्यशरणा स्वीया पत्याहार्या पत्याङ्गना । तस्यास्तु केवलं प्रेमा तेनैषा रागिणी मता ॥' इति शृङ्गारतिलकासम्मत्या परोढोपपत्योरिव सकलसहृदयहृदयमार्जिका रसनिर्यासास्वादे उद्भूते इति यदस्मदाद्याशयमनाविष्कुर्वद्भिरिव कथयद्भिराहोपुरुषिका सूचिता, यच्च

अत्र रसग्रन्थे काव्यमधिकृत्यैव विचारः (थ)। काव्यं दृश्यं श्रव्यञ्च। दृश्ये शब्दोपात्ता विभावादयोऽभिनायकाश्रया अभिनेयाश्रयाश्च, श्रव्ये केवलं शब्दोपात्ताः। कुतोऽत्रानुकार्य्यगतो रसः ? (10) नाप्यनुकर्तृगतः, तेषां

सामाजिकानां रसोत्पत्तौ प्रकारमाह—अभिनायको नटस्तदाश्रयाः—एवं भावहावकटाक्षादयो नटानामभिनेयास्तदाश्रयाः। अनुकार्य्येति—अनुकार्य्याणां भक्तानान्तदानीं तत्राविद्यमानत्वात् नाट्यदर्शनात् पद्यश्रवणाच्च तदानीं कस्य रसो भविष्यतीति पूर्व्वपक्षः। अनुकर्त्ता नटः, नापि तद्गतो रसो भवति। ननु कस्यचिद्दशरथवेशधारिणो नटस्य एवं

'नातीव सम्मतत्वाद्भरतमुनेर्म्मतविरोधाच्च। साहित्यदर्पणीया न गृहीता प्रक्रिया प्रायः॥' इत्ययथा भरतमुनेर्म्मतविरोधमप्राकृतनायकाश्रितरत्यादिविषयं दर्पणेऽनालोचितमसूचितमपि भवत्कृतायां नाटकचन्द्रिकायां प्रकटीकुर्व्वद्भिरनर्थकन्तदुपरि कलङ्कपङ्कलेपश्च कृतः, न तत् सर्व्वसहत्वसौजन्यप्रथितनाम्नां वैष्णवानां भवतां यशस्करमिति मन्यामहे। प्राकृतविषयकपरोढ़रमणीरताभासत्वेऽप्यस्माकमालङ्कारिकसम्प्रदायिनां मतं, कौस्तुभकृदपि भवानस्मत्पक्ष एव। तत्र युक्तिस्त्वानौचित्यमेव मूले निहितं, तच्चानौचित्यं सहृदयसामाजिकव्यवहारतो ज्ञेयम्। उत्तमप्रकृतिप्रायत्वे परोढ़रमणीरतिः समाजगर्हिता, तच्चेष्टितस्य काव्यनाट्यगतत्वेनोपादेयतयाऽस्वादने 'यद्धर्म्मकृतः स्थानं सूचकस्यापि तद्भवेत्' इति न्यायात् सभ्यानामपि तदपाधत्तवैधर्म्मास्पर्शोऽवश्यम्भावी। यत्तु 'प्राकृते रस एव न स्त्री'ति साटोपमाग्रहाविष्कारस्तत् भक्तिशास्त्रमिदं, न काव्यतत्वोपयोगीति प्रागेव प्रतिपादितवन्तो वयम्। अत्रालङ्कारशास्त्रे काव्यास्वादद्वारसाधनमेव मताविष्करणं साध्यमिति न कटाक्षपातः, परं भक्तिशास्त्रमुक्तिशास्त्रयोर्यथाऽधिकारभेदो भवद्भिराविष्कृतः, एवमपि काव्यतत्वतोऽत्र साम्प्रदायिकरसतत्त्वस्य भेदाविष्करणं नान्याय्यमिति। अतएव रसस्यात्र ग्रन्थे त्रिधा विभागो ग्रन्थकृतां वैचक्षण्यं द्योतयतितराम्। 'अप्राकृते तु', इत्यारभ्य स्थितस्य 'तर्कागोचरत्वाच्चे'त्यन्तस्य मूलगतस्य सन्दर्भस्यानन्दचन्द्रिकायामुद्धारः कृतश्चक्रवर्त्तिचरणैः।

(थ) एष एव प्रकृतः पन्था आलङ्कारिकनिबन्धे रसतत्वनिर्द्धारणे इति निपुणं स्वाशयसूचनं स्वसम्प्रदायिनः प्रति ग्रन्थकृत इत्यस्माकं स्थूलतः प्रतिभानम्। 'शास्त्रं काव्यं शास्त्रकाव्यं काव्यशास्त्रञ्च भेदतः। चतुःप्रकारः प्रसरः सतां सारस्वतो मतः॥' इत्याद्यभियुक्ततमदर्शितभेदतः भक्तिसूक्त्याद्युपदेशकृतो निबन्धबन्धान्मुखतः रसालम्बनजीवितस्य वाक्यकदम्बकस्य वैशिष्ट्यमनुमीयते। यद्यप्यत्र ग्रन्थे आदिमकिरणे काव्यप्रयोजनप्रदर्शनावसरे 'यशःप्रभृत्येव फलं नास्य केवलमिष्यते। निर्म्माणकाले श्रीकृष्णगुणलावण्यकेलिषु॥ चित्तस्याभिनिवेशेन सान्द्रानन्दलयस्तु यः। स एव परमो लाभः स्वादकानन्त्यैव सः॥" इति

(10) 'कुतोऽत्र नानुकार्य्यगतो रस' इति मुद्रितपुस्तके निन्दनीयः पाठः।

शिक्षाऽभ्यासप्रकटनमात्रकौशलेन स्वादकत्वाभावात्। यदि तु विगलित-वेद्यान्तरत्वमनुकर्त्तॄणामपि दृश्यते, तदा तेषामपि सामाजिकत्वमेव। अनु-करणन्तु संस्कारवशादेव जीवन्मुक्तानामाहारविहारादिवत्—तेन सामाजिका-नामेव रसः। (द)।

इत्यमङ्गीकृधारिणो नटस्य च लोके रसोत्पत्तिः श्रूयते, तत्राह—यदीति। ननु नटस्य सामाजिकस्य रसानुभवकाले विगलितवेद्यान्तरत्वात् कथन्तस्यानुकरणं सम्भवति, तत्राह—संस्कारवशादेवेति।

---

भक्तिमुक्तिरत्वञ्चापि काव्यस्य प्रयोजनत्वेनोक्तं तच्चातिरिक्तमेव, न सर्व्वस्य तदैकान्तिकतयेतर-व्यवच्छिन्नतया वा सम्भवतीति स्मरणीयम्। एवमेव धर्म्ममोक्षशास्त्रप्रतिषिद्धेऽनुरागिणि वेश्याजनावलम्बिनि भावानुबन्धे रसत्वं काव्योपयोगीति नोत्स्वयं वचः।

(द) रससद्भावे 'प्रमाणञ्चर्व्वणैवात्र'—स च सामाजिकानामेव केवलं सम्भवति। अतएव रसो नानुकर्त्तॄगतः, नाप्यनुकार्य्यगतो वा, परमुपलब्धृगत एव। निखिलजगत्-स्थितिकर्तो धर्म्मस्येवास्याप्यास्वादनमेव जीवनं सेवनं भोगो वा. स एवेह परः पदार्थः। तथा च कश्चिदाधुनिकः प्रतीच्यमनस्तत्त्वकोविदः—

[ Cf. in another context. 'Religion is neither an act of knowledge nor a rule : *it is a life, it is an experience* ; and this life has its source in the deepest part of our being, viz. feeling. We cannot proceed through knowledge of religion to religion—this latter is an original fact. —Emile Boutroux in *Science and Religion in Comtemporary Philosophy*, translated into English by Jonathan Nield (1909.)]

स च रत्यादिवासनां विना नोत्पद्यत इति प्रागेवावोचाम। त एव सामाजिकधुर्य्या ये कविप्रतिभासमुत्थापितकाव्यद्वारेण ब्रह्मास्वादसहोदरस्य रसास्वादस्य विषयिणो जायन्ते। सामाजिकहृदयेष्वेव कविवाक्यानि बद्धसंस्काराणि सफलानि च जायन्ते। केचिदाधुनिकाः पाश्चात्यकाव्यप्रबुद्धय आप्तवाच इव सामाजिकम्मन्यत्वमेव कवेः स्वप्रतिभोद्बोधने परमं लक्ष्यं मन्यमाना एवमुद्घोषयन्ति—

[Cf. Spingarn—(*Creative Criticism*) (*p.43*). —*The identity of genius and taste is the final achievement of modern thought on the subject of art*; and it means that fundamentally in their most significant moment, the creative and the critical instincts are one and the same].

यद्रसोऽप्राकृतगतोऽप्युपभोग्यस्तदाक्तसुक्तं मूलेऽत्र वृत्तिप्रतीके—तथाहि नटेनानु-क्रियमाणेत्याद्यनन्तरसन्दर्भे।

तथाहि नटेनानुक्रियमाणानुकार्य्यचरितदर्शनश्रवणजनितचमत्कारातिशयेन विगलितवेद्यान्तरतया तदेकस्फूर्त्तिसनाथेन अद्भुतमिदं रामसीतयो रतिकलाकौशलम्, अद्भुतमिदं रामरावणयोर्युद्धम्, अद्भुतमिदं प्रेतरङ्कादि-विचेष्टितम्—इत्यादिना सर्व्वेष्वेव रसेषु—

रसे सारश्चमत्कारो यं विना न रसो रसः।
तच्चमत्कारसारत्वे सर्व्वत्रैवाद्भुतो रसः॥ (ध)

इत्यादिदिशा चमत्कारपूर्व्वकमद्भुतत्वातिशयस्फूर्त्तौ सम्यङ्मिथ्या-संशयसादृश्यप्रत्ययातिरिक्तेन प्रत्ययविशेषेण चित्रोत्कीर्णाभिरूपप्रतिमाऽऽदि-ष्विव 'इमौ रामसीते', 'रामोऽयं सीताशोककीर्णः', 'रामरावणावेतौ', 'व्याघ्रोऽयं जनोपप्लावकः', 'श्मशानमिदं शवसमूहान्त्रमांसाद्यशनमत्तोन्मत्त-पिशाचादिनृत्यसङ्कुल'मिति कृत्रिमेष्वपि तेषु विभावादिष्वकृत्रिमवत् प्रतीय-मानेषु स्वगतरसवासनाद्योतरजस्तमस्तया (ध) स्वच्छतरेषु तेषां चेतःस्वेक एवानन्दो जायते। न तु तेषामेकस्मिन्नेव चेतसि रत्यादयः सर्व्वे स्थायिभावाः

सनाथेनेति—रसोपयोगिविभावादिस्फूर्त्तिसहकृतेन क्रियमाणानुकार्य्यचरितदर्शनश्रवण-जनितचमत्कारातिशयेन हेतुना सर्व्वेषु रसेष्वद्भुतातिशयस्फूर्त्तौ सत्यां सम्यङ् निश्चयः। तथाच निश्चयमिथ्याऽऽदिप्रत्ययातिरिक्तेन केनचिदनिर्व्वचनीयप्रत्ययविशेषेण हेतुना कृत्रिमेष्वपि विभावादिष्वकृत्रिमवत् प्रतीयमानेषु सत्सु सामाजिकानां चेतःस्वेक एवानन्दो जायत इत्यन्वयः। तेषामिति—उत्साहशोकविस्मयादीनां परस्परविरुद्धानां युगपदेकत्र

---

(ध) रसस्यालौकिकधर्म्मित्वं चमत्कारप्राणत्वञ्चोपलक्ष्य प्राचीनमतोद्धारपुरःसर-मेवमभिधानम्। न तावद् 'अद्भुत'पदेनात्र पारिभाषिकतन्नामकरसविशेषस्य ग्रहणं, अतः सर्व्वेष्वेव नवसु रसेषु स एवाद्भुतापरपर्य्यायश्चमत्कारकारी कोऽपि पदार्थो वरीवर्त्ति। रसिकेष्विव बलात् गृहीताऽस्मन्मनोवृत्तिरलौकिकत्वोपलब्धिमुपभुञ्जाना सान्द्रानन्दमयत्व-मुपैति। एतदेव रसस्य रसत्वम्, एतावतो च तस्य रस्यता।

Cf. Longinus –*On the Sublime* (Translated by Dr. Saintsbury in his *Loci Critici*)—"What is out of the common leads an audience not to persuasion but to ecstasy.........."*I should certainly lay it down that there is nothing so eloquent as real passion* standing, where it ought, in enthusiastic afflatus of inspired madness and filling the phrase with a sort of Delphic rapture."

सन्ति, तेषां परस्परविमर्द्दशानां युगपदेकत्र स्थितेरभावात्। नापि यत्यादेश्चेतसि रतेः स्थायित्वं, न च शमिनान्तेषां भयशोकादिसत्ता—अपि तु सर्वरसचमत्-कारग्राहक एक एवास्वादकन्दः कश्चन चेतोधर्म्म इति—अतो भयानक-वीभत्सादेः काव्यनाट्ययोरेव रसता, न लोके (न)। अतएवोक्तम्—

स्थितेरभावात्। दोषान्तरमप्याह—नापीति। यतिनां सन्न्यासिनाञ्चित्ते सर्व्वत्र समदृष्ट्या निर्व्विकारत्वेन भयशोकादिस्थायिभावानामसम्भवात्तेषां रसास्वादो न स्यात्—इति तु परमतानुसारेणैवोक्तम् (न); वस्तुतस्तु तेषां ज्ञानित्वेन चित्तस्य कठोरत्वाद्रसास्वादेऽधिकार एव नास्ति;—तथाचोक्तन्तृतीयस्कन्धे—'तच्चापि चित्तवड़िशं शनकैर्व्वियुङ्क्ते' इत्यादिना चित्तस्य वड़िशत्वोक्त्या महाकठोरत्वमुक्तम्।

---

स्वगतरसत्रासनेति—एतदेव मुख्यमुपकरणं रसस्फूर्त्तिसमाधौ—फलन्तु सर्व्वत्र समाग-लम्बाऽम्यतमय इव कश्चनानन्दकन्द इति सारस्वतसाराणां धन्यम्मन्यानामनुभूतिः। रसस्फूर्त्तिश्च सा वास्तवाश्रया वासनास्थितत्वात्, न तु गगनकुसुमगन्धोपलब्धिप्रवृत्तिवत् कल्पनाकल्पिता-ऽसत्याश्रयेति वेदितव्यम्—अत्रैव भावनाभुक्तिवादिनां भट्टनायकादीनां मतादव्यक्तिवादिना-मभिनवगुप्तपादादीनामालङ्कारिकोपजीव्यानां मतस्य वैलक्षण्यम्। एतामेव रसस्फूर्त्तिमभि-लक्ष्य श्रीवाग्देवताऽवतारस्य मम्मटभट्टस्य रसस्वरूपनिरूपणे माधुरीमयी सन्दर्भसूक्तिः—'पुर इव परिस्फुरन् हृदयमिव प्रविशन् सर्व्वाङ्गीनमिवालिङ्गन्नन्यत् सर्व्वमिव तिरोदधदि'-त्यादि। इदानीन्तनानुभूतिसंवेद्याऽतीतानुभवप्रत्यभिज्ञास्मृतिजड़िता वा स्वगतरसवासना-ऽधुनिकैरपि प्रतीच्यकोविदैः सामाजिकसंस्कारोद्बोधकताकल्पे स्वीक्रियते स्मर्यते च।

(Cf.—Impressiveness consists in greater intensity of present feeling and in taking a strong and permanent hold of the memory.—Bain –. *Rhetoric and Composition.* Part I. p. 258,

(न) रतिहासप्रमादीनां लोकेऽनुभूतानां स्वत एवानन्दः सम्भविता, काव्ये नाट्ये च निहितानां तेषामानन्दात्मकत्वमानन्दोद्बोधकत्वञ्च वर्द्धतेतराम्। भयानकवीभत्सादितो लोके वैरस्यं विमुखीभावश्च प्रायः सम्पद्यते—तथाहि स तावदल्पसंख्यो मानवशङ्कः यः सर्व्वदमनो भरत इव मृगेन्द्रपोतेन चिक्रीड़िषुः—'जिंभ रे सिंहसावआ जिंभ दंताइं दे गणइस्सं' इत्यभिदधदन्तरानन्दं विन्दते अत्यल्पाश्च योगिसिद्धसाध्यगणात्मकास्ते ये प्रेतरङ्कसङ्कुले श्मशानस्थलेऽमन्दमानन्दसन्दोहमुपभुञ्जते। काव्ये नाट्ये च तेभ्य एव भावेभ्य आनन्दोत्पत्तिरिति न किमपि चित्रम्। पुरःस्थात् वर्म्मसन्नाहवतो वीरात्भयमेव जायते, चित्रार्पितारम्भात्तस्मादानन्द—इति विश्वजनीनाऽनुभूतिरेवात्र निदर्शनम्। यत्तु 'अष्टौ नाट्ये रसा' इति, तदुपलक्षणं, काव्येऽपि नाट्यमाने ते—उभयत्रापि नवमः शान्ताख्य

'अष्टौ नाट्ये रसाः स्मृताः॥' Kavyaprakasa—*under* Ullasa V.

नाट्य एवाष्टौ, लोके तु शृङ्गारादीनां कियतामेव, पूर्व्वोक्तरसलक्षणाश्रयत्वात्।

अथ नाट्यरसानां भेदेषु शृङ्गारस्यादित्वेन समुचितेऽपि प्राङ्निर्देशे सविशेषवर्णनीयत्वात्, अलौकिकत्वेनैव प्रतिपादनीयत्वाच्च पश्चादेव निरूपणं करिष्यते। सम्प्रति वीरक्रमेणाह—तत्र च प्राकृताप्राकृतत्वेन ज्ञापितेऽपि भेदेऽप्राकृतमेवोदाहरिष्यामः (प)।

**अप्राकृतोऽपि द्विविधः प्रत्यालम्बनभेदतः।**
**सजातीयं विजातीयं प्रत्यालम्बनमिष्यते॥ ७२का**

तत्र विजातीयालम्बनोऽप्राकृतवीरो यथा—

गुणं कर्णाकृष्टं करकिशलयं तूणशिखरे
धनुश्चक्रीभूतं निपतदिषुवृन्दं तत इतः।

अर्थेति—यद्यपि शृङ्गाररसस्य परममुख्यत्वेनादौ तस्यैव निर्द्देशः समुचितः, तथापि तस्याङ्गानामतिबाहुल्येन पश्चान्निरूपणं भविष्यति। सम्प्रति सचीकटाहन्यायेनादौ वीरादिरसवर्णनमेवाह—तत्र चेति।

गुणमिति—जरासन्धस्य युद्धे देवसमूहे श्रीकृष्णस्य युद्धलाघवं पश्यति सति श्रीकृष्णस्य भुजवीर्य्यञ्जयति। युद्धलाघवमेवाह (I)—यदा देवानां गुणे दृष्टिस्तदा कर्णनिकटे सर्व्वदा गुणं पश्यन्ति। यदा तु दक्षिणे करे दृष्टिस्तदा सर्व्वदैव वाणग्रहणार्थं तूणे करकिशलयम्पश्यन्ति। यदा तु धनुषि दृष्टिस्तदा सर्व्वदैवेतस्ततो निपतितान् वाणसमूहान् पश्यन्ति। यदा विपक्षसमूहे दृष्टिस्तदा सर्व्वदैव तान् भूमौ निपतितान् पश्यन्ति।

---

इति तु दर्शितमेवास्माभिः। 'वस्तुतस्तु तेषां ज्ञानित्वेनेत्यादि' टीकायां यच्चक्रवर्त्तिचरणैरुक्तं तत् ज्ञानयोगतो भक्तियोगस्य श्रेयस्त्वदर्शनाय—निर्व्विकल्पज्ञानसमाधिमादधाना परमानन्दं नास्वादयन्तीति तु तत्त्वतो रिक्तं वचः।

(प) अप्राकृतमेवोदाहरिष्याम इति—सर्व्वेषां लक्ष्याणामत्र श्रीकृष्णचरितनिष्ठत्वात्, न तु तावत् 'प्राकृते रसो नास्ती'ति हेतोः। तच्च 'प्राकृताप्राकृतत्वेन ज्ञापितेऽपि भेदे' इति प्रतीकात् सुस्पष्टमेव।

---

(I) एवं (ग) (छ) पुस्तकयोः पाठः। "सर्व्वदैव वाणाक्षेपार्थं गुणं कर्णाकृष्टं पश्यन्ति। यदा तूणे दृष्टिरदि"त्यादि पाठ. (क) पुस्तके, "यदा करकिशलये दृष्टिरदि"त्यादि (ख) पुस्तके, (ङ) पुस्तकेऽयमंशोऽंशतः पतितः।

रिपून् भूमौ सुप्तान् कलयति समं देवनिकरे
जरासन्धस्याजौ जयति भुजवीर्य्यं मुरभिदः॥ १

अत्र प्रकृते उत्साहः स्थायी—स च द्विनिष्ठः। आलम्बनविभावो जरासन्धस्तस्य च कृष्णः। उद्दीपनमन्योन्यशौटीर्य्यादि। अनुभावो वाणवर्षिणि हस्तलाघवम्। व्यभिचारी गर्व्वाग्रताऽमर्षचपलताऽदिः। एतैः परिपुष्टः स्थायी रसतां प्राप्तः। स चानुकार्य्ये भगवति प्रकृते परोक्षः, काव्यश्रवणात् सामाजिके प्रत्यक्ष इति सर्व्वत्रोन्नेयम्। सजातीयालम्बनस्तूह्यः। केचित् सखिभिः सह युद्धमुदाहरिष्यते—तत्तु लीलाविशेष इति प्रकृते न लिख्यते (फ)।

एष च युद्धदानदयाधर्म्मपूर्व्वत्वाच्चतुर्द्धा। सर्व्वत्रोत्साहः स्थायी। उह्यान्युदाहरणानि।

एवञ्च हस्तस्यातिलाघवात् सर्व्वाः क्रियाः सर्व्वदैवालातचक्रवत् पश्यन्तीति भावः। तस्य जरासन्धस्य विजातीयालम्बनः श्रीकृष्णः। प्रकृते, न तु नटवत् कृत्रिमे। एवम्भूते भगवति स रस इदानीन्तनलीलानां लीलाश्रयाणाञ्च सर्व्वेषामप्राकट्येन परोक्षः, सामाजिकानान्तु चास्वादाङ्कुरमूलभूतस्य स्थायिनोऽचिन्त्या शक्तिरीदृशी याऽप्रकटामपि तत्तल्लीलां काव्यनाटकगतां साक्षात्कारत्वेन प्रकाशयति—अतस्तेषां स रसः प्रत्यक्षरूपः। सजातीयालम्बनो महादेवादिः। सखिभिः श्रीदामादिभिः सजातीयालम्बनैः सह श्रीकृष्णस्य युद्धमुदाहरिष्यते। लीलाविशेष इति—जरासन्धस्य यथा द्वेषक्रोधादिजन्ययुयुत्सारूप उत्साहः स्थायी तथा श्रीदामादीनां न, किन्तु कौतुकविशेष इत्यर्थः।

एष चेति—युद्धवीर दानवीर दयावीर धर्म्मवीरा इति चतुर्व्विध रसो भवतीत्यर्थः।

(फ) केचिदिति—वैष्णवालङ्कारिकैरिति शेषः। वस्तुतस्तु सखिभिः सह युद्धे न तावत्तदुत्थविजयादिकर्म्मणि तात्त्विकं किमपि तात्पर्य्यम्, अतो तस्यागणनमेव वरम्—श्रीकृष्णस्य निखिलमेव कृत्यं लीलाविलसितमिति चेत्—दार्शनिकसुलभप्रौढ़ोक्तिस्तत्, स च पक्षः रसस्यैकध्यमेव प्रमापयति, न तदस्माकमरुचिरं, परं भेदस्तेत् कर्त्तव्यो रसानां तदा सखिभिः सह कृतकयुद्धस्य वीररसमध्येऽन्तर्भावो न सुष्ठिति। एषु रसानां लक्षणप्रदर्शककारिकासन्दर्भव्युक्तस्तत्तद्वर्णदेवतानुभावादीनि तत्त्वानि दर्पण-रसार्णवसुधाकरादितो लक्ष्याणि। मूले युद्धवीरस्यैवोदाहरणोपन्यासः—इतरेषां सकलसुचरितनिकषायमाणे श्रीकृष्णे लक्ष्ये सम्भवेऽपि न वैशद्येनेह प्रदर्शनम्। दानवीरो जामदग्न्यः, दयावीरो नागानन्दनायको जीमूतवाहनः धर्म्मवीरो युधिष्ठिर इतीतरे—तत्तच्चरितमूलाण्युदाहरणानि तैश्च स्वीयग्रन्थेषु दर्शितानि।

अथ करुणः—

दौर्गुप्तायां मधुविजयिनो हा कथं द्वारवत्या-

मन्यायोऽस्यामयमुदभवद्धन्त निष्कल्मषायाम् ।

जातं जातं सुतमुपहरत्येष मेऽकालमृत्युः

को मां त्राता हरिहरि हहा हा हता हा हताः स्मः॥ २

अत्र शोकः स्थायी । एष एकनिष्ठः । पुत्रनाश आलम्बनम् । पुत्रगतममताऽप्युद्दीपनम् । अनुभावः शिरस्ताडनादि । व्यभिचारी विषाददैन्यग्लान्यादिः । अयन्तु सामाजिकगत एव, नानुकार्य्यगतः परोक्षेऽपि । अयं सामाजिकगतोऽप्यप्राकृतः, कृष्णाश्रयत्वात् ।

अथाद्भुतः—

आलोकः सखि ! लोकलोचनमुदामुद्रेकमुद्भावयन्

सोमस्तोमनिदाघधामनिवहप्रद्योतसद्योहरः ।

मेघे माघवने मणावपि घृणानिर्व्वाहको नीलिमा

सामानाधिकरण्यमत्र किमहो चित्रं तमस्तेजसोः ॥ ३

अत्र विस्मयः स्थायी । एष एकनिष्ठः । आलम्बनं श्रीकृष्णः । उद्दीपनं तल्लावण्यादि । अनुभावो रोमाञ्चादिः । व्यभिचारी आवेगमतिचपलताऽऽदिः । अयं परोक्षोऽनुकार्य्यगतः, प्रत्यक्षः सामाजिकगतः । अयमप्राकृत एव (ब ।

अस्यां द्वारवत्यामयमन्याय उदभवत् । अन्यायमेवाह—जातमिति । नानुकार्य्यगत इति—पुत्रमरणजन्योत्कटदुःखमानन्दरूपस्य रसस्याविर्भावे प्रतिबन्धकमिति भावः ।

आलोक इति—हे सखि ! विरुद्धमपि तमस्तेजसोः सामानाधिकरण्यं कृष्णे एकत्रैव वर्त्तते इत्यहो अत्राश्चर्य्यम् । श्रीकृष्णे तयोः सामानाधिकरण्यमाह—कृष्णे वर्त्तमानो य आलोकः प्रकाशः स लोकलोचनानामानन्दोद्रेकमुद्भावयन् सन् सोमस्तोमश्चन्द्रसमूहः निदाघधामनिवहः सूर्य्यसमूहस्तयोः प्रद्योतानाम्प्रकाशानां सद्योहर्त्ता । 'आलोकौ दर्शनोद्द्योता'विति नानार्थः

(ब) अत्र प्रकृते विरुद्धधर्म्मयोरेकत्र स्थितिरेव विस्मयः—स चालौकिकचमत्कारमयः, अप्राकृतत्वान्नायकाश्रयश्च । 'लोकलोचनमुदा'मिति बहुत्वोक्तेस्तदन्तर्भावितजनानामखिलानामेवानन्ददायकत्वं, 'स्तोम' 'निवह' पदाभ्यां तस्यानुपमत्वञ्च सूचितम् । नीलिमप्रशंसनेन तद्गतश्यामवर्णस्य लावण्यललितता सूचिता । नामरूपत एवेष्टदेवस्याह्लादकता

अथ हासः—

उन्मत्ताभिर्व्वसन्तोत्सवरभसमदैर्गोदुहां कन्यकाभिः
चोदैः सिन्दूरचन्द्रागुरुमलयरुहां हा धिगन्धीकृतोऽस्मि ।
जाड्यं गन्धाम्बुसेकैरजनि तत इतो धावितुं नास्मि शक्तो
व्यापद्येऽहं वयस्य ! प्रियसखमव मां मास्त्विह ब्रह्महत्या ॥ ४

अत्र भगवत्सखो विदूषको ब्राह्मणवटुर्म्मधुमङ्गलो वक्ता । हासः स्थायी । एष बहुनिष्ठः । आलम्बनं वसन्तोत्सवः । उद्दीपनं विदूषकस्य वैक्लव्यम् । अनुभावो नयनस्फारताऽऽदिः । व्यभिचारी श्रममदचपलताग्लान्यादिः ।

उन्मत्तेति—वसन्तोत्सवजन्यहर्षमदैः करणैरुन्मत्ताभिर्गोपीभिर्म्मलयरुहां चन्दनानां चोदैश्चूर्णैरन्धीकृतोऽस्मि । तथा जलसेकैर्मम जाड्यमप्यजनि, अतः पलायितुमपि न शक्तोऽस्मि । हे वयस्य ! कृष्ण ! अहं व्यापद्ये, म्रिये, अतो मामव रक्ष ।

---

वैष्णवकविसम्प्रदायवर्णिता—तस्यास्तत्र रूपनिष्ठवर्णमाधुर्य्यस्य प्रकटनं, वर्णगौरवं श्रीकृष्णचैतन्यविग्रहे 'कृष्णवर्णं त्विषाऽकृष्ण'मित्यादिना सूचिते श्रीकृष्णचैतन्ये च सुमहदन्तं इति साधनधनानामुपासकानामनुभवसिद्धं, वैष्णवकवीनां परा मोचोपनिषच्च तदुपजीविकेति सर्व्वमवदातम् । ''नवजलधरवर्णं चम्पकोद्भासिकर्णं विकसितनलिनास्यं विस्फुरन्मन्दहास्यम् । कनकरुचिदुकूलं चारुवर्हावचूलं कमपि निखिलसारं नौमि गोपीकुमारम् ॥'' इति मुकुन्दमुक्तावल्यान्तस्यैव नवजलधररुचेर्गोपवधूटीदुकूलचौरस्य वर्णस्तुत्यवलम्बिन्याराधना । 'अंसालम्बितवामकुन्तलभरं मन्दोन्नतभ्रूलतं किञ्चित्कुञ्चितकोमलाधरपुटं साचिप्रसारेक्षणम् । आलोलाङ्गुलिपल्लवैर्म्मुरलिकामापूरयन्तं मुदा मूले कल्पतरोस्त्रिभङ्गललितं जाने जगन्मोहनम् ॥' 'कस्तूरीतिलकं ललाटफलके वक्षःस्थले कौस्तुभं नासाग्रे नवमौक्तिकं करतले वेणुं करे कङ्कणम् । सर्व्वाङ्गे हरिचन्दनञ्च कलयन् कण्ठे च मुक्तावलीं गोपस्त्रीपरिवेष्टितो विजयते गोपालचूड़ामणिः ।' इति श्रीकृष्णकर्णामृतादावलौकिकस्यापि तस्यैव रूपप्रकर्षस्य लौकिकवत् प्रत्यक्षायमाणत्वम् । 'अमिया सागरे सिनान करिया साधिव मनेरि साधा । मरिया हइव श्रीनन्दनन्दन तोमारे करिव राधा ॥' 'ढल ढल काँचा अङ्गेर लावणी अवनी वहिया याय ।' इत्यादि गौड़ीयवैष्णवकवीनामुच्छ्वसिते प्रतिभाऽम्बतवारिधौ रूपच्छायोद्घाटनेन स्वरूपमाहात्म्याविष्कारश्च निसर्गतोऽत्र नः स्मृतिपथमारोहति । एवमप्याधुनिकाकविसूक्तिष्वन्ये कस्मिंश्चित् भगवत्सत्ताऽनुगृहीतमचिद्रूपमपि जगद्वस्तुकदम्बकमुपलक्ष्य विस्मयरसस्य सुतरामवतार उपभोग्योऽधोनिविष्टसन्दर्भेवम्यतः—

Into the Elysian fields of thought enters no satisfaction but brings with it youth and strength and ardour ; nor is there a thing in this world

एष त्रिविधः—स्मितं हासः प्रहासश्चेति (भ)।

अधरोष्ठस्फारतया सृक्कण्योरेव विस्फुरत्।
अलक्षितद्विजं धीरा उत्तमानां स्मितं विदुः॥
विकसद्दशनद्योतो गण्डाभोगे प्रफुल्लता।
किञ्चित्कलः कण्ठरवो यत्र हासः स मध्यमः॥
सघर्म्मः साश्रुताम्राक्षः स्फुटघोरकटुस्वनः।
व्यात्ताननो व्यक्तदन्तः प्रहासो ग्राम्य उच्यते॥ ७४का

अथ भयानकः—

दंष्ट्राकोटिकठोरकूटकटुना ब्रह्माण्डभाण्डस्थितं
सर्व्वं चर्व्वयसीव हन्त वदनेनाङ्गोर्णपूर्णार्च्चिषा।
जिह्वाग्रेण समग्रमुग्रमहसा लेलिह्यसे रोदसी
त्रस्तं मामिह पाहि पाहि भगवन् पार्थोऽप्यपार्थोऽभवम् (म)॥५

दंष्ट्रेति—वदनेन कथम्भूतेन? दंष्ट्रायाः कोटिभिरग्रभागैः करणैः कठोरादद्यादपि कटुना। रोदसी द्यावापृथिव्यौ जिह्वया लेलिह्यसे। अतस्त्रस्तं मां पाहि। पार्थोऽप्यहमपार्थो व्यर्थोऽभवम् अनुकार्य्योऽर्ज्जुनेऽपि। आश्रयत्वेनानेन कारणेन सकरुन्दस्य भयं विना नानन्दोत्पत्तिः। यदि प्रौय्यं मति च प्रदर्शनेऽप्यानन्दस्तदोत्साह एव स्थायी।

---

on which the mind thrives more readily than *the ecstasy, nay the debauch, of eagerness, comprehension and wonder. The Buried Temple* of Maeterlinck translated by A. Sutro.

(भ) 'भीषणाकृतिवेषाणां क्रियायाश्च विकारतः। लौल्यादेश्च परस्थानामेषामनुकृतेरिति। विकाश्चेतसो हास' इति हासलक्षणं रसार्णवसुधाकरे। द्विविधश्चायम्—'आत्मस्थः परस्थश्च। यदा स्वयं हसति तदाऽऽत्मस्थः, यदा परं हासयति तदा परस्थः।' इति भरतीये नाट्यशास्त्रे। एष चाप्राकृतनिष्ठ उत्प्रासविजृम्भितो वा सुतरां पोषमेति। मुनीन्द्रोऽप्येवमाह—'स्त्रीनीचप्रकृतावेष भूयिष्ठं दृश्यते रसः।' मुनीन्द्रादीनां मतेऽस्य षड्भेदा विज्ञेयाः, ते नामतो लक्षणतश्च नाट्यशास्त्रादिष्वाकरेष्वेव द्रष्टव्याः। अप्राकृताश्रितस्यास्य उत्तममध्यमाधमप्रकृतिभेदेन वैरूप्यमपि तत्र दर्शितम्। अप्राकृतनिष्ठस्य हासस्य दिङ्मात्रमुदाहरणं शार्ङ्गधरपद्धतावुद्धृतोऽधोदर्शितः श्लोकः—'भोजनं प्राप्य दुर्बुद्धे मा प्राणेषु दयां कुरु। दुर्लभानि परान्नानि प्राणा जन्मनि जन्मनि।'

(म) विश्वरूपदर्शनत्रस्तस्यार्ज्जुनस्य कातरोक्तिरियम्—तथा च श्रीमद्भगवद्गीतायाम्—

अत्रार्जुनस्य भयं स्थायि। स चैकनिष्ठः। आलम्बनं विश्वरूपप्रदर्शकः श्रीकृष्णः। उद्दीपनन्तन्नतदंष्ट्राऽऽदि। अनुभावः 'पाहि पाही'ति कातर्य्यम्। व्यभिचारी 'अपार्थोऽभव'मिति दैन्यम्। एव च कृष्णालम्बनत्वात् मामग्रो-सान्निध्येनानुकार्य्येऽपि रसतां प्राक् प्राप्त एव। भयेऽपि कृष्णस्फूर्त्तेस्तत्-सम्बन्धादानन्द एवेत्यप्राकृत एव। न तु मालत्यादौ शार्दूलाद्यालम्बनेन मकरन्दस्य भयं विनाऽऽनन्दः। सति शौर्य्ये उत्साह एव स्थायी भवति। तेन कदाचिदानन्दो जायते, न भयतः। तेन प्राकृते न रसता (य)।

अथ वीभत्सः—

दैत्येन्द्राणां मथितवपुषामन्त्रमेदोऽस्थिमज्जा-
मांसासृक्कल्वक्स्यपुटपटलीस्वादमोदप्रमत्ताः।
कौमोदक्या मधुविजयिनः कीर्त्तिमुत्कीर्त्तयन्तः
सार्द्धं गृध्रैर्व्विदधति मुदं प्रेतरङ्का विशङ्काः॥ ६

कौमोदक्या गदया मथितवपुषां दैत्येन्द्राणाम्। अन्त्र 'आँत' इति प्रसिद्धः, स्यपुटं नाड़ी-ग्रन्थिविशेषः—तेषां पटलीनां समूहानामास्वादनैर्ज्जातो यो मोदस्तेन प्रमत्ताः प्रेतरङ्का मुदं विदधति।

---

'लेलिह्यसे ग्रसमानः समन्ताल्लोकान् समग्रान् वदनैर्ज्ज्वलद्भिः। तेजोभिरापूर्य्य जगत् समग्रं भासस्तवोग्राः प्रतपन्ति विष्णो॥' 'दंष्ट्राकरालानि च ते मुखानि दृष्ट्वैव कालानलसन्निभानि। दिशो न जाने न लभे च शर्म्म प्रसीद देवेश जगन्निवास॥' इति। प्राकृताश्रितो भयानकरसः प्रायः स्त्रीनीचप्रकृतिः, परमप्राकृताश्रिते तस्मिन् यथेह ऊर्ज्जस्विनः क्षत्रियोत्तमस्यापि भीतिजनने न किमप्यशोभनम्। लोकव्यवहारतः कालाग्नीतिने कदापि कस्यापि गर्हणीयत्वम्।

(य) न रसता—किमभिप्रायमेतदभिधानमिति पृच्छायां वयं ब्रूमः—यदत्र प्राकृताश्रयिणि भयानकरसे रसता न तावदपह्नूयते कौस्तुभकृद्भिः, परं प्राकृतेऽनुकार्य्ये सञ्चारिभयेनानन्दस्य बाधात् रसस्यानन्दमयत्वात् न रससत्ता सम्भवति। उभयत्रापि सामाजिकानामानन्दो-द्बोधाद्रसोपलब्धिरिति तु नान्याय्यमिति प्रागेव दर्शितमस्माभिः। 'भयानकवीभत्सादेः काव्य-नाट्ययोरेव रसते'ति (१३८ पृष्ठायाम्) ग्रन्थकृत्स्वरसादेतत् सुप्रतीतमपि टीकाकृतां मतनिर्व्वन्धप्रागल्भ्यप्रकटनाय पुनरुल्लिख्यते। सर्व्वेषां रसानामप्राकृताधिकारित्वकथने न काऽपि हानिः—यतो निखिलरसमूर्त्तिरमन्दस्फूर्त्तिः स्वानन्दरसघटया: श्रीकृष्ण इत्यत्रैकमत्यं सर्व्वेषां, परं तेषां प्राकृताश्रयत्वनिरासे हानिरेव वाढ़ं स्यात्। 'यदभिहितं रघोदानवादीनां रौद्रो रसः, किमन्येषां नास्ति? उच्यते। अस्त्यन्येषामपि ··किन्त्वधिकारोऽत्र गृह्यते, ते हि

अत्र देवासुरसंग्राममवसानमालोकयतां व्योमचारिणां जुगुप्सा स्थायी। स चैकनिष्ठः। शवशरीराद्यालम्बनम्। प्रेतरङ्गाद्युद्दीपनम्। अनुभावो मुखवैरूप्यादिः। व्यभिचारी ग्लानिदैन्यादिः। एतैः परिपुष्टा जुगुप्सा जुगुप्सैव यद्यपि तथापि भगवतः कृतिरियमिति भगवत्स्मरणादेवानन्दः। प्राकृते नत्वानन्दः, अपि तु नटव्यापारदर्शनात् सामाजिकानामेव तत्र रसः।

यथा वा—

इहैव करुणार्द्रया सहचरान् समुज्जीवय-
न्नघस्य जठरं गतो गरलजातवेदोव्यसून्।
तदन्त्रधमनीवसारुधिरमज्जलालादिभिः
प्लुतोऽप्यनवलिप्तवच्छुचिरुचिः स जीयाद्धरिः॥ ७

अत्र भगवत एवानन्दत्वात्तदन्त्रादिदर्शनेनाप्यानन्द एव लीलावतां, तथात्वात् भक्तानाञ्च तस्य स्फूर्त्तावेव

अथ रौद्रः—

स्पर्शेनापि न वेद्य एव भवता मृत्योर्मुखं गच्छता
किं दोर्म्मण्डलचण्डिमैष भवते विज्ञापनीयो मया।
येनाखण्डलशौण्डखण्डनकृता गोगडूकृतोऽयं गिरिः
किं रे कष्टमरिष्ट दुष्ट तनुषे गोष्ठस्य नस्तिष्ठ रे (र)॥ ८

इहैवेति. गरलरूपेण जातवेदसाऽग्निना व्यसून् विगतप्राणान् मूर्च्छितानित्यर्थः, तेषां पार्षदत्वेन नित्यत्वान्न वास्तवप्राणत्यागः सम्भवतीति। प्लुतोऽपि व्याप्तोऽप्यनवलिप्त इव शुचिः शुद्धा रुचिः कान्तिर्यस्य सः, 'सुन्दरे किमसुन्दर'मित्युक्तेः—उक्तञ्च दशमे—पङ्काङ्गरागरुचिर'मिति। अत्रेति -भगवत आनन्दरूपत्वाल्लीलावतां पार्षदानामपि तथात्वादानन्दरूपत्वात्। अत एवानन्दोद्रेकस्याधिक्यतान्त्रादिदर्शनेनानन्दोत्पत्तिरेव—

स्वभावत एव रौद्रः (नाट्यशास्त्र षष्ठाध्याये) इति वदतेनाङ्गस्य तेऽपि मतपरिणामः सुधीकः सुवहश्चेत्यलं पिष्टपेषणेन।

(र) अरिष्टवधः श्रीमद्भागवतसंहितोदितः ग्रन्थकृत्कृते आनन्दवृन्दावन पञ्चदश स्तवके वर्णनीयः। स्वाधिदैवताद्रुद्रादुग्रकर्म्मक्रियात्मकादस्य रौद्र इति संज्ञेति बहवः। क्रोध-स्थायिभावो रक्षोदानवोद्धतमनुष्यप्रकृतिकः संग्रामहेतुकश्चायं रसः। रक्तास्यनेत्रता-भ्रुकुटीकरण-दन्तौष्ठपीडन-गण्डस्फुरण-हस्ताग्रनिष्पेषादिभिरनुभावैरस्य प्रायशः सामाजिक-

अत्र कोपः स्थायी। एष एकनिष्ठ उभयनिष्ठश्च—अत्र तूभयनिष्ठ एव। आलम्बनमन्योन्यम्। उद्दीपनमन्योन्यविक्रमः। अनुभावो वागाड़म्बर्य्यादिः। व्यभिचारी गर्व्वादिः। एवं स्फुटोऽयं रसः—स च भगवति परोक्षः, सामाजिके प्रत्यक्षः। आद्ये विजातीयालम्बनोऽप्राकृतः; द्वितीयेऽप्राकृत एव।

अथ शान्तः—

वयो जीर्णं हा धिक् तदपि न हि जीर्णो मदभरः

श्लथं चर्म्माङ्गेभ्यस्तदपि न हि रागः श्लथ इव।

रदाः शीर्णास्तदपि न हि मोहः, कथमयं

जनः कंसारातेश्चरणकमलाय स्पृहयतु (ल)॥ ९

न तु प्राकृतानामिव दुःखं, तेषां दुःखरूपत्वेन भयानकवीभत्सितवस्तुदर्शने दुःखमेवोत्पद्यत इति विशेषो ज्ञेयः।

स्पर्शनेति—मत्कर्त्तृकस्पर्शनापि हेतुना म्लयोन्मुखं गच्छता भवताऽहं न वेद्यः न ज्ञातुं शक्य एव—तथा च मद्विषयकज्ञानमेव तत्र न भविष्यति, किं दोःखण्डिमा मया भवते विज्ञापनीय इति भावः। इन्द्रपराक्रमखण्डनकृता येन दोर्दण्डेनायं गोवर्द्धनगिरिर्गण्डूकृतः। आद्ये असुरमात्रनिष्ठे कोपे विजातीयालम्बनो भगवान्। द्वितीये उभयनिष्ठे, तदा सुतरां भगवानप्राकृत एव।

---

प्रत्यक्षता। विजातीयालम्बनोऽप्राकृतः—विजातीयोऽरिरालम्बनं यस्य स भगवानप्राकृतः। अत्र चतुर्थचरणे 'ट'वर्गयुक्तवर्णानां निवेशनेन रसानुगुण्यं प्रकटम्।

(ल) वयो जीर्णमिति—एवमप्याचार्य्यशङ्करो समग्रे मोहमुद्गरे विशिष्य 'अङ्गं गलितं पलितं मुण्डं दन्तविहीनं जातं तुण्ड'मिति' पज्झटिकायां निर्व्वेदमेवोपदिदेश। तदुत्था समाधिमय्येकान्तता चात्र विलसति। आह च भगवान् भरतः—'योगीव ध्यानरतो भवति हि निर्व्वेदवान् पुरुषः।' भरतोये तु निर्व्वेदस्य व्यभिचारिभावरूपेण परिग्रहः, न तु स्थायिभावतया—तेन तन्मतेऽष्टावेव रसाः। मतञ्चैतत् प्रागेवालोचितमस्माभिः—सञ्चार्य्यादीनामभावयुक्तिस्तु इत्यमपास्ता दर्पणे—'युक्तवियुक्तदशायामवस्थितो यः शमः स एव यतः। रसतामेति तदस्मिन् सञ्चार्य्यादेः स्थितिश्च न विरुद्धा॥' इति। अतएव ध्वनिकारादिमतानुसारिभिः शमस्य न्यायस्त्वमुक्त्वा शान्तरसस्य प्राधान्यख्यापनाय यत्नेष्टि। एवमभिदधुरालङ्कारिकचूड़ामणयो लोचनकृदोऽभिनवगुप्तपादाः—"मोक्षफलत्वेन चायं परमपुरुषार्थनिष्ठत्वात् सर्व्वरसेभ्यः प्रधानतमः स चायं शान्तरसः" इति। भर्त्तृहरिकृतवैराग्यशतके भक्तमन्दरचितस्तवकदम्बे च रसस्यास्य बहुलः प्रसारस्तत्रैव स समास्वादनीयः सेवनीयश्च सहृदयैः।

अत्र निर्व्वेदः स्थायी । स चैकनिष्ठः । आलम्बनं संसारदुःखम् । उद्दीपनं पुण्यतीर्थादि । अनुभावो विषयासक्तित्यागः । व्यभिचारी मतिस्मृतिधृत्यादिः । एष रसोऽनुकार्य्ये परोक्षः, सामाजिके प्रत्यक्षः । चमत्कारी चायम् ।

तथा च—

"यच्च कामसुखं लोके यच्च दिव्यसुखं महत् । Mahabharata

तृष्णाक्षयसुखस्यैते नार्हतः षोड़शीं कलाम् ॥"

चमत्कारातिशयेनानन्दातिशयः । अयं श्रीकृष्णभक्त्युपयुक्तो यदि भवति तदाऽप्राकृत एव । यथाऽयं निर्व्वेदो व्यभिचारी सन्नपि शान्तरसे स्थायितां प्राप्य रसतामाप्नोति तथा सैव देवादिविषया रति'र्भाव' इति पारिभाषिकोऽपि भावः (12) स्थायी सन् तत्तद्विभावादिसामग्रीसमवेतो भूत्वा 'भक्तिरस' इति (व) द्वादश रसा भवन्ति । स पुनर्भक्तिरसः श्रीकृष्णाश्रयो भवन् रत्यादिभिः स्थायिभिर्द्दशविधो भवति । तदन्यत्रोह्यम् ।

यत्र इति - अङ्गेभ्यः सकाशाच्चर्म्म श्लथं, तदपि रागः श्लथ इव श्लथतुल्योऽपि न भवति । केचिच्छान्तस्य रसत्वं न मन्यन्ते, तन्मतं दूषयितुमाह—अयमिति । चमत्कारित्वे हेतुं प्राचीनानां श्लोकमाह—तथा चेति । तृष्णाक्षयसुखरूपचन्द्रस्य षोड़शीमेकां कलामपीत्रते मर्त्त्यलोकस्थस्वर्गस्थसुखे नार्हतः—तस्माच्चमत्कारसत्त्वे तस्य रसत्वमवश्यमङ्गीकार्य्यं 'रसे सारश्चमत्कार' इत्युक्तेः । द्वादश रसा इति—पूर्व्वमेकादश रसा उक्ताः, अयमेको रसो मिलित्वा द्वादश भवन्तीत्यर्थः । कस्यचिन्मतेऽसौ भक्तिरस एव श्रीकृष्णाश्रयो भवन् स्वातन्त्र्येण दशविधो भवति, तस्य स्वरूपलक्षणोदाहरणमन्यत्र तस्यैव ग्रन्थे ऊह्यम् ।

---

(व) रतिर्भाव इति पारिभाषिकोऽपीति—व्यापकवृत्त्या 'रति'पदेन प्रीतिमूलानां निखिलानां चित्तवृत्तीनां परिग्रहः । पारिभाषिकस्य तस्येत्थमर्थो निर्द्दिष्टो रसामृतसिन्धौ— 'मिथो हरेर्म्मृगाक्ष्याश्च सम्भोगस्यादिकारणम् । मधुरापरपर्य्याया प्रियताख्योदिता रतिः ॥' 'भाव'पदेन रतिशोकोत्साहक्रोधशमादीनां सर्व्वेषामेव व्यापकत्वया परिग्रहः, पारिभाषिकात्तस्मात्तु 'सञ्चारिणः प्रधानानि देवादिविषया रतिः । उद्बुद्धमात्रः स्थायी च भाव इत्यभिधीयते ॥' इत्युक्तलक्षणपदार्थग्रहः । अत्र लक्षणे देवादी'त्यादि'पदेन पुत्रादिविषया रतिरपि गृह्यतेति केचित् । रसगङ्गाधरकृदप्येवम् । तन्मते वात्सल्यस्य रसत्वेन न पृथग्गणना । परं श्रीकृष्णविषया सा परो रसः—भक्तिरस इति तस्य संज्ञा । एतच्च प्रागेवास्माभी रसस्वरूपसंख्याद्यालोचनप्रस्तावे सम्यग्विवेचितमिति न पुनरवतारस्तस्यात्र कृतः ।

---

(12) 'पारिभाषिको भावः' इति (क) (ङ) पुस्तकयोः ।

अथ वात्सल्यम्—

आराज्जानुकरोपसर्पणपरो जातस्मितं सञ्चर-

न्नङ्कारोहमनाप्नुवन् रुरुदिषाविम्लानचन्द्राननः ।

अभ्यासार्थमुपेक्षितोऽपसरणप्रक्रान्तया सत्वरं

कण्ठेकृत्य यशोदया न न न नेत्याश्वासि बालो हरिः ॥ १०

अत्र ममकारः स्थायी । एष एकनिष्ठः । आलम्बनं श्रीकृष्णः, उद्दीपनन्तद्‌गतचङ्क्रमणादि । अनुभावः कण्ठेकृत्यालिङ्गनादिः । व्यभिचारी हर्षादिः । एष परोक्षो व्रजेश्वरीनिष्ठः, प्रत्यक्षः सामाजिकनिष्ठः । उभयथैवाऽयमप्राकृतः ।

अथ प्रेमरसः—

प्रेयांस्तेऽहं त्वमपि च मम प्रेयसीति प्रवाद-

स्त्वं मे प्राणा अहमपि तवास्मीति हन्त प्रलापः ।

त्वं मे ते स्यामहमिति च यत्तच्च नो साधु राधे !

व्याहारे नौ न हि समुचितो युष्मदस्मत्प्रयोगः ॥ ११

अत्र चित्तद्रवः स्थायी । स चोभयनिष्ठः । आलम्बनमन्योन्यम् । उद्दीपनमन्योन्यगुणपरिमलः । अनुभावो विशिष्य निर्व्वचनाभावः । व्यभिचारी मतिरौत्सुक्यादिः । परोक्षः श्रीकृष्णराधयोः, सामाजिकानां प्रत्यक्षः । प्रेमरसे सर्व्वे रसा अन्तर्भवन्तीत्यत्र महीयानेव प्रपञ्चः । ग्रन्थगौरवभयाद्दिङ्मात-

आरादिति—आरान्निकटे जानुकराभ्यां गमनपरो बालः श्रीकृष्णो मातुरङ्कारोहणार्थं सञ्चरन् यशोदयाऽपि गमनप्रक्रियायामभ्यासार्थं पुत्रानयनाय सम्मुखगमनं विहायापसरणे स्वस्य पृष्ठदेशगमने प्रक्रान्तयापेक्षितः श्रीकृष्णो मातुरङ्कारोहमप्राप्य रुरुदिषाम्लानमुखः पश्चाद्यशोदया सत्वरं यथा स्यात्तथा कण्ठेकृत्याश्वासितः ।

प्रेयांस्तेऽहमिति—श्रीकृष्ण आह—हे राधेऽहन्ते तव प्रेयान्, त्वं मे प्रेयसी, त्वं मे प्राणाः, अहमपि तव प्राणा अस्मीति । त्वं मे मम, ते तवाहं स्यामिति च यत् तत् सर्व्वं न साधु, यतो नावावयोर्व्याहारे कथाप्रसङ्गे युष्मदस्मत्प्रयोगो न समुचितः—आत्मनोर्हि-

---

दाद्दृष्टेति कथं भवन्ति ते, तदप्युदाहरणोपन्यासपूर्व्वकन्तत्रैव दर्शितम् । स पुनर्भक्तिरसो [illegible]विधो भवतीति—शान्त-प्रीति प्रेयो-वत्सल मधुराख्यभेदैः पञ्च, स्वार्था परार्थेति प्रत्येकं

अन्यतोऽवसेयम्—श्रीरूपगोस्वामिप्रभृतीनां निबन्धेष्विति शेषः ।

मुक्तम् (13)। केषाञ्चिन्मते श्रीराधाकृष्णयोः शृङ्गार एव रसः (ग)—तन्मतेऽप्येतदुदाहरणं नासङ्गतम्। शृङ्गारोऽङ्गी प्रेमाऽङ्गम्, अङ्गस्यापि क्वचिदुद्रिक्तता। वयन्तु प्रेमाऽङ्गी, शृङ्गारोऽङ्गमिति विशेषः। तथा च—

उन्मज्जन्ति निमज्जन्ति प्रेम्न्यखण्डरसत्वतः।
सर्व्वे रसाश्च भावाश्च तरङ्गा इव वारिधौ (घ) ॥ १२

देहत्व एव तादृशः प्रयोगः समुचितो भवति। यत्र तु श्यामपीतदेहद्वयोरेक एवात्मा—यथैकस्मात् कमलनालादुत्पन्नं नीलपीतकमलद्वयं, तद्वदिति ज्ञेयम्। उद्रिक्तता—अङ्गिरसापेक्षयाऽङ्गरसस्याधिक्यम्। एतदभिप्रायेण वयमपि शृङ्गारोऽङ्गमिति ब्रूमः।

अखण्डरसत्वतोऽखण्डरसत्वात् सर्व्वे उन्मज्जन्ति निमज्जन्ति समुद्रे तरङ्गा इव।

---

(ग) प्रेमरसे चित्तद्रवरूपविशिष्टाया रतेर्व्वोधारस्य व्यापकत्वं शृङ्गाररसात् यथाकथञ्चिदपि बुद्धात् साधारण्यात् रतिभावमयात्त्वमिति केचित्—अपरैस्तु तेनैव मार्गेण प्रेमरसस्य व्याप्तिरधिकेत्यनुमीयते। (If the connotation decreases, the denotation increases and *vice versa*.) तन्मते प्रेमाऽङ्गी, शृङ्गारोऽङ्गमिति। वस्तुतस्तु यत्किञ्चिदपि पार्थक्यमुपकल्प्यैतावान् विभागविस्तारः। ग्रन्थेऽत्र प्राक् सप्तविधगौणरतीनां वीरादारभ्य रौद्रं यावद्दर्शितानामुपन्यासः, पश्चात् शान्त-वात्सल्य-प्रेयो-भक्ति-प्रीतीनां पञ्चानां मुख्यरतीनां पृथङ्निर्द्देशः स्वसम्प्रदायमततात्पर्य्यलक्षणाय; ग्रन्थकृच्चेतरालङ्कारिका इव नवैव रसा इति स्वमतं सूचितवान्—स्वेच्छया लिखितं किञ्चित् किञ्चिदत्र परेच्छया। यत् पूर्व्वापरसंबद्धं तत् पूर्व्वमपरं परम्॥'—अग्रे श्रीकृष्णस्य सर्व्वरसात्मकत्वं सूचयितुं रचितः श्लोकोऽपि तदाशयक एव। महीयानेव प्रपञ्चः—मधुरोपनामकस्य भक्तिरसस्यैव महत्प्रपञ्चत्वं श्रीमद्रूपगोस्वामिनां ग्रन्थे—ग्रन्थावसाने सविनयसुक्तिश्च—'अतलत्वादपारत्वादाप्तोऽसौ दुर्व्विगाहताम्। स्पृष्टः परं तटस्थेन रसाब्धिर्मधुरो मया॥' इति।

(घ) 'एते चांशकलाः पुंसः कृष्णस्तु भगवान् स्वयं'मितिवत् प्रेमरसस्याखण्डत्वमितरेषां खण्डरसताऽर्थांशतः सूचिता। प्रेमरसे हि भूमस्वरूपस्य भगवतः शक्तिर्निहिता—यदि शृङ्गाररसत इतरेषां रसानां विपरिणामः सुकरः, कथं न तत्सारभूतात् प्रेम्न एतत्सम्भवः? अतो नात्र केवलं प्रौढ़िः। मानवहृदये वैरं तथाऽस्तु, घृणा वाऽस्तु, सर्व्वमेव प्रेमप्रकर्षमूलं, प्रेम्णि निलीने हृदये सर्व्वेषां साधीयान् लय इति नासाधारणसंवेद्यं तत्त्वम्। प्रेम्णो वारिधिसाम्यं कथञ्चिदुदाहरणद्वाराऽनुमीयते—वैष्णवकुलशेखरजयदेवसहृदुमापतिधरस्याधोदर्शितः श्लोको रसस्यैकस्याखण्डत्वं निपुणमनुमापयतीत्यस्माकं प्रतिभानम्—'रत्नच्छायाच्छुरितजलधौ मन्दिरे द्वारकाया रुक्मिण्याऽपि प्रबलपुलकोद्भेदमा-

(13) 'ग्रन्थगौरवतया दिङ्मात्र'मिति मुद्रितपुस्तके, 'ग्रन्थगौरवाद्दिङ्मात्र'मिति (क) (ख) पुस्तकयोः, 'ग्रन्थगौरवभयादि'त्यादि (ग) (घ) (च) पुस्तकेषु।

अथ भक्तिरसः—

जय श्रीमद्वृन्दावनमदन ! नन्दात्मज ! विभो !
प्रियाभीरीवृन्दारिक ! निखिलवृन्दारकमणे !!
चिदानन्दस्यन्दाधिकपदारविन्दासव ! नमो
नमस्ते गोविन्दाखिलभुवनकन्दाय महते (स) ॥ १२

अत्र देवविषयत्वाच्चेतोरञ्जकता रतिरेव भावः—स एव स्थायी, आलम्बनं श्रीकृष्णः, उद्दीपनन्तन्महिमादि, अनुभावो हृदयद्रवादिः, व्यभिचारी निर्व्वेददैन्यादिः, परोक्षो भक्तानां, सामाजिकानान्तु प्रत्यक्षः ।

यद्यपि भगवान् सर्व्वरसकदम्बसम्वलितः, तथापि मूर्त्तः शृङ्गार एव, सावर्ण्यात् तद्दैवतत्वाच्च (ह) । तथाहि—

जयेति—प्रियाऽभीरीस्वरूपा वृन्दारिका देवाङ्गना यस्य, हे तथाविध ! 'तत्प्रियार्थं सम्भवन्त्वमरस्त्रिय' इति दशमोक्तेः । हे निखिलवृन्दारकाणां देवानां मणे श्रेष्ठ ! चिदानन्दस्य ब्रह्मानन्दस्य स्यन्दः चरणं यदि सम्भवति तदा ततोऽप्यधिकश्चरणारविन्दस्यासवो यश्मो रूपमकरन्दो यस्य, हे तथाभूत !

सावर्ण्यादिति—श्रीकृष्णस्य यो वर्णः स एव वर्णः शृङ्गाररसस्य—एतेन रसानां साकारत्वमभिप्रेतं, तथाच ह्लादिनीशक्तेर्वृत्तिरूपा लक्ष्मीप्रभृतयो यथा साकारास्तथा ह्लादिनीशक्तेर्वृत्तिरूपा एते रसा अपि साकारा एवेति भावः ।

---

लिङ्गितस्य । विश्वं पायान्मसृणयमुनातीरवानीरकुञ्ज राधाकेलीभरपरिमलध्यानमूर्च्छा मुरारेः ॥' अत्र प्रेमा सम्भोगशृङ्गारोपचितो भक्तिरसस्य शान्तिरसस्य च पुष्टिं साधयति—औत्सुक्यस्मृतिमतिहर्षाऽसूयाचिन्तानिर्व्वेदानां बहूनां भावानामाश्रयाविरोधेन मधुर-मधुरमुन्मज्जननिमज्जनञ्च सहृदयहृदयसंवेद्यम् ।

(स) उदाहृते पद्ये इष्टदेवविषयिणी चेतोरञ्जकता स्तिमितस्तिमितेव विषयान्तर-चिन्तया न व्याकुला—सा भक्तहृद्गतभावविभावानां परां काष्ठामधिरोहति विभौ गोविन्दे प्रयुक्तस्य विशेषणस्य चरितार्थताख्यापनायालम् । एवमेव श्रीकृष्णचैतन्यरचितत्वेन कीर्त्तितेऽधोलिखिते श्लोके—'पुञ्जीभूतं प्रेम गोपाङ्गनानां मूर्त्तीभूतं भागधेयं यदूनाम् । एकीभूतं गुप्तवित्तं श्रुतीनां श्यामीभूतं ब्रह्म मे सन्निधत्ताम् ॥' 'तदेकं भजामस्तदेकं स्मरामस्तदेकं जगत्साक्षिरूपं नमामः' 'नमः पुरस्तादथ पृष्ठतस्ते नमोऽस्तु ते सर्व्वत एव सर्व्व' इत्यादिषु तस्यैव भक्तिरसस्य शरवत्तन्मयीभावेन वर्त्तनम् । 'सा पराऽनुरक्तिरीश्वरे' इति भक्तिसूत्रसूचितस्यास्य भावस्यैव स्पष्टु प्रकाशः ।

(ह) भगवान् हि पुञ्जीभूतं प्रेम (God is Love) । एषैव वैष्णवचिन्ताप्रवाहस्य

'रसः शृङ्गारनामाऽयं श्यामलः कृष्णदेवतः।' Rasasudhakara (?)

एवञ्च सर्व्वेषामेव रसानां वर्णा देवताश्च बोद्धव्याः।

सर्व्वरसात्मकत्वं श्रीकृष्णस्य यथा—

शृङ्गारी राधिकायां, सखिषु सकरुणः क्ष्वेड़दग्धेष्वघाद्दे,-
र्बीभत्सी तस्य गर्भे, व्रजकुलतनयाचेलचौर्य्ये प्रहासी।
वीरो दैत्येषु, रौद्री कुपितवति तुरासाहि, हैयङ्गवीन-
स्तेये भीमान्, विचित्री निजमहसि, शमी दामबन्धे, स जीयात् (च) ॥ १३

अथ शृङ्गारः—

धृते पाणिद्वन्द्वे झटिति झणितं रत्नवलये-
र्हृते नीवीग्रन्थौ मुखरितममन्दं रसनया।

शृङ्गारीति—शृङ्गारी शृङ्गाररसविशिष्टः, अघाद्देर्व्विषदग्धेषु सखिषु करुणरसविशिष्टः, तस्याघासुरस्य गर्भे प्रविष्टः कृष्णो बीभत्सरसविशिष्टः, तुरासाहीन्द्रे कुपितवति सति रौद्ररसविशिष्टः, निजतेजसि विस्मयरसवान्—तथाच दर्पणे यदा स्वकान्तिम्पश्यति तदा तस्य महान् विस्मयो जायत इति भावः, शमी शान्तरसविशिष्टः।

धृत इति—श्रीकृष्णस्य सम्प्राप्तो य आनन्दस्तस्य तु प्रतिहन्तर्य्यौ विगतबोधाया

---

सारभूता धोरणी। एवमपि रसान्तरसिन्धादौ सर्व्वरसात्मकत्वेऽपि श्रीकृष्णस्य तस्मिन् मधुररसस्यैव विषयत्वमधिकं सूचितम्। सर्व्वरसकदम्बेति—रसस्य नानारसात्मकत्वं तत्तत् नियतावलम्बनविभावसत्तामुपजीव्य वर्त्तते। एवमाह रसतरङ्गिण्यां श्रीमन्नारायणभट्टः—'शान्ते ब्राह्मण एव स्यात् प्रीते दासः प्रकीर्त्तितः। प्रेयसि स्युः सखायो हि यशोदा वत्सले स्मृता। मधुरे राधिका ज्ञेया हास्ये स्यान्मधुमङ्गलः। सखीयूथोऽद्भुते ज्ञेयो वीरे चानूर-शो-ष्ठधः। करुणे वत्सरूष्चादिर्ज्जटिलाद्यास्तु रौद्रके। गोवर्द्धनोऽभिमन्युश्च भयानक उदाहृतौ। तपस्विन्यादयो ह्यत्र बीभत्से परिकीर्त्तिताः। व्रजस्था नियता ज्ञेया आलम्बनविभावकाः॥' रसानां वर्णदेवतानिर्द्देशो भरतीयादिषु द्रष्टव्यः। शृङ्गारे तु नीलमणिः श्यामवर्णो देवर्स्तु-त्वनुभवसाचिकं तत्वम्।

(च) अत्र नव रसा लक्षिताः—एवमपि रुद्रभट्टीयशृङ्गारतिलकस्यावतरणिकायाम् 'शृङ्गारी गिरिजानने सकरुणो रत्यां प्रवीरः स्मरे बीभत्सोऽस्थिभिरुत्फणी च भयकृन्मूर्त्त्याऽद्भुतस्तुङ्गया। रौद्रो दक्षविमर्द्दने च हसकृन्नग्नः प्रशान्तश्चिरादित्थं सर्व्वरसात्मकः पशुपतिर्भूयात् स वो भूतये' द्वादश रसा लक्षिताः प्रागुदाहृते 'मल्लानामशनि'रित्यादिश्लोके। ग्रन्थकृत्कृतानन्दवृन्दावनचम्पकाव्ये 'शृङ्गारी'ति श्लोके उद्दिष्टानां बहूनां वार्त्ताऽनुसन्धेया, सर्व्वेषान्तु श्रीमद्भागवतपुराण एव कथा लभ्यया।

प्रियायाः स्वानन्दप्रतिहतधियः, किन्त्वपघनो
घनोत्कृष्णं कृष्णं प्रति समतनोत्तर्ज्जनमिव ॥ १४

यथा वा—

मृदुस्पन्दं लीलाकरकिशलयोत्कम्पमुदयत्-
प्रसूनेषुक्रीड़ाविवशमुदितालिव्रजसुखम्।
अमन्दीकुर्व्वाणङ्किमपि कलकण्ठध्वनिकलां
सिषेवे राधाङ्गं हरिरथ वसन्तानिलमिव ॥ १५

चित्तस्य क्षणमात्रनिर्हतिकृते तस्या मुखं चित्रितं
सद्यः पद्ममभूत्ततः परमहो पूर्णेन्दुरङ्कोज्झितः (14)।
आनन्दामृतमण्डलम्पुनरभूद्बिम्बं ततोऽभूद्विष-
स्तत्पश्चाद्यभूत्तदत सखे! मत्संविदो गोचरः ॥ १६

स्वर्गादानन्दमूर्च्छितायाः राधायाः अपघनो देह एव सम्भोगे घनोत्तृष्णां कृष्णां निवारयितुं तर्ज्जनमिव समतनोत्, तस्यास्तर्ज्जनेऽसामर्थ्येऽपि तत्परिजनरूपो देह एव श्रीकृष्णं ततर्ज्जेत्युत्प्रेक्षा। वस्तुतस्तु साऽनन्दवैवश्येन वाम्यादिकमपि कर्त्तुं न शशाकेत्युत्प्रेक्षा-ऽलङ्कारगम्यो वस्तुध्वनिः। तर्जनमेवाह—श्रीकृष्णेन तस्याः पाणिद्वन्द्वे धृते सति रत्न-वलयैर्झटिति झणितं, तथाच रत्नवलयानाञ्झङ्कारशब्देनैव हस्तरूपो देहः श्रीकृष्णान्ततर्ज्ज।

यथा वेति—हरी राधाया अङ्गं सिषेवे—यथा 'महाप्रसादान्नं सिषेवे' इत्युक्ते महा-प्रसादस्य भोजनमेव सेवेति बुध्यते, तथैवात्राप्यस्य सम्भोग एव सेवेति ज्ञेयम्। अङ्गं कीदृशम्? वसन्तकालस्यानिलमिव। साधर्म्यमाह—तत्सम्भोगसमये मृदुस्पन्दं वसन्तानिलमपि मृदुस्पन्दं, निवारणलीलया करकिशलयस्योत्कम्पो यत्र, अनिलपक्षे लीलाकरः कौतुककरः किशलयस्य नवीनपल्लवस्योत्कम्पो यत्र, उदयन्ती प्रसूनेषोः कन्दर्पस्य या क्रीड़ा तया विवशम्, उदितमालीव्रजानां सखीसमूहानां सुखं यत्र, पक्षेऽलिव्रजानां भ्रमरसमूहानाम्। कलो मधुरास्फुटो 'न न'ेति कण्ठध्वनिस्तस्य कलां वैदग्धीं किमप्य निर्व्वचनीयं यथास्यात्तथाऽमन्दीकुर्व्वाणं सर्व्वोत्कृष्टं कुर्व्वाणं, पक्षे कलकण्ठः कोकिलः।

श्रीराधाविरहेण व्याकुलः श्रीकृष्णः सुबलं प्रत्याह—चित्तस्येति। पद्ममभूदिति—पद्मदर्शनजन्यसुखसदृशसुखजनकत्वेन तच्चित्रितं पद्ममभूदित्यर्थः। पश्चात्तच्चित्रदर्शनेन जाता या तस्याः साक्षाद्दर्शनमहोत्कण्ठा तया तच्चित्रं विषवद्दाहकत्वेन विषमभूत्। तदनन्तरं यदभूत्तन्मम संविदो ज्ञानस्य गोचरो न भवति—तया च विरहपीड़या मूर्च्छा जातेति भावः।

(14) 'परमहो पूर्णः सुधादीधिति'रिति (ख) (ङ) पुस्तकयोः पाठः।

मुग्धा सुधांशुकिरणे जालगते भवनदाहशंकिताक्षी।

आदातुमवधिलेखं प्रविशति भवनं निवार्य्य सहयान्तीः (ङ) ॥ १७

एषु पूर्व्वौ सम्भोगे, परो विप्रलम्भे। सर्व्वत्र रतिः स्थायी—स चोभयनिष्ठः, अन्योन्यमालम्बनम्, उद्दीपनमन्योन्यलावण्यादि विजनस्थानादि च, अनुभावः करग्रहणादिः, व्यभिचारी श्रमजड़ताऽदिः। विप्रलम्भे च रतिरेव स्थायी, स चोभयनिष्ठः, विप्रकर्षेऽपि रतेस्तथैव स्वतःसिद्धत्वात्, आलम्बनं पूर्व्ववत्, उद्दीपनं विप्रकर्षोऽन्योन्यदुःखानुभवश्चन्द्रचन्दनपवनादिश्च, अनुभावश्चित्रलेखादिः। उभयोरेवानन्दधर्म्मत्वाद्रसत्वम्—आनन्दस्यात्मधर्म्मत्वादात्मनश्च बहिरिन्द्रियापेक्षित्वमात्रत्वाभावात् स्फूर्त्तिपर एवानन्दः (ढ़)।

अथ माथुरविरहेणात्यन्तव्याकुलाया राधाया गवाक्षद्वारा गृहमध्ये प्रविष्टांश्चन्द्रकिरणान् दाहकत्वादग्नित्वेन जानन्त्यास्तस्याश्चेष्टामाह। चन्द्रकिरणस्याग्नित्वेन ज्ञानान्मुग्धा। भ्रमरमुद्दिश्य राधयोक्तं 'मधुप कितवबन्धो' (भागवते १०। ४७।१२) इत्यादि पद्यसन्तवसखाश्रुत्वा व्याकुलेन श्रीकृष्णेन तस्याः प्राबरणार्थं काचिदवधिपत्री प्रेषितेति ज्ञेयं, जीवनहेतुभूता सा पत्री गृहमध्य आसीत्, तदानयनार्थं सा भवनं प्रविशति। सहयान्तीः सखीर्निवार्य्येति—अनेन पत्रानयनार्थं मद्देहस्य दाहो भवति चेद्भवतु, सखीनां दाहो माऽस्त्विति तस्या अभिप्रायः।

---

(ङ) सुधांशुकिरणाद्दाहातङ्को विरहिण्यां सम्भवतीति हि कविसम्प्रदायसमयः। निवार्य्य सहयान्तीः—मम प्रेम्णो निदारुणं फलमहमेव सहिष्ये, कथं मत्प्राणप्रियाः सख्यो मदर्थेऽन्तर्व्व्यथन्त इति चिन्तया तासां निवारणम्—वस्तुतस्तु तत्रावधिलेखे लिखितस्यावधेर्दर्शनकौतूहलमपि त्वरा.या हेतुः—स च लेख इष्टमन्त्र इव प्राणारामः प्रिय इव सुतरां गोप्यो भवतीति कामिनामाचारः। प्रतिक्षणमनुभूता अप्यपूर्व्वायमाणा निरुपधिमधुरास्तास्ताः प्रेमलीला लेखतस्ततः स्मारिता वा भवेयुरिति।

(ढ़) उभयोरेवेत्यादि —सम्भोगरतावानन्दः स्फूर्त्तिर्व्वा बहिरिन्द्रियवर्त्तिगोचरः—विप्रलम्भे प्रियप्राप्त्याकाङ्क्षाजनित आनन्द उत्तेजना वा वर्त्तते। तथा च चोरकवेर्व्विप्रलम्भश्रृङ्गिनि पद्ये—'प्रासादे सा पथि पथि च सा पृष्ठतः सा पुरः सा पर्य्यङ्के सा दिशि दिशि च सा तद्वियोगातुरस्य। हंहो चेतः प्रकृतिरपरा नास्ति ते काऽपि सा सा सा सा सा सा जगति सकले कोऽयमद्वैतवादः॥' विप्रलम्भे बहिरिन्द्रियगततृप्तेरभावादानन्दो नास्तीति वक्तुं न शक्यते, यत आनन्द आत्मधर्म्मः—'न खलु बहिरुपाधीन् प्रीतयः संश्रयन्ते।' स्फूर्त्तिपर एव—प्रकाशशरीर एवानन्दः, स च प्रकाशो बहुधा बहुशो भवति। स्फूर्त्तिस्तत्र तत्तद्धर्म्मस्य विकासे परा काष्ठा।

अनेन शृङ्गारो द्विविधः सम्भोगो विप्रलम्भश्चेति । आद्यः परस्परावलोकनाधरपानचुम्बननखदशनक्षतादिप्रभूतप्रभेदोऽप्येक एव गण्यते । अपरस्त्वभिलाषविरहेर्ष्याप्रवासशापहेतुक इति पञ्चधा । लोक एव शापहेतुः— तेनालौकिकश्चतुर्व्विधः (अ) ।

**अभिलाषः पूर्व्वरागस्तस्यावस्था दश स्मृताः । ७५ कां**

आद्यः सम्भोगः नखदन्तक्षतादिप्रचुरभेदविशिष्टोऽपि सम्भोगत्वरूपसामान्यधर्म्मेणैक एव गण्यते । अत्र तु भेदविवक्षया सम्भोगविप्रलम्भयोः कियन्तः प्रकारा दर्श्यन्ते । परन्तु 'प्राग्रागतः क्रमान्मानप्रेमवैचित्त्यदूरतः । प्रायः संक्षिप्तसङ्कीर्णसम्पन्नर्द्धिमतौ विदुः ॥' इत्याद्युज्ज्वलनीलमणौ विप्रलम्भसम्भोगयोश्चतुश्चतुर्भेदा उक्ताः, पुनः प्रत्येकमष्टधा— एवं विप्रलम्भो द्वात्रिंशत्, सम्भोगश्च द्वात्रिंशत्, समुदायश्चतुःषष्टिः ।

---

(अ) सम्भोगशृङ्गारस्य परस्परावलोकनाद्यनुष्ठानबहुत्वेन प्रभूततमभेदत्वं, परमुज्ज्वलनीलमण्यादिषु रसतत्त्वसूचकेषु ग्रन्थेषु तस्यैव मुख्यगौणभेदेनादौ द्वैविध्यम् । 'मुख्यो जाग्रदवस्थायाम्' 'स्वप्ने प्राप्तिविशेषोऽत्र हरेर्गौण इतीर्य्यते' इति लक्षणलक्षितं तत्, तत्राद्यस्य भेदस्य पूर्व्वराग-मान-किञ्चिद्दूरप्रवास-सुदूरप्रवासभेदतश्च चत्वारो विभेदाः, तेषाञ्च प्रत्येकं संक्षिप्तादिटीकाकृदुदाहृतभेदान्तरेणप्रविभागादयं मुख्यः सम्भोगशृङ्गारः षोड़शभेदात्मकः । एवं गौणोऽपि सामान्य-विशेषादिचतुर्विभेदेन संक्षिप्तादिप्रागुल्लिखितावान्तरभेदान्तरेण षोड़शविधः । अतएव 'द्वात्रिंशत् सम्भोगाः' इति टीकाकृन्निर्द्दिष्टः स्वसम्प्रदायमतानुमोदितः । एषां प्रत्येकशः लक्षणाद्याकरे द्रष्टव्यम् । सम्भोगशृङ्गारस्य भङ्ग्यन्तरेण कामरतिभेदेन द्वैविध्यं जीवगोस्वामिकृतलोचनरोचन्यादिषु सूचितम्—तत्र द्वितीय आत्मालौकिकपक्षे श्रीकृष्णे सम्भवान्न पुनर्विभेदप्रपञ्चः । विप्रलम्भशृङ्गारस्य टीकाकृद्दर्शितभेदैः पूर्व्ववन्मुख्यगौणभेदमार्गेण च द्वात्रिंशद्विधत्वम् । नीलमणावभिलाषस्थले पूर्व्वरागस्य विरहस्थले प्रेमवैचित्त्यस्य ईर्ष्यास्थले मानस्योल्लेखो दृश्यते । लौकिकाश्रितविप्रलम्भस्य चत्वारो भेदा अनर्व्वाचीनदशरूपकदर्पणादिनिबन्धेषु । तेषु तावत् प्रवासशापयोर्म्मध्यक् ग्रहणमापातत आयतौ चैकफलत्वात् । तत्र गृहीतः करुणात्मको विप्रलम्भोऽत्र प्रवासभेद एव मन्यते यदाहुर्नीलमणिकृतः—'विप्रलम्भं परं केचित् करुणाभिधमूचिरे । स प्रवासविशेषत्वान्नैवात्र पृथगीरितः ॥' 'यूनोरेकतरस्मिन् गतवति लोकान्तरं पुनर्लभ्ये । विमनायते यदैकस्तदा भवेत् करुणविप्रलम्भाख्यः ॥' इत्युक्तलक्षणः शृङ्गारः यदेवोभयनिष्ठेऽव्यवधानचरमिते श्रीकृष्णव्रजसुभ्रूरतिपक्षे न सम्भवत्येवेति च तत्त्वम् । स्थायिभावं रतिं लक्षीकृत्य तदाक्तिविलासाधिक्यहेतुततिश्चोपजीव्य साधारणी-समञ्जसा-समर्थाभेदेन

यथा—

अभिलाषश्चिन्तनञ्च स्मृतिश्च गुणकीर्त्तनम्।
उद्वेगश्च प्रलापश्चोन्मादश्च व्याधिरष्टमः।
जड़ता नवमी ज्ञेया मरणं दशमं स्मृतम् (आ) ॥ ७६का

विरहस्तु भावी भवन् भूतश्चेति त्रिधा।
ईर्ष्याशब्दोऽत्र मानपरः—स च द्वेधा। (15)

ईर्ष्याप्रणयसम्भूतो द्वेधा मानः प्रकीर्त्त्यते।
अन्यासक्ते प्रियतमे ईर्ष्यामानो भवेत् स्त्रियाः॥
द्वयोः प्रणयमानः स्यात् प्रमोदे सुमहत्यपि।
प्रेम्णः कुटिलगामित्वात् कोपो यः कारणं विना॥ ७७ का

तथा च—

नदीनाञ्च वधूनाञ्च भुजगानाञ्च सर्व्वदा।
प्रेम्णामपि गतिर्व्वक्रा कारणन्तत्र नेष्यते॥ Rasasudhakara.

स च मानो द्विधा भवति—एक ईर्ष्यासम्भूतः, द्वितीयः प्रणयसम्भूतः। ननु कान्तस्यापराधो माने कारणं, प्रणयकालेऽपराधस्य सम्भावनाऽपि नास्ति, कुतो मानप्रवृत्तिः, तत्राह—द्वयोरिति। कान्ताकान्तयोर्महति प्रमोदेऽपि कारणं विनाऽपि प्रणयमानः स्यात्। प्रेम्णः कुटिलगामित्वे प्राचीनानामुदाहरणमाह—तथा चेति।

---

विभागश्चान्यत्रैव लक्ष्यः, न सा भागकल्पनाऽत्राश्रिता, यतः समर्थाया रतेरेव ग्रन्थेऽस्मिन् लक्ष्यभेदेषूक्तो दृश्यते।

(आ) समञ्जसरतिरूपस्य पूर्व्वरागस्येमा एव दशा यथाक्रमं नीलमण्यादौ दर्शिताः। साधारणरतिरूपस्य तु उन्मादादिवर्ज्जमभिलाषादिकाः प्रथमनिर्द्दिष्टाः षट्। समर्थ-रतिरूपस्य प्रौढ़ाख्यस्य पूर्व्वरागस्य लालसोद्वेगजागर्य्यातानवजडिमवैयग्र्यव्याध्युन्मादमोह-मृत्युक्रमेण दशेति च तत्र। न च तावत् प्रकृतं किमपि वैलक्षण्यमेतस्य 'नयनप्रीतिश्चिन्ते'-त्यादावत्र उदाहृतात् कैश्चिद्दर्शितात् दशापारम्पर्य्यात्। परं स्थलविशेषतोऽवस्थाविशेषतश्च भिन्ना संज्ञा—नातः परं किमपि।

---

(15) इतः पश्चात् 'बहुधा'मित्यधिकः पाठः (ख) (घ) पुस्तकयोरुपलभ्यते।

भूतविरहेण सह प्रवासस्यावान्तरभेदो यथोदाहरणं स्फुटीभविष्यति।

अथोभयोरेव सम्भोगविप्रलम्भयोः परस्परावलोकनाधरपानाद्यभिलाषादीनां क्रमेणोदाहरणानि।

तत्र परस्परावलोकनं यथा—

एहीति पृष्ठगसखीच्छणकैतवेन
व्यावृत्य यो मयि तया निहितः कटाक्षः।
प्रत्यस्त्रवन्मम कटाक्षमवाप्य श्रान्तो-
ऽप्यन्तर्बिभेद स निकृत्तशराद्धवम्मे॥ १८

अपि च—

तस्याः सखीभिरपि वीक्ष्य सुजातमन्त-
र्भावोदयं कमपि चञ्चललोचनान्तैः।
धन्यो भवानिति कृता मम सम्मुखीभि-
रिन्दीवरच्छदमयी (16) मयि पुष्पवृष्टिः॥ १९

परस्पराधरपानं यथा—

पाअर्अदि पिबदि चासस्ं पेअसि ललिदे कहिं सीति।
सान्द्रानन्दविनिद्रितराधास्वप्नायितस्त्रयति (इ) (17)॥ २०

यथोदाहरणमिति—उदाहरणे इत्यर्थः।

एहीति—पृष्ठस्थितसखीदर्शनमिषेण मयि निहितो यः कटाक्षः स प्रत्यस्त्रवन्मत्कटाक्षं प्राप्य श्रान्तोऽपि ममान्तःकरणं बिभेद। अत्र दृष्टान्तमाह—निकृत्तेति। शल्यरहितशरस्य वेधे तथा पीडा न जायते यथा कृत्तच्छिन्नो योऽर्द्धशरस्तस्य वेध इत्यर्थः। इदन्तु सांग्रामिकाणामनुभवसिद्धमेव। कमपि सखायमुद्दिश्य श्रीकृष्णस्योक्तिरियमिति बोध्यम्।

यथा तस्याः कटाक्षशरेणाहं विद्धस्तथा मत्कटाक्षशरेणापि विद्धायास्तस्याः कमप्यन्तर्भावोदयं वीक्ष्य तस्याः सखीभिरपि धन्यो भवानित्यर्थबोधकैस्तत एव मदाभ्यासन-परैश्चञ्चललोचनान्तैः करणैर्मयि नीलकमलदलमयी पुष्पवृष्टिः कृता।

---

(इ) अत्रैवोदाहरणे गौणसम्भोगश्रृङ्गारस्य सूचनम्। न केवलं पद्येऽस्मिन्नीर्ष्यादिप्राकृत-जनसुलभस्य भावप्रपञ्चस्याच्छादनं, प्रत्युत भक्तहृदये भगवत्सङ्गसुखानन्दवार्त्तोद्दीपनं,

---

(16) 'इन्दीवरच्छविमयी'ति (ख) (ग) पुस्तकयोः पाठः। स च टीकाकृदस्वीकारादुपेक्ष्यः।

(17) 'सान्द्राणन्दविणिद्दिदराधासप्पाअद' जअदि' इति मुद्रितपुस्तक एव प्राकृतभाषानयः पाठः। स चानर्थक एव—किंतुत्र टिप्पण्यामन्वेष्यः।

यथा वा—

अर्द्धाकुलाकुलितानिमेषनयनं निस्पन्दतारं किय-
द्दीर्घश्वासमलक्ष्यकण्ठनिनदं सानन्दतन्द्रायिता ।
कृष्णे पाययति स्वकीयमधरं प्रागेव पीताधरे
किञ्चित्त्वं ललिते ! पिबेति किमपि स्वप्नायते राधिका ॥ २१

परस्परचुम्बनं यथा—

अङ्काङ्कि स्खलनं कराकरि मनःसंवादसंवेदनं
कर्णाकर्णि वृथाकथासु युगपच्चुम्बाः शतं गण्डयोः ।
स्कन्धास्कन्धि भुजौ मुखामुखि मुहुर्माध्वीकपानक्रमो
राधामाधवयोर्मधौ मधुमदक्रीड़ा जरीजृम्भते ॥ २२

राधायाः स्वप्नायितं जयति । निद्रादशायामसङ्गतसङ्गतनानाऽर्थबोधकशब्दोच्चारण-मेव स्वप्नायितं, तदेवाह । हे ललिते ! प्रेयसि ! श्रीकृष्णे स्वीयास्यं मां पाययति सति ममास्यं स्वयं पिबति सति त्वं क्व गताऽसीति स्वप्नायितम् ।

अर्द्धेति—प्राक् प्रथमं पीतो मदीयाधरो येन तथाभूते श्रीकृष्णे स्वकीयाधरं मां पाययति सति हे ललिते ! त्वमपि किञ्चित् पिबेति किमपि स्वप्नायते राधिका । स्वप्नायत इत्यत्र क्रियाविशेषणान्याह—नेत्रार्द्धं वाष्पाकुलाकुलिते ईषन्मुद्रिते एवं निमेषरहिते नयने यत्र तद्यथा स्यात्तथा, स्पन्दरहिता नेत्रतारा यत्र स्यात्, कियन्तो दीर्घश्वासा यत्र, अलक्ष्योऽस्पष्टः कण्ठनिनदो यत्र ।

मधौ वसन्ते राधामाधवयोर्वसन्तकालीनमदेन जाता या क्रीड़ा सा जरीजृम्भते अतिशयेन प्रकाशते । क्रीड़ामेवाह—तयोः स्खलनमङ्काङ्कि अङ्केनाङ्केन निर्वृत्तं, तथा च मधुमदेन राधाया अङ्के श्रीकृष्णः पतति, श्रीकृष्णस्याङ्के राधा पततीत्यर्थः । मनसः संवादोऽभिप्रायस्तस्य संवेदनं ज्ञानं कराकरि कराभ्यां कराभ्यां निर्वृत्तं, तथा च श्रीकृष्णस्य हस्तौ हस्तत्वादेव तस्य मनोऽभिप्रायो राधिकया ज्ञातः, एवं राधाया अपीति ज्ञेयम् । कर्णाभ्यां कर्णाभ्यां निर्वृत्तासु वृथाकथासु सतीसु परस्परगण्डयोः शतसंख्यकचुम्बनम् । भुजौ स्कन्धास्कन्धि—तथा च तयोर्भुजौ परस्परस्कन्धे निक्षिप्तावित्यर्थः । मधुपानोपक्रमो मुखामुखि मुखेन मुखेन निर्वृत्तः ।

---

तदुपचितानन्दस्य भागाहरणायान्यथाऽन्यदा च कल्पितानां प्रतिद्वन्द्विभक्तत्वेन चेतरेषां प्रायशोऽपि मधुरमधुरमाङ्कानम् । अत्रार्य्याया द्वितीयार्द्धेऽन्योक्तिसूचककविवाक्यनिर्म्मितिः संस्कृतेनैव भवितुमर्हा । टीकाकृतकृतप्राकृतसन्दर्भगतच्छायाऽपि नात्र प्रसरतीति निखिल-मवदातम् ।

परस्परनखक्षतानि यथा—

जाताङ्कुराणि किममून्यनुरागबीजा-
न्युप्तानि नूनमुरसोरुभयोरुभाभ्याम्।
आर्द्राणि कोमलतराण्यरुणानि भुग्ना-
न्याभान्ति पश्य ललिते! नखलक्षणानि ॥ २३

परस्परदशनक्षतं यथा—

माध्वीकाचमनोत्सवे कुतुकिनोरन्योन्यदन्तच्छदा-
वन्योन्येन कृतोपदंशरचनौ श्रीराधिकाकृष्णयोः।
क्षुण्णौ च द्विजकुड्मलैरभवतामक्षुण्णलक्ष्मीभरौ
पीतौ चारुणितौ बभूवतुरहो प्रेम्णो विचित्रा गतिः (ई) ॥ २४

नीवीमोक्षो यथा—

निर्यातायान्त्वयि विरमितो मालया रत्नदीपः
कृष्णो चोलं क्षपयति मया स्वस्तिकः सन्निबद्धः।

तयोः परस्परनखक्षतानि परस्परानुरागरूपबीजस्याङ्कुरत्वेनोत्प्रेक्षते—जातेति। आर्द्राणि स्निग्धानि भुग्नानि किञ्चिद्वक्रीभूतानि—वल्लीनामङ्कुराण्युत्पत्तिकाले भुग्नानीति ज्ञेयम्।

माध्वीकेति—वृक्षकोटरेभ्यो निःसृतोऽत्यन्तमादको रसः माध्वीकः, तस्य पानोत्सवे कुतुकिनो राधाकृष्णयोरन्योन्यौष्ठाधरौ - कथम्भूतौ? अन्योन्येन कृता मधुपानस्योपदंश-रचना यत्र तथाभूतौ, मत्तजनैर्मादकवस्तुपानानन्तरं किमपि भक्ष्यवस्तु भुज्यते, तस्यैव संज्ञा उपदंशः, लोके 'नकुल' इति तस्य प्रसिद्धिः—आभ्यान्तु परस्पराधरपानमेवोपदंशत्वे रचितम्; द्विजरूपकुड्मलैः क्षुण्णावभवतां, तथापि तावोष्ठाधरौ अहो आश्चर्यमक्षुण्ण-शोभाभरौ बभूवतुः—एवमुभाभ्यां पीतावपि परस्पराधरावरुणितौ बभूवतुः।

हे सखि! त्वयि कुञ्जगृहान्निर्यातायां सत्यामेकाकिन्या मया स्वरक्षकान्धकार-निर्माणार्थं रत्नप्रदीपो मालया विरमित आच्छन्नीकृतः—तदपि बलात्कारेण मम कञ्चुकीं श्रीकृष्णो क्षपयति सति कुचद्वयाच्छादनार्थं हस्ताभ्यां मया स्वस्तिकः सन्निबद्धः। संहतोरु यथास्यात्तथा मयोपविष्टम्, जघनद्वयं मिलितोरुत्वोपवेशनेनैव परिधेयवस्त्र-

---

(ई) उपदंशस्य गौड़भाषायां 'चाट्' इति संज्ञा। क्षुण्णावप्यक्षुण्णशोभाभरावित्ति, 'पीतावप्यरुणिता'विति च श्लेषगर्भविरोधमयभणितिवशात् प्रेम्णो विचित्रगतित्वकथन-मुपादेयमिति। 'कुतुकिनो'रित्यत्र 'पुमान् स्त्रिया'त्येकशेषः।

नीवीग्रन्थिं हरति सहसा संहतोरूपविष्टं
बुद्धेरग्राहं सखि ! समंधिका वल्लभस्तो बलेन ॥ २५

आदिशब्दाद्वनविहार-जलविहार-मधुपान-सङ्गीतादि। तत्र वनविहारो यथा—

अर्घं कुड्मलकैर्मरन्दपटलैः पाद्यं परागैर्मधु-
स्यन्दार्द्रैरनुलेपनं किसलयैः पुष्पैश्च भूषां फलैः।
नैवेद्यं पवनाहतैरवयवैर्नृत्यं मदालिस्वने-
र्गीतं कल्पयता हरिर्वनगतो वल्लीचयेनार्चितः ॥ २६

अपि च—

एकेनानिलचपलेन पल्लवस्तेनारौत्सीत् स्तबकपयोधरं परेण।
आक्षेपं न न न न नेति चञ्चलालिभ्रूभङ्ग्या व्यधित हरिं विलोक्य वल्ली ॥ २७
सन्त्रासं किसलयपाणिकम्पनेन प्रोत्साहं कुसुममयेन सुस्मितेन।
रोषञ्च भ्रमरघटाकटाक्षपातैरासन्ने मधुभिदि वीरुधोऽभ्यनैषुः ॥ २८

सीमन्तोपरि बन्धुजीवकुसुमं सिन्दूरबिन्दूकृतं
चित्रैर्नव्यदलैर्व्यधायि मकरी गण्डे नखाग्रक्षतैः।
चक्रे कञ्चुलिका पयोधरभरे नानाप्रसूनच्छदैः
कृष्णेन प्रणयातिरेकरभसस्तस्यामभिव्यञ्जितः ॥ २९

कार्य्यमपि कृतमित्यर्थः। अतएव ते तव वल्लभः श्रीकृष्णो बलेनाधिको न तु बुद्ध्या—बलस्याग्रे बुद्धेः प्रभावो न तिष्ठतीति। यद्भवितव्यं तदभूदिति ध्वनिः।

एतैः करणैः पाद्यादिकं कल्पयता लतासमूहेन श्रीकृष्णोऽर्चितः, एतदेवाह—कुड्मलकैः पुष्पस्तबकैः, मधुक्षरणेनार्द्रैः परागैः पुष्परजोभिरनुलेपनम्।

वल्लीरूपा नायिका सम्भोगोन्मुखं नायकमिव हरिं चपलभ्रमररूपया प्रणयकोपव्यञ्जकभ्रूभङ्ग्या विलोक्य स्तबकरूपं स्तनमरौत्सीत् रुद्धमकरोत्।

अधुना वल्लीरूपनायिकायाः कृष्णदर्शनाज्जातमनेकेषां व्यभिचारिभावानां प्राबल्यमाह—सन्त्रासमिति। श्रीकृष्णे आसन्ने सति वीरुधो वल्ल्यो वाय्वग्रकम्पकसन्त्रासं पल्लवरूपपाणिकम्पेनाभ्यनैषुरनुभावाभिनयञ्चक्रुरित्यर्थः। एवं पुष्परूपस्मितेनाभिलाषव्यञ्जकमुत्साहमभ्यनैषुः।

श्रीकृष्णेन तस्यां राधायामेतैः करणैः प्रणयातिशयवेगोऽभिव्यञ्जितः। प्रणयातिशय-

जलविहारो यथा—

कृष्णे कर्षति कोकयुग्मकमियं दोर्भ्यां व्यधात् स्वस्तिकं
कण्ठे चारुमृणालमर्पयति सा बाहू दधे कुञ्चितौ ।
पद्मं जिघ्रति पाणिनास्यमवृणोदित्यं जले खेलतो-
रस्पर्शा सुरतिस्तयोः प्रियसखीवृन्दस्य रस्याभवत् (ड) ॥ ३०

मधुपानं यथा—

'आलि ! प्रेयान् हरिरतिशठः' 'कृष्ण ! मे सम्प्रसीद'
'श्यामे ! स त्वामभिसरति किं' 'नाथ ! दासी तवास्मि ।'
इत्यन्योन्यप्रकृतिविकृती भावतोऽनन्वितोक्ती
राधाकृष्णौ मधुमदमुदा मोहितौ वः पुनीताम् ॥ ३१

व्यञ्जकं पुष्पमण्डनमाह—सीमन्तेति। सिन्दूरबिन्दुस्थानीकृतं, नखाग्रच्छेदैश्छिन्नैर्नानावर्णैः-र्हंसैर्मकरौ मकर्याकारश्चित्रं गण्डे व्यधायि—नानापुष्पदलैः स्थूलपयोधरे कञ्चुलिका चक्रे।

अथ जलक्रीड़ायां राधाकृष्णयोः स्पर्शं विनैव दूरे तिष्ठतोस्तयोः क्रीड़ामाह—कृष्णे इति। स्तनस्पर्शकाङ्क्षया चक्रवाकयुग्मं कृष्णे आकर्षति सतीयं राधा तत्रा-सम्मतिव्यञ्जकं स्तनाच्छादकं स्वस्तिकं दोर्भ्यां व्यधात्। राधिकाया हस्ताभ्यां स्वकण्ठ-स्यालिङ्गनाकाङ्क्षया श्रीकृष्णे स्वकण्ठे चारु मृणालमर्पयति सति साऽपि तत्रासम्मति-व्यञ्जकौ कुञ्चितौ बाहू दधार। अस्पर्शा स्पर्शरहिता शोभना रतिः सखीसमूहस्य रस्याऽऽस्वादनीयाऽभवत्।

मधुपानजन्येन मदेन कर्त्रा जितौ कथम्भूतौ? त्रासात् कुत्रचिद्वाक्येऽधिकाक्षरैः कुत्रचिद्ध्रस्वितोक्षरैः करयोरन्योन्यं धृत्वा व्याहरन्तौ। 'धरणिपतिते'ति वक्तव्ये 'धधे'त्यधि-काक्षरं रेफणिकारौ न स्तः, अतः ह्रसिताक्षरम्।

(ड) श्लोकोऽयमेतदनन्तरौ द्वौ, 'एकेनानिलचपलेने'ति (२७) श्लोकश्चानन्दवृन्दावने माध्वीक-पान-जलविहार-वसन्तोत्सवादिवर्णनप्रसङ्गेषु वर्त्तन्ते। 'सङ्केतकालमनस'मित्यादि श्लोक इव यद्यपि सूक्ष्मालङ्कारविधायकस्येतरजनतो निह्नुत्यादिकस्य वैशिष्ट्यं नात्र वर्त्तते; तथापि वचनभङ्ग्या विच्छित्तिरुपभोग्यं त्वस्योत्तमकाव्यत्वम्। 'हा कष्ट'मिति परवर्त्तिनि श्लोके तृतीयचरणे 'अधिकह्रसिते'रिति हकारस्पर्शसंयुक्ताक्षरस्यावस्थानात् 'प्रह्वे वे'त्यनुशासनात् पूर्व्ववर्त्तिनो लघ्वक्षरस्य वैकल्पिकं लघुत्वमिति छन्दःशास्त्रमर्यादामाश्रयाक्षघत्वं न दोषाय। एतेषु श्लोकेषु यथायोग्यं श्रीकृष्णो पूर्व्वरागी मुग्ध ईषत्प्रगल्भो नायको वा, नायिका-शिरोमणी राधा च पूर्व्वरागवती मुग्धा मध्या नायिका वा—इत्यपि वक्तुं सम्भाव्यते उभयो-रलौकिकत्वेत्यलम्।

यथा वा—

हा कष्टं द्यौः पपतति कथं हन्त घूघूर्णति भू-
रालम्बे त्वां धधध-पतिता कम्पते गात्रयष्टिः ।
इत्यन्त्रासादधिकहसितैरक्षरैर्व्याहरन्तौ
धृत्वान्योन्यं मधुमदजितौ नौमि राधामुकुन्दौ ॥ २२

अथ विप्रलम्भः—

**स्वप्नाद्वा श्रवणाद्वापि चित्रादेर्व्वा विलोकनात् ।**
**साक्षादाकस्मिकाद्वापि दर्शनाद्दुर्ल्लभे जने ॥**
**प्राक्तनी रतिरुद्भूता सम्प्राप्तेः पूर्व्वमेव सा ।**
**पाकद्वयान्तरे पूर्व्वरागतां प्रतिपद्यते ( ज ) ॥१८ का**

पाकद्वयान्तर इति—

भावः पूर्व्वरागश्चेति पाकद्वयं, तदन्तरे तन्मध्ये । तत्र स्वप्नद्वारा यथा—

इन्दीवरादपि सुकोमलमिन्द्रनीला-
दप्युज्ज्वलं जलधरादपि मेदुरन्तत् ।
स्वप्नः स किं सखि ! महो यदहो ममेद-
मद्यापि नो नयनयोः पदवीञ्जहाति ॥२३॥

श्रीकृष्णस्य प्राप्तेः पूर्व्वमेव दुर्ल्लभे श्रीकृष्णे प्राक्तनी अवतारात् पूर्व्वमेव स्वभावसिद्धा, किन्त्वेतैः कारणैरुद्भूता या रतिः सा पूर्व्वरागतां प्रतिपद्यते । भाव-पूर्व्वराग-रूपपाकस्यान्तरे मध्ये अर्थाद्द्वयमपि व्याप्येत्यर्थः ।

अथ स्वप्ने श्रीकृष्णस्य दर्शनं प्राप्य तद्दर्शनस्यातिचमत्कारित्वेन साक्षाद्दर्शनमेव जानती श्रीराधिका सखीं प्रत्याह—हे सखि ! स किं स्वप्नः, अपि तु स्वप्नो न भवति, किन्तु साक्षाद्दर्शनमेव—यद्यस्मादिदं महस्तेजःस्वरूपन्तदस्त्वधुनाऽपि नेत्रपदवीं न त्यजति । तन्महः कीदृशमित्याह—इन्दीवरादित्यादि । मेदुरं स्निग्धम् ।

---

(ज) प्राक्तनीति—'व्यतिषजति पदार्थानान्तरः कोऽपि हेतु'रिति—स च हेतुः पूर्व्व-संस्कारभित्तिकः । संप्राप्तेः पूर्व्वं कथन्तस्य 'राग' इति चित्तरञ्जकत्वव्यञ्जिनी संज्ञेति ? अत्राहुर्नीलमणिकाराः—'दुःखमप्यधिकं चित्ते सुखत्वेनैव व्यज्यते । ततस्तु प्रथमोत्कर्षात् स राग इति कीर्त्त्यते ॥' भावपाकस्य लक्षणन्तत्रैव—'अनुरागः स्वसंवेद्यदशां प्राप्य

श्रवणद्वारा यथा—

तमालनीलं किमपि त्वदुक्ताद्विम्बोष्ठि ! कर्णोति पदादुदीर्णम्।

अन्तः प्रविश्य श्रुतिवर्त्मना मे न वेद्मि तद्धाम किमातनोति ॥३४

चित्रदर्शनद्वारा यथा—

व्रजभुवि किमलोकि सञ्चरन्त्या यदिह विलिख्य पटे मत्नोपनीतम्।

कुतुकिनि ! कुतुकेन तं समस्तं मम गतमेव हि जातिजीवनञ्च ॥३५

साक्षाद्दर्शनद्वारा यथा—

नो वा दृष्टचरी न वा श्रुतचरी नामापि न ज्ञायते

यस्याः काचन सा व्यलोकि विपिने मेघद्युतिर्देवता।

आनन्दद्रववर्षिणः किमथवा हालाहलीव्रासिनः

सौहित्यञ्च रुजञ्च नो विदधते यस्याः कटाक्षोर्म्मयः ॥३६

अथास्य दश दशाः। तत्राभिलाषो यथा—

सा किं निशा सखि ! भविष्यति सर्व्वदा मे

स्वापः स किं सुमुखि ! तत्र सदैव भूयात्।

कश्चित्तमालदलनीलतमः स यस्मि-

न्नालोकि लोकरमणो रमणीयमूर्त्तिः ॥३७

हे बिम्बोष्ठि ! त्वदुक्तात् कर्णोति पदादुदीर्णमुद्गतं तमालवन्नीलं किमपि धाम तेजःस्वरूपं ममान्तःकरणं प्रविश्य किमपि क्षोभादिकमातनोति, तन्न वेद्मि।

हे कुतुकिनि ! व्रजभुवि सञ्चरन्त्या त्वया किमद्भुतमलोकि यदद्भुतं वस्त्विह चित्रपटे विलिख्य ममाग्र उपनीतम्। तव कुतुकेनैव मम जातिजीवनञ्च समस्तं गतम्।

यस्याः श्यामदेवतायाः कटाक्षोर्म्मयो मम सौहित्यं सुखं कुर्व्वन्तीति हेतोः किमानन्दद्रववर्षिणः, अथवा मम पीड़ां कुर्व्वन्तीति हालाहलोल्लासिनः।

तत्र निशायां किं सदैव स्वप्नो भूयात् यस्मिन् स्वप्ने स नीलतमो मयाऽलोकि।

---

प्रकाशितः। यावदाश्रयवृत्तिस्तेद्भाव इत्यभिधीयते। अत्र जीवगोस्वामिमतमधोदर्शितं लक्ष्येत्र पूर्वरागपक्षेऽप्युदाहार्यम्—'अतएवात्र शास्त्रेष श्रूयते राधिकादिषु। पूर्व्वरागप्रसङ्गेऽपि प्रकटं रागलक्षणम्'। तत्रस्थात्र लक्ष्योऽप्युदाहृते श्लोकत्रये 'इन्दीवरादपी'त्यादौ वैष्णवकविरचितेषु गीतेषु च ताद्दशावस्थो रसः सुतरामास्वादनीयः। 'इन्दीवरादपी'त्यादि श्लोकः कविकर्णपूरगोस्वामिचरणानां श्लोकसमूहे प्रस्तुत नायकायते।

अथ चिन्तनम्—

आसंगो सिविणगओ मम्मप्फंसी महं क्खु अणुराओ ।

पिअपरिअणो ण चउरो जीअण तुह णत्थि जीअणोबाओ (ऋ) ॥ ३८

स्मृतिः—'इन्दीवरा'दित्यादि ( ३३ श्लोकः ) ।

गुणकीर्त्तनम्—

धाम श्याममयातयाममधुरन्तल्लोचनानन्दनं

कस्तूरीघनसारकुङ्कुमरसामोदी स गात्रानिलः ।

आलापः स सुधाम्बुधेरपि तिरस्कारी बभूवाधुना

सम्मोहाय विनोदनाय मनसः क्षोभाय लोभाय च ॥ ३९

अथोद्वेगः—

नो विद्मः किमु गौरवं गुरुकुले, कौलीन्यरक्षाविधौ

न श्रद्धा किमु, दुर्जनोक्तिगरलज्वालासु किं नो भयम् ।

उद्वेगादनवस्थितं मम मनः कस्यापि मेघत्विषो

यूनः श्रोत्रगतैः घुणैरिव गुणैरन्तः क्षतं जर्ज्जरम् ॥ ४०

आसङ्गः स्वप्नगतो मर्म्मस्पर्शी महान् खल्वनुरागः ! प्रियपरिजनो न चतुरो जीवन ! तव नास्ति जीवनोपायः ॥ स्वाप्निकवस्तुनः शीघ्रं विस्मरणं भवत्यत आह—मर्म्मस्पर्शी विस्मर्त्तुं न शक्याऽस्मोत्यर्थः । कुलाङ्गनायास्तत्राभिलाष एवानुचितस्तत्राह—महानुरागः । परिजनस्य चातुर्य्यञ्चेत्तदा तेन सह सङ्गसम्भावनया जीवनं रक्षितुं समर्थाऽस्मीत्यपि नास्तीत्याह—प्रियपरिजन इत्यादि ।

तद्धाम कान्तिविशेषः । ननु मधुरवस्त्वपि पुनः पुनरास्वादनेन गतरसम्भवति, तत्राह—अयातयाममधुरं 'यातयामो गतरस' इत्यमरः । घनसारश्चन्दनः—एतेषां रसानमामोद इव य आमोदस्तद्विशिष्टः । अधुना तत्तत् सर्व्वमेव मनसः सम्मोहाद्यर्थमेव बभूव ।

'नो विद्म' इत्यादौ शिरश्चालने नञ्, गुरुकुलस्य गौरवं किं न विद्मः अपि तु जानीम

---

(ऋ) 'ज्वलतु गगने रात्रौ रात्रावखण्डकलः शशी'त्यादि मालत्यां स्थितात् भावात्, 'दुल्लहजणाणुराओ लज्जा गरुई परवसो अप्पा । पिअसहि विषमं प्रेम्म मरणं सरणं णवरि एक्कं ॥' इत्यादितो वा रत्नावल्यां नायिकाविदोक्तिविजृम्भणेनेवात्राप्यन्तरार्त्तिश्चिन्ताप्रतानमयजीविता सुतरामुल्लसतीति तत्त्वम् । 'आशाबन्धः कुसुमसदृशं प्रायशो ह्यङ्गनानां सद्यःपाति प्रणयि हृदयं विप्रयोगे रुणद्धि' इति तु स्वाभाविकातुल्यप्रणयस्थले, यदा तु उत्कटा मनोरुजा, मादनमनिर्भरश्च मनस्तदैव एवम्प्रायमभिधानं, तच्च काव्योत्कर्षं नितरां जनयति ।

पूर्व्वरागः कस्यापि स्यात्—इत्यतःपरं तथैव दर्शयति। तत्र प्रलापः—

उदयति शशी, श्रीराधाया न तन्मुखमण्डलं
स्खलति तिमिरं, प्राणेश्वर्य्या न नीलनिचोलकः।
हसति हरिताचक्रं, तस्या न नाम सखीगणो,
भ्रमति भुवने ज्योत्स्नेवास्या न देहरुचिच्छटा (ऋ)॥ ४१

उन्मादः—

हे वासन्ति! विलोकिताद्य सुमुखी राधा त्वयास्मिन् वने?
वातान्दोलितपल्लवैः करतलैर्'ना ने'ति (19) किं भाषसे?
यातानेन पथैव सा परिमलैस्तस्या यदन्धीकृता-
स्त्वत्पुष्पेषु पतन्त्यहो न मधुपा भ्राम्यन्ति सर्व्वा दिशः॥ ४२

एव। एवं कौलीन्यरक्षायामपि श्रद्धाऽस्त्येव, किं कर्त्तव्यम्। उद्वेगान्मम मनोऽनवस्थितं जातं, ततस्तत्तत्करणे प्रतिबन्धकं भवतीत्यर्थः। तस्मात् कस्यापि यूनो गुणैर्ममान्तःकरणं जर्ज्जरं कृतम्—घुणैरिवेति—घुणाः कीटविशेषा यथा काष्ठं जर्ज्जरं कुर्व्वन्ति।

तदानीमेवोदितचन्द्रं राधिकामुखं मत्वा हर्षो जातः, पश्चात्तस्मिन् वैगुण्यं दृष्ट्वा क्षणात् सखेदमाह—उदयतीति। अयं राधामुखमण्डलं न भवति, किन्तु शशी चन्द्रः, यतोऽधुनैवोदयति, तन्मुखमण्डलन्तु सदा प्रकाशमानमेव। एवमन्धकारं रात्रिकालीन-वस्त्रं मत्वाऽऽह। इदं प्राणेश्वर्य्या निचोलमपि नीलवस्त्रं न भवति, किन्तु तिमिरं, यतश्चन्द्रोदयात्स्खलति, इदन्तु न। तस्याः सखीगणो न, अपि तु हरितां दिशाञ्चक्रं, यतश्चन्द्रोदयेनैव हसति प्रकाशते, तेषान्तु सर्व्वदैव प्रकाशः। एवमियन्तस्या देहरुचिच्छटा न भवति, किन्तु ज्योत्स्नेव—यतो भुवनमध्य इतस्ततो भ्रमति, सा तु सदैकरूपैव (18)।

हे वासन्तीति। ना नेतीति—मया राधिका न दृष्टेति प्रभाषसे चेत्तदा त्वद्वचनं मिथ्यैव,

(ऋ) निश्चयान्तेन सन्देहालङ्कारेण सूचितो रूढ्गुणो नायकस्य—'नवजलधरः सन्नद्धोऽयं न दृप्तनिशाचरः' इतिवदुपभोग्यः। 'तत्' 'असौ' इत्यादि पदेन पूर्व्वानु-भूतानामामोदमुपजनयतां भावराशीनां परामर्शः। तेन च सूचितेन वैसादृश्येन तदानीन्तन-वैधुर्य्यस्य प्रकाशः। अत्र विधेयाविमर्शदोषस्पर्शः पद्यमेतत् कथञ्चित् गर्ह्यं करोति।

(18) एवं (ग) (ङ) पुस्तकयोः। 'सदैकस्वरूपैवे'ति (क) पुस्तके, 'सदैकरसस्वरूपैवे'ति (ख) (ङ) पुस्तकयोः।

(19) 'नो नेति' इति (ग) (घ) पुस्तकयोः पाठः। नञर्थं 'ना' इत्याकारान्तस्याव्ययस्य ग्रहणं क्वापि दृश्यते, अतो मूले वीप्साविरुद्धसामञ्जस्यसाधनाय कथितगौडीयभाषासादृश्योपलक्षणार्थं वापरिदर्शितः पाठ एव श्रेयान्।

अथ व्याधिः—

नो कथ्यते किमु कथाविषयो यदि स्या-
न्नो गोप्यते किमु भवेद्यदि गोपनीयः ।
आपच्यमान इव हृद्व्रण एष भावः
कृष्णस्य कामपि दशां भजते न विद्मः ॥ ४३

जड़ता—त्वां स्वप्नलब्धमवलोकयितुं विलिख्य
वैवर्ण्यमाप तव वर्णविलोकनेन ।
तूलीग्रहे सति कृशाजनि तूलिकेव
चित्रोद्यताजनि हरे ! स्वयमेव चित्रम् ॥ ४४

मरणममङ्गलत्वेन न वर्ण्यते, भङ्ग्या तु वर्ण्यते । तद्यथा—

निखिलेन्द्रियसंवर्त्ते श्यामसुधाधाममधुरिमावर्त्ते ।
मग्नानन्दविवर्त्ते मातर्नातः परं वर्त्ते ॥ ४४

केचित्तु—"नयनप्रीतिश्चिन्ता सङ्कल्पः स्वप्नविच्छेदः ।
कार्श्यं विषयनिवृत्तिर्ह्रीनाशः स्यादथोन्मादः ॥ Rasasudhakara

किन्त्वनेनैव पथा सा राधिका गता, यस्मात्तस्याः परिमलैरन्धीकृता भ्रमरास्तत्पुष्पेषु न पतन्ति, किन्तु तस्याः सुगन्धग्रहणार्थं भ्राम्यन्ति ।

यदि कश्चिदर्थः कथाविषयः स्यात्तदा किं सोऽर्थो न कथ्यते अपि तु कथ्यत एव । एवं यदि गोपनीयः स्यात्तदा किं न गोप्यत, अपि तु गोप्यत एव । कृष्णेन तु हृदिस्थभावस्य निर्व्वचनासामर्थ्यात् स तावन्न कथ्यते न वा गोप्यते । अतः कृष्णस्य भावः कामनिर्व्वचनीयां दशां प्राप्नोतीति न विद्मः । एष भावः कीदृशः ? ईषत्पच्यमानहृद्व्रण इव—स यथा सर्व्वैरदृश्यः सन्नन्तरे पीड़ां जनयति तद्वत् ।

वर्ण्यते—हे हरे । त्वां विलिख्यावलोकयितुं तव चित्रोपयोगिवर्णादर्शनमात्रेणैव वैवर्ण्यस्वरूपसात्त्विकविकारमपि । तदनन्तरश्चित्रार्थन्तूलीग्रहणे सति कृशाऽजनि । तदनन्तरश्चित्रायोद्यता सती स्वयमेव चित्रमजनि जड़ा बभूवेत्यर्थः ।

अधुना पूर्व्वरागावस्थयाऽत्यन्तव्याकुला श्रीराधा सखीं प्रत्याह—हे मातः सखि ! सर्व्वेन्द्रियाणां संवर्त्तः प्रलयो यत्र तथाभूतानन्दविवर्त्ते । कथम्भूते ? श्यामसुधामयदेहस्य माधुर्य्यरूप आवर्त्तो भ्रमियत्र । तत्र निमग्नाऽहमतःपरं न वर्त्ते न जीवामीत्युक्त्वा तत्क्षणे मूर्च्छिता बभूवेति भावः । 'संवर्त्तः प्रलयः कल्प' इत्यमरः । एवं सति नित्यसिद्धानां मूर्च्छापर्य्यन्तदशा वर्त्तते, ततोऽधिका नास्तीति ज्ञेयम् (ज)।

मूर्च्छा मृतिरिति कथिता दशा दशैमास्तु पूर्व्वरागस्य ।
स च ललनायाः पूर्व्वं पश्चान्नेतुः समाख्येयः (ल) ॥''

**अथ नैलः कौसुम्भो माञ्जिष्ठश्चाथ हारिद्रः ।**
**रागश्चतुर्व्विधोऽतश्चातुर्व्विध्येन हि प्रकृतेः ॥ ७९ का**

अतः पूर्व्वरागात् पाकत इत्यर्थः । नैलो नील्या रक्तः ।

**नैलः स एष कथितो न कदाचिद्ध्रसति शोभतेऽत्यर्थम् ।**
**कौसुम्भः स हि विदितः स्थित्वाऽपैति प्रशोभते पूर्व्वम् ॥**
**माञ्जिष्ठः स हि यः किल नापैत्येवातिशोभतेऽजस्रम् ।**
**हारिद्रः स तु बोध्यो यात्यपि न च शोभते यस्तु (ए) ॥ का**

स्वप्नविच्छेदो निद्राक्षयः । केषाञ्चिन्मते पूर्व्वरागस्येमा दश दशाः कथिताः । स च पूर्व्वराग आदौ नायिकायाः पश्चान्नेतुर्न्नायकस्य कथितः । इदानीं पूर्व्वरागवर्णनप्रसङ्गे पूर्व्वोक्तो यः पूर्व्वरागपाकाज्जातो रागस्तस्य भेदचतुष्टयमाह—अथेति । प्रकृतेर्नायिकानायकयोः स्वभावस्य चातुर्व्विध्येन । नीलद्रव्यस्य घर्षणेन जातो वर्णको नीलो उच्यते । यथा नीलीवस्त्रस्य सहस्रचालनेनापि नीलिमा न ह्रसति, प्रत्युत शोभते च, तथा नैलरागोऽपि । यथा कौसुम्भवस्त्रस्य कौसुम्भरागः पूर्व्वं शोभते पश्चाद्वर्षाकाले तु स्वत एव ह्रसति,

(ल) 'आदौ वाच्यः स्त्रियो रागः पुंसः पश्चात्तदिङ्गितैः ।' इति लौकिकपक्षे शोभना रीतिरिहाप्यालङ्कारिकसम्मता, तस्या एवात्राश्रयः कृतः । सकलनायकचूडामणौ श्रीकृष्णे च तस्यैवं निर्द्देशो दार्शनिकमतविरोधं कमपि वहन्नपि सोढव्यः—तथा चोज्ज्वलनीलमणौ दार्शनिकशिरोमणिश्रीरूपगोस्वामिभिरुक्तं—'अपि माधवरागस्य प्राथम्ये सम्भवत्यपि । आदौ रागे मृगाक्षीणां प्रोक्ता स्याच्चारुताऽधिका ।' इत्यनेन काव्यदर्शनयोर्भेदविलासः ।

(ए) लोकरीत्याऽनुमितवर्णस्थितिसाङ्कर्य्यादिकमुपमानमाश्रित्येयं भेदकल्पना । एवमपि दशरूपकदर्पणादिनिबन्धेषु । 'न चातिशोभते यन्नापैति प्रेम मनोगतम् । तन्नीलीरागमाख्यन्ति यथा श्रीरामसीतयोः ।' इति दर्पणे नीलीरागलक्षणं तदुदाहरणञ्च । "कुसुम्भरागः स ज्ञेयो यश्चित्ते सज्जति द्रुतम् । अन्यरागच्छविव्यञ्जी शोभते च यथोचितम् । सदाधारविशेषेषु कौसुम्भोऽपि स्थिरो भवेत् । इति कृष्णप्रणयिषु हानिरस्य न युज्यते ॥" आहार्य्योऽप्यनपेक्षो यः कान्त्या वर्द्धते सदा । भवेन्माञ्जिष्ठरागोऽसौ राधामाधवयोर्यथा ॥' प्राकृतजनेष्वस्य विरला स्थितिरिति केनोहाकाङ्क्षणात् साम्यदिति ज्ञेयम् । हारिद्ररागस्य ग्रन्थान्तरेषु 'श्यामाराग' इति संज्ञा, परं तत्र किमपि सेर्व्वनिर्णीतस्य वर्त्तनं—न किल कृष्णादिकुसुम्भगत एव, इत्येषां न प्रपञ्चः कृतः, नीलरागसादिष्वेव एव नाहुल्यं प्रदर्शम् ।

अथ विरहः—स च त्रिविधः, भावी भवन् भूतश्चेति। तत्र भावी यथा—

यास्यामि श्वः सुमुखि ! मथुरामागतो राजदूतः
प्रत्यायातुं कति नु घटिका हन्त भावी विलम्बः।
नो जानीमः, प्रकृतिकठिनः कार्य्यभावस्तथा चेत्
साहं यान्तः प्रिय ! मदसवः क्वापि कार्य्ये नियोज्याः॥ ४६

भवन् यथा—

यामीति कृष्णवचने प्राणैर्व्विनिरुद्धकण्ठकुहरायाः।
बहिरिव भवितुमशक्तं प्रत्युत्तरमन्तरेव विजुघूर्णे॥ ४७

भूतो यथा—

साहं यन्निजदैवतेन न गतं दौरात्म्यमेतद्धि वो
जानीतावधिवासरश्च गणनागम्योऽस्ति लेखासु यः।
इत्याकर्ण्य वियुक्तगोपसुदृशः प्राणैः समं सङ्ख्या-
मेकैकां प्रतिवासरं प्रियसखी रेखां रहो लुम्पति॥ ४८

तद्दृष्टापि। कौसुम्भरागः शोभते, माञ्जिष्ठरागस्त्वजस्रमतिशयेन शोभत इति भेदो ज्ञेयः। यस्तु न शोभते शीघ्रं याति च स हरिद्रारागो ज्ञेयः। तेषां मध्ये कौसुम्भः हारिद्रश्च प्राकृते, अप्राकृते तु नैलो माञ्जिष्ठश्चेति भेदो ज्ञेयः।

अधुना विप्रलम्भरसस्यावान्तरभेदं पूर्व्वरागं वर्णयित्वा क्रमप्राप्तन्तस्यैव भेदान्तरं विरहं वर्णयति—अथेति। प्रत्यायातुमत्र पुनः प्रत्यागमने कति घटिका व्याप्य विलम्बो भावी ? राजकार्य्यभावः प्रकृत्या स्वभावेन कठिनः।

भवन् वर्त्तमानो विरहः। अधुनैवाऽहं यामीति कृष्णस्य वचने सति स्वस्थानं हृदयं त्यक्त्वा प्राणाः कण्ठगता बभूवुः—अतस्तैरेव प्राणै रुद्धकण्ठकुहरायास्तस्याः कण्ठरोधेनैव प्रत्युत्तरं बहिरिव भवितुमशक्तं सदन्तर्हृदयमध्य एव विजुघूर्णे। अत्र विरहजन्यपीड़या ऽसामर्थ्यादेव तया नोक्तं प्रत्युत्तरं, कवीश्वरेण तु प्राणकर्त्तृककण्ठरोधनेनैव प्रत्युत्तर-स्फूर्त्तान्निर्गतमित्युत्प्रेक्षितम्।

हे प्राणा भवद्भिर्निजदैवतेन सह मथुरागमनसमये यन्न गतम्, एतदेव वो युष्माकं दौरात्म्यं मया ज्ञातम्। सम्प्रति तेन कान्तेन मत्प्राणरक्षार्थं प्रेषिता या पत्री तत्र अद्यारभ्य त्रिंशद्दिवसे त्वन्निकटे मया गन्तव्यमिति योऽवधिवासरो वर्त्तते स तु भित्तौ मया दीयमानासु रेखासु गणनया गम्यो भवति, अतस्तं वासरं यूयं जानीत, ज्ञात्वा च तस्मिन् दिवसे तस्यागमने सति भवद्भिः शीघ्रमेव मद्देहात् गन्तव्यम्—इति प्राणैः सह वियोगयुक्ताया

अथ प्रणयमानः—

मानस्तिष्ठतु राधिके ! तव हृतं रक्तं मनो देहि मे,
तत् केनापि हृतं, (२०) त्वया, न हि, न हि अङ्गे परखे मम ।
अङ्गे चेत्तव दृश्यते, भवति चेन्नूनन्त्वयैवार्पितं
नीत्वा गच्छ, मुखे तवास्ति यदयं रागस्तदासङ्गजः ॥ ४९

ईर्ष्यामानो यथा—

सहजमरुणं नेत्रद्वन्द्वं तवाधरपल्लवः
सततमुरलीनादक्रीड़ाविधौ तव सव्रणः । A little differently read as Kirana III (sl. 27)
वनविहरणे रात्रौ गात्रं सकण्टकलाञ्छनं
कथमिह विना दोषं जातापराध इव स्थितः ॥ ५०

अथ प्रवासः—भूतविरहप्रवासयोः कालदेशकृत एव भेदः ।

नानाकौशलतः कृतानि सुहृदां वृन्देन नानन्दतो
गव्यान्यत्ति, तथा कवोष्णमधिकं राधे ! श्वसितीव सः ।

गोपसुदृशः कथामाकर्ण्य प्रियसखी प्रतिदिनं रह एकान्त आगत्य भित्तिस्थितामेकैकां रेखां त्रिंशद्दिवसस्य समाप्त्यभावार्थं लुम्पति ।

अथेति—मानकारणमीर्ष्यादिकं विनैव प्रेम्णः कुटिलगामित्वात् प्रणयातिरेकेनैव मान इत्यर्थः । हे राधे ! तव मानस्तिष्ठतु, मम रक्तं रागविशिष्टं श्लेषेणैव रागस्य रक्तत्वमारोप्य रक्तपदार्थविशिष्टं मनो देहि । राधाऽह—तन्मनः केनापहृतम् ? श्रीकृष्ण आह—त्वयेति । राधाऽह—न हीति । पुनः श्रीकृष्ण आह—तवाङ्गं व्याप्य तिष्ठन्मम मनस्तवाङ्गे चेद्दृश्यते तदा किं भविष्यति ? राधाऽह—ममाङ्गे चेद्भवति तदा त्वन्मनस्त्वयैवार्पितं त्वमेव नीत्वा गच्छ । तच्छ्रुत्वा श्रीकृष्णः सहर्षमाह—तदा मदीयरक्तमनसस्त्वदधरेण सह सदासङ्गाज्जातो यो रागः स तु तव मुखमध्येऽधरेऽस्ति, अतो मनोधर्म्मरागस्य दर्शनेन मन्मनोऽपि तत्रैव वर्त्तते, सम्प्रति त्वदाज्ञया तदहं गृह्णामीत्युक्त्वा तदधरं पपाविति गम्योऽर्थो बोध्यः । प्रणयजन्यमाने नायिकायाः सम्मतिं विनाऽपि स्पर्शे दोषो नास्तीत्यपि ज्ञेयम् ।

सहजेति—तव नेत्रद्वन्द्वं सहजमरुणं, न तु तस्यास्ताम्बूलरागेण । एवन्तवाधरपल्लवोऽपि सततं मुरलीक्रीड़यैव सव्रणः, न तु तस्या दन्ताघातेन । वनविहरण एव गात्रे कण्टकचिह्नं, न तु तस्या नखक्षतम् । अतो दोषं विना कथन्त्वापराधसम्भावनाऽपि, इति नायकं प्रति मानिन्याः सोल्लुण्ठवचनम् ।

---

(२०) 'केनापहृतम्' इति (ख) (क) पुस्तकयोः पाठः ।

त्वत्पल्लीप्रतिवेशपण्यजनताक्रय्यन्तु दध्यादिकं
क्रीत्वा सम्प्रतिपादितं प्रियजनैरश्नाति हृष्टान्तरः ॥ ५१

अथ सामान्यतो वर्णितस्य विभावस्यालौकिकतया विशेषमाह—

तत्रालम्बनं नायको नायिकाश्च ।

तत्र कोऽसौ नायकः काश्च नायिका इत्यपेक्षायां नायकमाह—

**सर्व्वशृङ्गारसद्वृन्दकन्दलः सर्व्वनायकघटाकिरीटगः ।**
**अत्यलौकिकगुणैरलङ्कृतो गोकुलेन्द्रतनयः सुनायकः (ऐ)॥८०का**

सर्व्वशृङ्गारसद्वृन्दकन्दलत्वं यथा—'शृङ्गारी राधिकाया'मित्यादि (१२श श्लोके ।

'सर्व्वनायकघटे'ति सर्व्वशब्दो धूर्त्तनायकवर्ज्जनपरः । 'अत्यलौकिकगुणै'-रिति विरुद्धाविरुद्धचमत्कारिगुणवान् । विरुद्धवद्भासते, न तु विरुद्धः स विरुद्धाविरुद्धः—'एकोऽनेकः परिच्छिन्नो व्यापी'त्यादिवदलौकिकगुणवति लौकिकगुणा अपि ज्ञेयाः ।

एतावद्दिवसपर्य्यन्तं कान्तेन सह विच्छेदो जातः, अवधिवासरे पुनरपि तेन मेलनं भविष्यतीति कालकृतविरहो भूतविरहः । मां विहाय श्रीकृष्णो दूरदेशे स्थित इति देशघटितविरहः प्रवासः । हे राधे ! त्वद्विरहेण व्याकुलः श्रीकृष्णः सुहृदां यादवादीनां छन्दं कृतानि गव्यानि नानन्देनात्ति । तथा तैरानीतं कवोष्णं दुग्धादिकमधिकं न भुङ्क्ते, किन्तु प्राणरक्षार्थं यत् किञ्चिदेव—अतएव केवलं श्वसित्येव जीवत्येव, न तु तस्य किञ्चिदपि सुखन्तत्र वर्त्तते । किन्तु तत्र पल्लीग्रामस्तत्रत्या या प्रतिवेशपण्यजनता क्रयविक्रयादि-व्यवहारविशिष्टजनसमूहस्तेषां क्रय्यं क्रये प्रसारितं दध्यादिकं तस्याभिप्रायविज्ञैः प्रियपरिजनैर्म्मधुमङ्गलादिभिः क्रीत्वा सम्प्रतिपादितं यत्नेन संस्कृतं तदेव हृष्टान्तरः समश्नाति ।

---

(ऐ) 'तत्रालम्बनं नायको नायिकाश्चे'त्यत्र नायकपदे यदेकवचनप्रयोग इतरत्र बहुवचन-विन्यासश्च तत् ग्रन्थकृतो स्वसम्प्रदायिमतसम्मतिं स्फुटमावेदयति । नचानेन तावदितरा-लङ्कारिकवर्गाङ्गीकृते प्राकृतनायकसङ्के दोषदृष्टिराघ्रायते यतस्तस्मिन्नपि महनीय-महिमत्वादिगुणगणभूषितता वरीवर्त्ति । तथापि 'सर्व्वशृङ्गे'त्यादिपदैस्तावदेकस्यैव परामर्शो भवति—स चाद्यः साक्षात् भगवान् श्रीकृष्णोत्यन्वर्थनामरूपप्रच्छन्नो मन्मथजनकोऽपि स्वयं मन्मथमन्मथः । श्रीमद्भागवतमहापुराणे भक्तिशास्त्रे च बहुधा विजृम्भित-स्तस्य निर्द्देशक्रम इत्यलम् । 'सर्व्वशृङ्गारसे'त्यादि पदस्यैकधा व्याख्या मूले लक्षिता, अन्यथा

ते यथा—

**कृती कुलीनः सश्रीकस्त्यागी यौवनरूपभाक्। दक्षोऽनुरक्त उत्साही तेजोवैदग्ध्यभूषितः॥ ८०(क)का**

A little differently read in Bhagavata-purana I. 16. 26-29.

अधिकास्तु—

**सत्यं शौचं दया कान्तिरास्तिक्यं धैर्य्यमेव च। औदार्य्यं प्रश्रयः शीलं क्षान्तिः प्रह्वोऽनहङ्कृतिः॥ ८०(ख) का**

इत्यादयो नियताः।

तत्र 'नायकघटे'ति तद्भेदानाह—

**उदात्त उद्धतश्चैव प्रशान्तो ललितस्तथा। सर्व्वेऽमी धीरशब्दाद्याश्चत्वारो नायकाः स्मृताः॥ ८१का**

सर्व्वश्रेष्ठ इति—धूर्त्तनायकं वर्ज्जयित्वा या सर्व्वनायकघटा तस्या मुकुटमणिः। यद्यपि धीरोद्धतस्य गुणाः धीरप्रशान्तस्य गुणाश्च परस्परं विरुद्धा भवन्ति तथापि श्रीकृष्णे तेषां विरोधो नास्ति—यथा श्रीकृष्ण एकः सन्ननेकोऽपि भवति, एवं परिच्छिन्नः सन् व्यापकोऽपि भवति, तथैव विरुद्धगुणाश्रयोऽपि भवति। अलौकिकगुणवतीति—लोके न प्रसिद्धा ये गुणास्तद्वति श्रीकृष्णे लोकप्रसिद्धा गुणा अपि ज्ञेयाः, किन्तु लोकस्थास्ते मायिकाः, भगवन्निष्ठा अमायिका इति भेदो ज्ञेयः।

प्रह्वो नम्रता। अमी उदात्तादयश्चत्वारो 'धीर' शब्द आद्य आदौ येषान्तथाभूताः तथा च धीरोदात्त-धीरोद्धत-धीरशान्त-धीरललिता इतिसंज्ञा भवन्तीत्यर्थः।

---

च वैष्णवरसशास्त्रकारैः पद्यं तदप्राकृतं, तथात्वे 'शुरहरस'पदेन मधुररसस्यैव परिग्रहः, सम्भवी—तस्मादितररसानामनुत्पत्तिः प्रागेवास्माभिरुल्लिखिता। 'वृन्दारण्ये विहरते' त्यादि स्कन्दपुराणीयं पूर्व्वप्रदर्शितं पद्यं, 'कैतवरहितं पेम्मो णहि होइ माणुषे लोए। जइ होइ कस्स विरहो विरहे होन्तम्मि को वि जीअइ॥' इति 'जयति ते' इत्यादिकस्य श्रीमद्भागवतीयस्य (१०।३१।) श्लोकस्य तात्पर्य्यप्रकटनप्रसङ्गे तोषणीकृता धृतञ्च न्यायस्तत्राथैं प्रमाणम्। 'गोकुलेन्द्रतनये'ति विशेषणेन व्रजपुरसम्बन्धस्य सुनायकत्वे निदानमिति च सूचितमिति प्रतिभाति। 'रुचिरोष्ठपुटन्यस्ते'त्यादि गौतमीयतन्त्रे श्रीगोपालवर्णनं व्रजपुरश्लाघाद्योतनाभिप्रायकम्। भक्तिरसस्य प्राधान्येन मुख्यत्वेन च ...त्रैवं प्रकटनम्। 'गो-गोप-गोपिकासङ्गे यत्र क्रीड़ति कंसहा' इति 'व्रजपुरवनितानां

धीरशब्दाद्या इति—धीरोदात्तादय इत्यर्थः। तत्र धीरोदात्तो यथा—

आत्मश्लाघारहितः क्षमी गभीरो महासत्त्वः।
धीरोदात्तः स्थेयान्निगूढ़मानो दृढ़व्रतः सुवचाः॥ ८२ का

आत्मश्लाघानिरतो मायी चण्डश्च चपलश्च।
धीरोद्धतः स कथितोऽहङ्कृतिझङ्कारनिःशङ्कः॥ ८३ का

उभयगुणव्यतिरिक्तो भूयान् साधारणैश्च गुणैः।
धीरप्रशान्तसंज्ञो भवति द्विजवैश्यादिकः साधुः॥ ८४ का

मृदुलः कलाकलापो निश्चिन्तो मधुरवैदग्ध्यः।
प्रथमरसप्रधानो ललितकथो धीरललितः स्यात्॥ ८५ का

सर्व्वोऽनुकूल-दक्षिण-शठ-धृष्टत्वेन षोड़शधा॥ ८६ का

केषाञ्चिन्मते धीरललितस्यैवानुकूलादिभेदाः, न सर्व्वेषाम्।

महासत्त्व उदारचित्तः, स्थेयानतिशयस्थिरः। अहङ्कृतिरहङ्कारस्तेन यो झङ्कार आत्मश्लाघाबोधकशब्दप्रयोगस्तत्र निःशङ्कः। उभयगुणाभ्यां धीरोदात्तगुणधीरोद्धत-गुणाभ्यां रहितो धीरशान्तः माधुर्य्यगदर्त्तिसाधारणगुणैर्व्विशिष्टः स भूयान्, धीरो-दात्तादिः स्वल्पः, तथा च ब्राह्मण-वैश्यादयो बहव एव धीरशान्ता ज्ञेयाः। कलेति—रसोपयोगिचतुःषष्टिकलाभिर्भूषित इत्यर्थः। मधुरे शृङ्गाररसे वैदग्ध्यं यस्य, शृङ्गाररस एव प्रधानं यस्य।

---

जह्र्यन् कामदेव'मित्यादि च तद्वैशिष्ट्यं तदैकान्तिकत्वं च सूचयतः। 'सर्व्वनायक-घटे'ति 'सर्व्व'शब्दो धूर्त्तनायकवर्ण्णनपर' इति वृत्तौ यत् ग्रन्थकृतो मतं न तत् सार्व्वत्रिकं सर्व्ववादिसम्मतञ्च। तथा च 'नोक्तो धूर्त्तादिभेदस्तु मुनेः सम्मत्यभावतः' 'शाठ्याधार्ष्ट्य परं नान्यप्रोक्त उपपतिस्वभे। कृष्णे तु सर्व्वं नायुक्तं तत्तद्भावस्य सम्भवात्॥' इति श्रीमतां नीलमणिकृतामाशयख्यापनपुरःसरमभिधानम्। इह कौस्तुभेऽपि च 'लीलावशात् कदाचन धृष्टोऽपि शठश्च कुत्रापि" (८६ का)। नवतारुण्यत्व-नारीमोहनत्व-नित्यनूतनत्वातुल्यकेलिसौन्दर्य्यप्रष्ठवंशीस्वनाङ्कितत्वादयो बहवस्तत्रालौकिक-गुणाः प्रामाणिकरसग्रन्थान्तरतो लक्ष्याः। 'यच्छक्तयो वदतां वादिनां वै विवादसंवादभुवो भवन्ति। कुर्व्वन्ति चैषां मुहुरात्ममोहं तस्मै नमोऽनन्तगुणाय भूम्ने॥" इति श्रीमद्भागवते साधारण्येन, वृत्तिप्रतीकप्रदर्शितेन विरुद्धाविरुद्धनित्यचमत्कारिगुणवत्त्वेन वा तेषां

एषां लक्षणम्—

एकाश्रितोऽनुकूलः समरागो दक्षिणस्तु सर्व्वासु।
शठ एकत्रैव रतो बहिरन्यत्र प्रियोऽप्रियो मनसि ॥ ८७का
अपराद्धश्च विशङ्को दृष्टे दोषेऽपि मिथ्यावाक्।
तर्ज्जनताड़नयोरपि कृतयोर्न्निर्लज्ज एव धृष्टः स्यात् ॥८८का
षोड़शविधास्त एते पुनस्त्रिधा चोत्तमादिभेदेन।
अष्टाधिकचत्वारिंशद्भेदा नायकाः कथिताः ॥
पुनरेते स्युर्हि त्रिधा दिव्यादिव्या अदिव्याश्च।
स चतुश्चत्वारिंशच्छतमेकं तेन तद्भेदाः ॥

एषामनुकूलादीनां लक्षणमाह—एकामेव नायिकामाश्रितोऽनुकूलः, सर्व्वासु नायिकासु समरागो दक्षिणः, एकस्यामेव नायिकायां रतोऽन्यत्र नायिकायां मनस्यप्रियः, बहिस्तु कपटेन प्रियः शठः।

पुनरेतेऽष्टचत्वारिंशद्भेदा नायका दिव्या अदिव्या दिव्यादिव्याश्च भवन्ति, तेन चतुश्चत्वारिंशता सहैकशतं नायकभेदा भवन्ति।

---

परामर्शः। एषान्तु वैष्णवदार्शनिकसिद्धेन 'लीला'पदेन प्रायशः परिग्रहो भवति। आनन्दचन्द्रिकोद्धृतपद्ये 'लीला प्रेम्ना प्रियाधिक्यं माधुर्य्यं वेणुरूपयोः। प्रोक्तं गोविन्दस्य चतुष्टयम् ॥' सैषा लीला नित्यैव—तथा हि "यथा च सूर्य्यस्य वर्षदेश-विशेषवशात् सदैवोदयः सदैव पूर्व्वाह्णः सदैव मध्याह्न इत्यादि तथैव कृष्णस्यापि ब्रह्माण्डभेद-वशात् सदैव जन्म सदैव बाल्यं सदैव वकाद्यसुरमारणं सदैव मथुराप्रस्थानमित्येवं सर्व्वा एव प्रकटलीला नित्या एव' इति ग्रन्थान्तरे। लीलयैवाभिव्यक्तिर्भगवतो भक्तसाधक-समुदायसकाशे भवति। प्राकृतनायकेषु महामहिमत्वादिलौकिकगुणानां सम्भवेऽपि न तैर्भक्तकविस्वान्तं नितान्तं तृप्यतीति नागूढ़ं तत्वम्। एवमपि च कश्चित् प्रतीच्यभावुक-चूड़ामणिः (mystic) प्रसङ्गान्तरे—

'If in the emotion that this sight cause you, you do not proclaim that it is beautiful and if turning your gaze into your own heart, you do not then feel the charm of beauty, it is vain for you in such a mood to seek for intelligible beauty, for you would only seek it with what is impure and ugly,'—Plotinus

धीरप्रशान्तशठयोर्दृष्टस्य च भेदवर्ज्जितैरपरैः ।
लीलावशतः सर्व्वैरविरुद्धत्वाद्विरुद्धेऽपि ।
गोकुलराजकुमारस्तेन परं सर्व्वनायकाधीशः ॥
धीरोदात्तो गुरुषु ज्ञातिषु धीरोद्धतो विपक्षेषु ।
मायाविषु नियतमसौ व्रजपुर्य्यां धीरललितः स्यात् ॥
अनुकूलो राधायां सर्व्वास्वपरासु दक्षिणः कथितः ।
लीलावशात् कदाचन धृष्टोऽपि शठश्च कुत्रापि॥(ओ)८६का

अथानुकूलादीनां क्रमेणोदाहरणानि—तत्रानुकूलो यथा—

नान्यस्याः सदनं (21) प्रयाति स मया सम्प्रार्थ्यमानोऽपि च
प्रायो मे हृदयन्दुनोति ललिते ! तासां मनस्तापतः ।

धीरप्रशान्त-शठ भेदभिन्नैरपरैर्द्धीरललितधीरोदात्तादिभिर्भेदैर्विशिष्टो गोकुलराज-कुमारः कदाचिल्लीलावशाद्विरुद्धाविरुद्धधीरप्रशान्तादिभिः सर्व्वैरेव भेदैर्व्विशिष्टश्च भवति। तेषां परस्परविरोधेऽपि सति श्रीकृष्णेऽविरुद्धत्वात्तेन हेतुना श्रीकृष्ण एव परं सर्व्वनायकाधीशः। एतदेवाह—गुरुषु ज्ञातिषु च धीरोदात्तः, विपक्षेषु मायाविषु च धीरोद्धतः, धीरशान्तो भक्तेषु, व्रजपुर्य्यान्तु सदैव धीरललितः।

---

referred to by Maeterlinck in his *Le Tresor des Humbles* and translated and discussed by M. Clark in his *Maurice Maeterlinck—Poet and Philosopher.*)

( ओ ) नन्दनन्दनस्य वृन्दावनरसकन्दस्यातुलगुणवृन्दारिकाधिकतरानन्दचिन्मकरन्दस्य गोपीरतिरसरोपिणो मेदुरजलधरशोभिनः सकलकलाकलापपीवरस्य पुरुषवरस्य विभिन्नव्यपदेशाश्रयेणैव तावन्नानात्वतो निर्द्देशः।

भरतनाट्यशास्त्र-शृङ्गारतिलक-दशरूपक - भावप्रकाश - रसमञ्जरी-रसार्णवसुधाकर-साहित्यदर्पण-रसामृतसिन्धूज्ज्वलनीलमण्यादिषु निबन्धेष्विव परमिहापि नायकभेदप्रस्तावावतरणम्। कृष्णस्य भगवतः सुनायकत्वं परमन्येषां प्राकृतानां नायकत्वं न व्याहतमिति प्रदर्शयितुं तद्भेदावतारः कृतो वा। भरतीये रसामृतसिन्धावंशतश्च चतुर्णामेव धीरोदात्तादीनामुल्लेखः। भरतीये तु नाट्यप्रोक्तेषु नायकभेदेषु 'देवा धीरोद्धता ज्ञेया स्युर्द्धीरललिता

---

(21) 'सदयं प्रयाती'ति मुद्रितपुस्तके दुष्टः पाठो दृश्यते।

आरामे रमते ममैव सततं मद्वर्त्म संवीक्षते
स्वप्नेऽपि प्रतिकूलतां न गतवान् कृष्णः सतृष्णो मयि ॥ ५२

एवमेकत्र रतोऽप्यलौकिकनायकत्वाद्दक्षिणोऽपि। तद्यथा—

श्यामाङ्के चरणौ कलोरुफलके शीर्षं सुरेखाङ्गुलौ
केशांश्चामरचालिकाभुजतटे दृष्टिं प्रियोक्तौ श्रुतिम्।
ताम्बूलार्पणिकाकरे करपुटीं कस्तूरिकोरस्थुर-
श्चन्द्रावक्षसि पृष्ठमर्पयदहो निद्राति नीलं महः ॥ ५३

एवं दक्षिणोऽपि लीलावशात् कदाचिद्धृष्टोऽपि भवति। तद्यथा—

चन्द्रावलीति कपटेन निगद्य राधां
जातापराध इव सङ्कुचितः सखीभिः।
सन्तर्जितोऽपि स तया श्रवणोत्पलेन
सन्ताड़ितोऽपि विजहास न सम्बिभाय ॥ ५४

स ममैवाराम उपवने रमते।

महारासान्ते स्वयमेव बहुधा नर्त्तित्वा विश्रामं कुर्व्वतः श्रीकृष्णस्य वर्णनमिदं 'श्यामाङ्के' इति पद्यम्। कला चन्द्रावल्याः सखी तस्या ऊरुप्रदेशे शीर्षम्, एवं सुरेखा काचिद्गोपी तस्या अङ्गुलौ केशान् समर्पयत् सन्नीलं महः श्रीकृष्णो निद्रातीत्यन्वयः। प्रिया श्रीराधिका, तस्या उक्तौ क्षणमत्र स्वपिहीति वाचि श्रुतिम्। कस्तूरिका श्रीराधिकायाः सखी तन्निदेशवशा, अतएव तस्या वक्षःस्थले श्रीकृष्णस्योरः वक्षःस्थलम्। अत्र दक्षिणपार्श्वे वामपार्श्वे वा सुप्तस्य श्रीकृष्णस्य पृष्ठदेशलग्ना चन्द्रावली, तन्मुखे वक्षःस्थललग्ना कस्तूरिका, शीर्षलग्नः कलाया ऊरुदेश एव—एवम्प्रकारेण शयनक्रमो ज्ञेयः।

राधामुद्दिश्य 'हे प्रिये चन्द्रावली'ति कपटेन निगद्य जहास्रव, नत्वपराधेन कदापि भीतो बभूवेत्यर्थः।

---

नृपाः। सेनापतिरमात्याश्च धीरोदात्ताः प्रकीर्त्तिताः। ब्राह्मणा वणिजश्चैव प्रोक्ता धीरप्रशान्तकाः॥' इति कथञ्चित् विभिन्नप्रणालीविलसितक्रमः कोऽपि विभागो दर्शितः। दशरूपके धीरोदात्तादिभेदैरनुकूलादिचतुर्भिर्विभेदैरष्टक्कितः षोड़शधा भागो लक्षितः। साहित्यदर्पणरसमञ्जर्यादिषु सर्व्वेषामेषामुत्तमादिप्रविभेदेनाष्टचत्वारिंशन्नायका इत्युक्तम्, परं नीलमणौ वैष्णवालङ्कारिकवर्य्यकृते घमवतिन्नायिकानामिति समतं प्रतिष्ठापितम्, इह चतुश्चत्वारिंशदधिकं शतमेकमिति भेदः। 'पतिश्चोपपतिश्चेति प्रभेदाविह विश्रुतौ।'

एवं कुत्रचिच्छठोऽपि। यथा—

एकत्रैव कृतासने निजनिजैरालीजनैः कुत्रचित्
क्रीड़ाकुञ्जगृहाङ्गने व्यवहितो दूरेण दृष्ट्वा प्रिये।
वंशीकूजितसूचितातिनिभृतं चन्द्रावलीं लम्भयन्
सङ्केतन्तरसा रसादभिसरन् राधां हरिः पातु वः॥ ५५

अथ विभावप्रसङ्गे नायकस्य सहायाः सखायः, एवं नायिकायाः सख्यः। तेनादौ नायकस्य सहाया लक्ष्यन्ते।

**सहायाः स्युः सहचरास्ते भवन्ति चतुर्व्विधाः।**
**सखायश्च प्रियसखास्तथा नर्म्मसखा अपि॥**

अथैकस्मिन् कुञ्जे सखीभिः सह राधाचन्द्रावल्यौ। लताऽद्यिव्यवहितः श्रीकृष्णो दूरत एव दृष्ट्वा राधां चन्द्रावलीवियुक्तां कर्त्तुं दूरे सङ्केतकुञ्जं गत्वा मुरलीशब्देन चन्द्रावलीमाजुहाव, तं शब्दश्चन्द्रावल्येव शृणोति, नान्या तस्या अचिन्त्यप्रभावत्वात्। तच्छ्रुत्वाऽतिहृष्टा चन्द्रावली सखीभिः सहिता केनचिन्मिषेण तत उत्थाय तदेव सङ्केतस्थलं जगाम। ततः श्रीकृष्णः सुखेन राधिकामभिससार। एतदेवाह-एकत्रेति। एकत्रैव कृतमासनं याभ्यामेवम्भूते प्रिये राधाचन्द्रावल्यौ लताऽद्यिव्यवहितः श्रीकृष्णो दूर एव दृष्ट्वा वंशीशब्देन सूचितमतिनिभृतं सङ्केतस्थलं लम्भयन् स्वयन्तरसा वेगेन रसादानन्दात् राधामभिसरन् वो युष्मान् पातु।

---

'उदात्ताद्यैश्चतुर्भेदैस्त्रिभिः पूर्णतमादिभिः (पूर्ण-पूर्णतर-पूर्णतमाख्यैरिति)। द्वादशात्मा चतुर्व्विंशत्यात्मा पत्यादियुग्मतः। नायकः सोऽनुकूलाद्यैः स्यात् षण्णवतिधोच्चितः॥' इत्युज्ज्वलनीलमणौ। तत्र नीलमणौ कृष्णे उत्तमादिभेदकल्पनं न सम्यक्, अतस्ततुल्यत्वे पूर्णतमादितारतम्येन भेदकल्पना। दिव्यादिभेदस्यापि स न विषयः—इतरनायकेष्वित्र न तत्रौपपत्यासङ्गतिरपि, अतः संख्यानयनवैमत्यमित्यलं बहुना। एषां भेदानां प्रत्येकशो भिन्नान्युदाहरणानि दर्पणनीलमण्यादिषु निबन्धेषु स्पष्टानि। अनुकूलनायकस्य विश्वप्रसिद्धमुदाहरणं रामायणकथानायकः सुचरितनिकषो दिव्यादिव्यः श्रीरामचन्द्रः, वैष्णवतन्त्रस्थितौ तु 'राधायामेव कृष्णस्य सुप्रसिद्धाऽनुकूलता। तदालोके कदाप्यस्य नान्यासङ्गः स्मृतिं व्रजेत्॥' इति कृत्वा तस्यैव' तथात्वेन निर्द्देशो ज्ञेयः एवमेव श्रीगीतगोविन्दे "राधामाधाय हृदये तत्याज व्रजसुन्दरीः॥" अनुकूलस्य दक्षिणस्य च तस्य देशपात्रकालादिप्रभूततमभेदकलनया धृष्टत्वं शठत्वं वा कादाचित्कमिति नान्याय्यम्। मधुररसकदम्बस्य भगवतो धृष्टत्वेन

प्रियनर्म्मसखास्त्वन्ये तेषु दूतस्त्रिधा मतः ।
निसृष्टार्थो मितार्थश्च (22) तथा सन्देशहारकः ॥
द्वयोरिङ्गितमादाय स्वयमुत्तरदायकः ।
सुश्लिष्टं कुरुते कार्य्यं निसृष्टार्थः स उच्यते ॥
प्रमितं वक्ति कार्यस्य चान्तं याति मितार्थकः ।
यथोक्तमेव वदति यः स सन्देशहारकः ॥ ६०का

एवं दूत्योऽपि—यथोदाहरिष्यन्ते (औ) ।

तेषु सखिषु मध्ये प्रियनर्म्मसखा एव दूताः, नान्ये—ते दूतास्त्रिधा भवन्ति । निसृष्टो दत्तोऽर्थः कार्य्यभारो यस्मै तथा चावाभ्यां किमपि न वक्तव्यम्, आवयोर्म्मिलनं यथा भवति तथा त्वयैव बुद्ध्या कर्त्तव्यमिति विन्यस्तकार्य्यभारो निसृष्टार्थ इत्यर्थः । प्रमितन्ताभ्यां यद्यदुक्तन्तदेव परिमितं वक्ति, किन्तु द्वयोर्मिलनरूपकार्य्यस्यान्तं सीमानं याति प्राप्नोति, तथा च कार्य्यमवश्यङ्करोतीत्यर्थः । ताभ्यां यथोक्तं तथैवोभयोर्न्निकटे गत्वा वदति, कार्य्यं भवतु मा भवतु वेति कोऽपि भारस्तस्मिन्नास्तीति सन्देशहारकः । यथा पुरुषा दूतास्तथा स्त्रियोऽपि दूत्यः सन्ति । उदाहरणे तासां दूत्यं व्यक्तीभविष्यतीत्यर्थः ।

---

प्राठत्वेन वा वर्णनया नायिकास्थानीयभक्तचयस्वान्तेष्वधिकतरा चमत्कृतिरुदेतीति च निपुणविभाव्यं तत्त्वम् ।

(औ) मधुरापरपर्य्यायशृङ्गाररसमेव मुख्यरसं प्रकल्प्य चेट-विट-विदूषक-पीठमर्द-प्रियनर्म्मसखाः पञ्च नायकसहाया इति बहवः—'चतुर्व्विधाः सखायोऽत्र चेटः किङ्कर इष्यते' इति नीलमणौ । सहायगुणाश्च तत्रैव सोदाहरणं दर्शिताः । अत्र चेटविटानां न प्रस्तावविस्तारः । गोकुले कड़ाराद्या विटाः, भङ्गुर-भृङ्गाराद्याश्चेटाः, मधुमङ्गलो विदूषकः, श्रीदामा पीठमर्दः, सखीभावं समाश्रितः सुवलः प्रियनर्म्मसख इति वैष्णवतन्त्रीया स्थितिः, एषु 'उत्तमा पीठमर्द्दाद्या मध्यौ विटविदूषकौ । तथा प्राकारचेटाद्या अधमाः परिकीर्त्तिताः ॥' इति दर्पणे ॥ दूतदूतीविभागविस्तारो नीलमणावेव लभ्यः । ह्रियमवगृह्य गृहेभ्यः कर्षति राधां वनाय या निपुणा । सा जयति निसृष्टार्था वरवंशजकाकली दूती ॥

इत्युक्त लक्षणा ॥ वंशीदूती, वीराबृन्दादिरिष्टदूती, पौर्णमास्यादिर्लिङ्गिनी दूती—एतास्तिस्रो नायिकासख्योऽपीति निखिलमवदातम् ।

---

(22) 'निसृष्टार्थोऽमितार्थश्चे'ति (ख) (घ) (ङ) पुस्तकेषु पाठः । एवं कारिकाया अन्तिमश्लोकस्य पूर्व्वार्द्धे 'यात्यमितार्थक' इति तेषु पाठः । स च पाठ उज्ज्वलनीलमणिकारसंज्ञाऽनुसारी ।

अथ नायकानामुक्तनियतसामान्यगुणादतिरिक्ताः सत्त्वजा गुणा उच्यन्ते—

**शोभा विलासो माधुर्य्यं गाम्भीर्य्यं धैर्य्यतेजसी ।**

**औदार्य्यं ललितञ्चेति गुणा अष्टैव सात्त्विकाः ॥ ९१ का**

तत्र शोभा (23)—

**शौर्य्यं दाक्ष्यञ्च सत्यञ्च महोत्साहोऽनुरक्तता ।**

**घृणा नीचेऽधिके श्रद्धा (A) सा शोभा मिलितोच्यते ॥ ९२ का**

यथा— शौर्य्यं शत्रुषु दाक्ष्यमात्मकुहके सत्यं भुवो धूःक्षये
रागो गोकुलमध्यवर्त्तिषु महोत्साहो गिरेर्द्धारणे ।
श्रद्धेयं पितृमातृबन्धुषु हरे शोभैव ते सर्व्वथा (24)
नीचे मय्यघृणेति केवलमसावेकाङ्गहीनाऽभवत् ॥ ५६

सत्त्वजा इति - शुद्धसत्त्वाच्चित्ताज्जाता इत्यर्थः ।

मिलितेति—शौर्य्यादयः परस्परं मिलिताः सन्त एकाधिकरणे वर्त्तन्ते चेत्तदा शोभोच्यते ।

आत्मकुहके रासारम्भे गोपीभिः सह प्रेमपरीक्षार्थं स्वकृतकपटे दाक्ष्यं सम्यक्तया क्षिप्रकारित्वमित्यर्थः । भुवः पृथिव्या भारक्षये । हे हरे ! मयि नीचे ते तवाघृणा अकृपा, अतस्तव शोभैकाङ्गहीनाऽभवत् ।

---

(A) भरतनाट्यशास्त्र दशरूपक-रसार्णवसुधाकरादिष्वेषां विस्तारः । यदप्यर्वाचीन-ग्रन्थेष्वाकरादितो लक्षणलक्षणे किमपि वैलक्षण्यं न तत् सर्वत्रानुपादेयम् । वस्तुतस्तु मुनिकृतलक्षणानां भित्तिमूलत्वे स्वीकृतेऽपि स्मृतिमान्द्यात् व्याख्यानभेदात् मतान्तर-कल्पनस्याप्यादरणीयत्वान्न किमपि सिद्धान्तपक्षे लक्षणवैलक्षण्यविवादावसरे वक्तव्यमस्ति । लक्षणवैलक्षण्यमग्रिमगुणलक्षण एव सुतरां वरीवर्त्ति । 'अधिके स्पर्द्धे'ति दर्पणकृदादीनां लक्षणे पाठो लक्ष्यते । 'अधिके श्रद्धे'ति कौस्तुभकृतः । इदानीन्तनलभ्ये भरतीये नाट्यशास्त्रे २४शाध्याये ( निर्णयसागरमुद्रिते तु २२शाध्याये ) शोभालक्षणमित्यमुद्दिष्टम्—'दाक्ष्यं शौर्य्यं मयोत्साहो नीचार्थेषु जुगुप्सितम् । उत्तमैश्च गुणैः स्पर्द्धा यत्र शोभेति सा स्मृता ॥' स्पर्द्धास्थाने श्रद्धायाः ग्रहणं वैष्णवाचारसम्मतमिति नास्ति काऽपि विप्रतिपत्तिः, उदाहरणे च चमत्कारिताप्रसङ्गोऽस्मादेव कारणात्तस्य; अपि विलासादिगुणानां प्राचीनमत-

---

(23) अयमंशः (ख) (ङ) पुस्तकयोर्नास्ति ।

(24) 'सर्व्वदेति, (क) (ख) (ङ) पुस्तकेषु पाठः ।

**रम्यवेशविभूषाद्यैर्विलासः शिल्पकौशलम् । ६३का-**

तच्च स्वविषयमन्यविषयञ्च । यथा

क्वचिद् गुञ्जाधातुस्तबकदलबर्हप्रभृतिभि-
र्वनेऽनल्पाकल्पैः प्रणयिसखिभिर्भूषिततनुः ।
स्वयञ्चैषां वेशानतिकुतुकतः शिल्पकुशल-
स्ततोऽप्युच्चैश्चित्रान् हरिरहह तैरेव तनुते ॥ ५७

अन्यविषयेऽन्यदपि ।

गुञ्जाशिखण्डगिरिधातुदलप्रसूनै
राधां विभूष्य मुरलीञ्च करे निधाप्य ।
पीताम्बरञ्च परिवेष्ट्य हरिः प्रसीद
हे कृष्ण मय्यनुगते कृपयेत्यवादीत् ॥ ५८

'संक्षोभेऽपि निरुद्वेगभावो माधुर्य्यमिष्यते ।' इति केचित् ।

केचित्तु 'सर्व्वावस्थाविशेषेषु माधुर्य्यं रमणीयता ।' Sahityadarpana. Chap. III. under नायिकाऽलङ्कार ।

वस्तुतस्तु

**येन केनापि वेशेन माधुर्य्यं रमणीयता (A) । ६४का**

यथा—

कचे बर्होत्तंसो, वपुषि गिरिधातुः, किसलयं
श्रुतौ, गुञ्जादामस्तबकितलताखण्डमुरसि ।

अनल्पाकल्पैर्गुञ्जाद्यनेकभूषाभिरेषां सखीनां तैरेवाकल्पैर्वेशांस्तनुते । कथम्भूतान् ? ततोऽपि सखिकृतवेशादप्युच्चैश्चित्रानत्यद्भुतान् ।

अथान्यविषयस्वविषययोरेकस्मिन् पद्य उदाहरणमुक्त्वा केवलान्यविषयेऽन्यदप्युदाहरणमाह—गुञ्जेति । श्रीकृष्ण एव श्रीकृष्णवेशधारिणीं राधिकां श्रीकृष्णरूपेण सम्बोध्य हे कृष्ण ! मयि अनुगते कृपया प्रसीदेत्यवादीत् । गिरिधातुर्गैरिकः ।

---

वादतो लक्षणेभ्योऽन्यथाकल्पनाकारणं सुधीभिरूह्यम् । श्रीकृष्णगुणानां वैष्णवशास्त्रादिसमुद्भावितानां प्रकृते यथा यथा निवेशः साधुः सुकरश्च तथा तथैव लक्षणकल्पनेति दिक् । माधुर्य्यलक्षणे केचिदिति यद्वैमुख्यप्रकटनं तदपि तत्तत्कारणनिवहादेव भूतम् । 'संक्षोभेऽ-

क्व रत्नालङ्काराः क्वचन वनवेशो (25) मुरहरे
न तत् पश्याम्यस्मिन् यदतिमधुरत्वं न लभते ॥ ५९

**भीशोकक्रोधहर्षाद्यैर्गाम्भीर्य्यमविकारिता। ९५ का**

'नो कथ्यतं किमु कथाविषयो यदि स्या'दित्यादि (४३श्लोके)।

**स्वभावादप्रतिच्यावो धैर्य्यं शोके महत्यपि ॥ ९६ का**

यथा— किमेषा तापिञ्छद्रुमलतिकया मञ्जुधिया
स्वकण्ठं तन्वङ्गी शिवशिव दृढ़ं पीड़ितवती।
स्थिता वा कालिन्दीपयसि मम वक्षःस्थलधिये-
त्यमुष्मिन् तर्काः परमहह जीर्य्यन्ति हृदये ॥ ६०

**अवक्षेपावमानादेः प्रयुक्तस्य परेण यत्।**

**निर्वापकं भवेत्तेजः— ९७का**

यथा— मदान्धेनेन्द्रेण स्वमखविधिभङ्गव्यसनिना
महावृष्टिं सृष्टां व्रजनगरनाशाय कलयन्।
गिरीन्द्रं श्रीकृष्णः करकिसलयाग्रेण मृदुना
सलीलम्बिभ्राणो व्रजमवितवांस्तञ्च जितवान् ॥ ६१

स्वगतमाह—वस्तुतस्त्वित्यादि। उरसि वक्षःस्थले गुञ्जादाम एवं स्तवकयुक्तलताखण्डञ्च—अस्मिन् श्रीकृष्णे तद्वस्तु न पश्यामि यदतिमधुरत्वं न लभते।

महत्यपि शोके स्वभावादप्रतिच्यावोऽचलनं धैर्य्यम्। माथुरविरहेऽत्यन्तव्याकुलां राधां स्मृत्वा स्वयमपि व्याकुलः श्रीकृष्णः स्वगतमाह—किमेषेति। एषा मञ्जुबुद्ध्या तमालवृक्षस्य शाखया स्वकण्ठं पीड़ितवती, अथवा मद्वक्षःस्थलधिया कालिन्दीजले स्थितेति नानाविधतर्का अमुष्य श्रीकृष्णस्य हृदय एव जीर्णा भवन्ति—न तु वहिः कोऽपि विकारः प्रकटीभवतीति भावः।

परेण कृतस्यावक्षेपावमानादेः प्रतिकारं विनैव स्वत एव निर्व्वाणजनकं यद्भवति तत्तेजः। स्वस्य मखस्य भङ्गाज्जातं व्यसनं श्रीकृष्णे कटूक्त्यादिकं यस्य। तेन सृष्टां वृष्टिं पश्यन्।

---

पौत्यादि लक्षणं दशरूपकादिसम्मतं, द्वितीयन्तु नाट्यशास्त्रादौ नायिकासात्त्विकभावानामन्यतमस्य माधुर्य्यस्य निदर्शकम्। इत्थं कुत्रचित् ग्रन्थकृद्भिर्नायकगुणलक्षणविचारे प्राचीनोक्तनायिकागुणसंवादस्त्वेहितः, स च न सर्वथा शोभन इत्यलम्।

---

(25) 'क्व वनचरवेश' इति (क) पुस्तके पाठः।

दानं प्रश्रयभाषणम् ।

**अमित्रेषु च मित्रेषु साम्यमौदार्य्यमिष्यते ॥ ९८ का**

साम्यन्तु फलगतम् । यथा—

आपीय पूतनायाः सहचरजननीगणस्य च स्तन्यम् ।

सदयः सममेव ददौ जननीत्वं यः स एव वः पायात् (B) ॥ ६२

**वाग्वेशयोर्मधुरता शृङ्गारे ललितन्तु तत् । ९९ का**

यथा— विपिनलतादलकुसुमैर्विभूष्य राधां हरिः प्राह ।

त्वं सुमुखि कृष्णपक्षप्रणयवती कुञ्जदेवता काऽपि (C) ॥ ६३

अथान्येऽप्यस्य च तद्व्यतिरिक्ता ऊह्याः । तत्र दिग्दर्शनम्—

मुरलीविनोदविद्या हृद्या सङ्गीतभङ्गिरनवद्या ।

अविकलमखिलकलाकुलमविरामं रासलास्यमभिरामम् ॥ ६४

साम्यमिति—अमित्रमित्रयोरेकफलदातृत्वांशेनैव भगवतः साम्यं, न तु स्नेहादांशेनेति । सदयः श्रीकृष्णः ब्रह्ममोहनप्रसङ्गे व्रजवासिनीसमूहस्य च स्तन्यमापीय ।

श्रृङ्गाररसे वाग्वेशयोर्या मधुरता तदेव ललितम् । वनलतादलादिभिः सामान्यवस्तुभिरिति, वेशमधुरतामाधुर्य्यलक्षणे तथैवोक्तत्वात् । सुमुखि ! हे राधे कृष्णस्य मम पक्षे प्रणयवती, देवतापक्षे जनैर्दत्तं कृष्णपक्षे हव्यकव्यादिकं भुङ्क्ते ! अत्र 'कृष्णपक्षे प्रणयवती'ति वाङ्मधुरता ।

अविरामं निरन्तरमखिलवस्तुषु शिल्पनैपुण्यादिकलाकुलमविकलं वैकल्यरहितम् अभिरामं मनोज्ञम् ।

---

(B) स्तन्यपानाज्जननीत्वसुभयत्र, परमभित्रभूतायां पूतनायां मित्रभूतासु सहचरमातृमण्डलीष्विव व्यवहारो भगवतो महिमद्योतकः, यतः स सर्वमङ्गलमङ्गल्योऽहितानपि हितत्वेन विपरिणमयति ! पूतनायाः स्तन्यपानं तद्वधप्राक्कालकं, व्रजवासिनानीन्तु ब्रह्ममोहनदशायाम् । तथा च श्रीमद्भागवते दशमे "गोगोपीनां मातृताऽस्मिन्नासीत् स्नेहर्द्धिकां विना । पुरोवदास्वपि हरेस्तोकता मायया विना ॥" तृतीयेऽपि—"अहो बकी यं स्तनकालकूटं जिघांसयाऽपाययदप्यसाध्वी । लेभे गतिं धात्र्युचितां ततोऽन्यं कं वा दयालुं शरणं व्रजेम ॥"

(C) भरतीये तु ललितमित्थं लक्षितम्—'अबुद्धिपूर्वकं यत्तु सुकुमारं स्वभावतः । शृङ्गाराकारचेष्टत्वं ललितं तदुदाहृतम् ॥' कौस्तुभकृतामुदाहरणं भरतलक्षणानुवर्त्ति, लक्षणन्तु ह्यात्मविशिष्टम् । एवैव पद्धतिरितरत्रापि । अत्रोदाहरणे चैषः श्लेषः सुतरां शोभां

अथ नायिकाभेदाः—

तत्र 'परोढ़ां गणिकाञ्चापि वर्जयित्वाऽत्र नायिका' इति परोढ़ागणिकयोः साधारण्येन रसाभासपरत्वमेवेति (26) लौकिक एव । अलौकिके तु कृष्णाधिकरणक-रतेस्तदेकमात्रनिष्ठत्वान्न रसाभासः, 'अनौचित्यप्रवर्त्तिता आभासा' इति, तदभावात् (27) (D), प्रत्युतौचित्यमेव । तेन परकीयाऽवान्तरभेदप्राप्तं परोढ़ात्वमङ्गीकृत्य नायिकाभेदानाह --

**स्वकीया परकीयेति नायिकाऽऽदौ द्विधा मता ।**

**मुग्धा मध्या प्रगल्भेति स्वकीया तु त्रिधा भवेत् ।**

**मध्याप्रगल्भयोर्भेदाः षड् धीरादिप्रभेदतः ॥ १०० का**

धीरा, अधीरा, धीराधीरा इति भेदास्त्रयः ।

**कनिष्ठज्येष्ठरूपत्वात्तयोर्द्वादशधा मतम् । १०१का**

अनौचित्येन नरकसम्पादकत्वपारिमित्यादिदोषेण प्राकृते प्रवर्त्तिता रसा आभासा भवन्तीत्यर्थः । पारिमित्यन्तु स्त्रियाः सम्पूर्णाग्रहसमये पुरुषस्यासामर्थ्यरूपं, श्रीकृष्णे त्वनन्तकोटिगोपीभिः सह विहारेऽपि सम्पूर्णसामर्थ्यम्, अतस्तासामेव पराभवो न तु कृष्णस्य, अतोऽत्र सम्पूर्णरस एव, अतएव कृष्णे तदभावादीश्वरत्वेनानौचित्यदोषाभावात् । परोढ़ात्वमिति—अप्राकृते परोढ़रमण्यामपि रसमङ्गीकृत्येत्यर्थः ।

---

पुष्णाति । देवानां कृष्णपञ्चप्रणयवत्त्वं कल्प्यम् । देवतानां मध्ये कुञ्जदेवता सा श्यामतरुदलशोभिनी ।

(D) अत्र 'तद्भावादि'ति पाठे कृष्णाधिकरणक रतेरनौचित्यभङ्गेन प्रकृतरसपरत्वादित्याकारोऽर्थः कल्प्यः । अप्राकृते रसाभासादिविचारोऽस्माभी रसस्वरूपोद्घाटन एव विहितः । अत्र तत्त्वे 'आसामहो चरणरेणुजुषामहं स्यां वृन्दावने किमपि गुल्मलतौषधीनाम् । या दुस्त्यजं स्वजनमार्यपथञ्च हित्वा भेजुर्मुकुन्दपदवीं श्रुतिभिर्विमृग्याम् ॥' इति श्रीमद्भागवतपुराणीयो ग्रन्थः, 'नेष्टा यदङ्गिनि रसे कविभिः परोढ़ा तत् गोकुलाम्बुजदृशां कुलमन्तरेण । आशंसया रसविधेरवतारितानां कंसारिणा रसिकमण्डलशेखरेण ॥' इति प्राचां मतञ्च प्रमाणम् ।

---

(26) 'परत्वमेवेति प्रवादौ लौकिक एवे'ति पाठः (क) (ग) (घ) पुस्तकेषु ।

(27) 'तदभावादि'ति (क) (ख) (घ) पुस्तकेषु पाठः । स च टीकाकृदसम्मत इति प्रतिभाति ।

तयोः षट्प्रकारयोर्मध्याप्रगल्भयोः कनिष्ठजेष्ठत्वं श्रीकृष्णप्रेमतारतम्येनैव, न तु वयसा । मुग्धाया एकरूपत्वेनानयोर्द्वादशत्वेन—

**तेन त्रयोदश स्वीयाः—१०२ का**

**परोढ़ा स्यादलौकिकी ।**

**त्रयोदशविधा साऽपि—१०२ (क) का**

यतोऽलौकिकी परोढ़ाऽपि सम्मन्यते, ततः साऽपि त्रयोदशविधा ।

**तेन षड्विंशतिर्भिदा । १०२ (ख) का**

तेन मिलित्वेत्यर्थः ।

**अवस्थाभिरथाष्टाभिरष्टोत्तरशतद्वयी ।**

**कन्याज्येष्ठकनिष्ठत्वान्मृदुमध्यमृदुत्वतः ॥**

**चतुर्भेदास्ततस्तासां सद्वादशशतद्वयी ।**

**अत्युत्तम-प्रकृत्यादितया ताः स्युः पुनस्त्रिधा ।**

**षट्त्रिंशत्सहिता तेन षट्शती नायिकाभिदा ॥ १०२(ग)का**

अत्युत्तमा, उत्तमा, मध्यमेति त्रैधम् ।

**तत्र सिद्धाः सुसिद्धाश्च नित्यसिद्धा इति त्रिधा ।**

**स्त्रियोऽवतीर्णास्तेन स्युर्वसुशून्यग्रहेन्दवः (१९०८)(E) ॥ १०३का**

मुग्धाया एकरूपत्वमेव, अतो मध्याप्रगल्भयोरेव धीराऽऽदिभेदतः षड् भेदा उच्यन्ते । अनयोर्मध्याप्रगल्भयोः । तेनेति—स्वकीयायास्त्रयोदशभेदैः सह मिलित्वा षड्विंशतिर्भेदा उक्ताः, अभिसारिका-वासकसज्जेत्याद्यष्टाभिरष्टोत्तरशतद्वयी ।

परोढ़ाभिन्ना कन्या केनाप्यविवाहिता—तस्या भेदचतुष्टयमाह—कन्येति । ज्येष्ठा कनिष्ठा, अत्यन्तमृद्वी मध्यमृद्वी च ।

नित्यसिद्धा इत्यस्य व्याख्या स्वभावसिद्धाः । एताः स्त्रियो गोकुलेऽवतीर्णाः, तेन पूर्वोक्तसंख्यायास्त्रिगुणीकृतेन वसुशून्यग्रहेन्दवो नायिकाभेदा भवन्ति ।

---

(E) सिद्धाः सुनिरूपा इत्यादि—इदस्य वैष्णवागमस्य मतानुसारेण । भक्ताः सर्वे भगवतो जायारूपाः—प्रोक्तैव भगवान् लभ्यः । ऋषिभिः श्रुतिरूपाभिः देवीभिश्च स लब्धः, अतोऽयमुक्तः । स्कन्द-ब्रह्मवैवर्त्तादिपुराणेभ्यो विस्तरो ग्राह्यः ।

सिद्धा मुनिरूपाः साधनसिद्धाश्च, सुसिद्धाः श्रुतिरूपा देव्यश्च, नित्यसिद्धा राधाद्या रुक्मिण्याद्याश्च स्वभावसिद्धाः। अथैतासामादितो लक्षणानि--

स्वकीया तु कृतोद्वाहा पित्राद्यैः स्वयमर्पिता ॥
या तु व्यूढ़ाऽपि गोपेन लोकधर्मानपेक्षिणी।
कृष्णैकताना रागेण परोढ़ा व्रज एव सा (F) ॥
पित्रादिदानात् प्रागेव पित्रादेरप्यसम्मतौ ॥
जातानुरागा या कन्या सा भैष्मी कुण्डिने यथा ॥
पितृभ्रात्रादिसङ्कोचात् स्वधार्ष्ट्याद्भियादपि ॥
गूढ़ा यस्या रतिर्गाढ़ा सर्वथा सुरसायते।
कात्यायनीव्रतपरा सा कन्या सर्वदा व्रजे (28) ॥ १०४का

अथ मुग्धादेर्लक्षणम्—

अभिनवविकसितयौवनमदनविकारा मृदुर्माने।
वार्त्तायामपि सुरते पराङ्मुखी सत्रपा मुग्धा ॥ १०५ का

कुण्डिनपुरे भैष्मी रुक्मिणी। व्रजस्थकात्यायनीव्रतपराणां कन्यानां स्वरूपमाह—पितृभ्रात्रेति। परोढ़ानामिव रसोत्कर्षहेतुभूतस्य पित्रादिकृतनिवारणदुर्लभताप्रच्छन्नकामत्वादेः सत्त्वात् गोपान्तरेण विवाहाभावेऽपि न क्षतिः।

---

(F) परकीयानामपि तासां श्रीकृष्णपतित्वं दर्शितं बहुशो भागवतसंहितायां यथाऽवोचाम प्राक्। तथा चानन्दचन्द्रिकायाम् 'न हि पत्यादिशब्दानां परिणीतय्यैव केवलं शक्तिः सर्वेष्वेव रसग्रन्थेषु।' एवमेव स्वकीयासु स्वाधीनभर्त्तृकाऽऽदिरन्तर्भुक्ता।

---

(28) इतः परम् 'एवंविधैव कविभिः परकीयैव वर्ण्यते।
परपाणिग्रहीवी तु कृष्ण एव हि शोभते।
नैवान्यनायके यस्मात्तस्मान्नान्यत्र सा किल ॥'
इत्यधिकोंऽशो मुद्रितपुस्तक उपलभ्यते। स चांशः प्रक्षिप्त इव प्रतिभाति।

तत्र नवयौवना यथा—

पदोः पारिप्लव्यं नयनमहरन्मध्यगुरुतां
स्तनश्रोणी मान्द्यं धिय इव (G) ह्रियो वाग्व्यवसितिः ।
शिशुत्वे राधाया विगलदधिकारे सति तनौ
किमङ्गान्यन्योन्यं दधत इव लुण्टाकपदवीम् ॥ ६५

नवमदनविकारा यथा—

कटाक्षं सोष्यन्ती (G) व्यथत इव नेत्रान्तलहरी
निरातङ्कं वक्षो जननयनतः शङ्कत इव ।
शिशुत्वं तारुण्योदयमपि नयन्त्यास्तनुतुलां
स्मरोऽस्या निःस्पन्दं कलयति मनः काष्टकमिव ॥ ६६

अथ बाल्ये सर्वत्र स्वच्छन्दगमनागमनेन पदद्वयस्य चापल्यमासीत् नेत्रद्वयस्य कन्दर्पविकाररूपचापल्यं नासीत्, यौवनारम्भे तु वैपरीत्यमभूदित्युत्प्रेक्षाऽलङ्कारेणाह—पदोरिति। बाल्ये स्थितं पदोश्चापल्यं यौवनारम्भे नयनमहरत्, एवं बाल्ये स्थितां मध्ये गुरुतां स्तनश्रोणी अहरताम्, यौवने स्तननितम्बयोः पुष्टताऽभूदिति भावः। तथा च बाल्ये यथा बुद्धिस्तथा लज्जाया अपि मान्द्यम्, एवं वचनस्याधिक्यमासीत् यौवनारम्भे तु तयोर्मान्द्यं वाग्व्यवसितिर्वाक्प्रयोगोऽहरत्। यथा च बुद्धिलज्जयोराधिक्यं वचनस्याल्पत्वमभूदिति भावः। राधायास्तनुरूपदेशे बाल्यरूपराज्यस्याधिकारे गते सति।

एवं यौवनारम्भे बाल्यस्य यत्किञ्चिन्मात्रसत्वात् क्षीणत्वं, यौवनस्याप्यारम्भमात्रत्वात् क्षीणत्वम्—एवं सति शिशुत्वं तारुण्योदयञ्च तनुतुलां क्षीणवस्तुतुलनां नयन्त्याः प्रापयन्त्यास्तस्या राधाया नेत्रान्तलहरी कटाक्षं सोष्यन्ती व्यथत इव। षूङ् प्रसवे धातुः। तथा च कटाक्षरूपापत्यप्रसवं करिष्यन्ती तत्पूर्व्वं व्यथां प्राप्नोतीव, यथार्भकप्रसवपूर्व्वं काचिद्व्यथां प्राप्नोति। यौवनस्यारम्भात् कटाक्षे चिकीर्षा, बाल्यस्य शेषात् मर्त्तुं न शक्नोतीति व्यथा जायत इति भावः। पूर्व्वं निरातङ्कं निःशङ्कं वक्षःस्थलमधुना जननयनतः शङ्कते, तथाऽस्याः स्मरः कन्दर्पः निःस्पन्दं निष्क्रियमर्थात् कन्दर्पक्रियारहितं मनः काष्टकमिव पश्यति।

---

(G) मुग्धालक्षणकारिकाऽनन्दचन्द्रिकायामुद्धृता प्रामाणिकतया—वयःसन्धेर्वर्णनमाहात्म्यं वैष्णवसाहित्यरत्नागारेऽखिल एव विलसति। एवञ्च दर्पणकृतस्तातपादानां श्लोके—'मध्यस्य प्रथिमानमेति जघन'मित्यादौ नवयौवनाया मुग्धाया उद्देशः। अत्र चोदाहरणे कविप्रौढोक्तिसम्भृतोत्प्रेक्षा कामपि चमत्कारतुलां पुष्णातीति सुधीभिर्वेद्यम्।

मानि मृदुर्यथा—

सख्या शिक्षितपाठितानि सुभृशं वाम्योपदेशाक्षरा-

ण्यद्यावश्यमभीष्टसङ्गसमये सम्पादनीयानि हि ।

इत्थं चेतसि निश्चयो व्यजनि यः कृष्णस्य सन्दर्शने

सद्योऽसौ सह चेतसाऽपहृतवांस्त्रस्तास्मि तस्या हृदः ॥ ९७

सुरतपराङ्मुखी यथा—

अयि प्राणेभ्योऽपि प्रणयवसतिस्त्वं प्रियसखी

ममैवेति प्रायो निरणयमहं पङ्कजमुखि ! ।

इदानीन्तु ज्ञातं व्रजपतिसुतस्यैव भवती

यतस्तत्प्रीत्यर्थं मदनभिमताय स्पृहयति ॥ ९८

अनभिमतमत्र सुरतम् ।

सत्रपा यथा—

आपृष्टा नमयति वक्त्रमीक्ष्यमाणा नेत्राब्जे मुकुलयति व्रजेशजेन ।

यान्तीषु प्रणयिसखीषु याति पश्चात्तानङ्गो नमयति कोमलं मनोऽस्याः ॥ ९९

**मध्या सुललितसुरता मध्यमसमुदीर्णयौवना नोच्चैः ।**

**व्रीड़ावतीषदीषद्प्रागल्भ्या निभृतवैदग्ध्या ॥ १०६ का**

तत्र सुललितसुरता यथा—'निर्यातान्त्वयी'त्यादि (२५ श्लोकः) ।

मध्यमसमुदीर्णयौवना यथा—

काचिद्यूथेश्वरी स्वगतमाह—सख्येति । असौ निश्चयश्चेतसा सह हरो मम हृदयादपहृतवान्, अतस्तस्याः सख्याः सकाशादहं त्रस्तास्मि, न जाने सा किं वदिष्यतीति शङ्काकुलाऽस्मीत्यर्थः ।

अयि पङ्कजमुखि ! प्राणेभ्योऽपि प्रेमपात्री त्वं ममैव प्रियसखीत्यहं निरणयं निर्णयं कृतवती । यतस्तस्य श्रीकृष्णस्य प्रीत्यर्थं ममानभिमतं सुरतं वाञ्छति ।

श्रीकृष्णेन पृष्टा सा वक्त्रं नमयति, तेनेक्ष्यमाणा सती नेत्राब्जे मुकुलयति मुद्रिते करोति, तस्मादस्याः कोमलं मनः कन्दर्पो न नमयति, कोमलत्वान्मनः कदाचित्त्रुट्यत्यपीति भयान्न नमयतीत्यर्थः ।

मध्याया लक्षणमाह—नोच्चैरपि तु ईषद्व्रीड़ावती ।

हे राधे ! त्वं कन्दर्पस्य भुवि स्थिता कल्पवल्ली भवसि । कल्पवल्लीसाधर्म्यमाह—तव

स्तनौ स्तबकविभ्रमौ विहसितं प्रसूनोद्गति-
र्वचो मधुरसो दृशावभिमुखस्थितौ खञ्जनौ ।
भ्रुवौ भ्रमरमण्डली करपदं नवाः पल्लवा-
स्त्वमेव सखि राधिके ! मदनकल्पवल्ली भुवि ॥ ७०

नोच्चैर्व्रीड़ावती यथा—

आकृष्टे रमणेन नीलवसने (29) निर्मोचितैरायतैः
केशौघैर्निरवाहयं सखि ! तनोः साम्मुख्यसङ्गोपनम् ।
जिह्रेमि स्मरणेऽपि तस्य यदियं कृष्णाष्टमी यामिनी-
वासीत् सुन्दरि ! सम्मुखार्द्धतिमिरा पश्चार्द्धचन्द्रप्रभा ॥ ७१

ईषत्प्रागल्भ्या यथा—

मम श्रोत्रे शब्दः सुरतमिति हे कृष्ण ! न गतः
सखीभ्यो याचित्वा यदि भवति दास्यामि भवते ।
इति स्वोक्तं प्रातः शुकयुवतिभिर्भाषितमसौ
कयेदं वः प्रोक्तं वच इति सखीष्वेव निदधे ॥ ७२

स्तनौ स्तबकविभ्रमौ पुष्पगुच्छविलासरूपौ । परस्परसम्मुखतया स्थितौ कल्पवल्लीनिष्ठ-खञ्जनौ तव दृशौ । तव भ्रुवौ कल्पवल्लीस्थितभ्रमरमण्डलौ । 'करपद'मिति प्राण्यङ्गत्वात् समाहारद्वन्द्वः ।

श्रीकृष्णेन मम नीलवस्त्र आकृष्टे सति तदाऽऽत्मानं नग्नां दृष्ट्वा निर्मोचितैः केशसमूहैः करणैः सम्मुखदेशस्य सङ्गोपनं निरवाहयं निर्वाहं कृतवती । तस्य सङ्गोपनस्य । यत् यस्मादियं मे तनुर्यामचतुष्टयात्मिका कृष्णाष्टमी यामिनीवासीत्—सा यथा पूर्वं प्रहरद्वयं व्याप्य चन्द्राभावेनार्द्धतिमिरा पश्चादर्द्धचन्द्रप्रभा तथैवाहमप्यभवम् ।

हे सुरतरङ्गिणि ! सुरताभिलाषिणे मह्यं सुरतं दास्यसि नवेति श्रीकृष्णेन पृष्टा काचित् यूथेश्वरी आह—'सुरत'मिति शब्दः मम श्रोत्रगतोऽपि न इति प्रथमवचनं, तदनन्तरं 'युष्मासु सुरतमस्ति मया श्रुत'मिति श्रीकृष्णस्य वचनं श्रुत्वा सा पुनराह—'मयि सम्भावना-ऽपि नास्ति, किन्तु सखीषु भवति चेत्ताभ्यो याचित्वा दिनान्तरे भवते दास्यामि ।' एतदर्द्ध-पद्यन्तदानीन्तन स्थिताभिः शुकाङ्गनाभिः कण्ठस्थं कृत्वा प्रातःकाले सखीनामग्रे पठितं, तच्छ्रुत्वाऽसौ यूथेश्वरी स्वोक्तमपि वचो वो युष्माकं मध्ये कयोक्तमित्युक्त्वा सखीष्वेव निदधे । तथा च स्वोक्तं वचस्तया सखीनां शिरसि निक्षिप्तम् ।

(29) 'व्रजराजजेन वसने' इति (ख) (ङ) पुस्तकयोः पाठः ।

निभृतवैदग्ध्या यथा—

परीरम्भं सेहे कथमपि मुखाम्भोजमधुनः
प्रपाणे ना नेति (३०) व्यधित करकम्पं किमपि या।
स्वयं लब्धोच्छ्वासं जघनभुवि वासः स्थगयितुं
स्वयं सा श्रीकृष्णं किमपि परिरेभे दृढ़तरम्॥ ७३

अथ प्रगल्भा—

**तरुणी मदनमदान्धा रतिरणकुशला दरव्रीड़ा।**
**भावोन्नता प्रगल्भा वैदग्ध्याक्रान्तनायका कथिता॥ १०७का**

तत्र तरुणी यथा—

दाहोत्तीर्णसुवर्णपूर्णकलसौ वक्षोजयोर्युग्मकं
स्मेरेन्दीवरदामतोरणततिः स्निग्धाः कटाक्षोर्मयः।
श्रोणिः शिल्पतरङ्गमङ्गलमयं सिंहासनं निर्मिता
त्वं कामोत्सवमण्डलेकरचना केनासि चन्द्रावलि!॥ ७४

मदनमदान्धा यथा—

श्लिष्टा श्लिष्यति गोकुलेन्द्रतनयेनाचुम्बिता चुम्बति
स्वच्छन्दं लिखिता नखैर्नखपदैराभूषयत्यङ्गकम्।

अथ कुञ्जगृहात् किञ्चिन्निवेश सखीषु निर्गतास्वेकाकिनीं यूथेश्वरीं प्राप्य श्रीकृष्णस्तया सह विलासारम्भं कृतवान्, तत्र च द्वारा तं विलासं दृष्ट्वा काचित् सखी स्वसखीं प्रत्याह। या श्रीकृष्णकृतपरीरम्भं कथमपि कृत्रिमदुःखव्यञ्जनेन सेहे अधरमधुपानेऽपि 'ना ने'ति वाक्यरोधककरकम्पञ्चकार, अधुना सा वाम्यं विहाय श्रीकृष्णस्य व्यापारं विनैव कामोन्मादेन स्वयमेव नीवीबन्धनाच्छ्लथमोचं परिधेयवस्त्रं जघनदेशे स्थगयितुं स्थिरीकर्त्तुं तन्निवेश स्वयमेव श्रीकृष्णं दृढ़तरं परिरेभे।

वैदग्ध्येनाक्रान्तो नायको यया सा प्रगल्भा कथिता।

श्रीकृष्ण आह—हे चन्द्रावलि! त्वं कन्दर्पस्योत्सवे केनापि मण्डलरचनानिर्म्मिताऽसि। तस्या रचनास्वरूपत्वमाह—दाहेति। आद्यसुत्सवे पूर्णकुम्भोऽपेक्षितो भवति तत्स्थानीयं तव स्तनयुग्मकम्, एवमीषद्विकसितेन्दीवरमालया बन्धनमालाततिरपेक्षिता भवति, तत्स्थानीयास्तव कटाक्षोर्मयः; एवमुत्सवे नानाविधशिल्पकौशलविशिष्टं सिंहासनमपेक्षितं भवति, तत्स्थानीयस्तव नितम्बदेशो भवति।

(३०) 'नो नेति' इति (ग) पुस्तके पाठः।

शिक्षिता तत एव पुष्पधनुषः संग्रामविद्यामियं
तस्य क्षोभकरी यदैष्ट तदियं विद्या गुरुक्षोभिका॥ ७५

रतिरणकुशला यथा—

अन्योन्यप्रणयप्रकाशपरयोरन्योन्यनिर्माल्ययोः
श्यामामाधवयोर्निरीक्ष्य वपुषोर्लक्ष्मीं रजन्याः क्षये।
सख्या एव मनोजसङ्गरजयश्रीसूचकाचार्य्यके
सामानाधिकरण्यमप्रतिहतं मेने सखीनां गणः॥ ७६

इयमेव दरव्रीड़ाभावोन्नताऽदिः।

अथ मध्याप्रगल्भयोर्धीरादिभेदकथनम्—

तत्र मध्याधीरा—

**प्रियं वैदग्ध्यवक्रोक्त्या मध्याधीरा वदेद्रुषा। १०८**

सा यथा—

'पद्मिन्यहं कुमुदिनी किल सैव सत्य'मित्यादि (३य किरणे ३८ श्लोकः)।

**धीराधीरा तु रुदितैः— १०९ का।**

यथा—

उत्खातं गुरुगौरवं कुलवतीनीतिश्च निःसारिता
कृष्ण! त्वत्प्रणयेन, तत् कथमिदं कापट्यमालम्बसे।
इत्यालप्य तदीयपीतवसनेनावृत्य वक्त्राम्बुजं
बाला केवलमश्रुमिश्रितमुखी चारुस्वरं रोदिति॥ ७७

श्रीकृष्णेन नखैर्लिखिता चिह्निता सती स्वयमपि नखचिह्नैः श्रीकृष्णाङ्गमाभूषयति यद्यस्मादियं ततः श्रीकृष्णादेव कन्दर्पयुद्धविद्यां शिक्षित्वा तस्य श्रीकृष्णस्य क्षोभकरी सती ऐष्ट ऐश्वर्यं कृतवती तस्मादस्या इयं विद्या गुरुक्षोभिका भवति।

अन्योन्यनिर्माल्ययोः परस्परसम्भुक्तयोरतः सम्भोगजन्यश्रमेण सुभयोः श्यामाकृष्णयोर्वपुषो नखचिह्नादिजन्यशोभां गवाक्षद्वारा निरीक्ष्य द्वयोर्मध्ये सख्या एव कन्दर्पयुद्धजयसम्पत्तिसूचकाचार्य्यत्वे सामानाधिकरण्यमवैयधिकरण्यमप्रतिहतं सखीगणो मेने। तथा च सख्या एवावैयधिकरण्ये जयहेतुर्न तु कृष्णस्य, तस्य तु युद्धे पराभवेऽपि त्वयैव जितमिति वैयधिकरण्येन जयसम्पत्तिरिति भावः।

अथ धीरत्वादिकं मानदशायामेव प्रकटीभवतीत्यतो मानिनीष्वेवोदाहर्त्तुं धीरादिभेदमाह—यथेति।

—अधीरा निष्ठुरोक्तिभिः। ११०का

यथा—

साक्षाद्वर्त्तिनि जीविते मम कथं शाठ्यन्त्वमालम्बसे ?
धिङ्मां त्वाञ्च, धिगावयोः सुजनतां, धिक् प्रेम, धिक तद्यशः।
किं ब्रूमः, पुरुषोत्तमोऽसि, जगतां भर्त्तासि, मय्येव ते
धूर्त्तत्वं, न हि तेन ते गुणगणः किञ्चित्तरां हीयते ॥ ९८

सत्यभामोक्तिः।

अथ प्रगल्भाधीराऽदिलक्षणम्—

यदि प्रगल्भा धीरा स्यादवहित्याऽत्रहेलया।
उदास्ते प्रकृतात् कोपादादरं दर्शयेद्बहिः ॥ १११ का

यथा—

किं पादान्तमुपैष, नास्मि कुपिता, नैवापराद्धो भवान्,
निर्हेतुर्न हि जायते कृतधियां कोपोऽपराधोऽथ वा।
योगग्रा एव हि भोग्यतां दधति, तन्नानौचितो कापि नौ,
तेनाद्यावधि गोकुलेन्द्रतनय ! स्वातन्त्र्यमिवास्तु ते (31) ॥ ७९

धीराधीरप्रगल्भा तु साकूतैर्वचनैर्मुहुः।
प्रियमुच्चैः खेदयति— ११२ का

अथैकस्मिन् दिवसे नारदो द्वारकामागत्यैकपारिजातपुष्पं श्रीकृष्णाय ददौ। तत् पुष्पं श्रीकृष्णेन रुक्मिण्यै दत्तं, नारदेन कौतुकार्थमेतद्वृत्तान्तं सत्यभामायै कथितम्। तच्छ्रुत्वा सत्यभामा मानिनी बभूव, तदनन्तरं तस्या मानभङ्गार्थं निकटे गत्वा श्रीकृष्ण आह—हे प्रिये, एकपुष्पस्य का कथा, पारिजातवृक्षमेवेन्द्रपुरादानीय तुभ्यं दास्य इति वदन्तं श्रीकृष्णं कुपिता सत्याह—साक्षादिति। सत्यभामायाः प्रेम्नोऽधीनः श्रीकृष्ण इति यशोऽपि धिक्।

उदास्ते—नाहं कोपवतीत्युदासीना भवति !

योग्या एव तत्र भोग्यतां दधति भोग्या भवन्तीत्यर्थः, तथा चायोग्यत्वान्मत्त्यागस्तवोचित इति भावः। स्वातन्त्र्यमिति—यत्र तवेच्छा तत्रैव गच्छ। सम्प्रत्यहन्तु देहादियुक्ता भविष्यामीति ध्वनिः।

---

(31) इत ऊर्द्ध 'यथा वा दूरादुत्थितमन्तिक'मित्यादि ८८तमः श्लोकोऽत्र उदाहृतो दृश्यते।

नैतावताऽपि समयेन तवोपलब्ध-
श्चेतो यदन्तरगतैव तदावृणोति ।
तन्नेऽपि चेतसि ममाविरतं यदास्से
पूर्णाऽस्मि तेन, किमनेन बहिःस्थितेन ॥ ८०

— पराऽवीच्यैव निन्दति । ११३ का

परा अधीरप्रगल्भा । अवीच्येव अदृष्ट्वेव । यथा—

'सख्यः ! कथं परिमलो विमलः प्रसर्पी'
'श्यामो निलीय चिरमस्ति' 'कुतः स वामः ? ।'
'तल्पान्तिके तव' 'निवारयताशु, यातु,
'धूर्त्तस्य तस्य वदनं न विलोकयामि' ॥ ८१

अथासां ज्येष्ठकनिष्ठत्वभावो यथा—

एकत्रैव कृतासनं स्थितवती राधा समं श्यामया,
श्यामेन प्रहितं समं सुमनसामासाद्य दामद्वयम् ।

एतावताऽपि समयेनैतावत्कालपर्य्यन्तं तव चेतो मया नोपलब्धं न प्राप्तं, यद्‌ यस्मात् सा मम वैरिणी तवान्तःकरणं गता सती त्वच्चेत आवृणोति, तथा च सर्व्वदैव त्वच्चेतो व्याप्य सा तिष्ठति। अतो मत्स्मरणं तव कथं भवेदिति ध्वनिः। किन्तु त्वद्विरहेण तप्तेऽपि मम चेतसि त्वं तादृग्तापमध्ये यत् सततमास्से तेन हेतुनाऽहं पूर्णाऽस्मि, ततस्त्वानया बहिःस्थित्या किम् ? तथा च सम्प्रति तवात्रागमनं व्यर्थमिति भावः। तेन च त्वत्स्मरणमहं सततं करोमि, त्वया तु स्वप्नेऽपि न स्मर्य्यत इत्युपालम्भो ध्वनिः। स्थितमिति भावसाधनं ज्ञेयम् ।

सखीयूथेश्वर्य्योरुक्तिप्रत्युक्ती आह—सख्य इति। सर्व्वत्र प्रसर्पी श्रेष्ठपरिमलः कुत आयाति ? सख्याह—श्रीकृष्णश्चिरं व्याप्य निलीयास्ति। यूथेश्वर्य्याह—स मम वामः प्रतिकूलः कुत्र ? यूयं निवारयत मन्निकटात् शीघ्रं गच्छतु ।

एकत्रैवासने श्यामया सह स्थितवती राधा श्रीकृष्णेन प्रहितं सममेकाकारं माल्यद्वयं

---

(H) "यत्र निषेधविशेषो दुर्लभत्वञ्च मृगाक्षीणाम् । तत्रैव नागराणां निर्भरमासज्यते हृदयम् ॥' इत्यभिजातोक्तेः श्रीकृष्णे आपातदारुणे तद्गतचित्तानां गोपीनां प्रणयद्भिः, राधाऽद्यासु रमणीशिरोमणिषु वाम्यकलुषास्वपि श्रीकृष्णस्य स्वतो भावप्रसादश्च। एवमपि गोपीषु श्रीकृष्णसङ्गमसुदाक्षन्नासु राधाचन्द्रावल्यादिष्वन्यासामसुभगानां तदानीं श्रीकृष्णविरहितानां प्रकटं परां कोटिमापद्यमानं सेवाऽहमहमिकाविलसनं प्रीत्युज्जृम्भित-

श्यामावचसि दातुमैच्छदुभयं, साऽक्षथ तद्वचसि

प्रादादेकमथावतोर्य्य कबरीपूजां (H) चकारात्मनः॥ ८२

अत्र श्यामायाः कनिष्ठत्वं व्यङ्ग्यं 'कबरी' 'पूजा' शब्दाभ्याम्।

**मुग्धा मध्या प्रगल्भा च मिश्रभावात् पुनर्नव। ११४का**

आदिमुग्धा मध्यमुग्धा अन्तिममुग्धा—एवमन्येऽपीति नव।

अत्र मुग्धात्रैविध्यं यथा—

मानग्राहणसाग्रहप्रियसखीशिक्षोपरोधादसौ

तूष्णीमेव चिरं निमील्य नयने नम्राननैव स्थिता।

रोषान्धस्य मदीयदूषणकथाविशेन (I) वाचालतां

श्रुत्वा बन्धुजनस्य कातरमुखी कर्णौ करेणारुणत्॥ ८३

नेत्रे किं विनिमीलयामि, दयितस्तत्रापि सन्दृश्यते

चेतः किं कठिनीकरोमि, सततन्तत्राप्यसौ खेलति।

प्राप्योभयमेव श्यामाया वचसि दातुमैच्छत् श्यामा तु माल्यद्वयमाकृष्य राधाया वचसि प्रादात् पश्चादेकं माल्यं राधायाः कण्ठादवतार्य्य तेन माल्येनात्मनः कबरीपूजां चकार तन्निर्माल्येन स्वस्य मस्तकस्थसंयतकेशपूजाकरणेन श्यामायाः कनिष्ठत्वमायातमिति ज्ञेयम्।

मिश्रभावात्—आदिशब्देन सह मिलनादादिमुग्धेत्यादि भवति। आदिमुग्धाऽत्यन्तमुग्धा, अन्तिममुग्धाऽल्पमुग्धेत्यर्थः।

श्रीकृष्णः सुवलं प्रत्याह। मानग्राहणाग्रहेण सह वर्त्तमाना या प्रियसखी तस्याः शिक्षोपरोधात्। रोषान्धस्य सखीजनस्य वाचालतां श्रुत्वाऽत्यन्तमौग्ध्यवशात् प्रत्युत्तरदानेऽसामर्थ्यात् केवलं कर्णमेव रुद्धं चकारेत्यर्थः।

---

मेव न कृत्रिमम्, यतोऽवरा एताः श्रीकृष्णदयितानां सेवातात्पर्य्येनैव सार्थकम्मन्यजीविता भवन्ति। चित्रालिलिताश्यामाऽद्या वङ्क्षा एव निष्णातास्ताः श्रीकृष्णलीलासूल्लिखन्ते। आसामवरत्वं प्रेमतारतम्येन वैष्णवागमे व्यवस्थितत्वेऽपि क्वचित् कविभिरितरैश्च वयोभावादिनाऽपि दृश्यते। लक्ष्यत्वेन लक्षितेषूदाहरणेष्वेवमेव लक्ष्यलक्षणसङ्गतिर्भक्तिप्राणभित्तिमवलम्ब्य सुधीभिर्विभाव्या।

(I) उपरिदर्शिते श्लोके राधाया समधिकलज्जावत्त्वमेवादिमुग्धास्वभावं तस्या विनिगमयति। तदव्यवहितोत्तरे च श्लोके कोपप्रवृत्तावप्यसहायत्वव्यपदेशः स्वकीयं मध्यामुग्धत्वम्, एवमन्तिमे च पद्ये श्रीकृष्णोपरि प्रणयरसोर्ज्जितत्वात् क्लेशलवकल्पितो

दोषान् किं गणयामि तस्य, गुणतां गच्छन्ति ते तत्क्षणा-
न्मानोऽन्येन यथा भवेद्यदि, तदा सख्यः स एवोच्यताम् ॥ ८४

रोमाञ्चैः सममुत्थितं प्रथमतो, मानेन सार्द्धं दृशो-
रश्रु च्यावितमाननेन च समं नीतं ममांहोऽप्यधः।
सख्यश्चाभरणैः समं मुखरितास्तूष्णीकतां प्रापिता (I)
मामालोक्य चिरार्जितोऽपि सुदृशा कोपस्तया विस्मृतः॥ ८५

तत्रापि—निमीलितनेत्रेऽपि दयितः सन्दृश्यते। ते दोषास्तत्क्षणे दोषत्वेन दर्शनक्षणे गुणतां गच्छन्ति। हे सख्यः भवतीभिरुपदिष्टान्मार्गत्रयादन्येन यथा यदि मानः सम्भवेत्तदा स एव पन्था उच्यताम्।

सखीभिर्यद्यच्छिक्षितं मम दर्शने तत् सर्वं विपरीतमभूदिति श्रीकृष्ण आह। प्रथमतो मामालोक्य सुदृशा तयाऽऽसनादुत्थितं, 'रोमाञ्चैः सममुत्थित'मित्यनेन रोमाञ्चोऽपि जातः, मानस्य का कथेति भावः। च्यावितं भूमौ पातितं, 'मानेन सार्द्ध'मिति मानोऽप्यधः पातित इत्यर्थः। अंहो ममापराधोऽपि सुखेन सहाधो नीतं लज्जया मुखमपि नम्रीकृत-मिति ज्ञेयम्। अस्माकं निकटे माऽऽगच्छ, इतो दूरीभवेत्यादि वाक्यैर्मुखरिताः सख्योऽप्यत्या-ग्रहेण तया तूष्णीकतां प्रापिताः। 'आभरणैः सम'मिति हस्तादिचालनेन निवारण-समये तासां कङ्कणाद्यलङ्कारा अपि मुखरिता बभूवुः—तासां तूष्णीकत्वे ते तूष्णीं बभूवुरित्यर्थः।

त्रिविधमुग्धा एव मानग्रहणेऽसामर्थ्यान्मानाक्षमा इति पूर्वमुक्तम्।

---

ऽप्यभिनन्दनभरो राधाया अन्तिममुग्धाप्रकृतिमनुमापयति। एषु लक्ष्येष्वेवंविधेष्वन्येषु च पद्येषु क्वचित् प्रश्नोत्तरकौतुककृतो लेशः क्वचिदुचितभाववर्णनानिर्वन्धो वा सुतरा-मास्वाद्यः। आसां भावतादात्म्यनिर्द्धारणे कृष्णप्रेमगरिम्णैव वरीवर्त्ति। आविष्कृतञ्च तदानन्दवृन्दावने कैशोरादिलीलाप्रस्तावे कयाचिदनतिप्रगल्भया गोपललनया—

मां धवो यदि निहन्ति हन्यतां बान्धवो यदि जहाति हीयताम्।
साधवो यदि हसन्ति हस्यतां माधवः स्वयमुरीकृतो मया॥

अग्रिमदशास्थितप्रगल्भादृष्टान्ते 'दूरादुत्थित''मित्यादौ यच्छन्नकोपाकृतेश्चन्द्रावल्याः सुचारु भावाकारवर्णनं तदमरुशतकीयस्य 'एकत्रास्यनसंस्थितिः परिहृते'त्यादिकस्य 'चतुरया कोपः कृतार्थीकृत' इत्यन्तस्याकरग्रन्थेषूद्धृतस्य पद्यस्यापाततो विभिन्नकक्षा-गतमपि स्वरूपतः समं समञ्जसञ्च। वस्तुतश्छन्नकोपाकृतेः पृथक् पृथक् विकाशः। गूढ़मानेका. नायिका, इतरा तु अतिगूढ़माना, यथोक्तमेवेह मूले।

अथ मध्यातिविध्यम्—

पादान्तंगमिना चिरानुनयिना नीता प्रसादं शनै-
राहार्यस्खलितं (33) मया निगदता भूयः कृते साहसे।
न्यञ्चत्कन्धरमुत्स्मितं मयि मनाग्व्यापारयन्ती दृशं
सीमन्ताग्रनिवेशिताञ्जलिपुटं राधा व्यधाद्वन्दनम्॥ ८६

आलि! त्वं वनमालिना निगदिता, प्राणेश्वरि! प्रीयतां,
दैवादेष ममानयः समजनि, वन्तव्य एष त्वया।
इत्याकर्ण्य सखीमुखात् प्रियवचो मूर्द्धानमाधुन्वती
सा स्मित्वेव शिखामणिप्रणयिनं चक्रे प्रणामाञ्जलिम्॥ ८७

दूराद्द्राघयति स्तनपटं लोलाङ्गुलीमुद्रया
प्रत्यासेदुषि मय्यसा करयुगेनापादयत्यञ्जलिम्।
आपृष्टाऽननपद्ममानयति स्पृष्टा समुत्कम्पते
दाक्षिण्यं किमु वामताऽथ सुतनोर्नाविदि किञ्चिन्मया॥ ८८

अथ प्रगल्भातिविध्यम्—

दूरादुत्थितमन्तिकं मयि गते पीठं करेणार्पितं
स्मित्वा भाषिणि भाषितं मृदुसुधानिस्यन्दि मन्दं कियत्।

श्रीकृष्णः सखायं प्रत्याह। अद्य कुञ्जगृहे उपविष्टां राधां सम्बोध्य 'हे प्रिये चन्द्रानने!' इति वक्तव्ये दैवान्मन्मुखात् 'चन्द्रावली'ति वाक्यं निर्गतं, तच्छ्रुत्वा सा मानिनी बभूव। ततो मया नानायत्नेन सा प्रसादं नीता, पश्चात् कौतुकवशादाहार्य्येण स्वेच्छयैव पूर्वोक्तं 'हे चन्द्रावली'ति स्खलितं निगदता मया भूयस्तस्या मानोत्पत्त्यर्थं साहसे कृते सा मच्चातुर्य्यं बुद्ध्वा 'हे धूर्त्तशिरोमणे! तुभ्यं नम' इत्युक्त्वा सीमन्ताग्रनिवेशिताञ्जलिपुटं यथा स्यात्तथा वन्दनं व्यधात्।

काचित् सखी स्वयूथेश्वरीमाह—हे आलि! श्रीकृष्णेन त्वं निगदिता। श्रीकृष्णस्योक्तिमेवाह—दैवादेव ममापराधः समजनि। मस्तकस्थशिखामणिसंयुक्तं 'धूर्त्ताय तस्मै नम' इति प्रणामबोधकाञ्जलिं चक्रे।

श्रीकृष्ण आह—हे सखे! सा मां दूरादोक्ष्य लीलायुक्ता याऽङ्गुलीमुद्रा तयाऽवगुण्ठनं दीर्घीकरोति। मयि प्रत्यासेदुषि निकटवर्त्तिनि सति आदरबोधकं करयुगेनाञ्जलिं करोति। मया हस्तेन स्पृष्टा सा ···।

(33) 'आहार्य्य स्खलित'मिति पाठः (क) (ङ) पुस्तकयोः।

आरूढे ऽर्द्धमथासनं प्रकटितं सौभाग्यमाश्लिष्यति
प्रत्याश्लिष्टमवामतैव सुदृशो वामत्वमख्यापयत् ॥ ८९

अतिगूढ़मानत्वादियं प्रगल्भाऽग्रिमदशास्थितेव ।

नो सङ्गीतकमालपन्ति, न शुकीरध्यापयन्त्यालयो,
नानन्दस्तव मन्दिरेऽद्य किमिति स्वं दोषमाच्छादयन् ।
यद्गूचेऽहमिदन्तयापि जगदे भुग्नारुणापाङ्गया
'तुभ्यं धूर्त्तधिये नमोऽस्तु भगवन् मह्यञ्च वीतह्रिये' ॥ ९०

अन्तिमप्रगल्भा यथा(34)—

'श्लिष्टा श्लिष्यति गोकुलेन्द्रतनय'मित्यादि (७५ श्लोके) ।

अथासामवस्थाभेदेनाष्टविधत्वमुच्यते । लक्षणेनैव संज्ञा गम्या ।

तत्र विरहोत्कण्ठिताऽदिक्रमः —

**गाढ़ानुरागा प्रागेव लब्धसंज्ञाऽपि हेतुके ।**
**विरहे वर्द्धितोत्कण्ठा विरहोत्कण्ठिता मता ॥ ११५का**

यथा—अन्तः क्लान्तति मर्म्म मुर्मरयति, प्राणान् पिनष्टीव मे,
दौरात्म्याद्यदनादरोऽद्य विहितः कृष्णे मया मूढ़या ।

दूरादेव मां दृष्ट्वा तयाऽऽसनादुत्थितं, पश्चान्मयि निकटं गते सति । मयि स्मित्वा भाषिणि सति तया मन्दं यथा स्यात्तथा किञ्चिद्भाषितम् । कथम्भूतम् ? सुधायाः स्रुदुच्चरणमिव । तस्या अर्द्धासनं मयि आरूढ़े सत्यात्मनः सौभाग्यं तया प्रकटितम् । मयि तामाश्लिष्यति सति तयाऽपि प्रत्याश्लिष्टं, सा प्रत्यालिङ्गनं कृतवतीत्यर्थः । सुदृशश्चन्द्रा-वल्या अवामताऽनुकूलतैव ।

श्रीकृष्णः सुबलमाह—हे सखे ! स्वेन मयैव कृतं यद्दोषं तमाच्छादयितुं तां मानिनीं प्रति 'तव मन्दिरेऽद्यानन्दः कथं न भवतो'त्यहं यदूचे तदा क्रोधेनारुणापाङ्गया तयाऽपीदं वक्ष्यमाणं जगदे । त्वदुक्तिश्रवणमेव निर्ल्लज्जत्वचिह्नमिति ज्ञेयम् ।

अथेति—आसां प्रेयसीनामुत्कण्ठिताद्यवस्थाभेदेनाष्टविधत्वमालङ्कारिकैरुच्यते । तासा-मवस्थानां लक्षणकरणेनैव नामान्यपि ज्ञेयानि ।

प्राक् पूर्व गाढ़ः पूर्वानुरागो यस्याः सा पश्चाल्लब्धसंज्ञाऽपि प्रथमतः कोपाधीनमान-जन्यविरहे पश्चात् कोपे प्रशान्ते च सति तेन सह मिलनेन वर्द्धिता उत्कण्ठा यस्याः सा विरहोत्कण्ठिता ज्ञेया ।

(34) 'अन्तिमगल्भा यथे'त्याद्यंशः (ख) पुस्तकवर्ज्जमन्येषु पुस्तकेषु न दृश्यते' ।

तं वा सङ्गमयस्व सुन्दरि ! मया मज्जीवितन्तेन वा,
ह्याभ्यां नापरमस्ति किञ्चिदपि मे सन्तापनिर्वापकम् ॥ ८१

**सङ्केतस्थं प्रियं ज्ञात्वा सह सख्यैकिकाऽथ वा।**
**गतभीर्याऽभिसरति सा भवेदभिसारिका (J) १६ का**

यथा—श्याम त्वामभिसर्तुमन्धतमसे पादार्पणप्रक्रमे
स्रस्तो नीलनिचोलकस्तनुरुचा निर्द्धुतमन्धन्तमः।
विश्वन्तावदिलावृतायितमभूद्गौरेऽमिलद्गौरिमा
तेनालक्षितमाजगाम सुतनुः, प्रेम्नस्तवेदं यशः ॥ ८२

**अन्यासक्तेन कान्तेन खण्डिताशा तु या निशि।**
**प्रातस्तद्भोगचिह्नानि वीक्ष्यार्द्दिग्ना तु खण्डिता ॥ ११७ का**

यथा—'पद्मिन्यहं कुमुदिनी किल सैवे'त्यादि (३य किरणे ३८ श्लोकः)।

---

मयाऽद्य कृष्णे योऽनादरो विहितः स ममान्तःकरणं छिनत्ति। सुमेरुस्तुषाग्निः, मम्म ताडशाग्निवत् करोति। हे सुन्दरि! मया सह श्रीकृष्णं सङ्गमयस्व अथवा तेन मज्जीवितं सङ्गमयस्व।

सख्या सह किंवा एकाकिन्यभिसरति।

हे श्याम! सुतनुर्म्मम सखी त्वामभिसर्त्तुं गाढ़ान्धकारराती पादार्पणारम्भे त्वराऽतिशयादङ्गान्नीलवस्त्रं स्रस्तं, वस्त्ररूपावरणं गतं तनुकान्त्याऽन्धकारोऽपि गतः, अतोऽभिसारे महान् विघ्नो बभूव। पश्चाद्भाग्येन तस्य देहस्य पीतकान्त्या विश्वमेवेलावृतायितं पीतवर्णमभूत्—सुमेरोर्निकटवर्त्तिभूमेरिलावृतसंज्ञा, सा भूमिः सुमेरोः पीतकान्त्या सदा पीतवर्णावति। गौरवर्णवृन्दावनप्रदेशे तस्या देहस्य गौरताऽमिलत्, तेन हेतुनाऽलक्षितं यथा स्यात्तथा तव निकटमाजगाम। त्वद्विषयकप्रेम्न एवेदं यशः।

अन्यनायकाऽऽसक्तेन अतएव निशि तन्निकटागमनेऽसमर्थेन श्रीकृष्णेन खण्डिता सम्भोगाशा यस्या एवम्भूता या प्रातःकाले अपराधमार्जनार्थमागतस्य श्रीकृष्णस्य सम्भोगचिह्नानि वीक्ष्य कोपेन मानिनी बभूव (J), सा खण्डितोच्यते।

---

(J) विरहोत्कण्ठितादाद्यष्टविधनायिकाभेदलक्षणं क्वचिन्मूलतो भरतकृतादर्वाचीनाद्दशरूपक-दर्पणादि-व्याख्याताद्वा मनाङ् भिन्नम्—प्रेमवैचित्त्र्यघटनायां विभिन्ना दृष्टा वैष्णवरसशास्त्रकारैः स्वसम्प्रदायमतमनुवर्त्तमानैराकरादितो विभिन्नसंज्ञाभिर्विहिताः, अप्राकृताश्रितरसत्वेन च तथा संस्थाप्रस्थानं तेषां नासङ्गतमिति च ज्ञेयम्। एवमभिसारिकालक्षणे याऽभिसरति सैव केवलमभिसारिका न पुनः प्राचीनमतमनुसृत्य 'अभिसारयते कान्तं

**दूतीभिः प्रार्थ्यमानोऽपि गन्तास्मीत्युक्तवानपि ।**
**दैवान्नायाति यत्कान्तो विप्रलब्धेति सा स्मृता ॥ ११८ का**

यथा— 'सुमुखि ! स किमवादीदेष यामीति, तस्मात्
कथमजनि विलम्बो' 'मास्म भूः सन्दिहाना' ।
'कथय किमु भवत्या यास्यते तत्र भूयः,
किमथ मदसुभिर्वा, तुल्यमेतद्द्वयं मे ॥

**(35) कोपेनान्तरिता या तु कलहान्तरिता तु सा । ११९का**

यथा— अस्माभिः सह चाटुकृत्र गणितः पादानतो माधवः,
कोपोऽयं बहु मानितो, न च वयं, प्राणेश्वरो नाप्यसौ ।
चन्द्रश्चन्दनमारुतः पिकरुतं सम्भूय सर्वं यदा
त्वामुद्वेजयिता तदेष सकलं कोपः समाधास्यते ॥ ९४

**वासगेहे वेशभूषाताम्बूलवसनादिभिः ।**
**सुसज्जाऽपेक्षते कान्तं सा स्याद्वासकसज्जिका ॥ १२० का**

एष श्रीकृष्णः यामीति किमवादीत् । यद्यवादीत् तदा विलम्बः कथमजनि । हे सखि ! तस्यागमने सन्दिग्धाऽपि त्वं मा भूः । स तु नागत एव, अधुना किं कर्त्तव्यं कथय । तदानयनार्थं भवता यास्यते किं वा मत्प्राणैर्वा—त्वं मे प्राणास्चैतद्द्वयं प्रेमास्पदत्वेन मम तुल्यमेव । तथा च विरहज्वालया स्थातुमसमर्थाः प्राणा यदि मद्देहात् गतास्तदा मद्विच्छेदेन तव महद्दुःखं भविष्यति, अतस्त्वद्गमनमेवोचितमिति ध्वनिः (J)।

कोपेनान्तरिता रचिता (J)।

मानभङ्गार्थं तन्मन्दिरे गत्वा प्रणयनत्यादिपरं श्रीकृष्णं कोपावेशेन स्वगृहान्निष्काश्य कोपे गते सति पश्चात्तापवती सा सखीमाह (36)। 'हे सखि ! श्रीकृष्णः क्व गतः शीघ्रं तमानये'त्युक्तवतीं वृषेभ्वरीं प्रति सख्याह—अस्माभिरिति । मारुतो वसन्तानिलः एतत् सर्वं सम्भूय मिलित्वा यदा त्वां विरहिणीमुद्वेजयिता उद्दीपनत्वेन खेदयिष्यति तदैष कोप एव सकलं समाधानं करिष्यति, किमस्माभिर्निकृष्टाभिरिति सखीनामाक्षेपो ध्वनिः ।

---

या सा च । मानिनो बभूवेत्यादि—प्राकृते रसो नास्तीत्येवं यत्र लट्प्रयोगः सोऽप्यतीतार्थे

---

(35) अत्र 'पादानतं प्रियमपास्य पश्चात्तापविसंष्ठुला । कोपेनान्तरिता या तु कलहान्तरिता तु सा ॥' इति (ख) (क) पुस्तकयोः पाठः ।

(36) 'सखसखीमाहे'ति पाठः केवलं, मुद्रितपुस्तक एवोपलभ्यते ।

यथा— ताम्बूलमाल्यवसनाभरणानुलेपा:
सम्पादितास्तव कृते स्वयमेतया ये।
ते ह्येव तान्त्वयि विलम्बिनि तत्क्षणेन
सन्तापयन्ति वितुदन्ति विमोहयन्ति ॥ ९५

**कार्य्यान्तरेण प्रावासं गते सति मनोऽधिपे।**
**तन्मनस्कैव या तिष्ठेत् सा स्यात् प्रोषितभर्त्तृका (K)॥ १२१का**

यथा— न वाणी न स्पन्दो न च नयनपङ्केजलहरी
न वीणादेर्गानश्रुतिरपि न चालीजनकथा।
कुरून् याते कृष्णे पुरि पुरि महिष्य: समभवन्
पटे चित्रोत्कीर्णा इव विरहवैधुर्य्यतनव: ॥ ९६

**निरन्तरं प्रेमवशात् पार्श्ववर्त्तीव यत्प्रिय:**
**वाग्वश: प्राय आभाति सा स्यात् स्वाधीनभर्त्तृका॥(K)१२२का॰**

पाण्डवदर्शनार्थं कृष्णे कुरुदेशान् गते सति महिषीणां नयनकमलस्य लहरी कटाक्षादिकं नास्तीति। एवं वीणादेर्गानश्रवणमपि नास्ति, किन्तु ता महिष्य: पटे चित्रपुत्तलीवज्जड़ा: समभवन्। कथम्भूता:? विरहस्य वैधुर्य्येण प्रातिकूल्येन कृशा:।

---

नित्यलीलाप्रकटनर्मविशेषेण वा कृत इति बोध्यम्। विरहज्वालया स्थातुमसमर्था इत्यादि—यदा भवद्गमनकृतविलम्ब एव न सहनीयो मया यथा विप्रलब्धाऽष्टान्तेऽवालाकोद्धृते 'याऽत: परमपि जीवेज्जीवितनाथो भवेत्तस्या:' इति पद्याद्वै। रहिता—न तु रहितैव तदानीन्तनक्षणे, अपि तु रहितकल्पेवेति, पश्चात्तापवत्वमेव मुख्यं लिङ्गं न कोपापसरणमिति दिक्।

(K) अत्रार्वाचीने वैष्णवनये अप्राकृतरतिमवलम्ब्य यो रसविकाशप्रकार: स आदिमाकरे भरताये इतोऽन्यथा कल्पितात् कारणनिवहाज्जातोऽपि तद्दर्शितमार्गानुयायीति न तत्त्वतो वैलक्षण्यम्। तथा च मुनिदर्शिताष्टनायिकासंज्ञाप्रसङ्गावतरणिकायामर्वाचीनवैष्णवनयसंवादमावहन्निव कारिकाप्रकार:—'यदप्यस्ति नृपाणान्तु कामतन्त्रमनेकधा। प्रच्छन्ने कामिनं वक्तं तद्दै रतिकरं भवेत्॥ यद्वामाभिनिवेशित्वं यतश्चैव निवार्य्यते। दुर्लभत्वं च यन्नार्या: सा कामस्य रति: परा॥' (इति निर्णयसागरमुद्रिते २२शाध्याये)। एवमपि तत्राष्टनायिकालक्षणे दृश्यरूपक दर्पणादिकृतामिव न कदापि याद्दच्छिक: वैवाहिकलक्षणसंश्लिष्ट'पति'शब्दप्रयोग: परिलक्ष्यते, अपि तु सर्वत्रैव 'मनोऽधिप'-'प्रिया'दिपदानां

यथा— इयं मम सखी प्रिया, रचय वेशमस्याः स्वयं,
प्रसादय सखीमिमां मयि वृथैव जातक्रुधम् ।
इति प्रणयकौतुकादिव नियोजितो राधया
चकार रसिकाग्रणीरथ तथा तथा माधवः ॥ ९७

अथाऽसामलङ्काराः—

**यौवने सत्वजास्तासामष्टाविंशतिसंख्यकाः ।**
**अलङ्कारास्तत्र भाव-हाव-हेलास्त्रयोऽङ्गजाः ॥**
**शोभा कान्तिश्च दीप्तिश्च माधुर्य्यञ्च प्रगल्भता ।**
**औदार्य्यं धैर्य्यमित्येते सप्तैव स्युरयत्नजाः ॥**
**लीला विलासो विच्छित्तिर्विव्वोकः किलकिञ्चितम् ।**
**मोट्टायितं कुट्टमितं विभ्रमो ललितं मदः ॥**
**विकृतं तपनं मौग्ध्यं विक्षेपश्च कुतूहलम् ।**
**हसितं चकितं केलिरनुभावादिमे पृथक् (L) ॥ १२३ का**

श्रीराधिका श्रीकृष्णमाह—इयं सखी ललिता ममात्यन्तप्रिया। किन्तु त्वया कृतं यदस्या विडम्बनं तन्मत्प्रेरितं ज्ञात्वा मयि वृथैव जातक्रुधमिमां प्रसादय। एवं कामोन्मत्तेन त्वया खण्डितमस्या वेशं पुनस्त्वमेव रचयेति राधया नियोजितो रसिकाग्रणीः श्रीकृष्णस्तथा तथा चकार।

सत्वजा इति—कृष्णसम्बन्धिचेष्टोत्थभावैराक्रान्तं चित्तं सत्त्वं तस्माज्जाताः (L)। अङ्गजा इति—नेत्रान्तभ्रूग्रीवाभङ्ग्यादीनां तत्सूचकत्वात्तेभ्य एवाङ्गेभ्यो जाताः प्रतीता इत्यर्थः, न तु वस्तुतोऽङ्गजाः, 'सत्वजा' इत्युक्तत्वात्। अयत्नजा इति—शोभाद्यर्थं वेशादिप्रयत्नाभावेऽपि शोभादयः स्युरित्यर्थः। इमे भावादयोऽनुभावाद्भिन्ना भवन्ति। तेऽनुभावा रसादिव्यञ्जका गौणा एव, अलङ्कारास्तु रसाभिव्यञ्जकत्वेऽपि स्वतःसमर्थाः—रसोत्पत्तौ तेषां प्राधान्येन भानमस्तीत्यर्थः।

---

व्यवहारः। संज्ञायां यो भर्त्तृशब्दः स तु इत्यमुद्दिष्टो जीवगोस्वामिप्रभृतिभिः—'अत्र भर्त्तृशब्द-प्रयोगो दाम्पत्यस्यैवाङ्गिनि रसे रसशास्त्रकर्त्तृभिः स्वीकृतत्वात् युक्त एव।' 'सर्वत्रैवालङ्कारशास्त्रे प्राचीनेऽर्वाचीने वा पत्यपपत्योरेव भर्त्तृशब्दप्रयोगो दृष्ट' इत्यानन्दचन्द्रिकाकृतः। एवमपि स्वाधीनभर्त्तृकालक्षणेऽत्र दशरूपकादिकृतलक्षणात् यदाद्वैलक्षण्यविवक्षितं तदेवाव-

यद्यप्येषु केचिदनुभावसदृशाः सन्ति, तथापि पृथक्। ते तु रसादिव्यञ्जकाः, एते तु व्यञ्जकत्वेऽपि स्वतःसमर्थाः—तेनालङ्कारा एव। तत्रैषां लक्षणम्—

भावो यथा—

'निर्विकारात्मके चित्ते भावः प्रथमविक्रिया।'

आलम्बनोद्दीपनोत्थभावादपि स च द्विधा॥ १२४ का

तत्रालम्बनोत्थो यथा—

आधूलिकेलि यतशः सह येन येयं
प्रागल्भ्यचारु सुचिरं कलहायते स्म।
तं श्यामसुन्दरमपूर्वमिवेक्षमाणा
सा गण्डयोः पुलकमण्डलिकां तनोति॥ ९८

उद्दीपनोत्थो यथा—

एतानि तानि नलिनीविपिनानि वाप्या-
मेते त एव मधुपा नलिनाननेषु।
आबाल्यमेव कलितानि किमन्न राधा
नैवावकर्षति विलोचनमेषु लग्नम्॥ ९९

येयं राधिका बाल्ये येन श्रीकृष्णेन सह धूलिकेलिकालमभिव्याप्य यतशः परस्परं हस्ताभ्यां ताड़नेन यत् प्रागल्भ्यं तेन चारु यथा स्यात्तथा कलहायते स्म सा राधिकाऽधुना वयःसन्धौ श्रीकृष्णमपूर्वमिवेक्षमाणा सती गण्डयोः पुलकरूपभूषणं तनोतीति पौर्णमासीवाक्यमिदं ज्ञेयम्।

वाप्यां जलाशये एतानि प्रत्यक्षविषयीभूतानि कमलिनीविपिनानि बाल्यमभिव्याप्य यानि श्रीराधया कलितानि दृष्टानि तान्येव, एवं कमलिन्याः कमलरूपाननेषु विद्यमाना एते मधुपा बाल्ये दृष्टास्त एव। अद्य वयःसन्धौ किं न आकर्षतीति चित्रम्। देहस्थानीया कमलिनी, मुखस्थानीयं कमलं, कृष्णस्थानीयो भ्रमरः, तस्मादेव उद्दीपका भवन्ति।

---

तत्रास्य श्रीराधातत्त्वोद्दीपनपरतन्त्रस्यानुकूल्यविजृम्भितमधिकतरोर्जितरमणीयभावसम्पत्ति-सम्बद्धत्वेति कोविदानामूहः। लक्ष्येष्वेष्वनेकतैषामन्योन्यसाङ्कर्यमपि लक्ष्यते।

(L) उज्ज्वलनीलमणावनुभावप्रकरणे एषां मध्ये प्राग् दर्शितानां विंशतिसंख्यकानां सन्निवेशः। भरतमतमनुसृत्य तत्रैषामङ्गजास्त्रयः, अयत्नजाः सप्त, लीलाद्या मतं विहाय विकृतान्ता विहृतान्ता वा दश स्वभावजा लक्षिताः। कौस्तुभे तु दर्पणकृतां कारिका-मनुसृत्य व्याकृता एते। तत्राद्यकचादयमत्तभंक्ता दश पुरुषाणामपि भवन्ति यथोल्लिखिते-

हृन्नेत्रादिविकारैस्तु व्यक्तोऽसौ याति हावताम्। १२५ का

असौ भावः।—

लोलेन किञ्चिदलसेन च किञ्चिदक्ष्णा
सा यद्बिभेद हृदयं व्रजराजसूनोः।
तस्यास्तदेव हृदयेन समं तदन्त-
स्तेनाध्वनेव नु विवेश नवोऽनुरागः (L) १००

हेला स एवाभिलक्ष्यविकारः परिकीर्त्त्यते। १२६ का

स एव हाव एव।

एकमप्यतिरहोऽपि तमेकाऽप्युत्सुकाऽपि सखि! नाहमपश्यम्।
कोमलं कुवलयादपि हन्यात् साहसेन कतमेन कटाक्षः॥ (L) १०१

असौ भाव एव वयस आधिक्ये कमप्युत्कर्षं प्राप्य हावो भवेत्, पूर्वापेक्षयाऽत्र नेत्रादिविकाराधिक्यं बोध्यम्। एवमुत्तरोत्तरहेलादावप्येवमेव ज्ञेयम्।

सा राधिका किञ्चिच्चलेन किञ्चिदलसेन मन्थरेण चाक्ष्णा श्रीकृष्णस्य यद्धृदयं बिभेद, तेन विद्धहृदयस्य छिद्ररूपमार्गेण तस्या राधाया हृदयेन सह नवानुरागस्तस्य श्रीकृष्णस्यान्तःकरणं विवेश। तथा च श्रीकृष्णो राधिकाया नेत्रभङ्गीं वीक्ष्य तस्या हृदयेन सह (37) स्वविषयकानुरागो जात इत्यन्तःकरणे निश्चिकायेति भावः।

ललिता राधिकामाह—हे सखि! अद्य सुवलमुखान्मया श्रुतं, कुत्राप्येकान्ते त्वया दृष्टः श्रीकृष्णो विक्षिप्त इव बभूव—सम्प्रति भोजनं सखिभिः सह खेलनं गोचारणादि तत् सर्वं किमपि तस्मै न रोचते, अत एतादृशोऽसमञ्जसस्त्वया कथं कृतः। इत्युक्तवतीं ललितां प्रति श्रीराधिकाऽह—अत्यन्तरहस्यस्थले तमेकमपि अहमप्येका, एवं तद्दर्शने उत्सुकाऽपि तस्य क्लेशो भविष्यतीति बुद्ध्वा नापश्यं किन्तु मद्दर्शनममानयन्मत्कटाक्ष एवानर्थकारी तं कोमलतनुं हन्यात्, मया किं कर्त्तव्यं त्वयैव विचार्यतामिति भावः।

---

माकन्दादौ। यौवननिमित्तका एते इति न काऽपि विप्रतिपत्तिः। 'चित्तस्याविकृतिः सत्त्वं विकृतेः कारणे सती'ति दर्शितात् कारणात् सत्त्वजा अपि। मदादीनां विकृतीनानां केषाञ्चिदष्टानां न सर्वत्रोल्लेखः, अतएवात्र परिसङ्ख्यानवैशिष्ट्यम्। 'लोलेने'त्यादि श्लोके नैषधीयपद्यस्य 'नाकलोकभिषजोः सुषमा ये'त्यादौ दर्शितस्य 'तद्द्वारसंक्रमित-वेदनकविद्य' इत्यन्तस्यानुरूप्यं नातिनिगूढ़म्। कोमलमित्यादि—कटाक्षलीन्तविलासस्या-पाततो निष्ठुरत्वेनाभिवर्णनं रसिकग्रन्थेषु बहुलं परिलक्ष्यते।

---

(37) 'तस्या हृदयेन स्वविषयके'त्यादि पाठः (क) पुस्तके, 'तस्य हृदयेन स्वविषयये'त्यादि पाठः (क) (ख) पुस्तकयोः।

**हेलैव शोभा लावण्यरूपवेशादिभिर्युता (M) ॥ १२७ का**

वेशो नवः प्रतिनवश्च(M)वयो, नवीनं
लावण्यकं, मधुरिमाऽपि नवीन एव ।
कृष्णानुरागसरसीसततावगाहे
तस्या बभूवुरतिधौतनिराविलानि ॥ १०२

**शोभैव मन्मथोन्माथात् कान्तिरुद्दीपितद्युतिः ॥ १२८ का**

यथा—को वेद रे सखि ! लगिष्यति दृष्ट एव
को वेद जीवमपनेष्यति लग्न एव ।
प्रेङ्खोलिभिः परिमलैः सहसाऽन्धयाऽसौ
श्यामो रसः (M) परिचितो वद कोऽपराधः ॥ १०३

**कान्तिरेवातिविस्तीर्णा दीप्तिरित्युच्यते बुधैः ॥ १२९ ।**

यथा—धौताम्बुभिः प्रसव एव कटाक्षभूमि-
रुच्छ्वास एव कुचरत्नखनिः प्रतप्ता ।
बालं वयस्तदनुरागभरच्चमत्व-
मध्याप्य केन गुणिनेवमकारि राधे ! ॥ १०४

नवीनो वेशः, प्रतिक्षणं नवं वयः (38) तस्या राधायाः श्रीकृष्णविषयकानुरागरूप-सरस्यां सततावगाहे सति वेशवयोलावण्यानि अतिधौतान्युज्ज्वलान्येवं निराविलान्यल्प-त्वादिदोषरहितानि बभूवुरित्यर्थः ।

मन्मथस्योद्रेकादुद्दीपिता द्युतिर्यस्याः सा शोभैव कान्तिरुच्यते । 'श्रीकृष्णाख्यया-ऽसन्निविधमनादृत्य कथं दृष्टः ? यदि दृष्टस्तदा तत्फलमपि भुङ्क्ष्व' इत्युक्तवतीं सखीं प्रत्याह—को वेदेति । प्रेङ्खोलिभिः सर्वत्र प्रसरद्भिस्तस्य परिमलैः श्यामस्वरूपो रसो मया दृष्टः ।

पौर्णमास्याह—हे राधे ! नतु प्रौढ़वयसोऽपि दुःसहमनुरागभरच्चमत्वं केनापि गुणिना तव नवीनं वयोऽध्याप्यैवमकारि ? किं कृतमित्यपेक्षायामाह—येन कटाक्षरूपा भूमिः प्रसव एव प्रसूतिकाल एवाश्रुभिर्धौताऽकारि तथाच कटाक्षस्यारम्भ एवाश्रुजलैः सर्वं प्लावितमिति भावः । एवं कुचरूपरत्नखनिरुद्गम एव कामप्रतप्ताऽकारि ।

(M) क्रमपारम्पर्येण स्फुटतामेतेषां नायिकाऽलङ्काराणां मनस्तत्त्वसरणिमनुसृत्य निर्देशो भरतीये, तदाश्रितेष्वितरेष्वालङ्कारिकनिबन्धेषु च । सुकुमारे ललितात्मके च प्रयोगेऽभिनयजीवातुभूत एवैषां विलासचमत्कारकोटिमावहति, ललितोदारशिल्पकल्पे भास्कर्ये केषाञ्चनैषां समुद्भेदोऽपि निरधारि । एषां निदानं शरीरविकारजम्—'देहात्मकं

(38) एवं (ग) पुस्तके । 'एतानि तस्या' इत्यादि (क) पुस्तके, 'एतेषां तस्या' इत्यादान्येषु ।

'सर्वावस्थाविशेषेषु माधुर्य्यं रमणीयता'। (M) Sahityadarpana III. 132. १३०का

यथा—जलावगाहे च्युतमेखलायाः शैवालवल्लीव बभौ नितम्बः ।

अकैतवं रूपमहैतुहार्दं सर्वास्ववस्थासु सदैकरूपम् ॥ १०५

प्रगल्भता निर्भयत्वम्— १३१ का

यथा—'श्लिष्टा श्लिष्यती'त्यादि (५म किरणे ७१ श्लोकः)।

औदार्य्यं विनयः सदा ॥ १३२ का

सख्यो निजैरेव गुणैर्भवद्विधा मयेव तन्वन्त्यनुरागसौरभम् ।

न चान्यसाद्गुण्यमपेक्ष्य सौहृदं प्रकाशयन्तीह निसर्गसाधवः ॥ १०६

सुखे दुःखेऽपि महति धैर्य्यं स्यान्निर्विकारता ॥ १३३ का

यथा—आस्तां तदीयनवयौवनपूर्णवापी

काऽपीयमत्र न करोमि निमज्जनेच्छाम् (N)।

इच्छामि तं कमपि कालमलज्जमुच्चै-

राक्रन्दितुं सुमुखि ! हा प्रिय ! हा प्रियेति ॥ १०७

अङ्गैर्वेशैरलङ्कारैर्लीला कान्तानुकारिता ॥ १३४ का

सा च द्विविधा—स्वगता सखीगता च। स्वगता च द्विधा, स्वकर्तृका प्रियकर्तृका चेति। क्रमेणोदाहरणे—

बर्हेण बद्धचिकुरा करक्लृप्तवेणुरामुच्य पीतवसनं वनमालिकाञ्च ।

कस्तूरिकाचिततनू रभसादियेष राधा स्वमङ्गमुपगूहितुमङ्ककेन ॥ १०८

अहेतुहार्दं वेशादिहेतुं विनैव हृदयङ्गमं, अतएवाकैतवमकृत्रिमम्।

पीतवसनमामुच्य नितम्बे बद्ध्वा, एवं वनमालिकां कण्ठे बद्ध्वा रभसात् कौतुकात् स्वीयाङ्गमङ्ककेन स्वाङ्गेन सखीभ्यो गोपयितुमियेषैच्छत्।

---

भवेत् सत्त्वं सत्त्वाद्भावः समुत्थितः। भावात् समुत्थितो हाव' इत्यादि भरतोक्तिः सहृदयसंवित्तिश्च तत्र प्रमाणम्। संवित्तिकाले तादात्म्येन लयस्य घटितत्वादनुप्रेरणादप्रायामिवैषां विश्लेषणदारा पृथक्सत्तापत्तं न कश्चीकुर्वन्त्यात्मप्रत्ययोत्थचित्तवृत्तय इति तु नासमञ्जसम्। (Cf. Carlyle's remarks about Schiller as a critic—'I now see myself create and form; I watch the play of inspiration; and my fancy, knowing she is not without witnesses of her movements, no longer moves with equal freedom'). श्रीकृष्णाश्रितत्वे तु परमोत्कर्षः स्वाभाविकः।

काञ्चित् सखीं कुवलयोदरसोदराङ्गीं
कृष्णाकृतिं समुपकल्प्य विभूषणाद्यैः ।
आलिङ्गितुं कृतमतिः स्वयमेव राधा
द्वेधा विभक्तमुपलब्धवती प्रमोदम् ॥ १०९

स्वगतप्रियकर्त्तृका यथा—

सीमन्तचारु दयितस्य बबन्ध वेणीं
राधा शिखण्डवलयैः स च मौलिमस्याः ।
अन्योन्यवेशपरिवर्त्तनकौशलेन
द्वाभ्यामलभ्यत विशेषरतेः प्रमोदः ॥ ११०

**यानस्थानासनादीनां मुखनेत्रादिकर्मणाम् ।**
**विशेषो दयितालोके विलासः परिकल्प्यते ॥ १३५ का**

यथा—

केश्चिच्चामरपाणिभिः कतिपयैस्ताम्बूलपात्रीकरैः
केश्चिच्चासनधारिभिः परिजनैर्धृतातपत्रैः परैः ।
संवीता मणियानतोऽवरुरुहुः श्रीशे निखातेक्षणा
योषिन्मौलिमणीवरा इव कुरुक्षेत्रं समेत्याङ्गनाः ॥ १११

इयं सखी श्रीकृष्ण इव सहजश्यामा ; तां वेशादिना कृष्णाकृतिमुपकल्प्य द्वेधाविभक्तं प्रमोदं कृष्णालिङ्गनसुखं सख्यालिङ्गनसुखञ्चोपलब्धवती ।

राधा श्रीकृष्णस्य सीमन्ते चारु यथा स्यात्तथा वेणीं बबन्ध। श्रीकृष्णोऽप्यस्या राधाया मस्तकभूषणचूड़ां शिखण्डपिच्छादिभिर्बबन्ध। राधयाऽत्मानं श्रीकृष्णकर्त्तृकौद्धत्यादिना रतिविशेषजन्यप्रमोदोऽलभ्यत, एवं श्रीकृष्णेनाप्यात्मानं राधां मत्वा राधिकाकर्त्तृकवाम्यादिना रतिविशेषजन्यप्रमोदोऽलभ्यत।

योषितां मुकुटस्थमणिवरा इवाङ्गना श्रीकृष्णस्य महिष्यः सूर्योपरागे कुरुक्षेत्रमागत्य कृष्णे निक्षिप्तानीक्षणानि याभिरर्थाद्दूरादेव तं दृष्ट्वा मणिमययानतो रथात्। कथम्भूताः ? परिचारिकारूपपरिजनैर्व्याप्ताः। पात्रो क्षुद्रपात्रं, शिरसि छत्रकृत्वैः परैः।

---

'प्रतिनव'मिति तु दुर्बलः प्रयोगः। 'श्यामो रस' इत्यत्र तु रसघने श्रीकृष्णे 'रस एव स' इत्यभेदप्रतीतिः। रमणीयतालक्षितलक्षणे माधुर्य्यं चेष्टाया अनुल्वणत्वनिर्देश एव इतरव्यावृत्तिकरः, स तु अर्वाचीनग्रन्थलक्षणे लक्ष्येषु च न स्फुरति। 'केश्चिदि'त्यरतिप्रकाशार्थमिदम्।

यथा वा—

सख्यैकया मूर्ध्नि धृतांशुकाञ्चला संवीज्यमाना दलमालयाऽन्यया ।
अवेक्षमाणा दयितं विदूरतश्चिनोति मन्दं कुसुमानि राधिका ॥ ११२

केचित्तु—यानं गतिः, स्थानं स्थितिः, आसनमुपवेशः (M) । तन्मते यथा—

स्थितिर्मदभरालसा न गरिमाणमालम्बते
गतिः प्रकृतिमन्थरा त्वरत ईषदेव क्रमात् ।
सलीलमवलोकितं नमति वल्गते शङ्कते
स्वभाव इव लक्षितः प्रियसमीपतो राधया ॥ ११३

**'स्तोकाऽप्याकल्परचना विच्छित्तिः कान्तिपोषकृत्॥** [1]Sahityadarpana III. 138.

**१२६ का**

यथा—हित्वाणि पाण्योर्मणिकङ्कणानि कृत्वा परित्यक्तसमस्तभूषा ।
एकं दधे वक्षसि नीलरत्नं तेनैव राधा नितरां विरेजे ॥ ११४

**गर्वेण वस्तुनीष्टेऽपि विब्बोकः स्यादनादरः ॥ १२७ का**

यथा—सौरभ्यहानिर्वपुषोऽनुलेपनैः सौन्दर्यह्रासो मणिभूषणैरिति ।
अनादरा तेष्वपि तानि सख्याः प्रेमोपरोधेन बभार राधा ॥ ११५

यथा वा—क्षणेन हर्षादुपढौकितानि निर्माय पुष्पाभरणानि यानि ।
उच्चैरभीष्टान्यपि तानि राधा नेच्छद्गभीरप्रणयस्मयेन ॥ ११६

**अमर्ष-हास-वित्रास-शुष्करोदन-भर्त्सनैः ।**
**निषिधैस्च रतारम्भे किलकिञ्चितमिष्यते ॥ १२८ का**

राधिकायाः स्वभावतोऽवस्थितिर्यौवनादिमदभरेणालस्ययुक्ता भवति, श्रीकृष्णदर्शने सति गुरुतां नालम्बते, किन्तु सम्भ्रमयुक्ता भवति। एवमवलोकनमपि स्वभावतः सलीलं तस्य दर्शने कदाचिन्नमति, कदाचित् वल्गते, कदाचिच्छङ्कते।

वपुषो यः सहजगन्धस्तदपेक्षयाऽनुलेपनस्य गन्धो न्यूनः, एवं वपुषः सौन्दर्यापेक्षया भूषणस्य सौन्दर्यं न्यूनम्। देहे तत्तद्वस्तुनो दाने स्वाभाविकसुगन्धसौन्दर्ययोर्ह्रास एव स्यात्, अतस्तेषु तस्या अनादरः, तथापि सख्याः प्रेमोपरोधेन तानि बभार। अलङ्काराहीनामधारणे वयं दरिद्रा इति जना वक्ष्यन्ति, अतो लोकानुरोधेनैव सखीनामाग्रहो ज्ञेयः।

अराला भ्रूवल्ली स्मितसुमधुरा भर्त्सनगिरो
मृषा कम्पः शुष्कं रुदितमभिलाषेऽपि महति ।
निषेधो नेत्यस्याः करकमलरोधेन सकलं
हरेरासीदेतत् कुसुमधनुषोऽनुग्रह इव (N) ॥ ११७

**तद्भावभुग्नमनसो वल्लभस्य कथाऽऽदिषु ।**
**मोट्टायितं समाख्यातं कर्णकण्डूयनादिकम् ॥ १३८ का**

यथा— झङ्कुर्वाणविलोलकङ्कणभृतो वामस्य दोष्णः शनै-
रुत्कम्पेन कनिष्ठया विदधती कर्णस्य कण्डूयनम् ।
पुष्पेषोः पृतनेव सङ्गरजयश्रीसूचनं व्यातनो-
द्घण्टानादमियं कुरङ्गनयना दर्पेण कृष्णान्तिके ॥ ११८

जृम्भादि (N) यथा—
अन्योन्यग्रथिताङ्गुलीकिसलयामुन्नीय बाहुद्वयीं
जृम्भाऽऽरम्भपुरःसरं विदधती गात्रस्य संमोटनम् ।
मीलन्नेत्रमुरोजयोर्नखपदव्यादानदीनानना
ना ना नेति पुनर्नखक्षतधिया सा कृष्णपाणी दधे ॥ ११९

रमणार्थं श्रीकृष्णेन स्वाभिलाषे प्रकटीकृते सत्यमर्षहासादीनामेकस्मिन् समये मिलनमेव किलकिञ्चितमित्यर्थः। भ्रूवल्ली अराला कुटिलेत्यनेनामर्षः, स्वहस्ताभ्यां श्रीकृष्णस्य करकमलरोधने न नेति निषेधः। एतत् सर्वं श्रीकृष्णोपरि कन्दर्पस्यानुग्रहे कारणमिवाभूदित्यर्थः।

श्रीकृष्णस्य कथादर्शनादिषु जातेषु प्रादुर्भूतो यो भावस्तेन भुग्नं कन्दर्पस्यावेशेन व्याकुलं मनो यस्यास्तस्या राधायाः श्रीकृष्णेन सह सङ्गार्थं स्वाभियोगरूपं कर्णकण्डूयनादिकं मोट्टायितं समाख्यातम्। प्रातःकाले बाहुद्वयीमुन्नीय जृम्भाऽऽरम्भपुरःसरं गात्रस्य संमोटनं विदधती राधिका उरोजयो रात्रिसम्बन्धिनखक्षतस्य गात्रमोटनसमये व्यादानेन सुखप्रसारणेन यत् किञ्चिद्दुःखव्यञ्जकं दीनमाननं यस्यास्तथाभूता सती

(N) न करोमीत्यादि—एतच्च वैष्णवमतानुसारेण कामगन्धमुक्तस्यात्मसमर्पणसर्वस्वस्य प्रेम्णो महिमख्यापनाय। विब्बोकस्य द्वितीयोदाहरणमेवोपयोगि न प्रथमम् यतः स्रोकोक्तयुक्त्याऽनुलेपनादीनामिष्टत्वं व्याहतमेव। कुसुमधनुषोऽनुग्रह इति—'आयुर्घृत'मितिवत् फललक्षणा। जृम्भाऽऽदीनां भावहावादितो भेद उद्भास्वराभिधानुभावप्रकरणे निरर्दिष्ट नीलमणिकृता यथा—'उद्भासन्ते स्वधाम्नीति प्रोक्ता उद्भास्वरा बुधैः। नीव्युत्तरीयधम्मिल्ल

यथा वा—संगोपाय्य पटाञ्चलेन तनुना निःसारिदन्तावली-
ज्योत्स्नाभिः स्नपितेन दक्षिणकराक्रष्टेन वक्त्राम्बुजम्।
लीलोन्नासितकन्धरं मृदुकलैर्वामाङ्गुलीच्छोटिका-
निःस्वानैश्चलकङ्कणस्वनसखैः श्रीराधिकाऽजृम्भत ॥ १२०

यथा वा— अलसवलितमूर्द्धीकृत्य मूर्द्धोपकण्ठे
वलयितमिदमन्योन्येन संसक्तपाणि।
त्रिकविवलन-[39]भङ्गीसङ्गि मोट्टायितायाः
परिधिरिव मुखेन्दोर्भाति दोर्द्वन्द्वमस्याः ॥ १२१

**स्तनग्रहास्यपानादौ क्रियमाणे प्रियेण चेत्।**
**बहिः क्रोऽधोन्तरप्रीतौ तदा कुट्टमितं विदुः ॥ १४० का**

यथा—स्तनकनकघटीं पटीमुदस्य स्पृशति हरौ बहुभङ्गिभङ्गुरभ्रूः।
इयमसरसवाणि पाणिरोधात् कृतकरुषा परुषा कषायिताऽसीत् ॥ १२२

गात्रमोटनसमये स्तनयोः शोभां दृष्ट्वा तत्स्पर्शे व्याकुलचित्तस्य कृष्णस्य पाणिरिदयं पुनर्नखक्षतं भविष्यतीति बुद्ध्या व्याकुला मा ना ना नेत्युक्ता। संगोपाय्येति—लज्जावतीनां जृम्भाऽऽरम्भसमये स्वभाव एवायमिति ज्ञेयम्। लीलया किञ्चिदुच्चीकृता कन्धरा तत्र तद्यथा स्यात्तथाऽजृम्भत। जृम्भाकाले शब्दत्रयमाह—मृदुकलैर्यत्किञ्चित् कण्ठशब्दै-स्तथा वामहस्तस्याङ्गुलिद्वयकृतच्छोटिकाशब्दैश्च। कीदृशैः? चलकङ्कणेति—छोटिका-शब्दसमये वामहस्तस्थकङ्कणशब्दोऽपि जात इति ज्ञेयम्। मोट्टायितायाः गात्रमोटन-युक्तायाः अस्याः राधायाः हस्तद्वंद्वं मूर्द्धोपकण्ठे मस्तकोपरि आलस्ययुक्तं यथा स्यात्तथोच्चीकृत्य मुखचन्द्रस्य परिधिरिव चन्द्रनिकटवर्त्तिमण्डलमिव भाति। कण्ठस्य पूर्व्वभागस्त्रिकपदार्थस्तस्य या भ्रमणभङ्गी, तत्सङ्गि यथा स्यात्तथा। आलस्यत्यागस ये त्रिकयुक्तस्य मस्तकस्य भ्रमणं भवतीति ज्ञेयम्।

पटीं कञ्चुलीम्। कुटिलभ्रूरियं राधिका असरसा कदक्षरा वाणी यत्र तथाभूतं यथा स्यात्तथा कषायिता दुःखिताऽसीत्। कथम्भूता? कृष्णकर्त्तृकपाणिरोधात् कृतक-रुषा कृत्रिमरोषेण परुषा कठोरा।

---

स्खलनं गात्रमोटनम्। जृम्भा वक्त्रस्य फुल्लत्वं निःश्वासाद्याश्च ते मताः॥ यद्यप्येते विशेषाः स्युर्मोट्टायितविलासयोः। शोभाविशेषपोषित्वात्तथाऽपि पृथगीरिताः॥' इति।

---

(39) 'त्रिचलने'ति केवले मुद्रितपुस्तकेऽनुपादेयः पाठः'।

'त्वरया हर्षरागादेर्दयितागमनादिषु ।' Sahityadarpana III. 143

**भूषाणां स्वपदादन्यपदे न्यासस्तु विभ्रमः ॥ १४१ का**

यथा—अधात् काञ्चीं कण्ठे, जघनभुवि हारं, चरणयोः

क्वणाङ्गी केयूरे, भुजलतिकयोर्नूपुरयुगम् ।

किमङ्गैरन्योन्यं मधुमथनसङ्गोत्सवविधौ

प्रसादो व्यातेने प्रणयपिशुनः स्वस्वविभवैः (०) ॥ १२३

'सुकुमारतयाऽङ्गानां विन्यासो ललितं भवेत् ॥' S. Darpana III. 144 १४२ का

यथा—प्रसूनतल्पोदरसङ्गदूनं नूनं वपुर्मे सखि ! नेति निद्राम् ।

इति स्मरायामविशीर्णचित्ता सखीधियाऽसौ हरिमालिलिङ्ग ॥ १२४

'मदो विकारः सौभाग्ययौवनाद्यवलेपजः' ॥ S. Darpana III. 145. १४३ का

यथा—दूतीभिरात्मगुणगौरवसम्प्रयोगैः शक्यो न सङ्गमयितुञ्च कलावतीभिः ।

अभ्यर्थितोऽपि स मया परमद्य गन्तुं नापैति मे सखि ! गृहात् क्षणमप्यघारिः (40) ॥ १२५

**वक्तुं योग्येऽपि समये न वक्ति क्रीड़या तु यत् ।**

**तदेव विकृतं वाच्यम्— १४४ का**

किमङ्गैरिति—श्रीकृष्णेन सह सङ्गोत्सवकर्मणि श्रीराधायाः कण्ठाद्यङ्गैः परस्परं हारादिस्वस्वविभवैः करणैः किं प्रणयसूचकः प्रसादो व्यातेने ।

पुष्पशय्यासङ्गेनापि वपुर्दूनमित्यनेन पुष्पादयङ्गस्य सौकुमार्यमाव्यतमिति ज्ञेयम् । रतिसम्बन्धिकन्दर्पक्रीड़ाजन्यायासेन विशीर्णचित्ताऽसावालस्यदूरीकरणार्थं सखीबुद्ध्या ।

श्रीराधिका ललितामाह—'आलि ! वैदग्ध्यादिमतीभिर्गोपीभिः कर्त्रीभिर्दूतीभिर्द्वार-भूताभिः सम्प्रयोगेऽन्यद्वारा सम्यक् कथनैरपि करणैः कृष्णः सङ्गमयितुं न शक्यः, किं पुनः कृष्णेन सह तासां विलासवार्त्ताऽपि—अघ्यर्थं चकारः ।

(०) प्रसादो व्यातेन इति—अत्रान्योन्यकृतस्वेष्टाकृत इव प्रतीयमानो व्यत्यस्तव्यनिता-ऽङ्गानां परस्परप्रेमसूचिका चमत्कृतिः । यथैतदनुरूपे रासलीलावर्णनप्रसङ्गायिता-नन्दवृन्दावनचम्पूपद्ये—'उत्तरीयमपि चान्तरीयतामन्तरीयमपि चोत्तरीयताम् । यज्जगाम किमभूत् परस्परं पूजनन्तदिह नूनमङ्गयोः ॥' त्वराकृततत्रुटित्वन्तु लक्षणसर्वस्वभूतम् । लक्ष्ये तत्तु गुणीभूतम् । उत्सवकाले सर्वैरात्मनामुत्कृष्टवस्तून्येवोत्सृज्यन्ते, अतो राध-

(40) 'नापैति मद्भवनतः कथमालि ! कृष्ण' इति (क) (ख) (घ) पुस्तकेषु पाठः ।

यथा—संप्रार्थ्यमानाऽपि मयाऽनुवेलं न वक्तुमिष्टामपि वक्ति वाणीम्।
रुषा क्रिया वेति न वेद्मि सख्यो! जानन्तु राधाहृदयं भवत्यः॥१२६

—चेष्टा स्मरविकारजा।

तपनं प्रियविच्छेदे— १४५ का

यथा—शीतप्रयोगैर्बहिरीह्यमानैरन्तर्गतो वर्द्धत एव दाहः।
बहिर्विलेपैर्बहिरप्रकाशी प्रोज्जृम्भतेऽन्तः पुटपाकजोऽग्निः॥१२७

—प्रतीतस्यापि वस्तुनः।

अप्रतीतवदापृच्छा प्रियाग्रे मौग्ध्यमेव तत्॥ १४६ का

प्रियाग्र इत्युपलक्षणम् सख्या अग्रे च। यथा—
'हुँ (41) मातरन्तर्बहिरिति का तव' 'प्रिये! त्वमेव प्रतिबिम्बिता मयि।'
'अन्येव' 'तत् किन्तव तुल्यमीहते' 'धूर्त्तेय'मित्याप भियं चलेक्षणा॥११८
यथा वा—कयाऽत्ममूर्त्तिर्लिखिता नखेन वामस्तनार्द्धे तव पङ्कजाक्ष!॥
न माति न म्लायति दिव्यरूपां यामुद्वहन् हन्त न लज्जसे त्वम्॥१२८

बहिरीह्यमानैः क्रियमाणैश्चन्दनलेपनादिशीतप्रयोगैरन्तर्गतः श्रीकृष्णविरहजन्यकन्दर्पदाहो वर्द्धत एव। तत्र दृष्टान्तः संपुटस्थपित्तलादिवस्तूनां द्रवीभावरूपपाकजनको वह्निरन्तरेवातिशयेन प्रकाशते। बहिर्विलेपैः—तत्रापि संपुटस्य दृढ़ीकरणार्थं, मृत्तिकाभिः पुनः पुनः क्रियमाणैरपि बहिर्विलेपैरिति।

श्रीकृष्णेन सह कौतुकार्थं श्रीराधिका तमाह—हुं मातरिति। व्रजवासिनीनां विस्मयदर्शने स्वभावोक्तिरियम्। हे कृष्ण! तवान्तःकरणाद्बहिः का एति। श्रीकृष्ण आह—प्रिये इत्यादि। श्रीराधिकाऽह—नेयं मत्प्रतिबिम्बरूपा किन्त्वन्यैव। पुनः श्रीकृष्ण आह—यदि तव प्रतिबिम्बरूपा न भवति, तत् किं तव तुल्यं चेष्टते, त्वं यथा हस्तादिचालनं करोषि तथेयमपीति। पुनः श्रीराधिकाऽह—इयं धूर्त्ता स्वस्याः प्रतिबिम्बख्यापनायैव मत्तुल्यं चेष्टते इति कृत्रिमभियमाप।

---

रसोत्सवेऽङ्गनो योग्याभरणोत्सर्गः सङ्गत एव, अलङ्कार्य्याणामङ्गानामलङ्कारान्तरस्वीकारश्च दुर्वार इत्यस्यानन्यासप्रयासः सुगमः। विकृतमिति—विहृतमिति मुद्रिते भरतीये संज्ञा। श्रीमद्रूपगोस्वामिचरणैस्तु एतत्प्रतियोगिकानामालापीदानां वचनारम्भकानामनुभावानां स्फुटमुद्देशो व्यधायि। नात्र तेषां तथा विस्तारः।

---

(41) 'हुं मात'रिति पाठः (क) (घ) पुस्तकयोः।

सखीं प्रति यथा—

वनं निधुवनं नाम क्व नाम सखि ! वर्त्तते ।

यद्दर्शं तव कर्णोऽयमुत्सुकमना दुर्मनायते ॥ १३०

**अर्द्धाङ्गभूषारचना गाले विष्वग्विलोकनम् ।**

**रहस्योषत्कथारम्भो विक्षेपः स्यात् प्रियागमे ॥ १४७ का**

आदर्शेऽनुचरीकराञ्चलगते संवीक्षमाणा मुखं

छित्ताभिः क्रियमाणमण्डनविधौ राधा सखीभिर्मिथः ।

उत्थायार्द्धविभूषितैव परितो व्यापारयन्ती दृशं

दृष्ट्वा दैवत आगतं प्रियमथो सम्पूर्णभूषाऽभवत् ॥ १३१

**कुतूहलं रम्यवस्तुसमालोके विलोलता ॥ १४८ का**

यथा—घटाम्बुसिक्तां निजहस्तरोपितां श्रुत्वा लतां पुष्पवतीं सखीमुखात् ।

उद्यानसीम्नि त्वरयाऽभिगामिनीं ददर्श राधां पथि नन्दनन्दनः ॥ १३२

**हसितं स्याद्वृथा हासो नवयौवनगर्वजः ॥ १४९ का**

यथा—आपृष्टहेतु शिरसः प्रपथैः सखीभिराकस्मिकं स्मितमरोचत राधिकायाः ।

अन्तःप्रफुल्लदनुरागलताप्रकाण्डादेकं प्रसूनमिव किं बहिरुन्मिमील ॥ १३२

**कुतोऽपि दयितस्याग्रे चकितं स्याद्भयोदयः ॥ १५० का**

यथा—मुखमनु निपतन्तं वारयन्ती द्विरेफं

भयचकितचलाक्षी न्यङ्मुखीयं करेण ।

निधुवनशब्दः स्त्रीपुरुषयोः कामक्रीडावाची । स्वयमनवगत्याऽपि कौतुकार्थं श्रीराधिकाऽऽह—हे सखि ! अस्माभिस्तु वृन्दावनादिकं ज्ञायते, किन्तु निधुवनसंज्ञकं वनं वर्त्तते क्व यदर्थं 'निधुवनमहं कदा प्राप्स्यामी'त्युत्कण्ठया निधुवनप्राप्त्यर्थम् ।

आदर्श इति । भूषाफलेन श्रीकृष्णकर्तृकदर्शनेनैव भूषायाः पूर्णत्वं जातमिति भावः ।

श्रीराधाया यौवनजन्यगर्वोत्थमाकस्मिकं हास्यं दृष्ट्वा सख्यः पप्रच्छुरित्याह—आपृष्टेति । सखीभिः कर्त्रीभिः शिरसः प्रपथैरापृष्टो हेतुर्यस्य तत् स्मितमरोचत । अत्रोत्प्रेक्षामाह—अन्तरिति । अन्तः प्रफुलन्ती याऽनुरागलता तस्या देहादिकं प्रसूनमिव ।

मुखमनु मुखे पतन्तं भ्रमरमियमधोमुखी सती करेण वारयन्ती पश्चान्मुखं विहाय करे पतन्तमालक्ष्य तेन भ्रमरेणाभिभूतं तमपि करमपि सङ्कुचितभ्रूः सा धुनोति कम्पयति । तत्रोत्प्रेक्षामाह—स च करः कङ्कणानां झङ्कृतैः करणै रुदनमभिनिन्ये रोषाभिनयं

तमपि तदभिभूतं कूणितभ्रूर्दुनोति
स च कथमभिनिन्ये भङ्गतेः कङ्कणीनाम् ॥ १३४

यथा वा—सललितमुपनीतां पृष्ठतो वाममंसं
चलदसितभुजङ्गीभङ्गिमालोक्य वेणीम्।
'हु'मिति कृतकशङ्कापङ्किलत्रासमेषा
दयितमुपजुगूहे द्रोहिणं कालियस्य ॥ १३५

**विहारे सह कान्तेन क्रीड़ितं केलिरिष्यते ॥ १५१ का**

यथा—अपि सह विहरन्त्या कृष्णमुल्लङ्घ्य रम्ये
सुरभिणि कुसुमेऽहंपूर्विकाकौतुकेन।
अनियतगतिभङ्ग्या पार्श्वसंघट्टनेन
स्तनहतिपरिभूतो राधयाऽसौ व्यधायि ॥ १३६

**प्रत्येकं सप्तविंशत्या योगेऽष्टाविंशतिस्त्वमी।**

**रसवाणर्षि-(७५६) संख्यात स्ते पुनः सङ्गिता यदि।**

**पञ्चेन्द्रियविन्दु-(१५१२)-संख्याः स्युरन्योन्यगुणिता ननु॥१५२ का**

तेऽन्योन्यगुणिता अलङ्कारा वक्ष्यमाणैरिङ्गितैः सहिता यदि भवन्ति। ग्रन्थगौरवभयान्नोदाह्रियन्ते। न च वक्तव्यं 'निर्विकारात्मके चित्ते भावः प्रथमविक्रिये'ति (१२४ का) भावस्य तथाविधत्वात् कथं हावादिसाङ्कर्यम्? यतः कन्यानामेव तथाक्रमः (P)—परोढ़ामध्याऽदीनां श्रीकृष्णं प्रति प्राङ् निर्विकारात्मके चित्ते यदैव भाव उत्पन्नस्तदैव हावादिसाङ्कर्यमपि।

चकारेत्यर्थः। सललितं यथास्यात्तथोपनीतां प्राप्तामालोक्यैषा कृत्रिमाशङ्काव्याप्तत्रासं यथा स्यात्तथा सर्पजन्यत्रयनिवर्त्तकं श्रीकृष्णमालिलिङ्ग।

येऽष्टाविंशत्यलङ्कारा उक्तास्तेषां प्रत्येकं सप्तविंशत्याऽलङ्कारैः सह योगेऽमी त्वन्योन्यगुणिता अलङ्कारा रसवाणर्षिसंख्यकाः स्युः। यथा भावे भावरहितानां हावादीनां सप्तविंशतेर्योगः, तथा च हावे हावरहितानामिति (P), स्वस्मिन् स्वस्य योगाभावात् 'सप्तविंशत्ये'त्युक्तम्। तेऽलङ्काराः केवलाः, एवमिङ्गितसहिता यदि भवन्ति, तदा पञ्चेन्द्रियविन्दुसंख्यका भवन्ति।

ननु वयःसन्धौ भावस्योदाहरणं दत्तं, तदपेक्षयाऽधिकवयस्त्वे हावस्योदाहरणमेव,

(P) अत्र सङ्ख्याऽनयनवैशिष्ट्ये कारणमुपरिदर्शितायां टीकायां प्रागुल्लिखिते तृतीयकैरणस्थध्वनिसंख्यानप्रस्तावे मौक्तिकावल्याञ्च स्फुटं दर्शितम्। कमलदलानां यतिभेद-

तथाहि—क्वचिदपि न यदपेक्षा पत्रिकादूतिकादे-
स्तनि न च (42) विचारो यत्त्वया सार्द्धमन्यैः।
हृदय ! यदनुरक्तं माधवे युक्तमेतत्
किमिति (42) युगपदाञ्चीत् सर्वशौर्य्यं मनोभूः॥ १३७

अत्र भावहावहेलाऽदीनां साङ्कर्य्यमनया दिशोक्तप्रकारं ग्रन्थगौरवभयान्न लिख्यते।

अथ कानि तानीङ्गितानि यैरेषां द्वैविध्यमङ्गीकृतम्—इति त्रिविधानीङ्गितानि दर्शयन्नाह—

**मुग्धामध्याप्रगल्भानां त्रिविधानीङ्गितान्यपि॥ १५३ का**

मुग्धाऽदीनां त्रैविध्ये इङ्गितानामपि त्रैविध्यं, न तु प्रत्येकम्। तत्र मुग्धाकन्ययोरेकरूपाणि। तथाहि—

**दृष्टा तनोति मन्दाक्षं सम्मुखं नैव वीक्षते।**
**प्रच्छन्नं तत्प्रतिकृतिं चित्रादौ स्पृहयेक्षते॥**
**बहुधा पृच्छ्यमानाऽपि रमणेन न जल्पति।**
**तत्कथायां श्रुतो दत्ते नैव त्वन्यत्र यच्छति॥ १५४ का**

तदपेक्षयाऽधिकवयस्त्वे हेलायाः, एवं क्रमेण भिन्नभिन्नकाले प्रादुर्भूतानां भावानां कथं साङ्कर्य्यं सम्भवेदित्याह—न चेति। तत्र समाधानमाह—यत इति।

तथाहीति। माधवे यत्त्वयाऽनुरक्तम्—एतत् सर्वं युक्तमेव, किन्तु युगपदेकस्मिन् काले मनोभूः कन्दर्पो भावहावादिसर्वशौर्य्यमाञ्चीत् व्यक्तं चकारेत्याश्चर्य्यम्।

मुग्धादीनामिति—मुग्धाया इङ्गितानि भिन्नानि, तथा मध्याया इङ्गितानि भिन्नानि, एवं क्रमेणेङ्गितानि त्रिविधानि। न तु प्रत्येकमिति—एकस्या मुग्धायाः सर्व्वाणीङ्गितानि, तथैकस्या मध्यायाः सर्व्वाणीङ्गितानीत्येवंक्रमेण न तु त्रिविधानीत्यर्थः।

श्रीकृष्णेन दृष्टा मुग्धा मन्दाक्षं लज्जां तनोति।

---

तुलामधिरोहत्सु खेषवङ्कारेषु एकत्रावस्थितेऽन्तकसाङ्कर्य्यसम्भावना न दूरापास्ता—नापि कन्यानामत्र संख्यानप्रसङ्गे वर्जनमिष्टमिति प्रसङ्गम् वयोभेदकृतप्रकृतिविकृतेरसार्वत्रिकत्वात्, श्रीकृष्णलीलासु मध्याप्रगल्भानामिव मुग्धानामप्यधिकारदर्शनात्।

---

(42) अत्र द्वितीय चरणे न तु विचारो यदित्यादिरयः पाठो मुद्रितपुस्तके। चतुर्थे चरणे 'किमिह युगपदि'त्यादि पाठः (ग) पुस्तके।

दिङ्मात्रमुदाह्रियते ।

अन्यैः संप्रतिपादितां प्रियकथामन्यत्र दत्तेक्षणा
स्निग्धाऽऽकर्णयति प्ररूढपुलकान्यङ्गानि गोपायति ।
पश्यन्ती पटचित्रितं प्रियवपुर्दृष्ट्या जनैर्लज्जते
निर्बीजः कुत आविरेति सुदृशः कृष्णानुरागाङ्कुरः ॥ १२८

अत्र भाव एव हावहेलाभ्यां शबलीभूतैरिङ्गितैः सह संसृष्ट इत्ययं सेङ्गितोऽलङ्कारसङ्करः । एवमन्येऽप्यनुसन्धेयाः ।

अथ मध्येङ्गितानि—

**अकाण्डे नीविधम्मिल्लमोक्षसंयमनक्रिया ।**
**अलकोल्लासनमिषाङ्गुलाभूलप्रदर्शनम् ॥**
**सखीभिः सह संवादो निर्हेतुर्मधुराक्षरः ।**
**परस्परं परीहासो मन्दमन्दः प्रियान्तिके (?) ॥ १५५का**

यथा—उल्लास्य नीवीं पुनराबबन्धे विमोच्य वेणीं पुनराजुगुम्फे ।
शनैरकाण्डे ललितं जजृम्भे कयाऽपि कृष्णं पुरतो निरीक्ष्य ॥ १२९

अत्रापि हावोऽलङ्कारः शोभया शबलीभूतैरिङ्गितैः संसृष्टः । प्रगल्भेङ्गितानि यथा—

**त्यजति लीलाकमलं परिरभते प्रियसखीमपि च ।**
**मुकुरे निजमुखकमलं निरीक्ष्य तिलकं करोति कृष्णाग्रे ॥ १५७का**

अन्यैः कथ्यमानां (43) श्रीकृष्णकथामन्यत्र दत्तेक्षणा साऽऽकर्णयति शृणोति । तस्यां श्रीकृष्णानुराङ्कुरो बीजं विनैव कुतः सकाशादाविरेति आविर्बभूव ।

अकाण्डेऽनवसरे मोचनबन्धनादेः कारणं विनैवेत्यर्थः कयाऽपि व्रजकुमार्या उल्लास्य मध्यदेशात् किञ्चिदुत्थाप्य नीवी पुनराबबन्धे ।

(Q.) एषां केषामप्यनुभावमध्येऽन्यत्र परिगणनमित्युक्तमेव प्राक् । एतान्यन्यानि च साधारणानीङ्गितानि सकलनायिकानामनुरागलक्षणे 'चिराय सविधे स्थान'मित्यादिना दर्पणकृता सूचितानि । परं तत्र सैरन्ध्रीत्वेत्यं कारिकान्ते दर्शितम् 'एतेष्वधिकलज्जानि लक्षणानि नवस्त्रियाः । मध्यव्रीडानि मध्याया' इत्यादिना । शाकुन्तल-मालतीमाधवादिदृश्य-

(43) 'कथिता'मिति (क) (ख) (ङ) पुस्तकेषु पाठः ।

यथा—बाहुं दक्षिणमालिकण्ठवलये (44) विन्यस्य लीलाऽलसं

वामेनैव करेण केलिकमलं घ्राणाच्छलाच्चुम्बति।

अस्यन्ती निपतन्तमास्यकमले भृङ्गं शिरःकम्पनैः

क्षणाग्रे कुसुमेषुविभ्रमभरैः श्रान्तेव काचिद्बभौ॥ १४०

अत्र विलास एवालङ्कारो मदेनालङ्कारेण शशीभूयेङ्गितेन संसृष्टः। सङ्गीतादिकौशलमप्यासां विलास एव पर्यवस्यति(?), तेन पृथङ् न दर्शितम्। आदिशब्दात् कलाकौशलमपि यथा—

अन्तर्मोदमदेन काकलिकया वर्णैरनाविष्कृतैः

सङ्ग्रामस्वरमूर्च्छनाश्रुतिपरिष्कारेण कण्ठस्पृशा।

गायन्ती ललितं तथैव ललितादत्तश्रुतिः श्यामया

प्रत्येकं निहितैः करे कुरवकै राधा स्रजं सृज्यते॥ १४१

अङ्गावत्कर्त्तृकात् सृजो यक्चिण्णौ, कर्त्तरि यक्(?)।

मुखकमले पतन्तं भ्रमरं शिरःकम्पनैः करयैरस्यन्ती क्षिपन्ती काचिद्बभौ। कन्दर्पस्य विलासभरैः श्रान्तेव। यथा कथञ्चित् श्रान्तो जनोऽन्यस्य स्कन्धमवलम्बते कदाचिद्दुःसहेन भरेण शिरःकम्पनं करोति च तद्वदित्यर्थः।

अन्तरानन्दामोदेन सङ्ग्रामादीनां परिष्कारेण कण्ठस्पृशा काकलिकया मधुरास्फुटध्वनिना एवमनाविष्कृतैर्वर्णैः स्पष्टमनुच्चारितैः करणैर्ललितं यथा स्यात्तथा गायन्ती राधा श्यामया निहितैः कुरवकैर्भिण्टीपुष्पैः स्रजं सृज्यते, कर्त्तरि यक्। 'काकलिकये'ति 'अनाविष्कृतै'रिति पदाभ्यामेतज्ज्ञानं निकटवर्त्तिसखीनामेव कर्णग्राह्यं नान्येषामिति ज्ञेयम्। कथम्भूता? गानेन साहाय्यार्थं ललितया दत्ता श्रुतिर्यस्यै सा। अष्टादश श्रुतयस्तु कफवातपित्तवतां प्राकृतानां कण्ठेषु न स्फुरन्ति, किन्तु तद्विहितानां गोपीनामिति बोध्यम्।

---

काव्येषु भूयसामेषां विलासः। वाचिकाङ्गिकचाक्षुषैरेवमादिभिरभियोगैः नायिकाः स्वाकूतमुद्गमरन्ति, नीलमणौ विस्तरतस्तेषां भानमपि। कलाकौशलमध्ये आलेख्यनिर्म्माणं सङ्गीतललितञ्च काव्येष्वलङ्कारग्रन्थेषु च समं प्रथितमेव। 'कुरवक' इति पाठः, 'कुरवका रवकारणतां ययु'रिति माघपद्यप्रामाण्यमत्र। पाणिनि-कलापपरिशिष्टादिमते न यक्, अपि तु श्यनेवात्र विकरणस्थानीयः—तथा च वार्त्तिके 'शुजिसृजोः श्यन्!' 'सृजः श्रद्धोपपन्ने कर्त्तर्येवेति वाच्यम्'।

---

(44) 'कण्ठकुहरे विन्यस्ये'ति पाठः (ग) (घ) पुस्तकयोः। 'दक्षिणमाकनिष्ठवलय' इत्यनवधानतादुष्टः पाठः (क) पुस्तके। अन्यत्रोदाहृत एवास्मिन् श्लोके (अस्यैव किरणस्यान्तिमे भागे) 'दक्षिणमालिकण्ठवलय' इत्येव पाठः।

अथासां सखीभेदाः। तत्र सखीलक्षणम्—

**निरुपाधिप्रीतिपरा सदृशी सुखदुःखयोः।**
**वयस्यभावादन्योन्यं हृदयज्ञा सखी भवेत्॥ १५७ का**

यथा—'पतत्यस्ते सास्र'मित्यादि ( ३य किरणे ३२ श्लोके )।

**छायेव याऽनुसरति सैव प्रियसखी स्मृता। १५७ (क) का**

यथा— क्वचिदग्रे क्वचित् पश्चात् क्वचित् पार्श्वपदान्तयोः।
सूर्य्यानुरोधात् छायेव सा राधामनुवर्त्तते॥ १४२

**सुरसे नर्म्मणि रता सैव नर्मसखी भवेत्॥ १५८ का**

यथा— वृथाऽकृथा यावकमङ्घ्रिपङ्कजे स्व एव रागोऽस्य दृशां रसायनः (R)।
किन्त्वेक एवास्ति गुणोऽस्य राधिके! यः केशवस्यापि च केशरञ्जनः॥ १४३

**(45) न सङ्कोचं यया याति कान्तेन शयितोत्थिता।**
**आत्मनो मूर्त्तिरन्येव प्रियनर्मसखी तु सा॥ १५९**

यथा—अन्योन्यग्रथिताङ्गुली किसलयौ विन्यस्य सख्यंसयो-
र्बाहू गात्रविमोटनं विदधती कृत्वा स्तनाग्रे स्तनौ।
यत् कृष्णस्य जये समर्जितवती पाश्यायुधे सङ्गरे
तत् सौभाग्यधनं न्यधादिव मुखी स्वाङ्गात्तदङ्गेष्विव॥ १४३

यथा जनस्याग्रे सूर्य्यश्चेत्तदा छाया पृष्ठदेशे तिष्ठति, सूर्य्यः पृष्ठदेशे वर्त्तते चेत्तदा छाया सम्मुखे तिष्ठति कदापि न त्यजति तथेत्यर्थः। हे राधे! त्वमङ्घ्रिकमले यावकं वृथाऽकृथाः यतोऽस्याङ्घ्रेः स्वतःसिद्धो रागः। किन्त्वस्य यावकस्य समयविशेषे गुणः—श्रीकृष्णस्यापि केशं रञ्जयिष्यति।

कान्तेन सह सुप्ता पश्चादुत्थिता कान्तस्याग्रे निर्वस्त्रमङ्गं दृष्टवत्या यया करणभूतया यूथेश्वरीसख्या सङ्कोचं न प्राप्नोति सा प्रियनर्म्मसख्यात्मनो द्वितीया मूर्त्तिः।

रात्रिसम्बन्धिविलासोत्थश्रमेण जातस्यालस्यस्य दूरीकरणार्थं सख्याः स्कन्धदेशे बाहु विन्यस्य कन्दर्पयुद्धे श्रीकृष्णपराजये यत् सौभाग्यमर्जितं तदेव सौभाग्यं धनं स्वाङ्गात् सकाशात् सख्या अङ्गेषु न्यधादिव।

(R.) केशरञ्जन इति—अत्राहार्य्यशोभासम्पन्निदानभूतस्य यावकस्य न पुनरुक्तदोषत्वं ग्राह्यम्, अपि तु 'देहि पदपल्लवमुदार'मिति नयेन श्रीकृष्णशिरोधार्य्यतयाऽत्युत्कृष्टकेशराग-

45) इतः प्राक् कारिकाऽग्रभागे 'कान्तेन शयितेनापि यत्समक्षं भयं न हि'। इत्यधिकोऽंशः कुत्रचिद्दृश्यते।

एता अपि चतुर्विधाः सख्यो नायिकागुणैरन्यूना एव । विशेषतस्तु—

**दूतीभावः समये परिजनभावस्तु वेशभूषाद्यौ ।**

**उपदेष्टृता च माने तस्मिन् गाढ़े तु गर्हकत्वञ्च (R) ॥१६०का**

तासामिति भावः । दूतीभावस्त्रिधा । लक्षणन्तु प्रागुक्तसमानमेव (R) । तत्र निसृष्टार्था यथा'उच्छून स्तनिते'त्यादौ (३य किरणे ३८ श्लोके) । मितार्था यथा—'ताम्बूलमाले'त्यादौ (५म किरणे ८५ श्लोके) । सन्देशहारिका यथा—

त्वदुक्तमुक्तं सखि ! कृष्णसन्निधौ तदुक्तमेतच्च निवेदयामि ते ।

'प्रसादनेनालमनेन निग्रहोऽप्यनुग्रहोऽयं मम यः कृतस्त्वया' ॥ १४५

परिजनभावो यथा—'आदर्शेऽनुचरी'त्यादि (५म किरणे १३१श्लोके) । मानोपदेष्टृता यथा—'सख्या शिक्षितपाठितानी'त्यादि (५म किरणे ६७ श्लोके) । तस्मिन् गाढ़े गर्हकत्वं यथा—'कति न पतितं पादोपान्ते' इत्यादौ (४र्थकिरणे १० श्लोके) । 'अस्माभिः सह चाटुकृदि'त्यादौ वा (५म किरणे ८४ श्लोके) । उक्त आलम्बनविभावः ।

उद्दीपनविभावो (R) यथा—

**वृन्दावनं षड़ृतवः सह वर्त्तमानाः**

**कुञ्जा मणीन्द्रगृहतोऽपि मनोविनोदाः ।**

**कर्पूरभांसि यमुनापुलिनानि हंस-**

**कारण्डवादिललितं नलिनीवनञ्च ॥**

मानभङ्गार्थं प्रणत्यादिनाऽनुनयन्तं श्रीकृष्णं तिरस्कृत्य विमुखी बभूव, पश्चात् श्रीकृष्णे गते 'दुर्बुद्धिरहं किमकरवम्, व्रजराजनन्दनो मया तिरस्कृत' इति पश्चात्तापवती काचित् श्रीकृष्णं प्रसादयितुं सन्देशहारिणीं दूतीं श्रीकृष्णनिकटे प्रेषयामास इत्याह—त्वदुक्तमिति । श्रीकृष्णस्योक्तिमेवाह—अनेन मम प्रसादनेनालं, तया कृतो यो निग्रहः स ममानुग्रह एव, स्वस्य प्रीतिमज्जन एव निग्रहोनुग्रहं करोति, अन्यथा मयि तस्या औदासीन्यमेवस्यात् ।

कर्पूरतोऽपि दीप्तिमन्ति यमुनापुलिनानि । दिप्तो हृद्याः, 'अपि'कारात्तेषां पूर्व्वा अपि हृद्या इत्यर्थः ।

---

सम्पादनेन वाऽपाततस्वारितार्थम् । 'नखरञ्जन पदस्येव ('नरुण' इति यस्य गौड़ीया भाषा) 'केशरञ्जन'पदस्यापि योगरूढ़िताऽपि सूचिता । सखीनामेषामपि नायिकाभेदानामिव प्रखर-मध्यमृदुत्वेन, नित्यानित्यादित्वकल्पनया च विभागविस्तर इतरत्र लक्ष्यः । वैष्णवागममतेन

**चन्द्रस्य चन्दनमरुच्च मनोहराणि**

**गोवर्द्धनादिगिरिकन्दरमन्दिराणि।**

**रोलम्बकोकिलमयूरनिनादमिश्रै-**

**र्नानाविहङ्गविरुतैर्हरितोऽपि हृद्याः॥ १६१ का**

तत्र षण्णामृतूनामेकत्ववर्त्तिता यथा—

शिरीषेणासक्ता स्थलकमलिनी, कुन्दलतिका

रता लोध्रे, नीपः स्वयमनुसृतो माधविकया।

अहो वृन्दाऽरण्ये विटपिमिथुनानां विलसतां

किमीदृग् दाम्पत्यं स्फुरति रचिते कृष्णभवने (R)॥ १४६

एवमन्येऽप्यनुसर्त्तव्याः। अथानुभावाः—

**स्थायिभावस्य कार्य्याणि कटाक्षादीनि यानि तु।**

**अनुभावास्तानि बोध्या न संख्या तेषु वर्त्तते॥**

ग्रीष्मे शिरीषः प्रफुल्लो भवति, स्थलकमलिनी तु शरदि, एवं सति पुष्पवता शिरीषरूपपुरुषेण सहासक्ता पुष्पवती स्थलकमलिनी। एवं हेमन्ते प्रफुल्ले लोध्रे शिशिरप्रफुल्ला कुन्दलता रता। प्रावृषि प्रफुल्लो नीपः स्वयं वसन्ते प्रफुल्लया माधविकयाऽनुसृतः। तथा सति वृन्दावने षण्णामृतूनामेकत्रैव एवावस्थितिरिति ज्ञेयम्।

तानि कटाक्षादीन्यनुभावा बोध्याः तेषु कटाक्षादिषु संख्या नास्ति, अतोऽलङ्कारादिवत्तेषां संख्या न कृतेत्यर्थः। काले समयविशेषे केचनालङ्कारा अनुभावतां प्राप्नुवन्ति, तथा तान्यलङ्कारसहितानीङ्गितान्यप्यनुभावतां प्राप्नुवन्ति।

---

सखीभ्य एव प्रेमलीलाविहाराणां विस्तारो जायते, ताः खलु नीलमणिकृतो भाषायां विस्रम्भरत्नपेट्यः'। अतस्तासां साचिव्यं दौत्यं परिजनत्वञ्च नासिद्धम्। वैष्णवपदावल्यामितरत्राप्यमरुशतकार्य्यासप्तशती गाहासतसई-वज्जादि-काव्येषु चैषां भावानां प्राचुर्य्यं परिदृश्यते। प्रागुक्तममानमेवेति—दूतलक्षणे 'दूत्यश्च यथोदाहरिष्यन्ते' इति मूलप्रतीकमत्र विनिगमकम्। तद्यथाऽऽलम्बनविभावः श्रीकृष्णः 'सर्वनायकघटाकिरीटमः' तथा नित्यलीलामयस्य तस्य निरवधिदेशकालाद्यतिच्यनत्वं रसदृष्टेः परिपन्थि—अतएव निरवधौ काले लीलाप्रपञ्चः, देशोऽपि सदैव ऋतुषट्कोल्लासविलासवान् मधुरवृन्दावनाख्यः। विटपिमिथुनानां दाम्पत्यकल्पने कविकर्णपूरप्रतिभा 'तपेन वर्षाः शरदा हिमागमो वसन्तलक्ष्म्या शिशिरः समेत्य चे'ति रमणीयमाघकविपद्यमुपजीव्यत्वेन कल्पयतीति सुवचमनुमानम्। प्राकृतिकानां ककच इव—गौड़भाषायामपि वैष्णवपदकदम्बकेऽस्य भावस्यानुरूप्यं प्रचुरमुपलभ्यते।

**अलङ्काराश्च ये प्रोक्तास्तेषां मध्ये च केचन ।**
**कालेऽनुभावतां यान्ति तथा तानीङ्गितानि च ।॥ १६२ का**

तत्र कटाक्षो यथा—

तस्यास्त्रपाभयविषादविवेकधैर्य्यदैन्याभिलाषभरकोरकितः कटाक्षः ।
उन्मादमोहमददाहविसर्पशूलतृष्णाऽन्वितो ज्वर इवात्मनि मे प्रविष्टः ॥ १४७

कृष्णोक्तिः । यथा वा—

तव शशिमुखि राधे ! दक्षिणादक्षिणाभ्यां श्रवणपथमुपात्तः प्रेङ्खयाऽयं कटाक्षः
निभृतरभसवेगारोपितः शाङ्खिकानां क्रकच इव ममोच्चैः कृन्तन्ति स्वान्तशङ्खम् ॥
(R) १४८

एवमन्येऽप्यनुसर्त्तव्याः ।

**सात्त्विका अपि येऽन्येऽष्टौ तेऽपि यान्त्यनुभावताम् ॥१६३का**

ते यथा—

**स्तम्भः स्वेदोऽथ रोमाञ्चः स्वरभेदश्च वेपथुः ।**
**वैवर्ण्यमश्रु प्रलय इत्यष्टौ सात्त्विकाः स्मृताः (S) ॥१६४का**

उदाहरणम्—खिन्ना गद्गदभाषिणी पुलकिता स्तब्धा स्फुरद्वेपथुः
साश्रुर्म्लानरुचिर्यदद्य जलदालोकेऽभवन्नाविनी ।
तन्मन्ये स्फुटमिन्द्रनीलमहसः कस्यापि लीलानिधे-
र्वृन्दाऽरण्यविलासिनो द्युतिभरैरेषा पराभूयत ॥ १४९

अीवणाः सुवलं प्रत्याह—राधायास्त्रपाभयादिरूपकलिकाभिः कोरकितः कटाक्षरूपः पुष्पगुच्छो मम हृदि प्रविष्टः । तत्र दृष्टान्तः—उन्मादेति । विसर्पशूलौ व्याधिविशेषो, तृष्णा सान्निपातिकी । तैरन्वितो ज्वरो यथा हृदि प्रविष्टः सन् दहति तद्वदित्यर्थः ।

हे राधे ! तव दक्षिणवामनेत्राभ्यां जातः कटाक्षः प्रेङ्खया गत्या कर्णस्वरूपं पन्थानं प्राप्तः सन् मम मनोरूपं शङ्खं कृन्तति छिनत्ति । तत्र दृष्टान्तः—निभृत एकान्ते हर्षाणां वेगेनारोपितश्चञ्चलीकृतः 'शाँखारी'ति प्रसिद्धानां 'करात्' इति प्रसिद्धः क्रकच इव । अन्यक्रकच आगमनसमय एव कृन्तति, शाङ्खिकानां क्रकचस्तु गमनागमनोभय एव कृन्ततीति विशेषो ज्ञेयः ।

'खिन्ने'त्यादिना प्रस्वेदादिसात्त्विकविशिष्टाऽभवत्, 'म्लानरुचि'रित्यनेन वैवर्ण्यम् ।

अथ व्यभिचारिणः—

निर्वेदग्लानिशङ्काश्च मदासूयाश्रमा अथ।
आलस्यदैन्यचिन्ताश्च मोहः स्मृतिधृती अपि॥
व्रीडा चपलता हर्ष आवेगजडते तथा।
विषादौत्सुक्यगर्वाश्च निद्राऽपस्मार एव च॥
विमर्षसुप्तामर्षाश्चाप्यवहित्थोग्रतेत्यपि।
उन्मादव्याधिमतयो वितर्कमरणे पुनः।
त्रासश्चेति त्रयस्त्रिंशदुच्यन्ते व्यभिचारिणः (S) ॥१६५का

अथैषां लक्षणम्—

स्वजुगुप्सा तु निर्वेदो, ग्लानिर्विकृतिराकृतेः।
अनिष्टाशङ्कनं शङ्का, मदो मध्वादिमत्तता॥
दोषदृष्टिरसूया स्याद्व्यायामक्लान्तता श्रमः।
शक्तौ च कर्मवैमुख्यमालस्यं, दैन्यमात्मनि॥

मधुजन्या मत्तता मदः—आदिशब्देन यौवनादिरपि। विचित्तता चित्तवृत्तिशून्यता मोहः। त्वरया मदस्वराजन्यमत्तताऽवेग इत्यर्थः। उदाहरणे व्यक्तीभविष्यति। तत्त्वज्ञानो-

(S) एवमपि कारिकाप्रकारो भरतीये। अन्ये तु जृम्भासहिता नवैते इति कथयन्ति। तत्र जृम्भाया अन्यत्रान्तर्भुक्तिरत्र दर्शिता। न च वस्तुतः सात्त्विकानामेव बहिर्विकारमयत्वमपि तु सर्वेषामनुभावानाम्—तथापि, सात्त्विकानां सर्वजनसुबोध्यत्वमिति तेषां पृथक्त्वेन निर्द्धारणम्। एवमपि समाधानप्रकारो भरतीये। 'किमन्ये भावाः सत्त्वेननाभिनीयन्ते येनैते सात्विका उच्यन्ते' इति पूर्वपक्षरूपेण, उत्तरपक्षरूपेणाह रसामृतसिन्धौ रूपगोस्वामिपादाः—'अनुभावास्तु चित्तस्थभावानामनुबोधकाः। ते बहिर्विक्रियाप्राया' इति। आधुनिका मनस्तत्वविदोऽप्येवं मन्यन्ते। (Cf Spencer's *Principles of Psychology* :—'Every feeling has for its primary concomitant a diffused nervous discharge which excites the muscles at large, including those that move the vocal organs in a degree proportional to the strength of the feeling). वस्तुतस्तु निखिलमेव रसतत्वनिष्कर्षणमालङ्कारिकग्रन्थेषूपलभ्यमानमाधुनिकानामेतद्विषयकप्रामाणिकग्रन्थसत्ताकचाग्रश्रेणीमधिरोहति। धूमायित-ज्वलित-दीप्तोद्दीप्तादिपृथक्लक्ष्यतयैषां

अयोग्यबुद्धि, श्चिन्ता तु किं भावीति विचिन्तनम्।
विचित्तता तु मोहः स्यात्, स्मृतिः प्राग्वृत्तचिन्तनम्॥
धैर्यं धृति,स्त्रपा व्रीड़ा, लौल्यं चपलता मता।
हर्षश्चित्तस्य विस्फार, आवेगस्त्वरया मदः।
निष्पन्दत्वन्तु जड़ता, विषादस्तु विषमता॥
उत्कण्ठे वौत्सुक्यमाहु, र्गर्वोऽहङ्कार एव हि।
निद्रा निद्रैव, स्खलनं फेननिष्ठीवपूर्वकम्॥
अपस्मारः, परामर्षो विमर्षो, निद्रया विना।
स्वप्नस्तु सुप्तिरित्याहु,रमर्षः कोप एव च॥
अवहित्थाऽकारगुप्ति,रुग्रता तीव्रतैव हि।
अनवस्थितचित्तत्वमुन्मादो, हृद्व्यथाऽदिकः॥
व्याधि,र्यथार्थस्मरणं मतिः, संशय एव हि।
वितर्को, मरणं प्राणत्यागस्त्रासो भयोदयः॥

त्यो निर्व्वेद एव शृङ्गारे न व्यभिचारी—शोकणे स्वस्यौदासोन्येन जातो यो निर्व्वेदः स तु व्यभिचारी भवदेव।

---

विचारोऽन्यत्र कृतः—स च विश्लेषणमुखेनेतच्छास्त्रस्यानुभवसाक्षिकतां कूटतामप्यनुमापयति। त्रयस्त्रिंशद्व्यभिचारिणोऽष्टौ सात्विका अष्टौ स्थायिनः—एवमेकोनपञ्चाशद्भावा इति गणना। स्थायिव्यतिरिक्तानामेषां भावानां सञ्चारिपदेन ग्रहणं बहुशो भवति यथा नाट्यशास्त्रे—'सर्वेषां समवेतानां रूपं यस्य भवेद्बहु। स संगतो रसः स्थायी शेषाः सञ्चारिणो मताः॥' रसतत्त्वे मुख्यस्य शृङ्गारस्य करुणवीभत्सरौद्रादिभिर्विरोधितया शोकस्थायिनमवलम्ब्य वर्त्तमानस्य करुणस्यामङ्गलसूचकस्यापायस्य शान्त्यङ्गस्य निर्वेदस्य च नात्र ग्रहणम्। नचाखिलस्यैव निर्वेदस्य महार्त्तिविप्रयोगेर्ष्याजनितस्य निष्काशनमिति 'तत्त्वज्ञानोत्थ' इत्यादिमूलप्रतीकत उपलभ्यते। रूपगोस्वामिप्रभृतयस्तु केवलयोरौग्र्याल-स्ययोर्वारणमिच्छन्ति। 'औग्र्यालस्ये विना तेऽत्र विज्ञेया व्यभिचारिणः।' मरणादीनां साक्षादङ्गतयैव निषेधः—'साक्षादङ्गतया नेष्टाः किन्त्वत्र मरणादयः।' विस्तरस्तु नीलमणि-तत्तट्टीकाभ्याञ्च ग्राह्यः। एषां वर्ज्यावर्ज्यत्वनिर्धारणे तु स्थितिज्ञानोभयात्मको विरोधबोध एव व्यावर्त्तक इति दिक्।

अपस्मारञ्च निर्वेदं मरणञ्च विना किल ।

त्रिंशदेवात्र विज्ञेयाः शृङ्गारे व्यभिचारिणः ॥ १६६का

अपस्मारादयस्त्रयः क्रमादमङ्गलत्वात् शान्ताङ्गत्वात् करुणाङ्गत्वाच्च न गृहीताः । तत्वज्ञानोत्थो निर्वेद एव केवलं न गृहीत इति केचित् । (46)

भवन्त्येकैकशस्त्वेते स्वातन्त्र्येण पृथक् पृथक् ।

उदयः प्रशमश्चापि पृथगेव निरूप्यते ॥

द्वाभ्याञ्च बहुभिश्चापि शाबल्यं संहिता द्वयोः ।

सन्धिर्लक्षणमेतेषां यथास्वमुपदर्श्यते ॥

तात्कालिकं हेतुमेत्य तत्कालोद्भूततोदयः ।

प्रशमो निजसामग्र्या प्रागुद्भूतस्य संक्षयः ॥

अन्योन्यानुग्राहकानुग्राह्यत्वात् सह संस्थितिः ।

अन्योन्यनिरपेक्षत्वात् स्वस्वस्वातन्त्र्यतोऽथवा ।

सपक्षाणां विपक्षाणां शाबल्यं परिकीर्त्तितम् ॥ (T)

एकस्य गमनारम्भो ह्यन्यस्यागमनोदयः ।

सन्धिः स्यादथवा तुल्योदयस्तुल्यप्रशमो द्वयोः ॥१६७का

द्वयोस्तुल्यकालीन उदयः प्रशमो वा सन्धिरित्यर्थः ।

एते व्यभिचारिणः प्राबल्यादिकं विनैवैकैकशः स्वातन्त्र्येण ग्लान्यादिनामभिः पृथक् पृथक् भवन्ति । एभ्यः पृथक्पृथक्नामभ्यः पृथग् भावोदयो भावप्रशमश्च निरूप्यते । तथा द्वाभ्यां बहुभिर्भावैः परस्परमिलनं शाबल्यम्, एवं द्वयोर्भावयोः संहिता सन्धानं सन्धिः । भावस्य तत्कालोत्पन्नतैवोदयः । सपक्षाणां विपक्षाणाञ्च भावानामेकस्मिन्

---

[illegible] संज्ञया निर्दिष्टा अप्येते नोपेक्ष्याः—तथा च तत्स्वरूपप्रदर्शने भावप्रकाशकृतः 'मज्जन्तश्च निमज्जन्तः कल्लोलास्ते यथार्णवे । तस्योत्कर्षं वितन्वन्ति यान्ति तद्रूपतामपि ॥ एवं स्थायिनि निर्मग्ना ह्युन्मग्ना व्यभिचारिणः । पुष्णन्ति स्थायिनं स्वांश्च तत्र यान्ति रसात्मताम् ॥' एवमपि प्रदीपे गोविन्दठक्कुराः—'ये तूपकर्त्तुमायान्ति स्थायिनं रसमुत्तमम् । उपकृत्य च गच्छन्ति ते मता व्यभिचारिणः ॥" इति ।

---

(46) 'तत्त्वज्ञानोत्थ' इत्याद्यंशः (ग) (घ) पुस्तकयोर्नास्ति ।

**उदयाद्यैश्चतुर्भिस्तु शाबल्यमपरं भवेत् ।**

**तत् स्यात् षोड़शधा तत्र प्रस्तारक्रम इष्यते ॥ १६८का**

षोड़शधा यथा—

**सन्ध्युत्तराः सुराश्चत्वारस्तथाऽन्ये शबलोत्तराः ।**

**चत्वार एवं प्रशमोत्तरा अप्युदयोत्तराः ॥ १६९का**

प्रस्तारदर्शनम्— (T)

उ प्र श स । श उ प्र स । प्र श उ स । प्र उ श स । एते सन्ध्युत्तराश्चत्वारः ।
स उ प्र श । स प्र उ श । प्र उ स श । उ प्र स श । एते शाबल्योत्तराश्चत्वारः ।
उ श स प्र । स उ श प्र । श स उ प्र । स श उ प्र । एते प्रशमोत्तराश्चत्वारः ।
श स प्र उ । स श प्र उ । प्र श स उ । स प्र श उ । एते उदयोत्तराश्चत्वारः ।

**एवं स्याद्विंशतिः—१७०का**

केवलैरुदयाद्यैश्चतुर्भिः प्रस्तारगतैः षोड़शभिस्तु विंशतिप्रकाराः ।

**—सन्धेः सन्धिनाऽप्युदयस्य च ।**

**उदयेन शमस्यापि शमेनापि त्रिधा पुनः ॥ १७१का**

शाबल्यमिति शेषः—सन्धिशाबल्यमुदयशाबल्यं प्रशमशाबल्यमिति त्रिधा ।

काले संस्थितिः शाबल्यम् । सा संस्थितिर्द्विधा भवति—परस्परानुग्राहकानुग्राह्यत्वात् अथवा परस्परनैरपेक्ष्येण स्वस्वस्वातन्त्र्यात् । एकस्य भावस्य शमनस्यान्तर्द्धानस्यारम्भोऽन्यस्य भावस्यागमनोदयः सन्धिः, अथवा द्वयोर्भावयोस्तुल्यकालीनोदयस्तुल्यकालीनप्रशमः सन्धिः ।

अपरं पूर्वोक्तशाबल्यभिन्नं प्रस्तारक्रमप्राप्तमपरं शाबल्यं भवेत् । सन्ध्युत्तरा इति—सन्धिरुत्तरे श्लोकस्य पश्चाद्भागे येषां ते चत्वारः—तथा चायं क्रमः—श्लोकस्य पश्चाद्भागे सन्धिस्तत्पूर्वं शाबल्यं तत्पूर्वं प्रशमस्तत्पूर्वमुदय इत्येकक्रमः । एवमन्ये त्रयः । अस्यैव प्रस्तार इति संज्ञा । एवंरीत्या शाबल्योत्तरादयोऽपि ज्ञेयाः ।

---

(T) एषाऽपि प्रथाऽलङ्कारमिश्रणजनितचारुत्ववैशिष्ट्यालोचने । भेदस्योत्कटकोटितया संयोगन्यायेन वर्त्तमानत्व एकः प्रकारः, अङ्गाङ्गिभावादिकत्वे समवायन्यायेन विद्यमानताद्वयायामपरः । सन्धिशबलतयोर्भेद इत्थं लक्षितः पण्डितराजेन—'एककालमेव तुल्यकक्षत्वेनास्वादः समकालमेव विरुद्धयोरपि तुल्यरूपयोरास्वादो वा सन्धिः—पूर्वपूर्वोपमर्दैन परपरोदयः शबलता ।' एतेषां चतुर्णां मिश्रणजनिते प्रस्तारक्रमे तथा शाबल्यव्यतिरिक्तानां त्रयाणां प्रत्येकमात्मभेदेन योगेऽपि 'शाबल्य'पदमतिदिश्यते । 'सन्धेः सन्धिने'त्यादौ तु कारिकायां 'शाबल्य'पदं पूर्ववत् ऊह्यम् ।

तथैवोदयसन्धिश्च शमसन्धिरिति स्मृतेः ।
पञ्चविंशतिरेते स्युरन्योन्यस्थितिभेदतः ॥
प्रत्येकमेकैकयोगे मिथोऽङ्गाङ्गित्वभावतः ।
एकोनविंशता त्रिंशद्बिन्दुसिन्धुमतङ्गजाः (८७०) ॥१७२का

निर्वेदादित्रितयवर्जितस्य त्रिंशद्व्यभिचारिभावस्यैकोनविंशता गुणितस्यैते प्रकारा इत्यर्थः ।

एतैश्च पञ्चविंशत्या बाणग्रहमतङ्गजाः (८९५) ॥ १७३का

ते बिन्दुसिन्धुमतङ्गजाः पञ्चविंशतियुक्ताः सन्तो बाणग्रहमतङ्गजा भवन्ति ।

पुनरेतैः प्राग्गणितैस्तैः सैङ्गितनिरिङ्गितैः ॥
अलङ्कारैः शबलितैः पञ्चचन्द्रशरेन्दुभिः ।
शावलिरन भवन्त्येते बिन्दुवेदकरद्विपैः ? (बिन्दुवेदकराग्निभिः) ।
वेदाग्नि ?—(बाणाग्नि) चन्द्रसंख्यका-
(१३४८२४० ?—१३५३२४०) स्तेषां दिग्दर्शनं भवेत् (U) ।
एतान् कार्त्स्न्येन निर्वक्तुं वाणी शक्नोति नो नरः ॥ १७४का

तत्र शुद्धास्तं शयथा—

ग्लानिः—म्लानानीव मृणालानि यस्तेऽङ्गानि यदङ्गना ।
ततः कृष्णानुरागोऽस्यामन्तर्ज्वर इव स्थितः ॥ १५०

प्रवासादागतमत एव कार्श्यमालिन्यादियुक्तं प्राणनाथं कथं पश्यन्ति ? तथा च प्रवासगमनसमय एव तासां प्राणानामपि तेन सह गमनमुचितमिति भावः ।

---

(U) शबलताप्रस्तारगणनायां त्रुटिस्तु सहजानुमेया—सन्ध्यादुत्तराणां प्रत्येकमेव षट् भेदाः स्युः, न चत्वार इति । तथा च सन्ध्युत्तरप्रस्तारदर्शने 'उ श प्र स' 'श प्र उ स' इति द्वयोरेतयोरनन्तर्भावो न सम्यङ् । एवमन्यत्र । वस्तुतस्त्वयं सूक्ष्मातिसूक्ष्मभेदव्यतिकरप्रकाशः न सदा गणनापद्धतिदार्ढ्यमावेदयति, नाप्यालोचनचारुतादीतिका रीतिः—निष्प्रयोजनमेतत् । ध्वनिकिरणे मौक्तिकावल्यामेतद्दर्शि । कौस्तुभकृदनुसृतगणनायां रससामान्ये (३३ × ३२ + २६) × १५१२ भेदाः स्युः । शेषसंख्याऽऽनयने यत् गुणनदोषः स सर्वेष्वेव पुस्तकेषु वर्त्तमानः—भवेदयं ग्रन्थकारस्य दोष इति । अस्माभिस्तु मूले प्रकृतसंख्या कारिकामध्य एव वन्धनीभिर्निर्दिष्टा ।

शङ्का—प्रोष्यागतं प्राणनाथं कथं पश्यन्ति सुभ्रुवः।

इति शङ्कितचित्तेव कृष्णं पृच्छति सा सखीम्॥ १५१

मदः—रूपयौवनगर्वेण नोर्व्यां पतति ते पदम्।

तत्रापि मधुपानन्ते राधे! किं स्यादतः परम्॥ १५२

असूया—प्रमादिता चाटुकारैः स्वप्ने माऽजनि राधिका।

लभेय यावदाश्लेषं तावद्बोधो विरोधभाक्॥ १५३

श्रमः— पुष्पावचयनेनालं कुञ्जे विश्राम्य राधिके!।

श्रमः कमलपत्राक्षि! मुखेन तव कथ्यते॥ १५४

यथा वा—कायाऽपि गमनश्रान्ता तव सुन्दरि राधिके॥

आगत्य चरणोपान्तं विश्रान्तिमिव याचते॥ १५५

आलस्यम्—विलासनिःसहतनोर्निमीलन्नयनभ्रुवः।

निशान्ते नीविबन्धादि राधायाः कुरुते हरिः॥ १५६

दैन्यम्—क्वाहं क्वासौ व्रजेन्द्रकुमारो बहुवल्लभः।

कथं मय्यनुरज्येत वृथा त्वं सखि! खिद्यसि॥ १५७

चिन्ता—कृष्णो दुर्लभ एवासौ मनो बहुमनोरथम्।

इति चिन्ताब्धिमग्नायास्तरित्रं मे गरीयसी॥ १५८

मोहः—कृष्णोऽतिदुर्लभः प्रेम नवं वपुरिदं मृदु!

सहायोऽस्या न कोऽपीति मूर्च्छैवाधात् सहायताम्॥ १५९

स्मृतिः—विस्मर्त्तव्याः कथमसौ राधाया नयनोर्मयः।

यैः समुन्मूलितश्चेतः सखे! नैव प्ररोहति॥ १६०

धृतिः—धैर्य्यं भजत भोः प्राणा! गतेः कृष्णः क्व लप्स्यते।

अवधिं दिनमोक्षध्वं तदेवास्थास्थलं हि वः॥ १६१

व्रीडा—पश्य वक्षसि मे राधे! स्वमूर्त्तिं प्रतिबिम्बिताम्।

कोपात् पराङ्मुखी वेति कृष्णोक्त्या सा तु तत्पदे॥ १६२

निद्राभङ्गाज्जातो यो बोधः स मया सह विरोधभाक् बभूवेति शेषः। विश्राम्य विश्रमणं कुरु।

'अतिदुर्लभ' इत्यनेन प्राप्तययोग्यत्वं 'नवं प्रेमे'ति व्यक्तुमसमर्थत्वं, 'मृदु वपु'रिति विच्छेद-जन्यज्वालासहनेऽसमर्थत्वमिति ज्ञेयम्।

चपलता—कृष्णागमनमाकर्ण्य वनात् सायं व्रजाङ्गनाः ।

मनसोऽपि पुरश्चक्रुर्वातायनपथि दृशः ॥ १६३

हर्षः—कृष्णवंशीनिनादेन सङ्केताचरशालिना ।

रोमाञ्चैः सममुत्तस्थुर्व्रजस्त्रीणां मनोरथाः ॥ १६४

आवेगः—वेगविस्रस्तया काञ्च्या लग्नया पादपद्मयोः ।

मृणालबद्धा हंसीव काचित् कृष्णान्तिकं ययौ ॥ १६५

जड़ता—फलके लिखितं कृष्णमीक्षमाणां नवाबलाम् ।

सख्यस्तामेव पश्यन्ति गगने लिखितामिव ॥ १६६

विषादः—अयं सखि ! गतो यामः श्यामो वामः स नागतः ।

उदितो यामिनीनाथो विषीदन्ति ममासवः ॥ १६७

औत्सुक्यम्—धन्यास्ताः सखि ! भाविन्यः स्वप्ने पश्यन्ति या हरिम् ।

अभूत् कं दोषमालक्ष्य निद्राऽपि विमुखी मम ॥ १६८

गर्वः—मुनीन्द्राणाञ्च या वन्द्या ध्वजवज्रादिलाञ्छना ।

मदालिपक्षद्वारान्ते नित्याऽसौ पदपद्धतिः ॥ १६९

नयनोर्मयः कटाक्षाः, यैः कटाक्षैरुन्मूलितं मूलसहितमेवोत्पाटितश्चेतो न पुनः प्रादुर्भवति चित्तस्यालम्बनशून्यत्वमेवोन्मूलितत्वमिति बोध्यम् । मानजन्यकोपाद्यथा मयि पृष्ठं दत्त्वा त्वं पराङ्मुखी भवसि तथैव मम वक्षसि प्रतिविम्बितां तव मूर्त्तिं पश्य ।

फलके चित्रपटे लिखितं श्रीकृष्णं काचिन्नवीना बाला पश्यति । श्रीकृष्णमूर्त्तिदर्शना-ज्जड़ीभूता सा, अतएव कौतुकवशात् सख्यः श्रीकृष्णमूर्त्तिं विहाय गगनरूपफलके लिखितां मूर्त्तिमिव तामेव पश्यन्ति ।

हे सखि ! यामः प्रहरो गतः, यतो यामिनीनाथश्चन्द्र उदितः । कृष्णपक्षे चतुर्थ्यां चन्द्रोदयेन प्रहरज्ञानं जायते । वामः प्रतिकूलः कृष्णो नागतः । भाविन्यः सुन्दरस्त्रियः । असौ ध्वजादिलाञ्छना मदालये राधायाः 'खिड़की'ति प्रसिद्ध पक्षद्वारान्ते सदा विद्यमाना सती पदानां पद्धतिर्मार्गरूपा भवति—तथा च मुनीनां वन्द्यं श्रीकृष्णचरणचिह्नम्, अस्मदादयः सर्वे जनास्तदाक्रम्य गमनागमनं कुर्वन्तीत्यर्थः । विपक्षां प्रति ललिताया उक्तिरियमिति ज्ञेयम् । मदेन सौचिकेन मेघोपरि स्यूता प्रोता चपलेव ।

किंवा यथाऽहन्तद्विच्छेदे प्रेम्णा विवशा भवामि, तथैव मद्विच्छेदे प्रेम्णा सोऽपि विवशः सन् यत्र कुत्रापि भवति (47) ।

(47) 'भ्रमती'ति (क) पुस्तके पाठः ।

निद्रा—राधा निधुवनश्रान्ता निद्राति श्यामवक्षसि ।
मदनेनेव निःस्यूता चपला जलदोपरि ॥ १७०

विमर्शः--स्थितः किमन्यां किं वाऽस्य सङ्केतस्थलविस्मृतिः ।
किं वाऽहमिव विभ्रान्तः प्रेम्णेति विममर्श सा ॥ १७१

सुप्तम्—'पाअअदि पिबदि चास्स'मित्यादि ( ५म किरणे २० श्लोके )—
निद्रासुप्तयोरयं भेदः ।

कोपोऽवहित्था च यथा—
उत्तिष्ठ मुच्यतां कृष्ण ! चरणग्रहनिग्रहः ।
नैवास्मि कुपिता नापि भवान्मय्यपराध्यति ॥ १७२

उग्रता—धिक् प्रेम भवतः कृष्ण ! वक्षसः सहजः सखा ।
यत्पादालक्तकैस्तस्याः कौस्तुभोऽप्यधरीकृतः ॥ १७३

उन्मादः—इतस्ततस्त्वां पश्यामि पाणिभ्यां न तु लभ्यसे ।
किमिन्द्रजालं जानासि राधे ! किं वा मम भ्रमः ॥ १७४

अयन्तु बहुधा भवति । तथा च—

**भावान्तरसमावेशादुक्तिवैचित्र्यतोऽपि च ।**
**उत्तरङ्गतयाऽङ्गित्वादुन्मादो बहुधा मतः ॥**
**तत्र प्रलापः आलापः संलापो विप्रलापकः ।**
**अनुलापः सुलापः परिलापो विलापकः ।**
**अपलापः प्रतीलापो वैचित्र्यं दशधा गिराम् ( ) ॥१७५का**

ऊह्यान्युदाहरणानि ।

व्याधिः—भ्रमो दाहस्तथोन्मादो वर्द्धन्ते यदनुक्षणम् ।
आधिरेवावियुक्तोऽपि व्याधिरस्याः स्फुटोऽभवत् (V) ॥ १७५

सुप्तौ पाययति चेति पिबति चेति स्वप्नायितं वर्त्तते, निद्रायां तन्नास्तीति भेदो ज्ञेयः ।

हे कृष्ण ! मत्प्रतिपक्षगोपीविषयकं भवतः प्रेम धिक् यत् यस्माद्धेतुभूतात् सर्वश्रेष्ठः कौस्तुभोऽपि नीचीकृतः । कथम्भूतः ? वक्षःस्थलस्य सहजः स्वभावसिद्धः सख्य सदा तत्र धृतत्वात् ।

यस्मादनुक्षणं भ्रमादयो वर्द्धन्ते तदस्या अवियुक्तो विच्छेदरहितोऽप्याधिर्मनःपीडैव देहसम्बन्धिव्याधिः सन् स्फुटो बहिर्व्यक्तोऽभवत्, श्लेषेण वि-उपसर्गेणायुक्तोऽप्याधिर्व्याधिरभवदिति विरोधालङ्कारो ज्ञेयः ।

मतिः—गोकुलेन्द्रकुमारस्त्वं गुणरत्नाकरः स्वयम् ।
वक्तुं कर्त्तुमभिज्ञोऽसि त्वयि का चतुरायताम् ॥ १७६

वितर्कः—किं पीयूषं किमु विषं किं हिमं किमु वाऽनलः ।
अभूत् कृष्णानुरागोऽस्यां विरोधिद्वयधर्मकः ॥ १७७

त्रासः—उच्चैर्गर्ज्जति मेघौघे राधा चकितलोचना ।
त्रस्यन्ती माधवं कण्ठे भुजाभ्यां परिषस्वजे ॥ १७८

अथैषामङ्गाङ्गिभावत्वे दिग्दर्शनं यथा—

आगच्छन्मामभूः कृष्ण ! परासक्तः पथीति माम् ।
केवलं नायशः प्रेति त्वाञ्चेत्याशङ्कि मे मनः ॥ १७९

अत्र पूर्वार्द्धे ग्लानिभावोऽङ्गी शङ्का त्वङ्गम् । एवम्—

सर्वत्र समवर्त्तित्वं युक्तमेव महात्मनाम् ।
मय्येव समवर्त्तित्वं नान्यत्र पुरुषोत्तम ! ॥ १८०

अत्र मतिभावोऽङ्गी असूयाऽङ्गम् । एवमेकस्याङ्गिनो बहून्यङ्गानि भवन्ति ।

यथा — इयं गाढ़ोत्कण्ठा विषमविषदिग्धेव हृदि मे
प्रसूनेषोर्भग्ना विशिखफलिकेव स्थितवती ।
अतो मे प्रत्यङ्गं ज्वलयति तुदत्याकुलयते (V)
धुनीते मुष्णीते जड़यति च सञ्चर्वयति च ॥ १८१

अस्यां कृष्णानुरागो विरोधिद्वयधर्मको भवति—तथा चानन्ददायकत्वेन पीयूषधर्मकत्वं विच्छेदजन्यदाहकत्वेन विषधर्मकत्वञ्चेत्यर्थः। काचिन्मानिनी श्रीकृष्णमाह। त्वन्तु सर्व्वत्र समवर्त्तित्वं विहाय मय्येव समवर्त्ती नान्यत्र—श्लेषेण दुःखप्रदत्वात् समवर्त्ती यमः। 'समवर्त्ती परेतराड़्'त्यमरः।

इयं श्रीकृष्णविषयकगाढ़ोत्कण्ठाविषमविषेण लिप्तेव मम प्रत्यङ्गं ज्वलयति। कथम्भूता? कन्दर्पसम्बन्धिबाणस्य भग्ना लौहमयी फलिकेव मे हृदि स्थितवती। अभग्नायाः फलिकायाः कदाचिद्बाणनिष्काशनात्तस्या अपि हृदयाद्बहिर्निःसरणं सम्भवति, भग्नायास्तु सर्व्वथा नेति ज्ञेयम्। मुष्णीते चोरयति मां देहानुसन्धानरहितं करोतीत्यर्थः।

---

(V) एषामन्यत्र कदाऽपि संज्ञाऽन्तरैश्च गणना यथा नीलमणौ। तत्र ते वाचिकानुभावा द्वादशेति कीर्त्तिताः। अत्र तून्मादानुभावस्य व्यक्तित्वमाश्रिता इति भेदः। 'अपि'इत्त इत्यत्र श्लेषः परां चमत्कारकोटिं पुष्णाति। 'आकुलयते' इति तङ् कथमपि घटनीयः।

अत्र स्मृतिभावोऽङ्गी, मोह चपलता-ग्लानि-जड़ताप्रभृतीन्यङ्गानि। अङ्गत्वेन नैतद्भावशाबल्यम्।

अथ भावोदयादि—तत्र भावोदयो यथा—

आलीजनैर्मण्डनकेलिकाले विभूष्यमाणा वृषभानुपुत्री।

उरोगते नीलमणीन्द्रहारे खिन्ना सकम्पा पुलकाकुलाऽसीत्॥ १८२

अत्र हर्षोदयः। प्रशमो यथा—

'म्लानाऽसि किं प्रेयसि!' 'मामकीनं हृत् पृच्छ' 'पृच्छामि तदि'त्युरोऽस्याः।

स्पृश'न्निदं स्वस्थ'मिति स्म कृष्णो ब्रवीति सा नम्रमुखी बभूव॥ १८३

अत्र विषादप्रशमः। शाबल्यं यथा—

क्रोधान्धा गुरवो जनास्तरलितं दुर्वारमेतन्मनो

मर्मच्छेदकरी खलोक्तिरचना रम्यः स वंशीस्वनः।

कीनाशो भवनेश्वरस्त्रिजगतीलावण्यलक्ष्मीपतिः

प्रेमानन्दरसः स एव तनुमान् कृष्णः किमीहे सखि! (W) ॥१८२

हर्षासूयौत्सुक्यानि पृथक् पृथगेव स्थितानि।

अथ सन्धिः—'म्लानाऽसि किं प्रेयसी'त्यदौ (५म किरणे १८३ श्लोके) चतुर्थपादार्द्धे 'सा नम्रमुखी बभूवे'ति विषादनिर्गमे लज्जाऽगमः, अनयाः सन्धिः। यथा वा—

सुचिरमनुचरीभिः पाठितां कृष्णगाथां सदसि शुकवधूभिः शृण्वती गीयमानाम्।

प्रणयसदयमिकन्तासु विन्यस्यतीयं चकितचकितमन्यन्नेतमास्ये गुरूणाम्॥१८५

अत्रौत्सुक्यत्रासयोः सन्धिः।

मोहादीनामङ्गत्वेन परस्परप्राधान्याभावान्नैतेषां भावशाबल्यमिति ज्ञेयम्।

श्रीराधाऽह—मामकीनं हृन्मानसं पृच्छ। श्रीकृष्णस्तु 'हृ'च्छब्दस्य हृदयवाचित्वमभिप्रेत्याह—तत्तव हृदयं पृच्छामि।

भवनेश्वरो गृहपतिः स्वामी कीनाशः कर्षक इत्यसूया। किमीहे किं चेष्टे किं करोमीति यावत्। 'क्रोधान्धा' इत्यनेन भयम्, इत्येवंरीत्या सर्वत्र यथासंख्यं सम्बन्धो ज्ञेयः। एतानि पृथक् पृथगेव स्थितानि, न त्वङ्गाङ्गिभावतया; अतः शाबल्यमिति बोध्यम्।

---

(W) अत्र 'कीनाश'पदे श्लेषोऽपि भवितुमर्हः—कीनाशः कृतान्तः। भवनपतिः कृतान्तदारुणः ग्रामीणश्च, प्राणपतिस्तु अपरूपवेशरूपसम्पत्तिमान् नागरः कलावैदग्ध्यभूषितश्चेत्यहो महाननयोर्भेदः। स्वत एव चेतस्तदभिमुखं धावतीत्यौत्सुक्यं भावः।

एते चोक्तप्रकाराः स्वयंव्यङ्ग्या अपि भावान्तरव्यञ्जकाः स्युः । यथा—'क्वाहं गोपवधू'रित्यादौ (४र्थ किरणे ५म श्लोके)। दैन्यादिभिः प्रतिपद-व्यङ्ग्यैर्भावैरवहित्थाऽत्राव एव व्यज्यते । यथा वा—

'नाभ्यञ्जनीयं सखि ! मे भवत्या नोद्वर्त्तनीयञ्च वपुः कदाऽपि ।
'न सावधाना स्वनखेष्वसी'ति ननान्दुरग्रे निजगाद गोपी ॥ १८६

अत्र स्वगात्रलग्ननखक्षतगोपनं प्रत्यवहित्था व्यङ्ग्या, तया च न मे गृहपतेः सङ्गः कदाऽप्यभूत् येनैतत् सम्भावनीयं, तेन कृष्णसङ्गजमेवेति व्रीडा—तेनेति व्यङ्ग्या व्यङ्ग्यान्तरव्यञ्जकाश्च भवन्तीति (X)।

अथ प्रस्तारप्रकारेणोक्तानां षोड़शविधानां शाबल्यानां भेदानाह ।

तत्र सन्धुग्रसरा:—

उ प्र श स—'पादं मुञ्च' 'विमुञ्च मानिनि ! रुषं' 'प्रत्येहि, रुष्मे गता,
'श्रीगोपेन्द्रसुते स्वभावकुटिले का रोषमाकाङ्क्षति ?'
इत्यन्योन्यकथासु केशिमथने भूयः पदं धित्सति
अङ्काऽधिकधृतेन तत्करयुगेनास्यं रुदत्यप्यधात् ॥ १८७

अत्र 'पादं मुञ्चे'त्यमर्षोदयः, 'विमुञ्च मानिनि ! रुष'मिति कृष्णवाक्याकूतेन, 'रुष्मे गते'ति रोषप्रशमः । ततः 'श्रीगोपेन्द्रसुत,' इति मतिः, 'स्वभावकुटिल' इत्यसूया, 'का रोषमाकाङ्क्षती'त्यवहित्था—एभिः शाबल्यम् । 'अङ्के'त्यादिनौत्सुक्यं, 'रुदती'ति दैन्यम्—अनयोः सन्धिश्च ।

अथ श उ प्र स—'हे मुग्धाक्षि ! परिष्वजस्व, कठिना वज्रादपि त्वं, गुणास्ते ते ते क्व गता' इति क्षणमभूत्तूष्णीन्ततो निर्हतः ।

एते उक्तप्रकारा व्यभिचारिभावाः स्वयं 'क्वाहं गोपवधू'रित्यादिपदैर्व्यङ्ग्याः । एतेषामपि व्यङ्ग्योऽवहित्थादिर्व्यभिचारी । इदमादि वस्तुव्यङ्ग्यमुत्तमोत्तमकाव्यं भवतीति ज्ञेयम् ।

स्वगात्रेति—ननान्दृप्रभृतिगुरुजनं प्रति नखक्षतगोपनमवहित्था—इदं नखक्षतं श्रीकृष्णसङ्गजन्यमिति व्रीड़ोदयः । ध्वनेर्ध्वन्यन्तरोद्गारोऽयमद्भुतमोत्तमकाव्यं भवतीति भावः ।

मानिनीं श्रीराधिकां प्रति तस्या विच्छेदेनातिव्याकुलः श्रीकृष्ण आह—हे मुग्धाक्षि ! तव ते ते गुणाः सम्प्रति क्व गताः ? इत्युक्त्वा विच्छेदजन्यदुःखेन जड़ीभूतः सन् क्षणं

(X) तच्च काव्यलक्षणोद्देशनिरूपणावसरे प्राक् प्रदर्शितमेव । सर्वमेतत् ध्वनिकारभाष्यां'मनेकशः स्फुरितप्रसूनकल्पं' विद्यत इति सहृदयानामसहृदयानाञ्च चित्तवृत्तितो व्याक्रियतेतराम् । कालिदासादिकविचक्ररचनासु आदिममहाकाव्ययो रामायणमहा-

स्फूर्त्त्याऽनन्दलयेन तेन महता स्वाभाविकेनाप्यहो
तद्विच्छेददवोष्मणा च युगपद्द्वेधाऽभिभूतो हरिः ॥१८८

अत्र 'परिष्वजस्वे'त्यौत्सुक्यं, 'कठिने'त्याद्यसूया, 'ते ते गुणा' इति स्मृतिः—त्रिभिः शबलता। 'तूष्णी'मिति जड़तोदयः। 'ततो निर्वृतः स्फूर्त्त्ये'ति पूर्वपूर्वभावप्रशमः। ततः स्फूर्त्त्यनन्तर'मानन्दलयेन' 'विच्छेददवोष्मणा' च 'द्वेधाऽभिभूत' इति हर्षविषादयोः सन्धिः।

प्र श उ स—'गतो मे सन्तापो' 'भवति! हि मनस्यागत इव
प्रियस्ते' 'हा कष्टं! मनसि कथमद्यागत इति'।
'पुरः पश्चात् पार्श्वे मनसि च सदैवे'ति पुलकि-
न्यभूद्राधा पश्चादमृतविषनद्योः किमविशत् ॥ १८९

अत्र स्फूर्त्या स्वास्थ्यानुभवे 'गतो मे सन्ताप' इति ग्लानेः प्रशमः। ततः सखीवाक्यानन्तरं 'हा कष्ट'मिति विषादः, 'मनसि कथ'मित्यादि सखीं प्रत्यसूया,'पुरः पश्चादि'त्युन्मादः—एभिः शाबल्यम्। 'पुलकिनी'ति हर्षोदयः। 'अमृतविषनद्यो'रिति हर्षमोहयोः सन्धिः।

तूष्णीमभूत्। ततस्तदनन्तरं स्फूर्त्तिप्राप्तया तया सह मानसालिङ्गनेन निर्वृतः—तथा चागन्तुकानन्दजन्यलयसाम्त्विकेनैवं स्वाभाविकेन तेन महता विच्छेददवोष्मणा च युगपदेकस्मिन्नेव काले हृष्टो विषण्णश्चेति द्विधाभूतो हरिरभूदिति।

माथुरविरहेणात्यन्तव्याकुलचित्ता श्रीराधिका सखीं प्रत्याह—मयाऽद्य श्रीकृष्णो दृष्टः, ततो मे सन्तापो गतः। सख्याह—हे भवति राधे! तव प्रियो मनस्यागत इव, कुतस्तस्य साक्षाद्दर्शनम्? इति सखीवाक्यानन्तरं साऽह—'हा कष्ट'मिति विषादः। पश्चादुन्मादस्यातिशयप्राबल्योदयेन सखीवाक्यमयथार्थं मत्वा कुप्यन्ती सख्याह—हे सखि! मम मनस्येव श्रीकृष्ण आगत इति त्वया कथमुक्तम्—स तु मम पुरोऽग्रे पश्चात् पार्श्वेऽपि मनसि च सदा तिष्ठत्येव, तद्दर्शनमपि मया प्राप्यत एवेत्यागन्तुकानन्देन कदाचिदमृतनद्यां तस्याः प्रवेशः, साहजिकविरहस्फूर्त्त्या च विषनद्यां प्रवेशः। उन्मादावसानेऽर्द्धवाह्ये अविचारविधारोत्थौ यौ संयोगवियोगौ तज्जन्ययोर्हर्षमोहयोः सन्धिरित्यर्थः।

---

भारतयोस्ततोऽप्यादिमे अनादिकालतो वर्त्तमाने वेदवाक्ये चापीयं प्रथा वरीवर्त्तीति न चित्रम्। क्वचिच्छब्दतोऽपरत्रार्थतो वा व्यङ्ग्यात् व्यञ्जकानुव्यञ्जकता। तेन 'सर्वगुणौ सन्तौ सुहृदाविव सङ्गतौ। परस्परस्य शोभायै शब्दार्थौ भवत' इति राजानककुन्तलोक्तदिशा शब्दानां व्यञ्जकानुव्यञ्जकत्वम्। अर्थस्यापि परस्पराेङ्गत्वजनितचमत्कारातिशय. कदापि यथा, 'आलिङ्गन्ते गुणवति मया! ते तुषाराद्रिवाताः पूर्वं स्पृष्टं यदि किल भवेदङ्गमेभिस्तवेत्य'स

प्र ज श स—पश्चादेत्य शनैररिष्टमथनस्तां सस्वजे साहसा-
　　तत्संस्पर्शरसेन सा स्मितमुखी सद्योऽविचारादभूत् ।
　　आलिभ्यः परिशङ्कयाऽरुणमुखी 'धिग् धूर्त्ततां धूर्त्त ! ते,
　　'धिङ्के'ति त्वरयाऽपसारिततनुर्व्यावृत्त्य तूष्णीं स्थिता ॥ १९०

अत्र 'स्मितमुखी'त्यमर्षप्रशमः । 'आलीभिः परिशङ्कये'ति शङ्कोदयः । 'अरुणमुखी'ति 'धिग् धूर्त्तता' मिति 'धिङ्के'ति पुनरमर्षौग्रताग्लानिभिः शाबल्यम् । 'त्वरयाऽपसारिततनु'रिति चपलता, 'व्यावृत्त्य तूष्णीं स्थिते'ति धैर्य्यम्—अनयोः सन्धिः । एते सन्ध्युत्तराश्चत्वारः ।

स ज प्र श—अक्रूरोऽप्यागत इति मुखग्लानिहृत्कम्पभाजः
　　स्तम्भो जातश्चिरमथ सखीसान्त्वनैर्बोध आसीत् ।
　　'प्रातः कृष्णोऽप्यहह मथुरा'मित्यपूर्णे जनोक्ते
　　प्रत्यावृत्तैस्त्रिभिरथ पुनः सैव पूर्णा बभूव ॥ १९१

अत्र 'मुखग्लानिहृत्कम्पभाज' इति ग्लानि-शङ्कयोः सन्धिः, ततः 'स्तम्भो जात' इति जड़तोदयः । 'सखीसान्त्वने'रिति तत्प्रशमः । 'प्रत्यावृत्तैस्त्रिभि'रिति ग्लानि शङ्का-जाड्यैः शाबल्यम् ।

स प्र ज श—मेघालोके पुलकिततनुर्विद्युदालोकने सा
　　व्याभुग्नभ्रूस्तदुपशमने सुप्रसन्नाननेन्दुः ।
　　भूयो विद्युद्वलयकलने लोहिताक्षी मृगाक्षी
　　धारापाते रुदितमलिनीभावमूर्च्छाः प्रपेदे ॥ १९२

तस्या मानो गतप्राय एव, किन्तु सखीनामनुरोधेन मानाभास एव वर्त्तत इति दूतीवाक्येन जातो यत् साहसन्तस्मात् श्रीकृष्णस्तां सस्वजे । अविचारादिति—अहं मानिनी, मम स्मितमनुचितमिति विचारं विनैवेत्यर्थः । त्वरयाऽपसारिता श्रीकृष्णादियुक्तीकृता तनुर्यया तथाभूता सती व्यावृत्य श्रीकृष्णे पृष्ठं दत्त्वा स्थिता ।

प्रातः कृष्णो मथुरामित्येव न तु यास्यतीत्यपूर्णे जनानामुक्ते सति प्रत्यावृत्तैः पुनरागतैस्त्रिभिर्मुखग्लानिहृत्कम्पस्तम्भैर्भावैः सा पुनः पूर्णा बभूव ।

मेघस्यालोके श्रीकृष्णज्ञानात् पुलकिततनुस्तत्र विद्युदालोकने सति प्रतिपक्षरमणीज्ञानेन कोपेन व्याभुग्नभ्रूस्तस्या विद्युत उपशमने क्रोधाभावात् प्रसन्नमुखेन्दुः । धारापाते सति 'नायं कृष्णः, किन्तु मेघः' इति ज्ञानाद्रुदितम् ।

---

मेघश्लोकस्य भावच्छायाऽनुसारिणि' शङ्क्योऽरविन्दसुरभिः कणवाही मालिनीतरङ्गाणा' मित्यादि शाकुन्तलपद्ये शङ्क्यताऽनुमापककारणकार्य्यपरम्परामूलभावव्यञ्जनप्रपञ्चे । एषां

'मेघालोके' कृष्णागमनभ्रमात् 'पुलकिततनु'त्वेन हर्षः, 'विद्युदालोकनेन' विपक्षरमणीबुद्ध्याऽसूया—अनयोः सन्धिः। 'तदुपशमने 'सुप्रसन्ने'त्यसूया-प्रशमः। 'भूय' इत्यादिना 'लोहिताक्षी'त्यमर्षोदयः। 'धारापाते' सति मेघ एवायमिति 'रुदित'मिति विषादः, 'मलिनीभावे'ति ग्लानिः, 'मूर्च्छे'ति मोहः—एभिः शाबल्यम्।

प उ स श—'असाक्षादेव त्वं भवसि न हि साक्षा'दिति रुषे
प्रकुप्यन्ती कृष्णे गतवति निरागस्यपि पदम्।
त्वराऽतङ्कव्यग्रा कपटमिति तस्मिन् विदितव-
त्यहो नानाभावव्यतिकरवतीयं विजयते ॥ १९३

अत्र 'साक्षान्न भवसी'ति प्राग्जातस्यामर्षस्य प्रशमः। ततो 'रुषे कुप्यन्ती'ति रोषं प्रति कोपोदयः। पश्चात् कृष्णपादपतने 'त्वराऽतङ्कव्यग्रे'ति चपलता-शङ्कयोः सन्धिः। ततो 'नानाःभावे'ति व्रीड़ा-मद-स्मृति-शङ्का-त्रासा-दिभिः शाबल्यम्।

उ प स श—गण्डे कुण्डलपद्मरागमहसो बिम्बं प्रति (X) प्रेयसः
पारक्योऽधरराग इत्यरुणितापाङ्गी चलं वीक्ष्य तम्।
स्निग्धाक्षी 'दयितो रुषं विदितवान्नो वे'ति दोलायिता
न्यञ्चद्वक्त्रतया विचार्य्य च मृषा मानं दधे राधिका ॥ १९४

काचित् स्वक्रोधं प्रत्याह—श्रीकृष्णस्यासाक्षादेव त्वं प्रादुर्भवसि, न तु तस्य साक्षात्। इति रुषे स्वक्रोधाय कुप्यन्ती सा निरपराधे श्रीकृष्णे स्वपादं गतवति (48) सति त्वरा-शङ्काभ्यां व्यग्रा बभूव। स्वकर्त्तृकपादग्रहणे सति तस्या वैयग्र्यदर्शनेनाहो अयं मानो न क्रोधजन्यः, अपि तु कपटमिति तस्मिन् कृष्णे विज्ञापिते सतीयं व्रीड़ामदादिनानाभाव-समूहवती विजयते।

प्रेयसः श्रीकृष्णस्य गण्डे कुण्डलस्थपद्मरागकान्ते रक्तं प्रतिबिम्बं पारक्योऽधरराग इति मत्वा मत्प्रतिपक्षरमण्यधरसम्बन्धिताम्बूलराग इति मत्वेत्यर्थः। आदौ क्रोधेनारुणापाङ्गी पश्चात्तं प्रतिबिम्बं चञ्चलं वीक्ष्य 'अहो! नायमधररागः किन्तु प्रतिबिम्ब' इति ज्ञानात्

---

विलासोऽलङ्कारनिबन्धेष्वेषु द्राक् यथा लक्ष्यते न तथा काव्यनाटकादिष्विति सुविदितमेव जिज्ञासूनामित्यलं पल्लवितेन। 'बिम्बं प्रती'ति प्रतिबिम्बार्थे क्लिष्टम्।

---

(48) 'स्वपदं गृहीते सती'त्यमन्यत्र: पाठः (क) (ख) (छ) पुस्तकेषूपलभ्यते।

अत्र 'गच्छ' इत्यादिनाऽमर्षोदयः। 'चलं वीक्ष्ये'ति तस्य प्रशमः। 'कथं विदितवान्नो वे'ति शङ्कावितर्काभ्यां सन्धिः। 'न्यञ्चद्वक्त्रतये'ति व्रीड़ा; 'विचार्य्ये'ति मतिः। 'मृषा मान'मित्यवहित्था—एभिः शाबल्यम्। एते चत्वारः शबलोत्तराः।

उ श स प्र—प्रियाऽऽलोके दृष्टिं नमयति तमन्यां प्रति लस-
दृशं स्निग्धारक्तप्रचलनयना पश्यति वधूः।
पुनः पश्यत्यस्मिन् स्मितपुलकसङ्गोपनपरा
हठात्तेनाश्लिष्टा सपदि गतवाम्या समभवत्॥ १९५

अत्र 'दृष्टिं नमयती'ति व्रीड़ोदयः। 'स्निग्धा रक्तप्रचलनयने'त्यौत्सुक्य-क्रोध चपलतानां शाबल्यम्। मामनादृत्यान्यां पश्यतोति क्रोधः, 'स्मितपुलके'ति मद-हर्षयोः सन्धिः। 'सपदि गतवाम्ये'ति क्रोधादिप्रशमः।

स उ श प्र—यदालोके पूर्वं भुजग इति सम्भ्रान्तचकिता
प्रियाग्रे तामेव स्रजमुरसि सद्यो विदधती।
सखीषु स्मेरासु भ्रुकुटितरलारक्तनयना
परिष्वक्ता तेन द्रुतविशदचित्ता समजनि॥ १९६

अत्र 'सम्भ्रान्तचकिते'ति त्रासचपलताभ्यां सन्धिः। 'प्रियाग्रे तामे'वेत्या-द्यौत्सुक्योदयः। 'भ्रुकुटितरलारक्तनयने'ति 'भ्रुकुटि'रित्यसूया, 'तरले'ति चपलता, 'आरक्ते'ति क्रोधः—तै' शाबल्यम्। 'द्रुतविशदे'ति प्रशमः।

क्रोधाभावेन स्निग्धाक्षी। 'अहो अज्ञानाधीनोऽयं मत्क्रोधः श्रीकृष्णेन ज्ञात एवे'ति लज्जयाऽधोमुखत्वेन विचार्य 'अहो! स्वप्रतिभारत्वार्थमधुना मया किं कर्त्तव्यं, किन्तु कृतिममानग्रहणमेव ममोपाय' इति विचारं त्वे'त्यर्थः।

प्रियकर्त्तृकस्वकर्म्मकालोके सति लज्जया दृष्टिं नमयति पश्चान्नम्रमुखीं दृष्ट्वा तां विहायास्याः प्रतिपक्षामन्यां प्रति लसन्ती दृग् यस्य तथाभूतं श्रीकृष्णं सा वधूः पश्यति। कथम्भूता? आदौ श्रीकृष्णदर्शनस्यायं स्वभावो यत् क्रोधादिमहत्प्रतिबन्धकमप्यगणयित्वा ऽवश्यमेवानन्दं जनयतीत्यत आनन्देन स्निग्धनयना, पश्चान्मामनादृत्यान्यां पश्यतीति क्रोधेनारक्तनयना चपलनयना च। श्लोकस्था'रक्त'पदस्थक्रोधस्य बीजमाह—मामनादृत्येति।

सखीभिर्दत्तेयं माला मया यदि वक्षःस्थले धार्य्यते तदा श्रीकृष्णविच्छेदेन तप्तां सर्पवन्मामधिकं ज्वलयिष्यतीति यदा लोके चकिता पूर्वमुत्कण्ठितादशायां सर्पबुद्ध्या सम्भ्रमेण

श स उ प्र-- 'मां पश्यन्त्यास्तव किमरुणाभुग्नभग्ना दृगन्ता
'निस्पन्देऽत्राधरकिशलये गूढ़लच्च्या विवचा ।
'हासो जाताङ्कुर इव कियत्तेन चित्ते प्रमोदो
'वामत्वन्ते बहिरिति हरेर्वाचि राधा जहास ॥ १९७

अत्र 'रुणे'ति कोप:, 'आभुग्ने'त्यसूया, 'भग्ने'ति त्रपा—ताभि: शाबल्यम् । 'निस्पन्द'त्व'गूढ़''विवचा'भ्यां धृति-चपलतयो: सन्धि: । 'हासो जाताङ्कुर' इति हर्षोदय: । 'जहासे'ति कोपप्रशम: ।

स श उ प्र—'त्वं मे प्राणा:' 'कथमिव विभो !' 'त्वां विना नैव वर्त्ते'
'नाहं, या ते वसति हृदये सैव ते प्राणहेतु: ।'
'त्वं मे नित्यं वससि हृदये''ना न ने'त्यश्रुपूर्णां' (49)
कृष्णो दोर्भ्यां हृदि विनिदधे सा विसस्मार वाम्यम् (Y) ॥१९८

अत्र 'कथमिवे'ति वितर्क: ; 'विभो' इत्यसूया—द्वाभ्यां सन्धि: । 'नाह'मिति दैन्यं, 'या ते वसति हृदये सैवे'त्यसूया, 'प्राणहेतु'रित्युग्रता—एभि: शाबल्यम् । 'अश्रुपूर्णा'मित्यौत्सुक्योदय: । 'विसस्मार वाम्य'मिति कोपप्रशम: । एते प्रशमोत्तराश्चत्वार: ।

स श प्र उ—'कौटृग्वेणुमवीवदो व्रजपुरी'त्यापृष्ट एव प्रियो
रुक्मिण्या व्रजकेलिकौतुककथासंवेदनासंविदो: ।
सन्धौ बन्धुरमानस: पुनरहो रोमाञ्चनेत्राम्बुनी
संवृण्वन् प्रकृतो बभूव स पुन: पारिप्लवात्माऽभवत ॥१९९

चकिता पश्चात् श्रीकृष्णे मिलति सति तामेव मालामौत्सुक्यादश्चनि धृतवती । आदौ यस्यां सर्पबुद्धिरधुना तामेवाम्टतबुद्ध्या दधारेति सखीषु स्मेरासु सतीषु ।

हे राधे ! तथा तव निष्क्रियाधरे वक्तुमिच्छा गूढ़ाऽतएव लच्च्या यत्नेन लच्चयितु शक्या । 'कियदि'ति जनिक्रियाविशेषणम् । वार्म्यन्तु वहि: काल्पनिकम् ।

संवेदनं ज्ञानमेवं जाड्यवशादसंविद् ज्ञानाभाव:, तयो: सन्धौ बन्धुरमानस: सन् पुनश्च जाते रोमाञ्चनेत्रजले संवृण्वन् स्वस्थो बभूव ।

(Y) विभुर्निग्रहानुग्रहसमर्थ:— मयि निग्रह:, 'या ते वसति हृदये' तस्यामनुग्रह इति निग्रहानुग्रहयो: स्थानमाननिर्धारणे तवैवाव्याहतोऽधिकार इति त्वमेव । किमिति त्वं मयि

(49) 'हृदये मो न ने'ति पाठ: (क) पुस्तके । 'हृदयेऽन्या न नेत्यश्रुपूर्णा'मिति (ख) (ग) पुस्तकयो: ।

अत्र 'व्रजकेलिकौतुककथासंवेदनासंविदोः सन्धा'विति स्मृतिजड़तयोः सन्धिः । 'रोमाञ्चे'ति हर्षः, 'नेत्राम्बु' इति विषादः, 'संभ्रम'मित्यवहित्या— तैः शाबल्यम् । 'प्रकृतो बभूवे'ति तत्तत्प्रशमः । 'पारिप्लवात्मे'त्यौत्सुक्योदयः ।

श स प्र उ—लिखिष्यामीत्यग्रे स्फुरदभिनिवेशाऽऽर्त्ततरला

ततोऽश्रुस्नाताक्षी धिगिति विधिनिन्दां विदधती ।

अवष्टभ्य स्वान्तं(Y) प्रकृतिमिव याता क्षणमसौ

लिखन्ती प्राणेशं शिवशिव विसस्मार सकलम् ॥ २००

अत्र 'स्फुरदभिनिवेशे'ति स्मृतिः, 'आर्त्ते'त्यावेगः, 'तरले'त्यौत्सुक्यम्— एभिः शाबल्यम् । 'अश्रुस्नाते'ति विषादः, 'धिगिति विधिनिन्दा'मित्यसूया, तयोः सन्धिः । 'अवष्टभ्य स्वान्त'मित्यादिप्रशमः । 'विसस्मार सकल'मिति मोहोदयः ।

प्र स श उ—'विश्रान्तः सखि ! संशयः, स रमते, नैकाऽपि तस्य क्षपा

'व्यर्थे'त्यालपनप्रयोगसमये कृष्णं विलोक्यागतम् ।

हृष्टा किं श्रुतमश्रुतं किमथवेत्याशङ्कमाना नम-

द्वक्त्रा तेन विचुम्बिताऽथ सुमुखी स्पन्देन मन्दाऽभवत् ॥२०१

अत्र 'विश्रान्त' इत्यादि वितर्कप्रशमः । 'स रमते' इत्यसूया, 'नैकाऽपि तस्य क्षपा व्यर्थे'त्यमर्षः—अनयोः सन्धिः । 'हृष्टे'ति हर्षः, 'श्रुतमश्रुतं वेति' वितर्कः, 'आशङ्कमाने'ति शङ्का, 'नमद्वक्त्रे'ति व्रीड़ा—एभिः शाबल्यम् । 'स्पन्देन मन्दाऽभव'दिति जड़तोदयः ।

माथुरविरहेणात्यन्तव्याकुला काचित् स्वचित्तस्य क्षणिकविनोदार्थमग्रे प्रथमतः श्रीकृष्णं लिखिष्यामीति स्फुरन्नभिनिवेशो यस्याः पश्चादार्त्ता तरलाऽश्रुस्नाताक्षी चाभवत् । ततश्च लिखने विघ्नं दृष्ट्वोपायान्तरमपश्यन्ती विघ्ननिमित्तविधेर्निन्दां विदधती स्वान्तमवष्टभ्य मनः स्थिरीकृत्य क्षणं प्रकृतिं स्वभावं प्राप्ताऽसौ सुस्था भूत्वा प्राणेशलिखनसमये मूर्च्छोदयेन सकलं विसस्मार । शिवशिवेति खेदे । स्पन्देन मन्दा रहिता जड़ाऽभवदित्यर्थः ।

निष्ठुरोऽसीत्याकूतपूर्णमावेदनम् । तृतीयचरणे 'हृदयेऽन्ये'ति पाठे, न ते सर्वङ्कषतैव मुग्धानां शाठ्यामभाग्यहेतुरपि तु धृष्टनायकसुलभोत्कटा कपटताऽपीति सरलमन्दमात्मनिवेदनम् । अथच काकुताऽत्रयि किमपि वक्रोक्तिचातुर्यं लक्ष्यम् । अवष्टभ्य स्वान्तमिति—वस्तुतस्तु चित्तस्थैर्य्ये एव स्वप्राणेशाधिगमो नासुलभः, निर्वेदस्याथिभावे पद्यछन्देऽप्येवमादिक्रमेण बहूनां भावानां शृङ्खलान्यायेन सन्निवेशः, यथा 'अहौ वा हारे वा' इति काव्यप्रकाशोदाहृते, 'पृथ्वीरेणुरणुः पयांसि कणिकाः फल्गुस्फुलिङ्गोऽलघु'रिति दक्षिणाशाशेखरेण भक्तिरसमयी-

श प्र स उ—मनो रागज्वालाज्वरकवलितं भस्मतु चिरा-

दयं प्रेम्णे बद्धोऽञ्जलिरजनि दुःखस्य विगमः।

गुरूणामाक्षेपः खलहसितमित्यपैतु पृथुता-

मिति स्वालीवृन्दे रुदति समरोदीदथ वधूः॥ २०१

'राग' इत्युत्कण्ठा, 'ज्वाले'ति ग्लानिः, 'कवलित'मिति मोहः, 'भस्मत्वि'ति ग्लानिः—एभिः शाबल्यम्। 'अयं प्रेम्णे बद्धोऽञ्जलि'-रित्याद्यौत्सुक्यप्रशमः। 'गुरूणामाक्षेप' इति शङ्का, 'खलहसित'मित्यसूया—अनयोः सन्धिः। 'समरोदीदि'ति विषादोदयः। एते उदयोत्तराश्चत्वारः।

अथालङ्कारसाङ्कर्य्येण ये प्रकारा भवन्ति तेषामपि दिग्दर्शनम्—तत्र 'हुँ मातरि'त्यत्र (१२८ श्लोके) 'मात'रिति त्रासः, 'धूर्त्तेय'मित्यसूया, 'आप भिय'मित्यवहित्था—अत्र शाबल्यं मौग्ध्यालङ्कारसङ्कीर्णम्। तेषामपि सेङ्गितनिरिङ्गितत्वेन पुनर्द्वैविध्यमुक्तं तत्र निरिङ्गितमुदाहृतं, सेङ्गितस्य दिग्दर्शनं क्रियते। तत्र 'बाहुं दक्षिणमालिकण्ठवलय' इत्यादौ (१४० श्लोके) सेङ्गितो विलासनामाऽलङ्कारः। तत्र 'प्रौढ़मनोजविभ्रमभरैः श्रान्तेव विभ्राजते' (Y) इति श्रमगर्वयोः सन्धिः।

एवमुदयशाबल्यादीनां दिग्दर्शनं (Z) यथा—

निश्चितं परिसमापितमेव प्रेमशास्त्रपरिशीलनमालि !

श्यामनाम कथमद्य गृहीतं ह्यसयो यदखिलाः समुदीयुः॥ २०२

अत्रा'खिला ह्यस्य' इति सर्व एव प्रागनुभूता विषादव्याधिग्लान्युन्मादा-मर्षासूयाऽदयः समानकालमुदितवन्तः। एवं 'श्यामनाम्नि विरता भव,

काचित् स्वस्य देहत्यागं निश्चिन्वती सखीः सनिश्चयमाह—मन इति। अनुरागज्वाला-रूपज्वरेण ग्रस्तं मनश्चिरकालं व्याप्य भस्मतु भस्मेवाचरतु, अहन्तु न जीविष्यामीति ध्वनिः। देहं त्यक्ष्यन्त्या मम दुःखस्यापि विगमोऽजनि। इत्येवं श्रुत्वाऽलीवृन्दे रुदति सति।

प्रेमशास्त्रपरिशीलनं मया समापितमिति त्वदग्रे निश्चयं कृत्वा बहुधोक्तम्, हे आलि! तथापि मदग्रे श्यामनाम त्वया कथं गृहीतम्? यतः कृष्णनाम्नो हेतुभूतान्मम ग्लान्यादयो-ऽखिलवृत्तयः समुदीयुः।

मणिविशेषकीय कुलशेखरनृपेण प्रणीतायां मुकुन्दमालायां उत्तरार्द्धनिबद्धे पद्ये च। 'बाहुं दक्षिण'मित्यादि पूर्वपठितश्लोकेऽत्र किञ्चिन्न पाठवैलक्षण्यम् आविष्कृतम्—तत्तु लक्ष्यलक्षण-सङ्गति प्रत्यनुकूलमिति निगदेनैव व्याख्यातम्।

शान्तिं यान्तु हन्त हृदयस्य विकाराः' इति प्रशमशाबल्यम् । एवं सन्धिशाबल्यं यथा—

उन्मादमोहावपि दैन्यचिन्ते वितर्कशङ्के समकालमेव ।
दिशो दिशस्तस्य कथाप्रसङ्गे पूर्वानुभूत्या कुरुतोऽतिदुःखम् ॥२०४

'दिशो दिश' इत्यवस्थाभेदात् । तथाहि—विरहे 'उन्मादमोहौ', विप्रलब्धाऽवस्थायां 'दैन्यचिन्ते', वासकसज्जाऽवस्थायां 'वितर्कशङ्के' दुःखमेव कुरुतः, तत्तत्प्रसङ्गं त्यजतीत्यर्थः (50) ।

एवं स्वबुद्धिकौशल्यादनुमेयाः सुबुद्धिभिः ।
ग्रन्थगौरवभीत्येव मया नोदाहृताः परे ॥
अनेनैव हि मार्गेण कवयो भावकोविदाः ।
विदध्युर्भावकाव्यानि ( ) तेनायं प्रक्रमः कृतः ॥

* ॥ इत्यलङ्कारकौस्तुभे रसभावतद्भेदनिरूपणो नाम पञ्चमः किरणः ॥ *

एवमिति—पूर्वश्लोकस्यैवोत्तरार्द्धस्थले यदि 'श्यामनाम्नि विरते'त्याद्यर्द्धपद्यं पठ्यते तदा प्रशमशाबल्यं भवतीति । ***

(Z) उदयशाबल्यस्य 'समुदीयु'रिति पदादेव परामर्शः, प्रशमशाबल्यस्य 'विरता भव शान्तिं यान्त्वि'ति पदाभ्यामापातत एव प्रतीतिः । भावकाव्यानि विदधुः——न केवलं भावकाव्यनिर्मितावेव ग्रन्थकर्त्तां तात्पर्य्यमपि तु बहुधा वितन्यमानेनानेनालोचनपथा काव्यास्वादस्य गौरवज्ञानेऽपि । 'भावकाव्यानी'ति पदादस्यलङ्कार-ध्वनि-प्रतिष्ठापितकाव्यतो रसजीवातुभूतानामुत्तमोत्तमकाव्यलक्ष्याणां व्यावृत्तिरपि । इति

वैष्णवमतमाहात्म्ये श्रीकृष्णचरितनिलीनतादात्म्ये ।
अरतिर्यदि बत कलिता न स्वया सुभ्रष्टशार्थगर्ह्या सा ॥
वालिश्यतो मदभरादुत युक्तिसुक्तं निर्बध्नतो यदथवाऽत्र दुरुक्तमुक्तम् ।
एको रसः शतदुरन्तहृदार्त्तिवस्तुभोगीकृतः प्रकृतितः स निहन्तु तत्तु ॥
रागो द्वेषश्चान्तरं क्षोभजातं जातिं यातं यत्र लीनञ्च जातु ।
भावद्वैताद्वैतलीलाप्रपञ्चे साक्षीभूतः सोऽस्तु भूताक्षरात्मा ॥

इति मौक्ति[illegible]धा पूर्वार्द्धमवसितम् । श्रीः—०—

(५०) 'त्यज्यतीत्यर्थः' इत्यशुद्धः पाठः (क) (ख) (क) पुस्तकेषु ॥

## षष्ठकिरणः ।

अथ 'गुणा माधुर्य्याद्या' इति (१म किरणे १म कारिकायाम्) कृतोद्देशस्य गुणस्य लक्षणपरीक्षे करिष्यन् प्रथमतो लक्षणमाह—

**रसस्योत्कर्षकः कश्चिद्धर्मोऽसाधारणो गुणः ।**

**शौर्य्यादिरात्मन इव वर्णास्तद्व्यञ्जका मताः ॥ १७६ का**

आत्मन इति—यथा शौर्य्यादिकमात्मन एव नाकारस्य, (क) तथा माधुर्य्यादिकं रसस्यैव, न त्वाकाररूपयोः शब्दार्थयोः[1]। न ह्ययमाकारः शूरः स्थूलत्वादिति सद्धेतुः, अस्थूलस्यापि शूरत्वदर्शनात्, यथा महामतङ्गजपञ्चाननयोः। यत्तु वीरसूसुतयोः शिशुयूनोराकारगतमिव शूरत्वं तच्च वयःकृतमेव, तेन सव्यभिचारदोषादाकारस्य शौर्य्यादिगुणो न भवति किन्तु तस्य व्यञ्जक

अथ गुणरूपपदस्योद्देशलक्षणपरीक्षा इति त्रय एव व्यवहाराः, तत्र काव्यरूपपुरुषवर्णनप्रसङ्गे 'गुणा माधुर्य्याद्या' इत्यनेन (१म कारिकायाम्) गुणस्योद्देशः कृतः। सङ्क्षेपतो नाममात्रेण कथनमुद्देशः। उदाहरणं परीक्षा—साऽग्रे वक्ष्यते। अधुना गुणस्य लक्षणं करोतीत्याह—अथेत्यादिना। यथा जीवात्मन उत्कर्षजनक आत्मनिष्ठः कश्चिद्धर्मविशेष एव शौर्य्यं तथा रसस्योत्कर्षजनको रसनिष्ठः कश्चिद्धर्मविशेष एव माधुर्य्यम्। यथा नानाविधासाधारणगुणक्रिया एवात्मनः शौर्य्यव्यञ्जकाः, तथा कठोरवर्णभिन्नाः सुकुमारवर्णा एव रसनिष्ठमाधुर्य्यव्यञ्जका भवन्तीत्याह—वर्णा इति। तस्य माधुर्य्यस्य। नन्वनुमानादेव शौर्य्यमपि देहधर्म एव भवत्वित्याह—नहीति। तत्र हेतुः यतोऽस्थूलस्य सिंहस्य शौर्य्यं, तथा स्थूलस्य मतङ्गजस्य न सिंहवच्छौर्य्यम्। वीरं सूते वीरसूस्तस्याः

(क) अथ गुणदोषालङ्काराणां स्वरूपनिर्णये मुख्यतस्तावद्द्वयी गतिरभ्युपगम्यते। प्राचो दण्डिवामनादयस्तदनुसारिणः केचन नवीनालङ्कारशास्त्रविदश्च संघटनाश्रयत्वादि लौकिकन्यायमनुरुन्धाना अदृष्टस्वरूपं रसमभावपक्षे स्थापयन्तो गुणानां शब्दार्थगतत्वञ्चैवोद्घोषयन्ति। तेषामयमाशयः, गुणादिविवेचने प्रत्यक्षतः शब्दार्थचमत्कारित्वप्रतीतिरेव मुख्यं लिङ्गं, रसस्य कथञ्चिदनुभवसिद्धत्वेऽपि नित्यसिद्धस्याव्ययस्याव्यतिक्रमस्यास्य चोत्कर्षापकर्षोपकाराः कथङ्कारं सम्भवेयुः, काव्यकर्त्तॄणां काव्यकरणे शब्दार्थद्वारैव चमत्कृतिमतो प्रवृत्तिश्चात्र प्रमाणम्। अर्वाञ्चो ध्वनिकारमम्मटविश्वनाथप्रभृतयस्तु, काव्यस्य

---

(१) 'आकारो वर्णसमत्वादित्येकाधिकवाक्यांशः पाठः (ज) पुस्तके ।

आकारः । अत 'उत्कर्षकत्वं गुणत्व'मिति मुख्यं लक्षणम् । सदैकरूपस्या-नन्दस्य रसत्वेनोत्कर्षापकर्षयोः प्रमाणाभाव इति रसशब्दोऽत्र तदास्वादार्थः (क), तेन रसास्वादोत्कर्षकत्वं गुणत्वम् ।

## गुणस्य व्यञ्जका वर्णाः—१७७ का

यथाऽयं शब्दार्थव्यतिकरः काव्यतया व्यवहरणीयो रसात्मकत्वाद् इति रसात्मकत्वहेतुमतोरेव शब्दार्थयोः काव्यव्यवहारः, तथाऽयं वर्णसमूहो मधुर-रसादिव्यञ्जकः सुकुमारादित्वात् इति सुकुमारत्वादिहेतुमतामेव वर्णानां रसस्य माधुर्यादिव्यञ्जकत्वे व्यवहारः । तेन समुचितमेव वर्णानां माधुर्यादि-व्यञ्जकत्वम् (क) । ननु 'उत्कर्षकत्वं गुणत्व'मिति चेत्तदाऽलङ्काराणामप्युत्-कर्षकत्वं वर्त्तते, तेषामपि गुणत्वमस्तु । सत्यं, यथा हारादयो ह्यलङ्काराः कण्ठाद्यङ्गान्येवोपकुर्वन्ति नात्मानं, तथाऽनुप्रासस्वभावोक्त्यादयोऽलङ्काराः शब्दार्थमेव, नतु काव्यम् । एवञ्चेत्तदा श्रुतिकटुपुष्टार्थादिदोषाणां शब्दार्था-श्रयत्वेन तदपकर्षकत्वमेवास्तु, कथं रसापकर्षकत्वं, यन्मूला तेषां दोषता ?

पुत्रयोः शिशुयूनोर्मध्ये शिशोरपेक्षया युवा शूर इत्यत्र यद्देहगतशूरत्वं तत्तु वयःकृतमेव, न तु गुणकृतमित्यतो निर्गुणकृतशौर्य्य एवात्र दृष्टान्तो बोद्धव्यः । तेन स्थूलत्वरूप हेतोर्व्यभिचाराद् स शौर्य्यादिगुणो देहस्य न भवति, तस्य शौर्य्यस्य नानाविधगुणक्रिया-विशिष्ट आकारो व्यञ्जक इत्यर्थः । अत इति—रसोत्कर्षजनकताऽवच्छेदकधर्मत्वं गुणत्व-मित्यर्थः । न च 'गोपीभिः सह विहरति हरि'रित्यत्र शृङ्गाररसात्मकत्वं वर्त्तते, न तत्र काव्यत्वव्यवहारः, अतोऽत्र व्यभिचारात् कथं रसात्मकत्वस्य हेतुत्वमिति वाच्यम्, यतोऽत्र हेतौ (2) काव्यत्वजातिमत्त्व इति विशेषणं देयम् । 'गोपीभिः सह विहरती'त्यत्र काव्यत्व-जातेरभावादेव न व्यभिचार इति भावः ।

तावत् स्वरूपोपेक्षाविजृम्भितमेतदवज्ञामयं कुमतदुर्ललितमित्यरोचयमानाः स्वाश्रयोत्कर्षादि द्वारा रसोत्कर्षादिकृतजनित्वं गुणादीनां निर्दिशन्ति । प्राचीनपद्धीयानां युक्तित्रयमन्वय-व्यतिरेकाभ्यां, लौकिकन्यायाहरणीयस्य रसशब्दस्यालाचर्णिकत्वनिर्वचनेन, काव्यघटना-ऽनुकूलशब्दार्थोपस्थितिनिर्भरत्वेऽपि सव्यस्ततन्यायेन रसाव्यभिचारित्वं प्रतिपादयतां कवी-नामाशयोट्टङ्कनेन च कदर्थीकुर्वन्ति । तत्र प्रकाशकृतां मम्मटभट्टानां 'तददोषौ शब्दार्थौ

(2) एवं (ग) पुस्तके । 'यतोऽत्र हेता'वित्यादि (ख) पुस्तके, 'यतोऽत्र हेतौ काव्यजातिमात्वे विशेषणं देय,' मिति (क) पुस्तके, 'यतोऽत्र हेतौः काव्यत्वजातिमत्त्वं न' इत्यपरत्र ।

उच्यते—यथैव शौर्य्यादयो गुणास्तथैव कातर्य्यादयो दोषा अप्यात्मन एव धर्मा:, तस्यैवोत्कर्षापकर्षहेतव उपलभ्यन्ते। एवमेव माधुर्य्यादयो गुणा: श्रुतिकट्वादयो दोषा अपि रसस्यैवेति(3)।

वर्णा माधुर्य्यादिव्यञ्जका: सुकुमारत्वादिति, अत्र न तु सुकुमारत्वं कोमलत्वं, तस्य शिथिलत्वात्। यथा 'शिथिलं, मालतीमाला लोलालिकलिला (4) यथे'त्याचार्य्यदण्डिन: (क)। Kavyadarsa. Chapt 1. Verse 43

एवञ्चेदिति—तयोर्द्वरूपयो: शब्दार्थयोरपकर्षकत्वमस्तु यन्मूला रसापकर्षकत्वमूला तेषां श्रुतिकट्वादीनां दोषता। तथा च 'रसापकर्षकत्वं दोषत्व'मिति दोषलक्षणात्तेषां रसापकर्षकत्वाभावेन माऽस्तु दोषत्वमिति पूर्वपक्ष:। ननु सुकुमारत्वं यदि कोमलत्वमुच्यते तदा वर्णनिष्ठकोमलत्वं शिथिलत्वमेव भविष्यति, तच्च कठोरवर्णभिन्ने सर्वत्रैव वर्त्तते। एवञ्चेत् यत्र कवितायां लकारबाहुल्यमात्रं तत्र माधुर्य्यं नास्ति, किन्तु भवन्मते माधुर्य्यव्यञ्जका बहुतरलकारघटितकोमलवर्णा वर्त्तन्ते, इत्यत: सुकुमारत्वं न कोमलत्वमित्याह—न तु सुकुमारत्वमिति। तस्य कोमलत्वस्य शिथिलरूपत्वात्। यथा लोलालिभि: कलिला युक्ता मालतीमालेति दण्डिनोक्ते पद्ये माधुर्य्याभावेऽपि कोमलवर्णा वर्त्तन्ते, एवमत्रापि शृङ्गाररसवर्णनप्रसङ्गे।

सगुणा'वित्यादिना काव्यस्वरूपं प्रकटयतां गुणानां विवेचनमाभाषेन निर्दिशतां पुन: 'ये रसस्याङ्गिनो धर्मा:' 'आत्मन एव हि यथा शौर्य्यादय:, नाकारस्य, तथा रसस्यैव माधुर्य्यादयो गुणा' इत्यादि चाभिदधतां प्राचीनपक्षीयसङ्गतित्यागे काऽप्यनिच्छा स्फुटमेव वरीवर्त्तीति नवीनानां मध्ये तेषामनन्यतन्त्रत्वम्। कौस्तुभकृतो मम्मटमतानुसारिणोऽप्यत्र विषये न द्वैधीभावकातरा: यथोक्तमेव तै: 'शरीरं शब्दार्थौ ध्वनिरसव आत्मा किल रस' इत्याद्यादिमकारिकायाम्। एवञ्च 'रसोत्कर्षहेतुत्वे सति रसधर्मत्वं, तथात्वे सति रसाव्यभिचारिस्थितित्वम्, अयोगव्यवच्छेदेन रसोपकारकत्वमिति लक्षणत्रयं गुणानां द्रष्टव्य'मिति प्रदीपोक्ते न केषामपि तेषामाधुनिकानां विमति:। वर्णाद्याश्रयत्वपक्षोऽपि नासम्यङ् यतो विसदृशवर्णघटनेनापि गुणत्वं भावि, एवं सति वर्णादीनां व्यञ्जकत्व-

---

(3) इत ऊर्द्धं 'देहस्य काणत्वखञ्जत्वादिदोषेऽपि 'काणोऽयं देह' इति न कश्चिदपि वदति अपि तु काणोऽयं देवदत्त इत्याद्येव, न तु देवदत्तो देह:, देवदत्तस्य देहोऽयमिति प्रतीते:, तेनोपचारादेव दोषाणां रसापकर्षकत्वं, वस्तुतस्तु शब्दार्थयोरेव। एवमलङ्काराणामप्युपचाराद्रसोत्कर्षताऽस्तु तथा सति तेषामपि गुणत्वं न भूयताम्? नैवम्, तेषां शब्दार्थावलंकृत्यैवोपकारकत्वात्, कथं रसापेक्षत्वं, येनोपचारेण भवितव्य'मिति मुद्रितपुस्तके एवातिरिक्त: पाठ:।

(4) 'कलिते'ति (ख) (छ) पुस्तकयो: पाठ:।

अत्रापि—लीलाऽलसललिताङ्गी लघु लघु ललनाललाममौलिमणिः ।
ललिताऽदिभिरालीभिर्विलसति लसितस्मिता राधा ॥ १

तेन सौकुमार्य्यं नाम रञ्जकत्वम् (5) ।

यदुक्तमन्यैः, 'कर्त्तारः काव्यशोभाया धर्मा एव गुणाः स्मृताः ।
अलङ्कारास्तदुत्कर्षहेतवः सूरिरिति क्रमः ॥' इति

ललनाया उत्कृष्टमुकुटमणिः श्रीराधिका सखीभिः सह लघु लघु यथा स्यात्तथा विलसति - इत्यत्र माधुर्य्याभावेऽपि बहुमरलकारघटितकोमलवर्णा वर्त्तन्ते। रञ्जकत्वमिति —चेतसश्चमत्कारकारित्वमित्यर्थः। यथाऽद्भुतवस्तुदर्शने सति नेत्रस्य स्फारकताजनकचमत्कारो जायते तथैवाद्भुतसुकुमारवर्णानां श्रवणे सति चित्तस्य स्फारकताजनकचमत्कारो भवतीति ज्ञेयम् ।

मेव, नेतरदिति राद्धान्तः सुष्ठु । गुणालङ्कारविवेके च त्रयः पक्षाः—तत्र 'न कान्तमपि निर्भूषं विभाति वनितामुख'मिति लौकिकन्यायमुपजीवतां भामहादीनामलङ्कार एव काव्यस्वरूपे प्रधानं लिङ्गमिति व्यपदेशिनामुभयोरभेदकल्पनेत्येकः पक्षः। तथा च तदुपजीव्य वर्त्तमानानामाचार्य्योद्भटानां साकूतमुक्तौ 'समवायवृत्त्या शौर्य्यादयः संयोगवृत्त्या तु हारादयः इति गड्डलिकाप्रवाहेणैवेषां भेदः' 'केनापि प्राक्तनालङ्कारिकेण गुणालङ्कारौ कयाच्चिद् भ्रान्त्या भिन्नत्वेनोक्तौ, इतरे आधुनिकास्तु विनैव हेतुविचारं तदनुसारेण तद्भेदं वदन्ती'ति चाचार्य्यदण्डिवामनयोरुपरि कलङ्कपङ्कलेपार्थं। द्वितीयः पक्षो रीतिगणात्मवादिभिरुदितो वामनादिनतं 'यदुक्तमन्यै'रिति प्रतीकेन मूले आक्षिप्तः। चन्द्रालोकप्रतापरुद्रीयादिनिबन्धानां मतमात्मविघातकारीत्याभासस्थात्रैव मूले। 'निर्दोषा लक्षणवती सरीतिर्गुणभूषिता। सालङ्काररसानेकवृत्तिर्वाक् काव्यनामभाक् ॥' इति स्वरूपनिर्देशकारिकायाः विद्यानाथीयलक्षणस्य वा 'कर्त्तारः काव्यशोभाया धर्मा एव गुणाः स्मृता' इत्यादिकारिकया सह सम्बाधः। तृतीयपक्षस्तु नवीनानां मतानुयायी 'शब्दार्थयोरस्थिरा ये धर्माः अलङ्कारास्ते' इत्यलङ्काराणां गुणतः स्वरूपतो भेदः। वामनोऽपि क्वचिदस्फुटतयाऽत्र तदीयसम्मति-( ३।१।३ काव्यालङ्कारसूत्रवृत्ति ) मुद्घाटयामास। तथाच तत्र तट्टीकाकारास्तिप्पभूपालचरणाः—'नित्यानित्यत्वाभ्यां गुणालङ्कारभेदः सिद्ध' इति। अलङ्काराणामुपचाराद्रसोत्कर्षता, वस्तुतस्तु ते गुणोत्कर्षतोऽभिन्ना इति पक्षः 'शब्दबुद्धिकर्मणां विरम्य व्यापाराभाव' इति नयेनालङ्कारस्योपक्षीणत्वे प्रध्वस्तकल्पः। अतोऽव्याप्त्यतिव्याप्तिवारणाय वर्णानां गुणव्यञ्जकत्वमायातीत्यनूद्यते। दण्डिपद्यांशस्तु सुष्ठुशैथिल्यस्याप्यशिथिलस्य तन्मतेऽस्त्रेषगुणस्वरूपस्य निदर्शनम्-अत्रेदमवधेयम्, न तावदाचार्य्यदण्डिमतेऽत्र शिथिलत्वदोषस्पर्शः—परमयं गुणगुम्फित एवेति कश्चित्। 'ऊर्ज्जितस्फूर्ज्जे'त्यत्र प्रथमकिरणे खल्पः पाठभेदः। 'अथैकस्ये'त्यादि टीकाकृतामाक्षेपस्तत्समाधानञ्च प्रागुक्तदिशा सूचितकल्पमिति विरम्यते।

---

(5) 'व्यञ्जकत्व'मिति (क) (ग) पुस्तकयोः। (क) पुस्तके टीकायामपि स एव पाठो गृहीतः।

तदपि नातिललितम्—यतः खलु गुणालङ्कारादिमद्वाङ्निर्मितिविशेषस्यैव (6) काव्यत्वाङ्गीकारे न गुणालङ्कारादिभ्योऽन्यः काव्यनामा पदार्थोऽस्ति, नापि काव्यादन्ये गुणालङ्काराः, के कस्य शोभायाः कर्त्तारो भविष्यन्ति? किञ्च काव्यशोभायाः कर्तार इत्येकस्यैव काव्यस्य किं सर्वे गुणा शोभाकर्त्तारः, किं पृथक्? आद्येऽसमग्रगुणयोः पाञ्चालीगौड्योः काव्यशोभाकरत्वानुपपत्तिः। यदि वा पृथगेव तदा 'ऊर्जत्स्फूर्जद्गर्जने'रित्यादौ(१म किरणे ६ श्लोके) सत्यप्योजोगुणे नास्य शोभा। तेन वर्णा एव माधुर्य्यादिव्यञ्जकाः, माधुर्य्यादयो मधुररसाद्युत्कर्षका इति स्थितम् (क)।

—ते माधुर्य्यादयः पुनः (7) ॥ १७८ का

अथ कति ते इत्याह (7)—

माधुर्य्यमपि चोजश्च प्रसादश्चेति ते त्रयः।
केचिद्दशेति ब्रुवत एष्वेवान्तर्भवन्ति ते ॥ १७९ का

ते गुणाः सप्त एष्वेव माधुर्य्यादिष्वेव। के ते सप्तेति दर्शयति—

कस्यचिन्मते माधुर्य्याद्या गुणाः काव्यपुरुषस्य शोभाकर्त्तारः, अलङ्कारास्तस्योत्कर्षहेतवः, तन्मतं दूषयितुमुत्थापयति—यदुक्तमिति। एतन्मतं दूषयति—यत इति। गुणालङ्कारविशिष्टस्यैव तन्मते काव्यत्वाङ्गीकारे गुणालङ्कारावपि काव्यपुरुषान्तर्भूतावेव, तत् कथं गुणस्य काव्यशोभाकरत्वं कथं वाऽलङ्कारस्य काव्योत्कर्षकत्वं, स्वस्य स्वशोभाजनकत्वाद्यभावात्। दोषान्तरमाह—किञ्चेति। अथैकस्य काव्यपुरुषस्य सर्वे गुणा एव शोभाकर्त्तारो नान्ये (क), किंवा गुणजन्यशोभां प्रति गुणस्य कारणत्वं, गौड़ीप्रभृतिरीतिजन्यशोभां प्रति रीतेः कारणत्वमिति पृथक् पृथक् कारणत्वम्-इति पक्षद्वयं क्रमेण दूषयति। आद्य इति। नापि द्वितीयः पक्ष इत्याह-यदि वेति। पाञ्चाल्यादीनां पृथक् शोभाजनकत्वाङ्गीकारे पाञ्चाल्यादीनामपि गुणत्वापत्तिः, यदि तत्र गुणत्ववारणाय 'पाञ्चाल्यादिरीतिभिन्नत्वे सति काव्यशोभाकरत्वं गुणत्व'मित्युच्यते तदा 'ऊर्ज्जत्स्फूर्ज'दित्यत्रौजोरूपगुणेऽव्याप्तिः, तत्र काव्यशोभाजनकत्वाभावात्—माधुर्य्यप्रसादगुणयोरेव काव्यशोभाजनकत्वं, न तु ओजोगुणस्येति ज्ञेयम्।

पुनः स्वमतमाह (ख)— ते इति।

(6) '—मद्वाङ्निर्मितिः काव्यमिति विशेषस्यैव काव्यत्वाङ्गीकार' इति (ख) पुस्तकेऽन्यः पाठः।

(7) 'अथ के ते माधुर्य्यादयो गुणा' इत्यसमाप्तश्लोकांशकारिकावर्जितः सुतरामसङ्गतः पाठः (ख) (छ) पुस्तकयोः।

अर्थव्यक्तिरुदारत्वं श्लेषश्च समता तथा।
कान्तिः प्रौढ़िः(ख) समाधिश्च सप्तैते तैः समं दश ॥१८०॥का

तैर्माधुर्यादिभिः। सप्तानां लक्षणमाह—

प्रसाद एवौजोमिश्रशैथिल्यात्मा भवेद्यदि।
तदाऽर्थव्यक्तिरिष्येत, विकटत्वमुदारता॥
पदानामेकरूपत्वं सन्ध्यादावस्फुटे सति।
श्लेषो, मार्गाभेद एव समतो,ज्ज्वलत्वमेव हि।
कान्तिः, साभिप्रायतया समासव्यासयोः सतोः॥
वाक्यार्थे पदविन्यासः पदार्थे वाक्यनिर्मितिः।
प्रौढ़ि,रारोहावरोहक्रमः समाधिरिष्यते॥ १८१ का

तदन्तर्भावे युक्तिं वक्ति।

तेष्वेवान्तर्भवन्त्येक एके वैचित्र्यबोधकाः।
एके दोषपरित्यागाद्‌गतार्था इति (8) नो दश ॥१८२का
अर्थव्यक्तिः प्रसादान्तः प्रौढ़िर्वैचित्र्यबोधिका ॥१८२(क) का

न तु गुण इत्यर्थः (ख)।

समता तु क्वचिद्दोषः—१८३ का

समता तु क्वचिद्दोषोऽपि भवति। कुत इत्याह—

वैषम्यं यत्र वाञ्छ्यते।
सजातीयविजातीययुगपद्वर्णने सति॥ १८४ का

सप्तानामिति—परमतसिद्धानां सप्तानां लक्षणमात्रं कृतं, न तु तेषामुदाहरणम्—अतस्तद्विना लक्षणव्याख्याऽपि सम्यक्तया न भविष्यतीति। यत्र न तथेति—न वैषम्यमभीष्टं

(ख) प्रौढ़िरिति-दण्डिवामनादिगणिते गुणगणे गृहीतस्य सौकुमार्य्यस्य स्थलेऽस्योद्देशः। गृहणबीजन्तु अर्थगुणविवेचनप्रस्तावे वामनेन 'अर्थस्य प्रौढ़िरोजः' (३।२।२) इति कृतनिर्द्देशस्यौजसो विभेदप्रदर्शनमुररीकृत्येति ज्ञेयम्। माधुर्य्यसौकुमार्य्ययोः प्राचीनपरिलक्षितयोर्लक्षणे नवीनानां भेदानुपलब्धिरपीह प्रमा। स्वमतमाहेति—स्वरसमेवेति वक्तुं युक्तम्। एतन्मतन्तु कौस्तुभकृता प्रकाशकृदादीननुसरता दर्शितम्। गुणानां

(8) '—त्यागाद्गतार्था' इति विपरीतः पाठः केवले मुद्रितपुस्तके।

यत्र परस्परविसदृशयोर्युगपद्वर्णने वैषम्यमभीष्टं तत्र समता दोष एव। यत्र न तथा तत्र गुणः। यथा—

ऊर्द्धोर्द्धस्फूर्ज्जिगोवर्द्धन (ख) शिखरिवरोद्धारसारोद्धुरोऽहं
प्राङ्के पङ्केजनेत्रे! तव कुचमुकुलालोकने जातकम्पः।
उद्दण्डे कालियस्य स्फुटविकटफणामण्डले ताण्डवाढ्यः
सोऽयं (१) राधेऽभिभूतस्तव तरलितया हन्त वेणीभुजङ्ग्या॥ २

इत्यादिष्वसमतैव गुणः।

**ग्राम्यकष्टत्वादिहानादपारुष्योररीकृतौ।**
**औज्ज्वल्यरूपा या कान्तिः सा माधुर्य्यान्तरस्थिता(ख)॥**
**अन्ये त्वोजसि वर्त्तन्ते तेन ते न पुनर्दश॥ १८५ का**

अन्ये श्लेषसमाधुदारता ओजस्येवान्तर्भवन्तीत्यर्थः। नन्वेवं चेत् क्लिष्टत्वदोषनिरसनेनैव प्रसादगुणस्यापि माधुर्य्य एव लभ्येः किं प्रसादगुणस्य पृथङ् निर्देशः? नैवं, प्रसादस्य स्वतःसिद्धत्वात् कान्तर्भावः? अन्यथाऽनवस्थाप्रसक्तेः।

तत्र समता गुण एव। वैषम्यवर्णनमेवाह—ऊर्द्धोर्द्धेति। ऊर्द्धोर्द्धस्थितान् मेघादीनपि स्पृशति यो गोवर्द्धनो गिरिश्रेष्ठस्तस्योद्धारे सारोद्धुरः श्रेष्ठभारवाहकोऽहम्। प्राङ्के प्राङ्कविशिष्टो भवामीत्यर्थः।

ग्राम्यत्वकष्टत्वादिदोषाभावादपारुष्यस्याकठोरत्वस्याङ्गीकृतौ या कान्तिः सा माधुर्य्यस्यान्तर्भूता न पृथक्। नैवमिति—यथाऽयं घटोऽयं पट इति पृथक् पृथग्व्यवहार एव घटपटयोः पृथक्त्वे प्रमाणं तत एव नैकस्मिन्नन्यस्यान्तर्भावः सम्भवति, तथैवायं प्रसादगुणोऽयं माधुर्य्यगुण इति पृथग्व्यवहार एव पार्थक्ये प्रमाणमित्यर्थः—अन्यथा सर्वेषां पदार्थानां सर्वेष्वन्तर्भावप्रसक्तेरनवस्था स्यादिति ज्ञेयम्। नन्वेवं चेत् सप्तानां गुणानामपि माधुर्य्यादिष्वन्तर्भावो न सम्भवति तेषामपि पृथक् पृथग्व्यवहारा वर्त्तन्त एव इत्यत आह—क्लिष्टेति। उभयमिति—त्रिविधत्वं सप्त? (दश-) विधत्वमित्युभयमित्यर्थः।

त्रैधत्वमेवोपपादयन्त उद्योतकृतो नागोजीभट्टा इत्थमेषां रसधर्मत्वमपि प्रतिष्ठापयामासुः—'सामाजिकानां नवरसजन्यास्तिस्रोऽवस्था द्रुतिर्विस्फारो विकाशश्चेति। तत्र शृङ्गारशान्तकरुणेभ्यो द्रुतिश्चित्तस्य। वीररौद्रवीभत्सेभ्यो विस्तारस्तस्य। हास्याद्भुतभयानकेभ्यो विकाशश्चेति। विकाशश्च हास्ये वदनस्य अद्भुते नयनस्य भयानके द्रुतापसरणरूपो गमनस्य। स च क्वचिद्विस्तारेण युक्तः विभाववैचित्र्यात्। प्रसादस्तु सर्वेषामाधिक्यकारी-

(१) 'सोऽहं'मिति (क) (ख) (छ) (ज) पुस्तकेषु पाठः।

किञ्च मतान्तरकथनमेवैतत्, तेन दशविधत्वं न दुष्टमित्युभयमस्माकमभीष्टम् (10) (ख) ।

अथ माधुर्य्यादयः के ते इत्याह—

रञ्जकत्वं हि माधुर्य्यं चेतसो द्रुतिकारणम् ।
सम्भोगे विप्रलम्भे च तदेवातिशयोचितम् ॥ १८६ का

चकारात् करुणादौ च (ग) ।

चेतोविस्ताररूपस्य दीप्तत्वस्य हि कारणम् ।
ओजः स्याद्वीरबीभत्सरौद्रेषु क्रमपुष्टिकृत् ॥ १८७ का

दीप्तत्वं शैथिल्याभावः गाढ़तेत्यर्थः । तच्च चेतसो विस्तारहेतुर्विस्फारकारणम्—क्रमाद्वीरादिषु पुष्टिमर्हतीत्यर्थः ।

श्रुतिमात्रेण यत्रार्थः सहसैव प्रकाशते ।
सौरभ्यादिव कस्तूरी प्रसादः सोऽभिधीयते ॥
स सर्वेषु रसेष्वेव सर्वास्वपि च रीतिषु ।
उपयुक्तः (ग)—१८८का

स प्रसादनामा गुणः ।

व्यञ्जकाः स्युर्वर्णाश्च रचना अपि ॥ १८९

तेषामित्यर्थात् । तत्र वर्णानां व्यञ्जकत्वमिदानीं दर्श्यते, रचनाया रीतिनिरूपणे दर्शयितव्यम् ।

ते माधुर्य्यादयः के किंस्वरूपा इत्यपेक्षायां लक्षणमाह—रसनिष्ठमाधुर्य्यं रञ्जकत्वम् । सौरभ्यादिति—यथा कस्तूरीगन्धो वस्त्रादिभिराच्छतोऽपि सहसा कस्तूरीं प्रकाशयति

त्वव्यस्यात्रयरूपकार्य्यवैचित्र्यनियामकतया कारणत्रयमेव कल्प्यते—कारणवैचित्र्येण त्रयाणामेव स्फुटमुपलम्भात्, अवान्तरगुणानामङ्गाङ्गिभाववैचित्र्येणानन्त्यादस्फुटत्वाच्चेति भावः ।' न तु गुण इति—न गुणान्तरमिति यावत् । एतेषां प्राचीनोक्तानां क्वचिद्दोषत्वमिति यत्तैरेव वामनादिभिर्वैशेषिकगुणत्वेन स्वीकृतिमुपलभ्यीक्रत्य । गोवर्द्धनेति—अत्र यतिभङ्गो लक्ष्यः । उभयमेवेति—मतान्तरकथनं नानवद्यमित्यलम् ।

(10) 'दुष्टमित्युभयमेवे'त्यादि (क) (ङ) पुस्तकयोः पाठः, '—मित्युभयविधत्वं'मिति (ख) पुस्तके ।

**स्पर्शाः खपञ्चमाधःस्था अटवर्गा लघू रणौ ।**

**माधुर्य्यव्यञ्जका वर्गा नैकरूपाः क्रमेण चेत् ॥ १६०का**

नैकरूपा इति पृथक् पृथग्वर्गजा एव । अटवर्गा इति टवर्गः केवलो वा खपञ्चमाधःस्थो वा ओजस्येव । उदाहरणम्—

विधाय पुष्पावचयं चलन्त्या मञ्जीरनादो मदखञ्जनाक्ष्याः ।
मन्दोऽप्यमन्दं हरिमञ्जनाभं कुञ्जेशयं जागरयाञ्चकार ॥ ३

नैकरूपाः क्रमणेत्येकरूपत्वं दूषणम् । यथा—

कान्ते निशान्त एकान्ते पादान्ते क्रान्तिमन्तति ।
अञ्जस्ते गञ्जनव्यञ्जी मञ्जीरो मञ्जुभिः रूनैः ॥ ४

**इत्यादेः खल्वनुप्रासरीतिरूढस्य वर्त्मनः ।**

**माधुर्य्यबहुलत्वेऽपि गौड़ीया रीतिरिष्यते (ग)॥१६०(क)का**

किन्तु—जृम्भते तव कञ्जाक्षि ! कान्तिः काञ्चनबन्धुरा ।

अम्बुदोपरि शम्पेव नन्दनन्दनवक्षसि ॥ ५

तद्वदित्यर्थः । तेषां माधुर्य्यादीनाम् । स्पर्शा इति—कादयो मकारपर्य्यन्ता वर्णाः स्पर्शा इत्यर्थः । तत्र खस्य कवर्गस्य पञ्चमो ङकारः तदधःस्थाः ङ्क-ङ्ख-ङ्ग-ङ्घा वर्णा माधुर्य्यव्यञ्जका भवन्ति—एवं चवर्गादपि ज्ञेयम् । अटवर्गा इति—टवर्गास्तु सर्वथैव न माधुर्य्यव्यञ्जकाः । रेफ-णकारौ लघू एव माधुर्य्यव्यञ्जकौ ; चेत् यदि ते पञ्चमाधःस्था वर्णा एकरूपा न भवन्ति तदा माधुर्य्यव्यञ्जकाः- यदि चैकस्मिन्नपि काव्ये ङ्क ङ्ख-ङ्गादिसजातीयवर्णानां धारावाहिकतया निवेशस्तदा दोष एव—उदाहरणे व्यक्तीभविष्यति । तस्मात् पृथग्वर्गजा एव पञ्चमाधःस्थसंयुक्तवर्णा ग्राह्या, न त्वेकवर्गजा इत्यर्थः । एकवर्गस्थसजातीयवर्णानां निवेशो दोषो यथा 'कान्ते निशान्त' इति । कान्ते श्रीकृष्णे एकान्ते निशान्ते मन्दिरे त्वामन्विष्य पदान्ते क्रान्तिं श्रममन्तति बध्नाति सति । अति अदि बन्धने धातुः—श्रमं प्राप्तवतीत्यर्थः । त्वन्मञ्जीर एवाञ्जः शीघ्रन्तव गमनस्यातैव त्वं वर्त्तस इत्याक्षेपस्य व्यञ्जी प्रकाशकः ।

अनुप्रासरीतियुक्तस्यास्य मार्गस्य मधुरवर्णबहुलत्वेऽपि गौड़ीया रीतिरेवात, न तु रसनिष्ठं माधुर्य्यमिति ज्ञेयम् । ग्राम्या विद्युदिव । तत्तेदमेव माधुर्य्यमयमेवानुप्रास इति

(ग) चकारात् आदिपदेन प्रान्तोऽपि गृहीतः । इदानीं रसनिष्ठधर्मत्वमेषां दर्शयति । त्रिधा विभागस्य तत्वमूलमुद्द्योतकृदुक्तमत स्मरणीयम्, तच्च प्राक् दर्शितम्, प्रसादगुणस्य रसविशेषातिरिक्तत्वम् । प्रसादस्य खलु वाक्यनिष्ठो गुण इत्यन्याभ्यां भिन्न इति जयदेवादिमतम् । गौड़ीया रीतिरिति—अयमुपविभागो रीतिगुणस्वरूपनिरूपणकालुष्यकलितोऽनवस्थापादकस्य,

इत्यादौ शुष्कमाधुर्य्यम् । अथौजोव्यञ्जका वर्णा उच्यन्ते—

**योग आद्यतृतीयाभ्यां चेद्द्वितीयचतुर्थयोः ।**

**उपर्य्यधो द्वयोर्वाऽपि रेफेण सह चेद्युतिः ॥**

**शषौ टवर्गश्चानन्त्यो वृत्तिदैर्घ्यन्तथौजसि ॥ १६१ का**

कक्खटं, रुक्खेला, अच्छं, कच्छः उत्थानं, ककुप्फेनः (ग) । एवं रग्घासः, उज्झितं, वज्रः, ककुब्भासः, अर्कः, शक्रः, दुर्ग्रहः । शषौ स्पष्टौ । टवर्गश्चानन्त्य इति किम् ? रुट रुड् । उदाहरणम्—

ऊर्द्ध्वोर्द्ध्वं सर्वमूर्द्धां मुकुटतटलुठद्रत्नदीप्तिच्छटाभि

श्छन्नं यत् पादपीठं प्रकटितपटिमप्रौढ़िगर्भैर्महोभिः ।

गुणालङ्कारयोरविवेको न वाच्यः। वर्णानामन्तरमूर्ह्नत्वेनैव शृङ्गारोत्कर्षान्माधुर्य्यम्, अनुप्रासस्तु तत्तदनपेक्षोऽपि सिध्यतीत्यनयोर्भेदोपलब्धेः ।

योग इति—आद्येनाक्षरेण द्वितीयाक्षरस्य योगः, एवं तृतीयाक्षरेण चतुर्थाक्षरस्य । रेफेण सह वर्णस्योपरि युतिर्योगो यथाऽर्कः तथा वर्णस्याधो योगो यथा शक्रः, उपर्य्यधोदेशे च रेफेण योगो यथा दुर्ग्रहः। अनन्त्य इति—अकारादिस्वरसहिता एव (११) टटादयो वर्णा ओजोव्यञ्जकाः, न तु अकारादिरहिता रुट् रुडिति वर्णाः।

न तथाऽक्षरसम्मतोऽपि। नेत्थं सूक्ष्मेक्षिकेति निपुणमेव टीकाकाराणां कस्यचिन्मतत्वेनानादेयतासूचनम्। गुणानां मुख्यत्व एव रसनिष्ठत्वं, रीतीनान्तु पदसङ्घटनाऽङ्गद्वारेति भेदः। मूलोदाहृतेऽनुप्रासवत्पदकदम्बकघटनादेव विच्छित्तिरिति रीतित्वेन व्यपदेश एव न्याय्यः, 'प्राधान्येन व्यपदेशा भवन्ती'ति न्यायात्। अत्रोदाहरणे एकरूपशब्दप्रयोगादेचित्यहानितो न माधुर्य्य गुणः। कक्खटमिति कठिनस्य नाम। रुचो दीप्तेः खेला। ककुप्फेन इत्यत्र शाकपार्थिवादिसमासाश्रयेण कथञ्चिदर्थबोधः। रुचो हासः, ककुभां दिशां भासो दीप्तयः। झयो होऽन्यतरस्यामिति (८।४।६२) पूर्वसवर्णादेशः। इयमेव दण्डिवामनाद्यालङ्कारिकसिद्धाऽसमग्रगुणा गौड़ीया रीतिः। गौड़ीयादिसंज्ञानां देशसिद्धिमूलत्वेऽपीयं प्रथा गौड़ीयकविचक्रचूडामणेरस्य न सदा सम्यक् समञ्जसेति यथा तथाऽस्माभिरितरत्र सूचिता। यद्वाधस्तात् कौस्तुभकर्त्ता गाढ़बन्धलक्षणस्यौजसः पुनर्दीप्तमध्यमन्दत्वाभिधै रुद्धतमध्यममधुराख्यैर्वाऽधस्तादुपदर्शितैर्भेदैरनन्तविभागस्तत् कश्चित् प्राचीनमहाकविपद्यलक्ष्याणां समाधानाय कश्चिज्जयदेवाद्यर्वाचीनकविगीतकवितानां गौरवरक्षामात्रमिषकमेवेति च मन्यामहे।

(११) 'अकारादिसहिता एव' 'अकारादिरहिता एवेति' पाठौ यथाक्रमं (क) (ग) पुस्तकयोः, अन्यत्र 'अकारसहिता एव' 'अकाररहिता एवे'ति पाठ उपलभ्यते। द्वितीयपक्षे तु 'अकार'पदं स्वरोपलक्षणमिति ज्ञेयम्।

शर्वादिगर्वखर्वीकरण(12)-चणभुजादण्डशौटीर्य्यचण्डः
शिष्टाभीष्टं क्रियाच्छ्रचुरघनघृणाविक्रमश्चक्रपाणिः ॥ ६

एष ओजोमार्गः ।

**अटवर्गैररेफैश्च क्खग्घाभ्याञ्च विवर्जितैः ।**
**अयुक्तश्च महाप्राणैर्मध्यतां प्रतिपद्यते ॥ १६२ का**

मध्यतां मध्यौजस्त्वम्(ग) । क्खग्घाभ्यामिति—अच्छादिवर्जनं न कार्य्य-मित्यर्थः । महाप्राणैरिति हकारेण सह वर्गचतुर्थैस्तैः, अयुक्तैः केवलैरित्यर्थः, चकारात् क्वचित् संयुक्तैश्च ।

**शृङ्गारेऽप्येष चारुः स्यात् करुणादौ भवेन्न वा ।**
**माधुर्य्यव्यञ्जकैर्वर्णैर्युक्तश्चेदतिसुन्दरः ।**
**गाढ़बन्धः स आख्यातः पाठे वदनपूर्त्तिकृत् (घ)॥१६३का**

यथा—कस्तूरीतिलकायितं त्रिजगतीसौभाग्यलक्ष्म्या घन-
स्निग्धश्याममयातयाममधिकश्लाघ्यं मुहुः पातु वः ।
आभीरीस्तनकुम्भकुङ्कुमरसासङ्गेन सौगन्ध्यभाग्—
ब्रह्मानन्दमहासुधाम्बुधिरहःसन्दोहदोहं महः ॥ ७

ऊर्द्धोर्द्ध्वं यस्य पादपीठं सर्वेषां देवराजप्रभृतीनां मूर्द्धां मुकुटसम्बन्धिरत्नदीप्ति-च्छटाभिश्छन्नं प्रकटितपटुतायाः प्रौढ़िर्गर्भे येषां तैर्महोभिस्तेजोभिः करणैर्महादेवादेरपि गर्वस्य खर्वीकरणे ख्यातो यो भुजादण्डस्तस्य शौटीर्य्ये पराक्रमे प्रचण्डश्चक्रपाणिः शिष्टाना-मभीष्टं क्रियाच्छ । कथम्भूतः ? प्रचुरो मेघतुल्यकृपाविक्रमो यस्य सः ।

एष मध्यमौजोव्यञ्जकवर्णः करुणरसे कस्यचिन्मते चारुः स्यात् कस्यचिन्मते न । ब्रह्मा-नन्दस्वरूपमहासुधाम्बुधेः सकाशादपि यो रहःसन्दोहो रहस्यप्रेमानन्दसमूहस्तं पूरयति यन्महस्तेजःस्वरूपं वस्तु तद्वो युष्मान् पातु । कथम्भूतम् ? मेघतुल्यस्निग्धश्यामं पुनरयातयाममगतरसमेकरसमित्यर्थः । पुनः त्रिजगतीसौभाग्यसम्पत्तिरूपनायिकायाः कस्तुरी-तिलकायितम् ।

(घ) 'गाढ़बन्धत्वमोज' इति वामनकृतं शब्दगुणत्वेन निर्द्दिष्टस्यौजसो लक्षणम् । 'बन्धः पदरचना, तस्य गुणा ओजःप्रभृतय' इति कविप्रियायाम् । स च बन्धो दृढ़मिश्रशिथिलभेदेन त्रैविध्यमापन्नो यथायथं चमत्कारमावहतीत्याकरे सूचितम् । अत्र सौन्दर्य्यञ्च न पाठधर्म्मवशेन,

(12) —'करणचलभुजे'त्यशुद्धः पाठः केवलम् (क) पुस्तक एवोपलभ्यते ।

यथा वा—सान्द्रानन्दघनं घनाघनघटास्निग्धोज्ज्वलश्यामल-
ज्योत्स्नाजालजटालमालय इव प्रेम्नास्त्रिलोकीश्रियः ।
कृष्णस्याङ्गमनङ्गसङ्गरलसद्गोपाङ्गनाऽपाङ्गक-
व्यासङ्गेन तरङ्गितं मम मनः सङ्गित्वमङ्गीक्रियात् ॥ ८

**प्रसादस्य व्यञ्जिका तु केवलं रचना मता ।**
**न तत्र वर्णप्राधान्यं प्रसादो विशदार्थता ॥ १९४ का**

सर्वेष्वेव रसेषु प्रसादस्योपयुक्तत्वान्न वर्णगतनियमः । उदाहरणम्—
कोपे यथाऽतिललितं न तथा प्रसादे वक्त्रं विधे ! सततमातनु मानमस्याः ।
इत्याकलय्य दयितस्य वचोविभङ्गीं राधा विवर्त्तितविनम्रमुखी बभूव ॥ ९ ॥

**यद्यपि गुणपरतन्त्रा रचनाद्यास्तदपि वक्त्रादेः (घ) ।**
**औचित्यात्तदधीना भवन्ति तस्माद् गुणोऽपि तदधीनः॥१९४(क)का**

तस्माद्धेतोः, वक्त्रादेर्वक्तृवाच्यबोद्धव्यानां, तदधीनो वक्त्राद्यधीनः । उद्धते वक्तरि उत्तमोजो धीरोदात्ते वक्तरि मध्यममोजो धीरललिते वक्तरि माधुर्यं, प्रसादस्तु सार्वत्रिक इति ।

* इत्यलङ्कारकौस्तुभे गुणविवेचनो नाम षष्ठः किरणः ॥ *

यथा वेति—कन्दर्पयुद्धे लसद्गोपाङ्गनायाः स्निग्धापाङ्गव्यासङ्गेन चञ्चलं त्रिलोक्याः श्रीभारूपस्य श्रीकृष्णस्याङ्गं कर्त्तृ मम मनःसङ्गित्वमङ्गीक्रियात् मम मनसि सदा स्फुरत्वित्यर्थः; कथम्भूतम् ? सान्द्रानन्दनिविड़ं पुनश्च वर्षुकमेघघटातुल्यस्निग्धश्यामलज्योत्स्नासमूहैः जटालं युक्तमित्यर्थः ।

विशदार्थता—अत्र कष्टं विनाऽर्थबोधकता प्रसादः, तस्य व्यञ्जिका रचनैव ।

हे विधे ! अस्या राधाया मानं सदा विस्तारयेति श्रीकृष्णस्य वचसो भङ्गीमाकलय्य ।

यद्यपीति सूत्रम् । औचित्यादिति—यथा वक्तुरधीना रचनाद्यास्तद्युक्तपदोऽप्योजो-माधुर्यादिगुणादयोऽपि तथा भवितुमर्हन्तीति । * *

अपि तु सहृदयसंविदालम्बनतया विशेषापेक्षत्वेन । बन्धघटितस्य चमत्कारस्य पाकशय्यादि-विषयतत्त्वस्य च स्वरूपं रीतिकिरणविवेके प्रपञ्चयिष्यते । 'सान्द्रे'त्यत्र 'प्रेम्नामालय' इत्यंश-ष्टीकाकृता न व्याख्यातः सहजसिद्धत्वात् । 'कोप' इत्यादि श्लोके चतुर्थकिरणतो यत् पाठ-वैलक्षण्यं न तत् चतिकृत् । औचित्यादित्यादि—औचित्यविचारचर्चादिष्वस्य विस्तर इति—

## सप्तमः किरणः ।

अथ 'उपमितिमुखोऽलङ्कृतिगण' इति ( १मकारिकायाम् ) यदुक्तं तत्र मुखशब्दस्य मुख्यार्थत्वादमुख्यस्य प्राप्तौ प्रथमतोऽमुख्यं शब्दालङ्कारमेवाह—

**एकेनार्थेन यत् प्रोक्तमन्येनार्थेन चान्यथा ।**
**क्रियते श्लेषकाकुभ्यां सा(१)वक्रोक्तिर्भवेद्द्विधा (क) ॥**
**श्लेषोऽपि च भवेद्द्वेधा सभङ्गाभङ्गभेदतः ॥ १९५ का**

श्लेषेण काक्वा वा, श्लेषश्च द्विधाऽभङ्गः सभङ्गश्चेति । अत्राभङ्गश्लेषेण—

'कस्त्वं श्याम !' 'हरि'-'र्बभूव तदिदं वृन्दावनं निर्मृगं'
'हंहो नागरि ! माधवोऽस्मय'-'समये वैशाखमासः कुतः ?'
'मुग्धे ! विद्धि जनार्दनोऽस्मि' 'तदियं योग्या वनेऽवस्थिति'-
'र्बालेऽहं मधुसूदनोऽस्मि' 'विदितं योग्यद्विरेफो ( क ) भवान्' ॥ १

अथात्रालङ्कारो द्विविधोऽर्थालङ्कारः शब्दालङ्कारश्चेति। तत्र पूर्वोक्त "उपमिति-मुखोऽलङ्कृतिगण" इत्युपमितिप्रभृत्यर्थालङ्कारो मुख्यः, वक्रोक्त्यादिशब्दालङ्कारो गौणः। अत आदौ गौणालङ्कारमेवाह—अथेत्यादिना।

अभिधावृत्त्यैकेनार्थेन यदस्तु प्रोक्तं श्लेषकाकुरूपेण व्यञ्जनावृत्तिभ्यां प्रोक्तेनान्येनार्थेन तदस्त्वन्यथा क्रियते तत्र स्थले शब्दनिष्ठो वक्रोक्त्यलङ्कारो ज्ञेयः ।

श्रीराधिका आह—हे श्याम! त्वं कः! अभिधावृत्त्या प्रत्युत्तरमाह—हरिरिति। पुनः श्लेषरूपव्यञ्जनावृत्त्या 'हरि'शब्दस्य सिंहपरत्वमभिप्रेत्य श्रीराधा पूर्वमन्यथा करोति —बभूवेति। जनानर्द्दयतीति श्लेषेण जनपीड़कः, अतो वनेऽवस्थितिस्तव योग्यैव। द्विरेफो भ्रमरः, श्लेषेण द्वौ रेफौ यत्रेति व्युत्पत्त्या त्वं बर्बरोऽपि। यो हि गोपालकः स बर्बरो भवतीति प्रसिद्धः ।

---

(क) अथ तावत् काव्यमार्गेऽलङ्कारतया निरूढानां कियती मर्यादेति चिरन्तनानां भामहादीनां सत्यामपि बहुधा विप्रतिपत्तौ ध्वनिकारव्यवस्थापिताध्वनि विहरतां नवीनानां नायं प्रश्नः कामपि सन्देहकूटकोटिमधिरोहति। यत्तु प्राचीनानां मुखपातेण वक्रोक्ति-

सभङ्गो यथा—

'कान्ते' 'कीर्त्तिरकीर्त्तिरेव' 'वद मे किञ्चि'-"ज्जड़ेभ्यः परं"
'धीरा काऽपि भवत्यहो' 'कथमहो बुद्धिर्भवेत् पूर्णिमा ?'
'का मेधा तव भूयसी' 'न मदने, त्वय्येवमाधारणं'-
'त्तन्मा मा स्पृश' 'न स्पृशेय'मिति स श्रीमाञ्जितो राधया (क)॥२

काक्वा यथा—

न वदसि हरिणाऽपि पृच्छ्यमाना न बत विलोकयसे विलोक्यमाना ।
निजमभिमतमीह्यतामिदानीं विधुवदने ! समयः स नो न भावी ॥ ३
अपि तु भाव्येव, यदा भविष्यति तदा वैकल्यञ्च द्रक्ष्याम इति भावः ।

**अनुप्रास्यत इत्यर्थेऽनुप्रासो(२)वर्णसाम्यतः ।१९६का**

सजातीयं वर्णमनु सजातीयवर्णान्तरं प्रकर्षेणास्यत इति व्युत्पत्तिः ।

हे कान्ते ! इति कृष्णेन सम्बोधिता मानिनी अहन्ते कान्ता न भवामीत्यर्थं व्यञ्जयन्ती काऽन्ते नाशे सति तिष्ठतीति प्रश्नस्योत्तरमाह—त्वतस्य जनस्य कीर्त्तरकीर्त्ती एव तिष्ठतः, नान्यत् किञ्चिदपीत्यर्थः। किञ्चिन्मे वदेत्युक्ता सा त्वया सह सम्बन्ध एव मम नास्ति किं वक्ष्यामीतीममर्थं व्यञ्जयन्ती चिद्वस्तु किमिति प्रश्नस्योत्तरमाह, जड़ेभ्यः परं जड़भिन्न मित्यर्थः। धीर्बुद्धिः कथं राका पूर्णिमा भवेत्, का मेधा बुद्धिस्तवेत्यक्ते: कामे कन्दर्पे धा धारणमित्युच्यते चेत् मम कन्दर्पे धारणा नास्ति, किन्तु त्वय्येवेति, प्रश्नस्योत्तरं लब्ध्वा यत्किञ्चित् स्वरसतायां तत्तस्मान्मा स्पृशेति प्रश्ने त्वामहं न स्पृशेयमित्युत्तरं कुर्वत्या राधया जित एव।

इदानीं मानस्य दार्ढ्यरूपं निजमभिमतमीह्यतां क्रियतामित्यर्थः। यस्मिन् समये सङ्केतमुरलीध्वनिर्भविष्यति स समयो नोऽस्माकं न न भावी, अपि तु भविष्यत्येव—तदा स्वयं मानं विहाय आकुला भूत्वा तन्निकटे गमिष्यसीत्यपि तत्र वैकल्यं द्रक्ष्यामः।

अनु पश्चात् प्रास्यते प्रकर्षेणास्यते क्षिप्यते इति व्युत्पत्त्या यत्र सजातीयवर्णस्य प्रक्षेपस्तत्रानुप्रासालङ्कारो ज्ञेयः। सकृत्तया सकृत्त्वेन, तथा च यत्र सजातीयवर्णद्वयस्य सकृत् प्रक्षेपस्तत्र छेकानुप्रासो ज्ञेयः।

---

जीवितकारेणाभाणि—'तत्त्वं सालङ्कारस्य काव्यते'ति, 'तेनालङ्कृतस्य काव्यत्वमिति स्थितिः, न पुनः काव्यस्यालङ्कारयोग" इति च तत्रालङ्कारिकचूड़ामणीनां ध्वनिकृतां व्याहृतिः 'ध्वन्यात्मभूते शृङ्गारे समीक्ष्य विनिवेशितः। रूपकादिरलङ्कारवर्ग एति यथार्थताम् ॥' इति, तदनुयायिनामालोकग्रन्थकृतां 'शक्तो हि कविः कदाचिदलङ्कारनिबन्धने तदाक्षिप्ततयैवा-

**स च द्वेधा छेकवृत्तिभेदात्—१९७ का**

छेकानुप्रासो वृत्त्यनुप्रासश्चेति द्वेधा ।

**छेकः सकृत्तया । १९८ का**

एकवारानुन्यासेन छेकः स्यात् । यथा—

धाम श्याममिदं श्रीदं जगतो विरतोदयम् ।
ध्येयं गेयञ्च सर्वेषां दृशोः प्रेम (ख) यशोमयम् ॥ ४

अत्र मकारादीनां सकृदनुन्यासः ।

**माधुर्य्यव्यञ्जकत्वेन स एव ह्युपनागरः ॥ १९९ का**

स एव वर्णविन्यासः । यथा—

अनङ्गमङ्गलारम्भे सम्भेदः स्वेदकम्पयोः ।
शङ्के पङ्केरुहदृशो न रस्याऽनन्दमत्तता ॥ ५

**एकस्याप्यथवाऽनेकस्याम्रेड़िततया यदि ।**
**न्यासः स्याद्वृत्त्यनुप्रासः (ख)—२०० का**

यथा—धाम श्यामलमुद्दाम कामकोटिमनोहरम् ।
ध्येयं गेयं समास्थेयं समानेयञ्च मानसे ॥ ६

यशोमयं यशःस्वरूपम्, आधिक्यविवक्षया धर्मनिर्द्देशः, 'अयं साक्षात् पाण्डित्य'मितिवत्। अत्र"म'कारद्वयस्य "य'कारद्वयस्य च (ख) सकृदेव पाठः। छेकानुप्रासस्यैव माधुर्य्यव्यञ्जकवर्णघटितत्वेन "उपनागर"—इति संज्ञा (ख) भवति। श्रीकृष्णेन सह स्वयूथेश्वर्य्याः सम्भोगं गवाक्षद्वारा पश्यन्ती काचित् सख्यन्यां सखीं प्रत्याह। कमलदृशोऽस्याः सम्भोगस्यारम्भ एव स्वेदकम्पयोः सम्भेदरूपो विघ्नो जातः। अतो विघ्नवशाद्वैपरीत्यादिघटितः सम्पूर्णसम्भोगोऽपि न भविष्यति, तत एव याऽनन्दस्य मत्तताऽतिशयः सा रस्या नेत्यहं शङ्के।

आम्रेड़िततया द्विस्त्रिरुक्ततया। पूर्वोदाहरणे 'म'कार'भ'कारयोः सकृन्निवेशः, अत्रोदाहरणे 'म'काराणां 'य'काराणां पुनःपुनरुक्तिः। समास्थेयं सम्यग् विश्वसनीयमित्यर्थः।

---

नपेक्षितरससम्बन्धः प्रबन्धमारभते, तदुपदेशार्थमिदमुक्तम्। दृश्यन्ते च कवयोऽलङ्कारनिबन्धनैकरसा अनपेक्षितरसा प्रबन्धेषु" इति च साकूतभणितिः पर्य्याप्तमुत्तरवच इति तद्विचारचर्चातो विरम्यते। अत्र ग्रन्थे प्रकाशकता कृतामलङ्कारोद्देशप्रथामनुस्रत्य

अनेकस्य यथा—

विविधवधूवधसाधो ! विरम रमानाथ ! नाथ्यतां (ख) नाथ !
कैतवविज्ञ ! समज्ञां तव विज्ञातुं न विज्ञाऽहम् ॥ ६

एष च द्विविधो भवेत् ।

माधुर्य्यौजोऽनुकूलत्वात्—२०१ का

क्रमेणोदाहरणे—

अनङ्गसङ्गरासङ्गे भङ्गिमेव (ख] स जङ्गमः ।
सङ्गीतरङ्गी तन्वङ्गीसङ्गी रासङ्गतो हरिः ॥ ८

उद्दण्डकामकण्डूलबाहुमण्डलचण्डिमा ।
श्रीखण्डपिण्डडिण्डीरपुण्डरीकयशा हरिः ॥ ९

तथा—चकारात् पदावयवजोऽपि च । (1)

उद्दाममाधवीदामकण्ठ उत्कण्ठया हरिः ।
राधां नातिदुराराधां सस्मार रससारवित् ॥ ९

एवमोजस्यपि 'उद्गीर्ण सर्वमूर्द्धा'मित्यादि (६७ किरणे ६७ श्लोकः) ।

काचिन्मानिनी प्रार्थनां कुर्वन्तं श्रीकृष्णमाह—विविधेति । अथानन्तरं न नाथ्यतां याच्ना क्रियताम् । एष वृत्त्यनुप्रासः ।

श्रीखण्डपिण्डश्चन्दनपिण्डः डिण्डीरः फेनः पुण्डरीकः श्वेतकमलम् एषामिव श्वेतं यशोऽस्य । एष लकारघटितानुप्रासः—लकारस्य बाहुल्येन शिथिलबन्धाच्छिथिल उच्यते ।

वक्रोक्तेरेव प्रथमं निर्देशः । प्राचा भामहेन निर्दिष्टात् 'रूपकादिरलङ्कारस्तथान्यैर्बहुधोदित' इत्यादि कारिकाग्रन्थात् केश्चिद्रूपकादितश्चालङ्कारधाराऽनुस्रियते । ध्वनिकारकारिकायां तन्मतोपन्यासो वरीवर्त्ति । अपरैरुद्भटादिभिः (सर्वस्वकारोऽपि तन्मतानुयायी) बहुभिरेव पुनरुक्तवदाभासस्य प्रागुल्लेखो व्यधायि । अयञ्चापरः पन्थाः—अलङ्कारशास्त्रविमर्शकानां स एषः वक्रोक्तिपदप्रतिपाद्यवस्तुमहिम्ना विच्छित्तिमावहति वक्रकविव्यापारे अलङ्कारसामान्यापरपर्य्याये प्राचा सूचितां प्रसक्तिमावहन्नितरां तत्त्वोन्मेष इत्येव मन्यामहे—यमुद्दिश्य, विपश्चिदुक्तौ 'वक्रोक्तिः काव्यजीवितम्' 'भिन्नं द्विधा स्वभावोक्तिर्वक्रोक्तिश्चेति वाङ्मयम्,' यमेवोपसूच्य च पूर्वपश्चिमौ मतध्वंसकल्पमुज्जृम्भयामाचार्य्यदण्डिनः 'स्वभावोक्तिश्च जातिश्चेत्याद्या सालङ्कृति'रिति स्वभावोक्तेरलङ्कारकचान्तर्भुक्तौ निर्बन्धान्तः सिद्धान्तलेखा आदिमतया निवेशश्च । परमर्वाचीनग्रन्थेष्वस्य परस्य वक्रोक्तिपश्चात्प्रत-

(1) चयमतिरिक्तः पाठः केवले मुद्रितपुस्तक एवोपलभ्यते ।

**कोमलो लाट इष्यते। २०२ का**

कोमलवर्णानुप्रासो लाटानुप्रासः। उदाहरणम्—'लीलालसललिताङ्गी'-त्यादि (६ष्ठकिरणे १म श्लोकः)। एषः कैश्चिच्छिथिल उच्यते (ख)।

**तात्पर्य्यमात्रभेदत्वाल्लाट इत्युच्यतेऽपरैः॥ २०३ का**

शब्दार्थयोरभेदेऽपि तात्पर्य्यमात्रभिन्नत्वे, लाटो विदग्धः (2), तस्य प्रियत्वाल्लाटानुप्रास (ख) इत्यपरैरुच्यते।

**पदस्याप्येषः—२०४ का**

एषः लाटानुप्रासः पदस्यापि, 'अपि'शब्दात् पदांशानां पदानामपि—क्रमेणोदाहरणानि—

कृष्णत्वेन सखि! प्रादुर्भावो मन्ये मनोजनेः।
मनोजनेः पुनरियद्वैदग्धीवैदुषी (ख) कुतः॥ १०

रत्नानि रत्नाकर एव सन्ति पुष्पाणि पुष्पाकर एव धत्ते।
गुणो गुणज्ञे लभते प्रकाशं यशो यशोदासुतसेवयैव॥ ११

पदानां यथा—

येषां न वृन्दावनचन्द्रलीला हृद्यस्ति तेषामपरैर्गुणैः किम्।
येषान्तु वृन्दावनचन्द्रलीला हृद्यस्ति तेषामपरैर्गुणैः किम्॥ १२

**एवञ्च वृत्तावन्यत्र वा पुनः।**

**वृत्त्यवृत्त्योश्च वा नाम्नः सारूप्ये स्यादथापरः। २०५ का**

तत्रैव वा समासेऽन्यत्र वाऽसमासे समासासमासयोर्वा नाम्न एव, न तु पदस्य, सारूप्ये सत्यपरो लाटानुप्रासः। (ख)

पदानामनेकेषामपि। वैदुषी पाण्डित्यम्। अनेकपदस्यानुप्रासः, अस्यैव भिन्नार्थत्वे यमको भवतीति ज्ञेयम्।

नाम्नः प्रातिपादिकस्य समानरूपत्वेन नतु नामविभक्तिघटितपदस्य।

---

प्रभृतिलक्ष्येष्विव सुतरामल्पप्रसरायामलङ्कृतौ प्रसक्तः प्रयोगश्च—स च विदग्धमात्रसंवेद्यो श्लेषकाकुमहिते कूटकर्म्मणि प्रवर्त्तते। पदपरिवृत्त्या नास्य गन्धोऽपीति शब्दालङ्कार एवायम्। 'द्विरेफ' इत्यस्य 'बर्बर' इत्यर्थान्तरं टीकाकृता स्वीकृतम्—परं भ्रमरकर्माभिव्यञ्जिना धृष्टकामुकत्वेन घटितोऽप्ययं स्यात्। 'किञ्चित्' 'धोराकाऽपि' 'कामेधे'त्यादिषु सुस्पष्टोदया कष्टार्थता न दोषायेत्यलम्।

---

(2) 'लाटोऽविदग्ध' इति (ख) (क) पुस्तकयोः पाठः।

उदाहरणम्—

हिमकिरणकिरणमधुरा राका राकाऽमृतांशुमुख ! भवतः ।

विरहे विरहे मूर्च्छा सख्यास्तां केवलं दहति (3) ॥ १३

नेह (4)— सुमहिमहिमकरमधुरा मधुराकाया निशा निशातेयम् ।

तव रुचिर ! चिरविलम्बे प्रदहति तां कृष्ण ! कृष्णवर्त्मेव ॥ १४

इदन्तु यमकान्तर्गतमेव भिन्नभिन्नार्थत्वात् (ख) । तदेवं वर्णितश्छेकवृत्ति-पदावयवैकपदानेकपदनामसारूप्यात् षट्प्रकारोऽनुप्रासः ।

**(२) यमकं त्वर्थभिन्नानां पदादीनां समाऽकृतिः (5) । २०६का**

परस्परमर्थगतभेदवतां पदपदावयवानां समाऽकृतिः सारूप्यं यमकम्(ग) ।

राकाऽमृतांशुः पूर्णिमाचन्द्रस्तत्तुल्यमुखेति श्रीकृष्णसम्बोधनं, तव विरहे मूर्च्छारूप-सख्याश्च विरहे राका पूर्णिमा तां दहति। राका कथम्भूता ? हिमकिरणश्चन्द्रस्तस्य किरणेन मधुरा ।

इयं वसन्तकालीनपूर्णिमाया निशा निशाता विरहिन्या दुःखदायकत्वेन तीक्ष्णा कृष्ण-वर्त्मा अग्निरिव तां दहति। निशा कथम्भूता ? सुमहिमचन्द्रेन मधुरा । "हिम" "हिम" "मधुरा" 'मधुरे'त्यादिपदानां भिन्नभिन्नार्थत्वादिदमुदाहरणं यमकान्तर्गतमिति ज्ञेयम्—अतोऽत्र यमकत्वमनुप्रासत्त्वमुभयमपि वर्त्तते (ख)।

एवमिति—छेकानुप्रास एकः, वृत्त्यनुप्रासो द्वितीयः, लाटानुप्रासश्चतुर्विधः ,एव क्रमेण षट्प्रकारोऽनुप्रासः।

---

(ख) अनुप्रासस्य कृत्रिमतायां स्वभावसिद्धायामपि न तावत् किमपि मानवकृतं काव्यं भूतं भवत् भव्यं वा यन्नास्य साहायकमपेक्षितुमर्हति। (Cf. the aids of Assonance, Alliteration, Onomatopæia, Rime etc. in all verse) परं मधुररचनायां सुकुमार-मार्गस्य प्रकर्षः सहजसिद्ध एव प्रतिभाति। 'प्रेमयशोमय'मित्येकं पदं वा। अत्र 'म'म' 'दं दं' 'तो' तो' 'यं यं' 'म' 'म' इत्यनुक्रममनुन्यासः। उपनागरेति—उद्भटादयस्त्वेवम्। प्रकाश-कृता रुद्रटादिप्रदर्शितवृत्तिपञ्चकस्य वामनराजशेखरभोजादिकृतग्रन्थेषु प्रदर्शितरीतिभिः सामञ्जस्यसाधनाय 'केषाञ्चिदेता वैदर्भीप्रमुखा रीतयो मता' इत्यभ्यधायि—न स पन्था अत्र सम्यगनुसृतः, रीतेः पृथक् प्रसङ्गे व्यवस्थापितत्वात्। परं विलासविन्यासक्रमोत्थमत्र चमत्-

---

(3) "—सुख यदि माम। प्रकटितनिजगुण ! गुणखनिमदहत्तत्ते नमः प्रेम" इत्यार्य्याया अस्याः पाठान्तरं (ज) पुस्तके ।

(4) 'नेहे'त्यंशः (छ) (क) पुस्तकयोर्नास्ति ।

(5) 'समाहृति'रिति (छ) पुस्तके कारिकायां वृत्त्यंशे च पाठः ।

**एतच्च पादजत्वेन नवधा—२०७ का**

एतत् यमकम् । **प्रथमस्य तु ।**

**द्वितीयेन तृतीयेन चतुर्थेनेति तत्त्रिधा ॥**

**द्वितीयन्तु तृतीयेन चतुर्थेनेति च द्विधा ।**

**तृतीयन्तु चतुर्थेनेत्येक एवेति षड़् भिदः ॥**

**प्रथमस्त्रिष्वपीत्यन्य इति सप्तद्वयं पुनः ।**

**प्रथमस्तु चतुर्थेन द्वितीयस्तत्परेण च ।**

**प्रथमस्तु द्वितीयेन तृतीयस्तत्परेण च ॥ २०८ का**

प्रथमो द्वितीयेन तृतीयेन चतुर्थेनेति त्रयो भेदाः । द्वितीयस्तृतीयेन चतुर्थेनेति चेति द्वौ । तृतीयश्चतुर्थेनेत्येकः । प्रथमस्त्रिष्वपीत्येकः । प्रथमश्चतुर्थेन द्वितीयस्तृतीयेनेत्येकः,प्रथमो द्वितीयेन तृतीयश्चतुर्थेनेत्येकः—एवं नव ।

**अर्द्धश्लोकश्लोकयोश्चावृत्त्या द्वेधा भवेदथ ।**

**तेनैकादश भङ्गाः स्युः पदभागे च पूर्ववत् ॥**

**नवधेति भिदा ज्ञेया विंशतिर्यमकोद्भवाः ॥ २०९ का**

अर्द्धश्लोकावृत्त्या श्लोकावृत्त्या च पुनरेकादश । पुनः पदस्य भागे च यद्यमकं तत् पूर्ववन्नवधेति विंशतिर्भेदाः ।

**पादस्य तु त्रिखण्डत्वे त्रिंशद्भेदाः प्रकीर्त्तिताः ।**

**चतुःखण्डत्वे च पुनश्चत्वारिंशद्भवेद्भिदा (ग) ॥ २१० का**

---

कारित्वमिति सार्थकमस्य प्रकारस्योपनागरत्वेन कथनम् । वृत्तौति—वृत्तिरावृत्तिरिति यावत् । एवमेव विद्यानाथः 'एकद्वित्रिप्रभृतीनां व्यञ्जनानां यदा भवेत् । पुनरुक्तिरसौ नाम वृत्त्यनुप्रास इष्यते ॥' नार्थेति—न अर्थेति पदभक्तिः, सा च अपूर्वाक्ये क्रियस्वाभाविकीव प्रतिभाति । 'समञ्जे'त्यत्र सङ्केतः पारिभाषिकोऽर्थ इति बहवः । 'भङ्गिमे'त्यत्रेमनिचः साधुत्वं कथञ्चिदुपपाद्यम्, परं केचिदीदृशाः प्रयोगा अर्वाचीनसाहित्य उपलभ्यन्ते । कैश्चिदिति—अल्पप्राणाक्षरं शिथिलमिति काव्यादर्शे गौड़ीरीतिविमुख आचार्य्यदण्डी । परमेष्वपि स्थलेषु बोत्कर्षह्रासः, तत्र निरुक्ताया गौड़ीरीतेरादरदर्शनमिति 'कैश्चि'दित्युल्लेखः । लाटानुप्रास

दिङ्मात्रमुदाह्रियते—

सुरतरुरेष नतानां सुरतरुचिर्गोपतरुणीनाम् ।
त्रिभुवनजनकमनीयो(6)जयतादाभीरराजयुवराजः ॥ १५

सुरसार्थभूषितपदैर्ब्रह्मादिभिरधिकभक्तिसंनम्रैः ।
सुरसार्थभूषितपदैः स्तवैः स्तुतः केशिहा जयति ॥ १६

मन्मथनमदन्तरया कुटिलोऽञ्जनकालकूटाक्तः ।
प्रियसख ! कटाक्षविशिखो मन्मथनमदं स राधया सहजे ॥ १७

जयति व्रजपतितनयो नमदनमत्तुल्यकारुण्यः ।
न मदन ! मत्तुल्यहता काऽपि विना येन मान्तुदसि ॥ १८

राधा सुकुमारतनुर्मदनवधानादुपैष्यति ग्लानिम् ।
बद्धोऽयमञ्जलिस्ते मदन ! वधार्थं न तां वितुदेः ॥ १९

व्रजपतिनन्दन ! नन्दय नन्दय वृषभानुनन्दिनीहृदयम् ।
मदनमदोज्ज्वलमतुलं मदनमदोजःप्रसादमाधुर्य्यम् ॥ २०

नतानां भक्तानां सुरतरुः कल्पवृक्षः गोपरमणीनां सुरते रुचिर्यतस्तथाभूतः। सुराणां सार्थः सुरसमूहस्तेन भूषितं पदं येषान्तैर्ब्रह्मादिभिः सुरसो योऽर्थस्तेन भूषितानि पदानि येषु तैः स्तवैः स्तुतः श्रीकृष्णो मन्मथेनाभिलाषेण नमन्नम्रमन्तरं यस्यास्तया राधया मन्मथने मदो गर्वो यतस्तद्यथा स्यात्तथा स कटाक्षरूपो बाणः सृष्टे। नमति नम्रेऽनमत्यनम्रे तुल्यं कारुण्यं यस्य सः, यद्वा नमति नम्रेऽनमत् सुदृढं तुल्यमेकरसं कारुण्यं यस्य सः। हता दुःखिता। 'नन्दय नन्दये'ति वीप्सा। मदनमत्ततयोज्ज्वलं मदेन गर्वेण नमन्ति भावाधिक्याङ्गान्योजःप्रसादमाधुर्य्याणि यत्र तद्धृदयम्। ओजो बलम्। सदा सद्वर्त्तमानं नित्यमित्यर्थः।

---

इति—लाटाख्यप्रदेशे (यस्य गुजराट् इत्याधुनिकी संज्ञा) प्रचलितमनुप्रासक्रमसुपलक्ष्यो-तत्। स तु कोमलात्मा पदपदांशाद्यवयवभेदेन बहुधा भिन्नस्तेत्याकरे द्रष्टव्यः। तस्य प्रियत्वेति निरुक्तेन सद्दाभेदकथनं न सर्वजनसम्मतम्। 'वैदर्भी' 'वैदुषी'त्युभयत्रापि भावलक्षणस्य ष्यञः स्त्रियां प्रयोगः यकारस्यानुद्देशश्च सामग्रीचातुरीत्यादिवत्, ष्यञः षित्करणाङ्गीकारे बहुलमिति वामनः। भिन्नभिन्नेति—इयमेव लाटानुप्रासाद्यमकस्य भिदा। वसन्तपूर्णिमाया इत्यादि भिन्न भिन्न एवार्थः। एवमन्यत्रापि। अतो नैष लाटानुप्रासः। प्रकृतोदाहरणे 'मधुरा' इत्यस्य ललितात्मिका 'मधुरकाया' इत्यस्य वसन्तपूर्णिमाया इत्यर्थः। लाटानुप्रासे तात्पर्य्यमात्रभेदः यमकेऽभिधागतार्थभेदोऽपि, एवं टीकाकृदुक्तिः 'अतोऽत्रे'त्यादि न हृद्या, यमकस्यानुप्रासापवादत्वेन विधानसामर्थ्यात्।

---

(6) 'जयति व्रजराजयुवराज' इति पाठः (ज) पुस्तके।

काननं जयति यत्र सदा सत् का न नन्दति यदेत्य सुखश्रीः ।
का न नन्दतनयस्य मनोज्ञा काऽननश्रयति वा न हि तस्य (ग) ॥ २१

यथा वा----(ग) नवपयोधरकान्त ! विरम्यतां न वप योधरसं हृदि साम्प्रतम् ।
नवपयोधरकान्त ! स वै भवान्नवप योऽधरपः प्रतियोषिताम् ॥ २२

कामन्दधाना हृदयेऽनुरागं स्मरालसाङ्गी विदुनोति बाला ।
स्मरालसाङ्गीकुरु तां मुकुन्द ! का मन्दधाना न भवेद्विना त्वाम् ॥ २३

समस्तकल्याणगुणैकवारिधे ! समस्तवास्ते कतमस्त्रिलोक्याम् ।
नमामि, मे माधव ! सम्प्रसीद, न मामिमे द्यन्तु दुरन्ततापाः (8)॥ २४

हे नवपयोधरकान्त ! नवमेघश्याम ! साम्प्रतं योधरसं हृदि न वप नारोपयेत्यर्थः । नवपयोधरा कान्ता यस्य हे तादृश ! नवा नवीनाः, तासां प ! प्राणशोषिण ! पै ओ वै शोषणे, हे सद्यौवनशोषकेत्यर्थः । यस्त्वं मद्विपक्षरमणीनामधरं पिबसीति । कामं यथेष्टमनुरागं दधाना बाला । अतस्तां स्मराङ्गीकुरु च, हे अलस ! त्वां विना का मन्दधाना न भवेत् अपि तु सर्वैव । धानं धारणं, मन्दं धारणं यस्याः दुःस्थितेत्यर्थः । द्यन्तु खण्डयन्तु ।

---

(ग) तुल्यश्रुतिनिदाना माधुर्य्यस्रुतिरनादिकालतः सर्वत्रैव मानवमनोवृत्तिं ह्लादयन्ती शोभाकारितयाऽलङ्कारमार्गं प्रकृष्टमुपस्थाप्यते—तत्र भाषासु कासुचिद्वैचित्र्योपधायकता-सुखेन तस्या ऐकान्तिकतया स्वरतो वर्णतो वा स्वरवर्णमिलितादक्षरादाऽविर्भावः, कासुचित् पुनरन्यथाऽपि स्वरवर्णसंहतिसादृश्येन तस्याः स्फुरणम् । पूर्वत्र क्रमगणनाऽर्थ-भेदादिचिन्ता च व्यभिचारिणी, इतरत्र क्रमो विभिन्नार्थवत्ता च मुख्यं लिङ्गम् । प्रथम-स्तावदनुप्रासपदवाच्यः, द्वितीयो यमकमित्यन्वर्थमभिधीयते । पूर्वत्र रसपुष्टिरव्याहता भवितुमर्हति, अन्यत्र तु कष्टकल्पनाश्रयतया रसपरिपन्थित्वं बहुश एव जायते, यदाहुः—'तत्तु नैकान्तमधुर'मिति यमकान् द्वेष्टि आलङ्कारिकचूड़ामणय आचार्य्यदण्डिनः 'सानुप्रासो रसावहे'तीङ्गितेनास्यानुप्रासतो बहुशो लघुत्वं निपुणं प्रतिपिपादयिषवः स्वग्रन्थे—अपरे-ऽप्यर्वाचीनाः स्वां विमतिमुद्घोषयन्तो रसाहितवाद्यतत्त्वाः 'प्रायेण यमके चित्रे रसपुष्टिर्न दृश्यते' इत्यादिमतवादेन । परमासीत् कश्चन कालः यत्रास्य भूयानादरो निपुणकविकर्मतया काव्याङ्गरूपेण स्वीकारश्च कविसमुदायसम्मतो जातः । कालिदासकृते रघुवंशे भारविकाव्ये च काचिदस्त्रलितमेव शोभैनमुपजीव्य वरीवर्त्तीति सहृदयानामुपलब्धिरेव प्रमाणं—भट्टिकाव्ये

---

(8) अत ऊर्ध्वं "यथा वा—सदासदानन्दमयं वपुस्ते सदासदासीनिकरं पुरश्च ।
महो महोद्दामरसस्रवायमहो महो भूरि तवैव कृष्ण ! ॥'

इत्यधिकः श्लोकः (ख) पुस्तकस्य तलभागे दर्शितः, मुद्रितपुस्तके चोपलभ्यते । टीका च तत्रत्या प्रच्छिन्नप्रायो-पलभ्यते ।

पादजं नवधा यमकं दर्शितम् (ग)—अथ पादभागजानि दर्श्यन्ते।

कलहं कलहंसानां कलहं क-ल-हंसकाः।
अभ्यस्यन्तीव गोपीनां चरणाम्भोजवासिनः॥ २५
मधुरा मधुराकाया रजनी सा यदाऽजनि।
मधु-राम-धुरा कासां तदा नासीद्धरेः पुरः॥ २६
साध्वसाध्वन्यदत्ताङ्घ्रिः गुरूणामपि सन्निधौ।
कृष्णं वीक्ष्योत्सुका साऽसीत् साध्वसाध्वविचारतः॥ २७
काञ्चीदाम्नो रवस्तस्या रणतोऽरणतोऽतनोः।
रण-तोरणतो भूरिश्रियः कृष्णमनोऽहरत्॥ २८

गोपीनां कलहंसकाः कं सुखं लान्तीति तथाभूता हंसकाः पादकटकाः कलहंसानां कादम्बकानां कलहमभ्यस्यन्तीव; ते यथा परस्परं कलहायन्ते तथा कलहायन्ते इव। कीदृशम्? कलमव्यक्तमधुरध्वनिं जिहीते प्राप्नोतीति तथा, तत् हन्तीति वा तारमित्यर्थः। हरेरग्रे कासां पीयमानैर्मधुभी रामधुरा रमणातिशयो नासीत्। साध्वसाध्वनि साध्वस-पथेन कदाऽपि दत्तावङ्घ्री यया सा गुरूणामप्यग्र उत्सुका आसीत्। काञ्चीदाम्नः—कथम्भूतस्य? अरणतो गमनाद्धेतो रणतः शब्दायमानस्यातनोः कन्दर्पस्य रणसम्बन्धिन-स्तोरणाद्बन्धनमालायाः सकाशादपि भूयसी श्रीर्यस्य तस्य। नपुंसकाद्धस्वो नुमागमश्च।

---

माघकाव्ये तदनुसारिणि नातिप्रसिद्धे गड्डलिकाप्रवाहपतिते सर्गबन्धकाव्यकदम्बके, यमकमाला-हृतजीविते कीचकवध-हरिप्रबोध-नलोदयाद्यनेककाव्यविशेषेऽस्य स्फुरणन्तु न तथा सहृदय-हृदयहारि। नैतच्चित्रं यदस्य इत ऊर्ध्वमर्वाचीनकविसमयमये नये काव्यान्तगड्डभूततया तुच्छत्वमयसिद्धान्तः। तथा सति न तावदस्य परमार्थतो माधुर्यव्यञ्जकत्वमपाक्रियते—परं न निखिलं माधुर्यं शब्दाश्रयमेव प्रशस्यमित्युररीकारः। नाप्यनेन सकलजनसंवेद्यः सदर्थ-सनाभिः शब्दमाधुर्यास्वादो वाऽपलप्यते यमाश्रित्य प्रतीच्यसाहित्यभेदेषु Onomatopeic poetry इति काव्यभेदपरिगणनं यमुपलक्ष्य च तत्रत्यसमालोचकानां समयः—'Tis not enough no harshness gives offence The sound must seem an echo to the sense'. प्राचीनार्यसाहित्ये चास्य वैशिष्ट्यस्य 'रवचरणविनिविष्टैर्नूपुरैर्नर्तकीनां झणिति रणितमासीत्तत्र चित्रं कलञ्चे'त्यादिकोमलबन्धे पद्ये, 'एते ते कुहरेषु गद्गदनदद्-गोदावरीवारयः' इत्यादिकठोरश्लिष्टायां भवभूतिवर्णनायां, 'चञ्चद्भुजभ्रमितचण्डगदा-ऽभिघाते'त्यादि वेण्यां साटोपोक्तौ च प्रकाशः। परमेषामनुप्रासतया ग्रहणं सम्प्रदाय-सम्मतमित्यविरुद्धम्—अनुप्रासभेदाश्च बहवः प्रतियुगं प्रत्यालङ्कारिकवर्यं भिन्ना इति

दृशोरगोचरेणैव हरिणा हरिणाक्षि ! ते ।
कपोलभित्तिर्मानेभहरिणा हरिणाकृतिः ॥ २९
अगोचरं सति हरौ दहत्येष मनो मम ।
मदनो मदनोदेनामदनो मदनोजसा ॥ ३०
सदासदासीनिकरैः परिच्छदैः सदा सदानन्दविलासविग्रहः ।
सदाऽस-(ग)दाक्षिण्यकृपाऽऽदिभिर्गुणैः सदासदारो विललास माधवः ॥३

दृशोरगोचरेणैव सता हरिणा श्रीकृष्णेन तव कपोलभित्तिः हरिणाकृतिः पाण्डुच्छविरभूत्। कीदृशेन ? मान एव इभो हस्ती तस्य हरिणा सिंहेन। मदनो मनो दहति। केन ? मदनोदेन मत्तताखण्डनेन। कीदृशः ? मदनोजसा ममावस्थेन मदनोऽहर्षणः, मदि हर्षे। (9) परिच्छदैः सह सदा सन्नानन्दमयो विलासो विग्रहश्च यस्य स माधवः। दा दानम्, आसो दीप्तिः, दाक्षिण्यञ्च तदादिभिर्गुणैः सन्नास उपवेशो येषान्ते दारा यस्य सः।

---

ख्यातमेव। श्रुत्यनुप्रासस्य निरूढ़ानुप्रासनिकसवर्णत्वमयव्यञ्जननिष्ठत्वस्वरूपस्य, 'दृशा दग्धं मनसिजं जीवयन्ति दृशैव या' इत्यादिलक्ष्येषु स्फुटस्य, अन्त्ययोऽन्यावर्त्तितया ख्यातस्यान्त्यानुप्रासस्य 'मूढ़ जहीहि धनागमतृष्णां कुरु तनुबुद्धे मनसि वितृष्णा'मित्यादि-बहुप्रसिद्धलक्ष्येष्वाविर्भवतो यथा नात्र ग्रन्थे गणनं, तथा प्रतिदेशं भिन्नस्य कार्णाटी-कौन्तलीत्यादिनाम्ना लक्षितस्य कण्ठाभरणकृता कृतोद्देशस्य लाटप्रविधस्यापि न सूचनमित्यप्यविरुद्धो मार्गः, यत एषां दिग्दर्शनन्यायेन विन्यास एव साधीयान्। नाट्यशास्त्रकृता पुनर्यमकस्यैकस्य शब्दालङ्कारतया गणनं कृतं, तथाऽलङ्कारिकसम्प्रदायसिद्धस्यैव यमकस्य तत्र लक्ष्यलक्षणानि। अनुप्रासस्य तत्र कथं न ग्रहणमिति तु सम्यग्विमर्शनीयम्। 'एतद्दशविधं ज्ञेयं यमकं नाटकाश्रयम्' (१६।६२) इत्यभिधानन्तत्र, परं नाटकाश्रयस्यालङ्कारव्रातस्य गणनायां शब्दालङ्कारकक्ष्येऽनुप्रासस्यैव ग्रहणपरो निर्बन्धो वरीयानिव प्रतिभाति। इदानीं परिचितेषु नाटकेष्वनुप्रासस्यैव प्रसारो दृश्यते, यमकन्तु तत्र विरलविरलमेव। रामायणादिप्राचीनतमरचनादिष्वप्येवम्। एवं स्थिते प्राचां यमकपदेनानुप्रासस्यापि ग्रहणं, द्वयोर्मध्ये यमके चात्यादरप्रसङ्गः न सुशकः प्रतिपादयितुमिति बहवः। 'नानाकारेण कान्तभ्रूराराधितमनोभुवा। विविक्तेन विलासेन ततक्ष हृदयं नृणा'मित्यादौ स्वरैकव्यञ्जनाऽऽवृत्तावपि केषाञ्चित् यमकत्वकथनमेतत्पक्षेऽनुकूलं यमकतोऽनुप्रासस्योद्भवे विश्वासकारिताबीजमपीति बोध्यम्। अत्र तावत् प्राचा भामहेन कृतो भरतीयनाट्यशास्त्रनिर्दिष्टेऽलङ्कारचतुष्केऽनुप्रासस्य पृथक्तया योगः

---

(9) "दासदासीनिकरैः सह वर्त्तमान" इत्यधिकोंऽशोऽस्याग्रे (ख) पुस्तक एवोपलभ्यते ।

(११) (१२) (७) (८) (१५) (१४)(१३)
केशि नाकेशि नाथेन कामिना ऽकामि नादरः ।

(६) (२)(६) (५) (३) [४) (१०) (१)
कामिना काऽमि ना वा श्रीः केशिना केशिनाशिना ॥२२

(२) (१) (३) (११) (१०) (१३) (१२)
रत्याऽविरत्या विहृता नवीनै-रत्यावि रत्यावि मनोजरागैः ।

(४) (५) (१४) (१५) (१६) (६) (७) (८) (९)
रासे ऽचरा ऽसेचनकै-र्विलासै-रासे च रासे चतुरा मृगाक्षी(ग)॥२३

एवमष्टादश ।

केशिनाशिना श्रीकृष्णेन का श्रीर्ना आमि न प्रापि अपि तु सर्वैवेत्यर्थः । "अम गतौ" "अ मा नो ना प्रतिषेधे" । कामिना अभिलाषवता केशिना प्रकृष्टकेशेन को ब्रह्मा तस्ये-श्वरेण वा. केशि कस्य जलस्येट् ईश्वरो वरुणस्तस्मिन् । तथा नाकेशि इन्द्रे च आदरो न अकामि न चक्र इत्यर्थः । कुतः? नाथेन सर्वेश्वरेण कं सुखम् अभितुं प्राप्तुं शीलं यस्य तेन पूर्णसुखेनेत्यर्थः । मृगाक्षी विलासैः कर्तृभिरासे, अस दीप्त्याधानयोः, आदधे इत्यर्थः । कीदृशैः? आसेचनकैः 'तदासेचनकं तृप्तेर्नास्त्यन्तो यस्य दर्शनात्' । सा कीदृशी? रासेऽ-चराऽचञ्चला रासे रससमूहे च चतुरा । अविरत्या विरतिरहितया प्रीत्या विशेषेण हृता । तथैव अत्याविरतिप्रकटं यथा स्यात्तथा नवीनैः मनोजरागैः कर्तृभिरत्यावि अतिशयेन ररक्षे ।

---

तस्यादिमतया निवेशश्च दण्डिदर्शितालङ्कारचक्रे स्वभावोक्तेर्योग इव निर्बन्धान्तां कामपि व्यवस्थामुद्भावयतीति तु पक्षान्तरे चिन्तनीयम् । भरतीयेऽस्यालङ्कारस्य काञ्चीयमकादयो दश भेदाः दर्शिताः भामहग्रन्थे पञ्च भेदाश्चक्रवालादयो गृहीताः, भट्टिकाव्ये तथा काव्यादर्शदर्शिते चक्रे च भूयानस्य विस्तरः, वाग्भटाद्यर्वाचीनग्रन्थेषु विस्तृततरा विभागाश्च दर्शिताः । ते सर्वे आकरत एव ग्राह्याः । अत्र कौस्तुभे तु प्रकाशकृता कृतोद्देशानां लक्ष्यलक्षणव्यवस्थाऽनुसृतिः, परं ललितप्रायरचनानिपुणानां तदानीन्तनगौडीयकविचूडा-मणीनामादर्शनात्र श्लोका नानुपभोग्या इति महत् गौरवं ग्रन्थकृतः । 'अव्यपेतव्यपेतात्मा'-ऽदिसूचितभेदवतोऽस्यात्रापि परामर्शः अव्यवधानेन व्यवधानेन च द्वैविध्येन स्वरव्यञ्जनसंहते-रुच्चारणात्—यथा लक्ष्येषु । एवमपि 'यमकश्लेषचित्रेषु बवयोर्डलयोर्न भिदि'त्यभियुक्तसमयः स्वीकरणीयः । यमकगता दोषाः 'यमकस्य विधातव्यं न कदाचिदपि त्रिपादि'त्यादयोऽग्रे दर्शयिष्यन्ते । 'समाहृति'रिति पाठे समाहारः संहतिरित्यर्थः । अर्थगतभेदवतामिति—क्वचिदेकस्यानर्थकत्वं, क्वचिदुभयोरप्यनर्थकत्वं, क्वचिदुभयोरपि सार्थकत्वमिति यथायथं लक्ष्यम् । अत्र बहुवचनमविवक्षितं द्वयोरप्यावृत्तौ यमकाङ्गीकारात् । द्वित्रिचतुःखण्डेत्या-

मनोज-हार-प्रतिमा समाना सरस्वतीति ! मद-सु-स्वरूपे ॥
मनो जहार प्रतिमा समाना सरस्वती ते मदसुस्वरूपे ! ॥ २४

अर्द्धावृत्तिः।

न वंशी-कर-मासाद्य यमानुजनिभङ्गतः।
कस्या विशदतां याति मनो मानपरिप्लवम् ॥
नवं शीकरमासाद्य यमानुजनिभङ्गतः।
कस्याविशदतां याति मनो मानपरिप्लवम् (ग) ॥ २५

श्लोकावृत्तिः। अयमेव समुद्गकः। एकविंशतिः।

हे मदसुस्वरूपे ! मत्प्राणतुल्ये ! तव सरस्वती वाणी मम मनो जहार। कीदृशी ? मां प्रति समाना सादरा। पुनः कीदृशी ? मनोजस्य हारस्य प्रतिमा मुक्ताहारतुल्या हृदयधारणार्हेत्यर्थः, समानाऽवक्रा। मदस्य मत्ततया यत् सु सुष्ठ स्वरूपं तस्मिन् सरस्वति समुद्र इते सङ्गते ! हे मूर्त्तमत्ततासमुद्रप्रविष्ट इत्यर्थः।

अथ सर्वास्त्राणां वैयर्थ्ये यथा ब्रह्मास्त्रप्रयोगः क्रियते तथा मानभङ्गार्थं नानाविधोपायानां वैयर्थ्ये सति श्रीकृष्णेनापि सङ्केतमुरलीवादनं क्रियते, मुरलीनादश्रवणमात्रेण (१०) सा विगतमाना प्रसन्ना बभूवेत्याह—नेति। वंश्याः करं कलमासाद्य यमनियमासनाद्यष्टाङ्गयोगस्य प्रथमो यमस्तस्यानु पश्चाज्जनिरुत्पत्तिर्यस्य स नियमस्तस्य भङ्गतः, तथा च श्रीकृष्णेन सह मया कदाऽपि सङ्गो न कर्त्तव्य इति यो नियमस्तस्य मुरलीश्रवणेन भङ्गात्मानेन चञ्चलं कस्या मनो विशदतां न याति, अपि तु सर्वासामेव। पुनस्तस्यैव श्लोकस्यार्थान्तरमाह—यमानुजनिर्यमुना पुण्यनदी तस्य भङ्गतस्तरङ्गाज्जातो यो नवीनः शीकरः जलकणस्तमासाद्य मानेनाभिमानेनार्थाद् गर्वेण दोषेण परिप्लवं कस्य मनः अ न विशदतां याति, अपि तु सर्वेषामेव, यमुनाजलस्पर्शस्य सर्वदोषनाशकत्वप्रसिद्धेरिति भावः।

---

दिना विभागेन भेदसंख्या प्रकाशकता सूचिताऽपि न विस्तरतो दर्शिता, सा च मनोरमैः पद्यैरिह निबद्धा। यमकमित्याद्युक्तस्यांशस्य पूर्वतः सौसादृश्यादाकारतो संख्या नियमनाद्वा निरुक्ता संज्ञा, इयमेव शैली प्राचीनानां शास्त्रकृतां यत्ते संज्ञिनां संज्ञानिरुक्त्यर्थं सहकारिगुणान्तराणि प्रकटयन्ति। सा च सुस्पष्टं दर्शिताऽऽचार्यदण्डिना गुणालङ्कारादिविवेचनप्रस्तावे। यथा वेति—'कानन'मित्यादि श्लोक आदिमकिरणे ईषद्भिन्नतया पठित इत्यतो यथा चेति प्रतीकेन नूतनतरस्यावतारः। पादजमित्यादि—अर्द्धावृत्तिरित्यादि—एषां वक्ष्यमाणानाञ्च भरत-भामह-दण्डि रुद्रटोद्भटादिकृतग्रन्थेषु लब्धभेदाद्यथायथं मुख-गर्भ-वृत्ति-पुष्प-वृन्त-

---

(१०) "श्रीकृष्णेनापि वादितसङ्केतमुरलीश्रवणमात्रेण" त्यधिकः पाठो मुद्रितपुस्तके।

आद्यन्तमध्यभेदेन क्रमादथ समुच्चयात् ।
अन्तादिभेदेन पुनर्बहुधा यमकक्रिया (ग)॥ २११ का

आदियमकमन्तयमकं मध्ययमकमाद्यन्तमध्ययमकमन्तयमकमिति पञ्च भेदाः । क्रमेणोदाहरणानि—

कलाकलापेन गरीयसा हरिर्नदीनदीप्तिः करुणारसाम्बुधिः ।
सुरासुराणां मुकुटाटवीमणिः सदा सदानन्दचिदात्मको बभौ ॥ २१

रोषेण शश्वन्न हि नागरी गरी-यसा(ग) कठोरत्वमुपेत्य भात्यभा ।
विहाय मानं हरिमानयानया धिया हि सर्वं भवतीहितं हितम् ॥ २७

मदन-सङ्गर-सङ्ग-रसाकुला भव विहारिणि हारिणि ! माधवे ।
कुसुम-राजि-विराजि-विभूषणा मधुप-राग-पराग-पराचिता (ग) ॥ २८

माऽसो मासो मरीचः समधुर-मधुर प्रेयसी-प्रेय-सीमा-
वृन्दा वृन्दावनश्रीरुपवन-पवन-भ्रान्तिरभ्रान्तिरम्या ।

गरीयसा शश्वद्रोषेण कठोरत्वमुपेत्य काऽपि नागरी न हि भाति । यतोऽभा विगतकान्तिका । धिया तव सर्वं हितमीहितं वाञ्छितं भवति, वर्त्तमानसामीप्ये वर्त्तमानप्रयोगः ।

हे हारिणि ! मनोहारिणि ! माधवे विहारिणि सति मदनयुद्धस्य सङ्गे यो रसस्तेनाकुला भव । कथम्भूता ? कुसुमश्रेणिभिर्विराजि भूषणं यस्यास्तथाभूता सती । अथ मधुपानां रागो रञ्जनं येभ्यस्तथाभूतैः सुगन्धैः परागैः पराचिता व्याप्ता सती च ।

उद्दीपनविभावानाह—माऽस इति । मासश्चन्द्रस्य मरीच्यः किरणाः माऽसः मां शोभामस्यन्तीति माऽसः शोभानिक्षेपिका इत्यर्थः । वृन्दावनस्य श्रीः शोभा कीदृशी ? समधुरा शृङ्गाररससहिता एवं मधुराश्च या प्रेयस्यस्ताभिः प्रेयं पूरयितुमर्हं सीमा वृन्दं यस्याः सा, तथाच वृन्दावनीयशोभायाः सीमासमूहावधिः प्रेयसीनां साहित्येनैवेति शेषम् । उपवनेषु पवनस्य भ्रान्तिर्भ्रमणम् अभ्रान्तिरम्या अभ्रान्तिर्वृन्दावनीयोपवने मम मन्दगमनमेवोचितमिति या सावधानता तया रम्या । आलम्बनविभावमाह—इह समये च

---

पुच्छ-श्रङ्खलि-परिवृत्ति-संदंश-काञ्ची-पदान्ताम्रेडित-श्लोकाभ्यास-समुद्गक-यमकावलि-महायमकाद्यशेषविधा भवति संख्या—इतोऽधिकानि संख्याऽन्तराणि च तेभ्यो भट्टिकाऽऽदितश्चैव व्याख्यानि । बहुधेति—आद्यन्तादिभेदगणना प्राचीनानुसारिणी दिवसेत्यादिविच्छित्तिविशेषजीवातुरर्वाचीनैरुद्भाविता । वस्तुतस्त्वसंख्य एवायं भेदक्रमः । सप्तविंशतिरिति तु वस्तुगत्या [illegible] न किमपि तात्पर्यं 'बहुधा यमकक्रिये'त्येव निष्कर्षः । अयुक्पाद-युक्पाद मिश्र-

नन्दानन्दप्रकन्दः स्मर-समर-स-म-व्यूह-शारीह हारी
सङ्गी सङ्गीतदेव्या अहरहरहरद्रासराधां स राधाम् (ग) ॥३९
न मानमाधेहि मनस्यदःस्यदः शुभं शुभंयोः स्यति देवि ! तेऽविति (ग) ।
यतो यतोरात्रकृताऽरुषा रुषाऽयशो यशोदाभुवि विद्यतेऽद्य ते ॥ ४०
प्रतिपादसर्वयमकं यथा—
ममत्वयाऽममत्वया न वेहितं नवे ! हितम् ।
स्मराधिके स्म राधिके ! चर स्मराश्च रक्ष माम् ॥ ४१

हरी राधामहरत् । कीदृशः ? नन्दः (ग) नन्दको य आनन्दस्तस्य प्रकन्दः प्रथममूलं स्मरसमरे समः मा शोभा तत्सहितो यो बलविन्यासस्तं हर्तुं शीलं यस्य सः । 'व्यूहस्तु बलविन्यास' इत्यमरः । तथा हारी हारवान् सङ्गीतदेव्याः सङ्गी । राधां कीदृशीम् ? अहरहः प्रतिवासरमेव रासराधां रासस्य राधः संसिद्धिर्यतस्ताम् ।

दूती प्राह—न मानमिति । मनसि मानं नाधेहि । कुतः ? अदःस्यदः एतस्य मानस्य वेगः हे देवि ! शुभंयोः प्रशंसावत्यास्ते तव शुभं मङ्गलं स्यति नाशयति अहंशुभमोर्युस्, इति युस् । शुभमिति मान्तमव्ययं प्रशंसावचनम् । अहो इत्याश्चर्ये । अहोरात्रकृतमरुर्मनःपीड़ा यतस्तया रुषाऽविति इति सम्बोधनम्, तथा च तादृशा रुषा त्वमधुनाऽपि ज्वलिता नाभूरित्याश्चर्य्यं, यशोदाभुवि श्रीकृष्णेऽद्य तेऽयशो दुर्यशः एवेदं वर्त्तते । श्रीकृष्णोऽप्याह—ममत्वयेति । हे राधिके त्वया मम न हितं न वा ईहितं वाञ्छितं भवति । कुतः ? अममत्वया मयि ममत्वशून्यया । ननु तर्हि मामुपेक्षस्व तत्राह—हे नवे ! नित्यनूतनत्वात्त्वं मे चेतो लोभयसीति भावः । अथ च चेतः पोड़यसि चेत्याह—स्मरेण स्मरणेनाधिर्मनःपीड़ा कामोद्गमो यतः हे तथाभूते ! यद्वा स्मरेण कन्दर्पेण हेतुनाऽधिर्मनःपीड़ा यतः हे तथाभूते राधिके ! तस्मात् त्वं मां चर प्राप्नुहि माञ्च रक्ष । स्मेति पादपूरणे ।

---

सर्वयमकादयोऽन्ये च अनामकाः सनामकाः बहवोऽन्योदाहार्याः । 'सदासे'त्यादिष्वप्रयुक्तता सख्या, 'कस्या विशदता'मित्यादिष्वपि कृत्रिमो पदभङ्ग इति स एव प्राचीनो दोषः, 'रासेचरे'त्यादिषु, 'ससारसा' इत्यादिषु च पदानां चादीनामनुद्देशः, 'तेऽविति' इत्यादिष्वर्द्धान्तरैकपदतेत्यादि दोषप्रसङ्गाः यमकतया कथमपि सोढ़व्याः । 'गरीयसे'त्यत्र पादेन पदच्छेदेऽत्र न किमपि माधुर्य्यं—मान्यर्थ्यमिव प्रत्युत भासते । न तावत् सर्वत्रैयं दोषदृष्टिः, यतो 'मदनसङ्गरसङ्गे'त्यादिषु उपभोग्यैव काऽपि स्वादुता, 'विवतते'त्यादौपद्ये नलोदयादिवदाकारपद्येष्विव किमपि वैमुख्यमुक्तमेव, अतो हानोपादानयोर्भेद निदर्शनम् । मदनेति—राधां प्रति

सर्वयमकं यथा—

(५)(८) (४) (१) (२)
ससार सा ससारसाऽस-सार-सास-सार-सा ।
(३) (७) (६)
ससारसाससारसा स सारसास-सार-सा (ग) ॥ ४२

प्रत्यक्षरयमकमपि केचिदिच्छन्ति । तद्यथा—

(४) (५) (६) (८) (९)
वि-वितत-नाना-माऽमा विविधघना ना-ववश्याश्या ।
(१०) (७) (२) (११) (३) (१)
सा साधुधुततरारा मम बबले लेढ्दि-ढ्दित-तनु ! नु (ग)॥४३ इत्यादि

एवं सप्तविंशतिर्भेदाः(ग) । द्विखण्डत्रिखण्डादिकस्योक्तोदाहरणेष्वन्तर्भवतीति पृथङ् न दर्शितम् । तथाहि 'अहो अहोरात्रकृताऽरुषारुषा' (४० श्लोके) इत्यादौ द्विखण्डम् । 'मासौ माऽसो मरीच्यः' (३८ श्लोके) इत्यादौ द्विखण्डम् । 'विवितते'त्यादौ (४३ श्लोके) चतुःखण्डम् । एवमन्यान्यप्यूह्यानि । गद्येषु तु नायं क्रमः । तत्र यथा—'सदा मोदरे दामोदरे गुणसाराधिका सा राधिकाऽनुरज्यति स्मे'ति ।

सा राधा प्रातर्निकुञ्जाच्चलति स्म । कीदृशी ? ससारसा सलीलाकमलाऽससार-साससारसा आ सम्यक्प्रकारेण असो विक्षेपो यत्र असू क्षेपणे । तथाभूते सारे गमने यः सासो निद्रा तस्य सारं बलं स्यति खीयप्रतिभया हूसयतीति सा । सृ गतौ सोऽन्तकर्म्मणि अन्तकर्मशब्दस्य नाशी ह्रासश्चार्थः । ससारसा—ससारसा ससन्ति सृतं गच्छन्तीति ससाः, आ सम्यक् रसन्ति शब्दायन्त इत्यारसाः, असन्ति दीप्यन्त इत्यसाः सारसाश्चक्रवाका यतः यां विलोक्येत्यर्थः सा । सस सृतौ, रस शब्दे, अस दीप्तौ । सः श्रीकृष्णः ससारेति पूर्वेणान्वयः । कीदृशः ? सारसास-सार-सा सारसानां पक्षिविशेषाणामासस्योपवेशस्य सारः स्थैर्य्यं तत् स्यति (साति) नाशयति खीयगमनेन चकितीकृत्येति भावः ।

सा वनस्थली नाववश्याश्या नौ आवयोरवश्यमेवाश्या व्याप्या अशूङ् व्याप्तौ । विशेष्य-नामाग्रहणं सङ्केतस्थलत्वात् । कीदृशी ? विभिः पक्षिभिर्वितता नाना मा शोभा यस्याः सा । अमाऽपरिमिताऽनुपमा वा । विविधानि घनानि यस्यां सा । साधु यथा स्यात्तथा धूततरोऽतिखण्डित आरो गतिर्यस्या यया वा यां प्राप्यान्यत्र गमनं नैव युज्यत इति भावः ।

---

विशाखाऽऽहेति कृष्णानन्दिन्यां सङ्गतिसूचना । माऽस इत्यत्र समा धुरा यस्येति प्रेमप्रकर्ष समत्वेनोक्तैवैमहिमवत्यप्यर्थः,नन्दानन्देत्यत्र नन्दस्य व्रजराजस्य नन्दन इति सुगम एवान्योऽर्थः ।

भिन्ना अप्यर्थभेदेन युगपद्भाषणक्षमाः।
त्यजन्ति भिन्नरूपत्वं शब्दा यत् (४) श्लेष (यच्छ्लेष) एव सः॥
२१२ का

'अर्थभेदेन शब्दभेद' इति न्यायात् काव्ये स्वरस्यानुपयोगेन स्वरगतभेदाभावाच्च, केवलार्थभेदेन भिन्ना अपि शब्दा युगपदेकदा यत् यद्यर्थान्तरभाषणक्षमाः सन्तो भिन्नरूपत्वं त्यजन्ति तदा सः श्लेषः (घ)। अर्थद्वयश्लेषणाच्छ्लेषः।

स प्रकृतिलिङ्गवर्णप्रत्ययभाषाविभक्तिपदवचनैः।
अष्टविधो, निरपेक्षस्तुल्योभयवाच्य एव नवमः स्यात् ॥२१३ का

निरपेक्षः प्रकरणादिव्यतिरेकेणापि तुल्यवाच्यद्वयः (घ)। क्रमेणोदाहरणानि—

मनस्तुदन्ती क्षणदा बतेष्टा विधौ विरुद्धे तमसि प्रवृद्धे !
तस्मिन् प्रसन्ने हरितः प्रसादं धन्या लभन्ते तमसि प्रनष्टे ॥४४

सा ववले वलवती भवति स्म। मम वेल्लिनी मन्मुखमाधुर्यास्वादिनी हिता च तनुर्यस्याः, हे तथाविधे ! नु इति सम्बोधनम्। राधिका दामोदरे रज्यति स्म। कथम्भूता? गुणेषु साराधिका गुणेषु मध्ये ये सारभूता गुणास्तैरधिका। दामोदरे कथम्भूते? सदा मोदं राति ददातीति तस्मिन्।

मनस्तुदन्तीति—विधौ चन्द्रे विरुद्धे सतीष्टाऽपि क्षणदा उत्सवदात्रतया यथार्थनाम्नी रात्रिर्मनस्तुदन्ती स्यादिति. तस्मिन् विधौ प्रसन्ने हरितो दिशः कर्त्र्यः प्रसादं प्रसन्नतां लभन्त इति। पक्षे, विधौ विधातरि विरुद्धे सति यत्तमसस्तमोगुणस्य वृद्धं तस्मिन् सति इष्टाः पदार्था ईक्षणाच्छेदकाः सन्तो मनस्तुदन्तीति प्रथमार्द्धस्य, हरितः श्रीकृष्णात् जना धन्याः प्रसादं लभन्त इति द्वितीयार्द्धस्यान्वयः।

---

अत्रापि क्रमस्याक्षराणाञ्च नियमितत्वात् यमकमेव नानुप्रास इति। गद्येष्विति—तथा च रुद्रटकारिका :—'प्रायश्छन्दांसि विषयोऽस्ये'ति। तत्र टीकाकृतां नमिसाधुचरणानां विवृतिः—'प्रायोग्रहणात् गद्यमपि क्वापी'ति चोदाहार्य्या। 'मम वेल्ली'त्यत्र सापेक्षत्वेऽपि गमकत्वात् समासः।

(घ) 'त्रिधा तु भिद्यते शब्दो रूपतः स्वरतोऽर्थत' इति शाब्दिकनयेनार्थभेदभिन्नानामेव शब्दानामत्र कारिकया परामर्शः। रूपत आकृतितो न तु प्रकृतितः। वस्तुतस्तेषामाकृतितोऽभिन्नानामपि प्रकृतितो भिन्नत्वं दुरपह्नवमित्याह वृत्तौ, 'अर्थभेदेन शब्दभेद' इति। 'सकृदुच्चरितः शब्दः सकृदर्थं गमयती'त्यभियुक्तस्तिरत्र प्रमा। पाठगणे मुनिना

अत्र 'ईचणदे'ति दाप् लवने, 'चणदे'ति डु दाञ् दाने, इति प्रकृतिभेदः । 'इष्टा' इति पुंलिङ्गम् । 'इष्टे'ति स्त्रीलिङ्गम्—इति लिङ्गभेदः । पुन'रिष्टा' इति बहुवचनं, 'इष्टे'त्येकवचनं, तेन वचनभेदः । "विधा"वितीकारोकार-सारूप्ये वर्णभेदः । "तुदन्ती"ति शतृ-प्रत्ययः, "तुदन्ति' इत्याख्यातप्रत्ययः, तेन प्रत्ययभेदः । 'हरित' इति पञ्चमी, 'हरित' इति जस्, तेन विभक्तिभेदः । अनेनैकेन षड्भेदाः प्रदर्शिताः । पुनरपि भङ्ग्यन्तरेण लिङ्गवचनभेदं दर्शयति—

लीलाऽम्भोरुहगञ्जिनी रतिरणक्रीड़ाश्रमोद्गारिणी
निद्रोद्भेदविलासिनी स्ववशताऽसङ्कोचसञ्चारिणी ।
अन्योन्यप्रणयप्रकाशनविधावन्योन्यसंह्लादिनी
राधाया नयने हरेरपि तनुः क्षेमं विधत्तां तव (11) ॥ ४५

भाषाश्लेषो यथा—(घ)

उद्दामकामकण्डूलकरमण्डलचण्डिमा !
कालिन्दीकुञ्जरी धत्ते विहारं वारिमञ्जुलम् ॥ ४३

लीलाऽम्भोरुहेति—राधाया नयने तव क्षेमं विधत्तां कुरुतामिति परस्मैपदस्य द्विवचनं, तथा हरेरपि तनुश्च तव क्षेमं विधत्तामित्यात्मनेपदस्यैकवचनम्, धाञ् धातोरुभयपदित्वात् । नयनयोस्तनोश्च विशेषणान्याह—लीलेत्यादि । स्ववशतेति—नेत्रपक्षे या श्रीकृष्णनिष्ठ-वशीभूतता तस्या असङ्कोचो विस्तारस्तस्य सञ्चारिणी, तनुपक्षे स्वकर्तृका या जगन्निष्ठ-वशीभूतता तस्या इत्यादि ।

भाषाश्लेषः शौरसेन्याः श्लेषः । उद्दामेति—संस्कृतपक्षः सुगमः । प्राकृतपक्षे—हे चण्डि ! हे कोपने ! कालिन्दीकुञ्जरोधसस्ते (घ) जूलं युगलं द्वन्द्वशो विहारं वारिमं वारयिष्ये । कथं वारयिष्यसीत्याह—डूलकरमं प्रस्तुतं कर्म मा डल मा डल प्रस्तुतानु-सारि कर्म कुर्वित्यर्थः । प्रस्तुतकर्म कीदृशम् ? उद्दामकामकम् । 'कालिन्दीकुञ्जरे'ति 'उद्दामकामे'ति पदद्वयेऽपि समानार्थत्वात् भाषासमावेशः, अन्यत् सर्वमर्थभेदाद्भाषाश्लेष इति ।

भरतेन 'हास्यशृङ्गारयोः स्वरितोदात्तं वीररौद्रात्ङ्ग,तेषूदात्तस्वरित'मित्यादिकया दिशा प्रतिपादितस्थितिकोऽपि काव्ये स्वरभेदप्रसङ्गः प्रकृतेऽलाप्रकृत इत्यलं दुर्विदग्धप्रौढ़िप्रकटनेन । एवं स्थिते एकमेवाकारमाश्रित्य वर्त्तमानस्य पदघटकावयविनो भिन्नार्थत्वप्रकटने वाच्ये श्लिष्यन्तेऽस्मिन्नभिन्नरूपेण भिन्ना इति कृत्वाऽस्यालङ्कारस्य श्लेषसंज्ञा । अलङ्कृतिरियमार्थ-

(11) "विधत्तां मुदः" इति (क) (ख) पुस्तकयोः पाठः ।

पदश्लेषो यथा—

समराला हृषेवेयं राधिके ! सर्वदारुणा ।
मतिश्च तव दृष्टिश्च समे एव बभूवतुः ॥ ४७
कृष्णपक्षे बलवती दोषाकरपराङ्मुखी ।
समे द्वे तामसी रात्रिः सात्त्विकी च सतां मतिः ॥ ४८

वाक्यगतत्वेनायं समोभयवाच्यः। शब्दार्थश्लेषयोरयं भेदः—यत्र शब्द-परिवर्त्तनेनापि न श्लेषत्वभङ्गः सोऽर्थश्लेषः, अन्यस्तु सभङ्गाभङ्गत्वाभ्यामिव शब्दश्लेषः। स चोक्तोदाहरणेषु, शब्दपरिवृत्त्यभावात् (ङ)।

अर्थश्लेषो यथा—

विलोलसंफुल्लकदम्बमालः समुल्लसन्मञ्जुलबर्हिबर्हः ।
अशेषसन्तापहरो जनानां कृष्णश्च मेघश्च सहोज्जिहीते ॥ ४९

अत्र 'कदम्बा'दिशब्दानां परिवृत्त्याऽपि न श्लेषत्वहानिः, इत्यर्थश्लेष एव(ङ)। अथ शब्दालङ्कारप्रस्तावे प्राप्तावसरतया चित्रकाव्यमपि दर्श्यते। तत्र यद्यपि—

मानवतीं श्रीराधां प्रति श्रीकृष्ण आह—समरालेति। साम्ये हेतुमाह—इयं मति-र्दृष्टिश्च सर्वदारुणा सर्वस्मिन् काले दारुणा सर्वदाऽरुणा च समराला दृष्टिपक्षे सम्यक् कुटिलेत्यर्थः, यदुक्तम् मेदिनीकारेण 'अरालः कुटिले सर्जरसे सामनि दन्तिनी'ति। मति-पक्षे समरो युद्धं तत् आलातीति। कृष्णपक्ष इति—कृष्णपक्षे शुक्लातिरिक्तपक्षे भवत्-पक्षे च। दोषाकरश्चन्द्रो दोषोत्पत्तिस्थानञ्च। विलोलेति—माला स्रक् समूहश्च।

---

भारतीयसाहित्ये स्वतःस्फूर्त्तेव स्वाभाविकीति सर्वत्रैवास्या अकुण्ठप्रसरः—परं गद्यकाव्ये-ष्वस्या भूयानुत्कर्षो लक्ष्यते। अत्रापि 'सर्वमत्यन्तगर्हित'मिति नीत्याऽतिविदग्धीतो निक-र्षोऽपि प्रासङ्गिकः प्रवृत्तः। पद्येऽप्यस्या विच्छित्तिं स्थूलदृशा प्रेक्ष्यैवं प्राचां निर्बन्धप्रकटनं 'श्लेषः पुष्णाति सर्वासु प्रायो वक्रोक्तिषु श्रिय'मिति। भाषाश्लेषस्यापरैरुक्ताद्भाषासमाख्याद-लङ्कारात् स्वतन्त्रविषयता, पूर्वत्र भाषाभेदादर्थभेदोऽप्यानुषङ्गिकः, उत्तरत्र न तथेत्याभाषात्। रुद्रटादिभिस्तूभयोर्भेदेऽङ्गीकृतेऽपि संज्ञाभेदकल्पः प्राचीनमतनियन्त्रितत्वात् कथमपि परिहृतः। काव्यप्रकाशोक्तदिशा नात्र तस्य तथा व्यतिरिक्तस्य वेशतः सूचनमपि। भाषाश्लेषे क्वचित् भाषासमेऽपि कष्टकल्पनाश्रयः दुष्करः परिहर्त्तुं 'यथोद्दामे'त्यादौ लक्ष्ये।

(ङ) 'सभङ्गः शब्दश्लेषः अभङ्ग एवार्थश्लेष' इति प्रायोवादमपाकर्त्तुमुद्भटादिकृता सर्वस्वकृता कृताश्रयामाण्याश्रयिभावरूपां शब्दार्थोभयालङ्कारनिर्द्दिष्टव्यवस्थां दूषयितुमेय-मवतारयिका। मम्मटादिभिर्विध्वस्ता समुद्रबन्धाद्यार्वाचीननिबन्धकृद्भिरुज्जीवयितुमिष्टाऽपि

नटानाञ्च कवीनाञ्च मार्गः कर्कश एव यः ।
रसाभिव्यक्तये नासौ शक्तिज्ञप्त्यै स केवलम् ॥ (ङ)

**चित्रं नीरसमेवाहुर्भगवद्विषयं यदि ।**
**तदा किञ्चिच्च रसवद्यथेन्दोः पर्वचर्वणम् (च) ॥ २१४ का—**

अत्र किञ्चित् प्रदर्श्यते । प्रथमं प्रतिलोमानुलोमपादो यथा—

(७) (१) (२)
राधा सारससाधारा मारमाऽर-रमारमा ।
(३) (४) (६) (८) (५)
काशोदाररदाऽशोका सा ललास सलालसा ॥ ५०

प्रतिलोमानुलोमश्लोको यथा—

(२) (३) (४) (१) (६) (७)(८) (५)
काऽधिदा सखभा राधे ! मानो माऽस्तु रमाधवे ।
(१०) (१२) (११ (६) (१७)(१३)(१४) (१५) (१६)
वेधमारस्तु मा नो माऽधेराभा खसदाऽधिका ॥ ५१

अथ चित्रकाव्यटीका—सा राधा ललास । कीदृशी ? सारस्समाधारयतीति सा । मारेण कामेन मां शोभामाराति गृह्णातीति सा च, रमेव रमते इति रमारमा च सा । काशेन दीप्त्या उदारा रदा यस्याः सा । अशोका शोकरहिता । सलालसा स्पृहावती । काऽधिदेति—हे राधे ! का नारी आधिदा मनःपीड़ादायिनी सती सखभा खभया खकान्त्या सह वर्त्तमाना भवति, अपि तु न काऽपीत्यर्थः । अतो रमाधवे श्रीकृष्णे मानो माऽस्तु, माने सति तस्याधिस्तवापि ग्लानिरिति भावः । नोऽस्माकं वेधमारो विधाननाशः क्रियानाशस्तु माऽस्तु—विध् विधाने घञ् । तथाऽधेराभा मनःपीड़ाया आभा खसदा खगताऽधिका माऽस्तु, सदृल्ट गतौ ।

---

न खस्या सैत्यलं म्तमारशेन । सभोभयवाच्यत्वेनास्याभिधामूलध्वनितो भेद इति प्रागेव सूचितं ध्वनिकिरणविवरणे । श्लेषस्थले शब्दपरिवृत्तिसहत्वासहत्वयोर्वांसव्यवस्थत्तित्वप्राये उभयालङ्कारकल्पना न सम्प्रदायसम्मतेत्यलं पल्लवितेन । भाषान्तरेष्वेवंविधसभङ्गश्लेषप्रसङ्गः सुदूरपराहत इत्यस्यार्यभारतीयसाहित्ये वैशिष्ट्यजीवातुः । 'विलोले'ति श्लोकोऽयं किञ्चित् भिन्नत्वेनान्यत्रोदाहृतः । अत्रार्थश्लेषविवेचनं न क्रमप्राप्तमिति दिक् ।

(च) नटानाञ्चेति—संग्रहश्लोक इव भासमानेऽत्राप्रकृतस्य वाक्कास्फोटद्यातर्ज्जनगर्ज्जनादिमयस्य नटनाटितकस्य सोऽतृप्रासाच्चेपः समुपभोग्यः शास्त्रसिद्धश्च । प्रकृते रसोच्छेदकता प्राचीनैरपि खीकृता । दिग्दर्शनन्यायेन रसविवरणकृतां लोल्लटभट्टानां

प्रतिलोमानुलोमौ श्लोकौ यथा—

(१) (६) (५) (४)
मानसाररसाधारा साऽयन्ती वनमालिना।
(८) (२) (७) (३)
संललास महामोदा साऽऽमाद-नि-साध्वसा॥
(२) (३) (१) (७) (६)(५) (४)
साध्वसानि दमाश्वासा दा मोहामसलालसम्।
(१४)(८) (१३)(१०)(११)(१२) (९)
नालि! मानवतीयं सा राधा सार-रसा-नमा॥ ५३

महामानवती राधा सम्प्रति किं करोतीति पृच्छन्तीं सखीं प्रति सखी प्राह—मानसाररसाधारा मानस्य सारं रसं न धारयतीति तथा, यतो वनमालिना सहायन्ती गच्छन्ती (च) सती आशु शीघ्रं संललास, इण् गतौ शत्रन्तः। कीदृशी ? महामोदेनाधो दीप्तिर्यस्याः सा। आमादनिसाध्वसा आ सम्यक् मादेन सौरभमत्ततया निसाध्वसा निर्भया निशब्दोऽयं निषेधार्थो "यथा दीपो निवातस्थ" इतिवत्। अहं साधु यथास्यात्तथा असानि वर्त्ते। यतो दमाश्वासा दमेनैवाश्वासोऽभूदित्यर्थः। ननु मा त्वया वादीः तादृशमानस्य शीघ्रमेवोपशमं न सम्भावयामीति वदन्तीं प्रत्याह—असलालसं यथास्यात्तथा ऊहां वितर्कं मा दाः, किन्तु सलालसं यथास्यात्तथा वितर्कं खण्डयेत्यर्थः! निश्चयं प्रदर्शयत्याह—नालीति। हे आलि! सेयं राधा मानवती न किन्तु साररसेन श्रेष्ठरसेन आनमतीति सा।

---

यच्चनं प्रकाशटीकाकृता सोमेश्वरेणोद्धृतमपोह्यते—'यमकानुलोमतदितरचक्रादिभिदा हि। अभिधानमात्रमेतत् गड्डलिकाऽऽदिप्रवाहो वे'ति। 'क्रीड़ागोष्ठीविनोदेषु तज्ज्ञैराकीर्णमन्त्रणे। परव्यामोहने चैव सोपयोगाः प्रहेलिका' इत्युपलक्षणमुखेन च तत्त्वोद्घाटनम्। शक्तिशम्रा इति—सा च शक्तिर्गोष्ठीगरिष्ठानां कुतुकिनां नृपश्रेष्ठानां स्वान्यनुवृत्तिकृतविशेषेण सप्रकाशेति भट्टबाणादिग्रन्थेषूल्लेखतः प्रतीयते, खड्ग-चक्र-बाणादिराजसभासिद्धपदार्थानुकृतिमिषावसीयते। 'अनेकधावृत्तवर्णविन्यासैः शिल्पकल्पना। तत्तत्प्रसिद्धवस्तूनां बन्ध इत्यभिधीयते' इत्यग्निपुराणे (३४२ तमाध्याये) अस्य काव्यशिल्पकल्पं पुरस्कारसूचनम्। 'भगवद्विषय'मिति ज्ञात्वा यदेषामत्र सार्थकत्वसमर्थनं तत् भक्तवैष्णवकविसहृदयसार्थशोभि एव। गर्भाक्षरादीनि तत्कालोपयोगीनि चित्राणि। आकार-गति-स्वर-व्यञ्जन-स्थान-च्युतक-गुप्त-प्रहेलिकाऽऽदिभेदैरस्य भूयान्विस्तर आकरतो मृग्यः। अत्रैषामादितश्चतुर्णां प्रचुरतो लक्ष्यलक्षणानि। पद्मादिबन्धानां मुद्रितग्रन्थेषु बहुशः प्रदर्शितत्वादिरलप्रायाणि च्छत्र-खड्ग-पताका-गदा-शङ्खबन्धमयान्यत्र परिशिष्टे दर्शयन्ते। एषां शब्दालङ्काराणां सर्वदैव बहुभि-

महासर्वतोभद्रं यथा—(च)

(७) (६) (५) (१) (२) (१२)

साधाराऽश्रीः श्रीराधा सा धामाकामा मा-कामाऽधात् ।

(३) (४) (१०) (८) (११) (९)

राकाधीमा माऽधीकारा श्रीमा मानेनेमामाश्रीः (च) ॥ ५४

सर्वतोभद्रं यथा—

(३) (५) (६) (७)

धाराऽसाररसा राधा रासलास्यस्य लासरा ।

(४) (१) (२)

सालाकाररकालासा रस्यरस्यस्य ! रस्यर ! ॥ ५५ (12)

साधारेति—सा श्रीराधा साधाराश्रीः साधं सिद्धिमियर्त्ति प्राप्नोति साधारा आ सम्यक् श्रीः शोभा यस्यास्तथाभूता भवतीत्यन्वयः। कीदृशी? धामाकामा धाम्नि निकुञ्जगृहे अं श्रीकृष्णं कामयत इति सा। 'शीलिकामिभिक्ष्याचरिभ्यो णः' (पा ३।२।१ वार्त्तिके) इति ण प्रत्ययः। ननु किं स्वीयकामस्यार्थं कामयत इति तत्राह—माकामा। मेति निषेधे, न विद्यते कामः स्वसुखतात्पर्यं यस्याः सा, कृष्णसुखार्थमेव तं कामयत इत्यतः प्रेमवतीति भावः। राकाधीमा राकायां पौर्णमास्यां धियो बुद्धेर्मा शोभा यस्याः सा रासविलाससिद्ध्यर्थमिति भावः (12*a*)। माधीकारा मा आधिर्मनःपीड़ा यस्याः इं कन्दर्पं कं सुखस्य आ सम्यक् रातीति, सा च सा च सा, अतएव तस्याः सर्वतः श्रैष्ठ्यात् श्रीमा सम्पत्तिरूपा लक्ष्मीः मानेन आदरेण आश्रीः आश्रयमाणा इमां राधामधात् स्वसर्वसम्पत्तिसमर्पणेन पालयामास। धाराऽसाररसेति—धारायामासारः सम्पात इव रसो यस्यां सा

राद्दततया प्रतियुगं नवाः संस्थाः क्वचित् क्वचिल्लालित्यादिभिर्गुणैरुल्लिखितप्रायतया सत्काव्यरूपेणादरस्य विदग्धगोष्ठ्यामित्यपरोक्षमेव प्राचीनसेविनाम्। आधुनिकप्रायाणां

(12*a*) '—मिति शेषः' इति स्यात्। परं टीकाग्रन्थः सर्वत्रोपरिदर्शित एव।

(12) इतःपरं 'यथा वा, नालीकाननकाऽली नालीव सारसावली। कासा रसासारसाऽकानरसा नम साऽर न।' इत्यधिकः पाठः (छ) (ज) पुस्तकयोरुपलभ्यते। टीकाऽपि तत्रार्थादर्शिता यथा—"वसन्ते रासोत्सवे प्रवृत्तस्य श्रीकृष्णस्य तत्र श्रीराधिकामपश्यतः स्वयमुक्तिरियम्। सा मत्प्राणाधिकत्वेन प्रसिद्धा न मार नागतवती। किम्भूता सा? अकानरसा महिच्छेदजन्येनाकेन दुःखेन, "अकं पापदुःखयो"-रिति मेदिनीकारणात्, य आनो जीवनं स एव रसो विषं यस्याः सा, "रसो गन्धरसे जले। शृङ्गारादौ विषे वीर्ये" इत्यादि मेदिनी। अतएव रसासारसा रसस्य शृङ्गारसुखस्यासारो वृष्टिस्तां स्यति खण्डयतीति क्विप्। स्वरूपतस्तु सा किम्भूता? कासा इति—कासो शोभिरस्यास्तीति दीप्तिमतीत्यर्थः। पुनः कीदृशी? नलीनेत्यादि

छत्रबन्धो यथा—(च)

(६) (५) (२) (३)
तनुतां तनुतां राधाकृष्णयोश्चरितश्रुतिः।
(४) (१) (८)(७)(९) (१०)
हृत्तापानां सुधासिन्धुधारा तां नु ततां नुत॥ ५६

खड्गबन्धो यथा—

राधामाधवयोः केलिः श्रुतिहृत्सुखदायिका।
कामन्तनोतु वः क्षेमं प्रेमानन्दौघनिर्भरा॥ ५७
रासारम्भे नृत्यगीतवादित्रादिमनोहरा।
रामसस्सारा सौभाग्याधरीकृतपरा परा (च)॥ ५८

राधा "धारासम्पात आसार" इत्यमरः, धनुर्ज्याकरिष्टं हितादिवदयं धाराऽसारशब्दो ज्ञेयः। रासलास्यस्य रासाख्यनृत्यस्य लासरा लःसं कान्तिं राति ददातीति, तया विना तत्र रासविलासो न सिध्यतीति भावः। पुनः कीदृशी? साराकाररकालाधा साराकारं राति ददातीति साराकाररो यः कालो यौवनसमयः तत्रासः सम्यक् दीप्तिर्यस्याः। हे रस्यरस्यस्य! रसिभ्यो हिताः रस्याः रसिनो रमणपराश्च ये युवतिजनास्ते रस्यो गण्यः, हे तथाभूत! हे रस्यर! रस्यान् रमणीयान् विलासादीन् राति तेभ्यो ददातीति हे तथाभूत श्रीकृष्ण!

तनुतामिति—चरितश्रुति चरितश्रवणं हृत्तापानां तनुतां क्षयतां तनुतां विस्तारयतु। कीदृशी? सुधासिन्धुधारा। नु भोः, तां ततां विस्तृतां नुत स्तुत, यद्वा हर्षेण द्विरुक्तिः।

रासारम्भ इत्यस्य पूर्वेणान्वयः। रासस्य नृत्यविशेषस्यारम्भे नृत्यं हस्तपादादिचालनविशेषः, गीतं षड्जादिमिलनं, वादित्रादि वीणाऽऽदि, तैर्मनोहरा रामसस्य कौतुकस्य सारः स्थिरांशो यस्यां सा। सौभाग्येनाधरीकृता अधःकृताः परे ब्रह्मानन्दादयोऽपरे (13) सार्वभौमसुखादयो यया सा इति, केल्याः सकाशान्न केऽपीति भावः।

गौडीयविदुषामुत्तम्भितसंस्थानमुद्राणामालङ्कारिकधुरीणाणां प्रेमचन्द्रतर्कवागीशपादानां 'हतबले कमबले जड़ताऽकुले व्रजति मारशले (Marshall) च मधुव्रते। विधिवशादधुना मधुनाऽङ्गतो रसमयः समयः समुपाययाविष्यादि' संगृहीतृणामामोदमुत्तेजयति। 'अयन्ती'-त्यादि—जीवातुस्तु, अय गताविति धातोरनुदात्तेत्वलक्षणमात्मनेपदमनित्यमिति। 'उदयति

—न लीनोऽलिर्यस्यां तादृशी, साररसावली उत्तममधुपङ्क्तिरिव भ्रमरादुष्टा प्रचुरमधुधारेव परमानन्ददेत्यर्थः। पुनः कीदृशी? नालीकं पद्ममिवाननं यस्याः सा, बहुव्रीहौ कः।" तृतीयचतुर्थचरणसम्बन्धो बन्धस्तु न सरसः, अतो हेय एवायम्।

(13)—'दयः परे' इति क्वचित् पाठः।

मुरजबन्धो यथा—

'सासारे'त्यादि (४२ श्लोकः)। एष एव गोमूत्रिकाबन्धः, एष एव बन्धकवाटः, एष एव शृङ्खलाबन्धः, एष एव द्व्यक्षरः। खड्गबन्धो यथा—

(३) (५) (६) (७)(४)
धेयमाधुर्य्यमर्य्यादा राधा माधवमार सा।
(१) (२)
सारमाऽवधमाधारा धेयमाधुर्य्यसौभगा ॥ ५९

पताकाबन्धो यथा—

(१) (५) (४)(८) (६)
रास-तंसरसारम्भे राधा साऽर रमाधवम्।
(१) (७) (३)
बन्धमाररसाधाराभेऽरं सारसतंसरा ॥ ६०

एष गदाबन्धश्च। गर्भाचरो यथा—

कामत्रपाऽलीलास्य राधिका।
साऽध्वनि शाति नास्य राजते (क) ॥ ६१

धेया धार्य्या माधुर्य्यमर्य्यादा यस्याः सा राधा माधवमार जगाम। कादृशी? सारमावधमाधारा सारं श्रेष्ठमप्राकृतं यत् माऽवं मां शोभामवति रक्षति मावं कैशोरं तद्वत्ते मां शोभां धारयतीति, सा च सा च सा। धेयं परिपाल्यं माधुर्य्यं सौभाग्यञ्च यस्याः सा। अत्र धारणे पोषणे च धाञ् कृत्यप्रत्ययान्तः। रासरूपो यस्तंसरसः तस्मिन् अलङ्कारे श्रेष्ठरस इत्यर्थः। तस्यारम्भे राधा माधवं श्रीकृष्णमार, तेन सङ्गता बभूवेत्यर्थः, ऋ गतौ। बन्धमाररसाधाराभे बन्धस्य संसारस्य मारो नाशो यस्मात्। रसस्याधार आभाऽपि यस्य—स च स च तस्मिन्। अरं शीघ्रम् आर इत्यनेन सम्बन्धः। सारसतंसं लीलाकमलश्रेष्ठं रातीति सा।

कामत्रपेति--कामेन हेतुना या त्रपाऽली लज्जाश्रेणी तस्या लास्यं नृत्यं प्रागल्भ्यमिति यावत् तं राधयति साधयतीति सा। अतएवास्य श्रीकृष्णस्य शाति सुखरूपेऽध्वनि श्रीकृष्णप्रापके सुखप्रदेऽभिसारमार्गे न राजते लोकलज्जाभयादेवेति भावः। तेन परम-कष्टप्रदे गुल्मलताकण्टकाकुल एवाध्वनि कृष्णमभिसरतीति।

---

वितताेद्धैरग्निरज्जावि'ति माघप्रयोगः 'उदयति स्म तदद्भुतमालिभि'रित्यादि श्रीहर्षप्रयोग-श्चैतत्पक्षेऽनुकूलः। अत्र टीकाकृतो व्याख्यानं हेयं, तथात्वे गण्प्रश्नेषो भावी, न चाखो स्वरसः। 'लाधाराश्री'रित्यादौ विद्युन्मालाच्छन्दः।

पद्मबन्धो यथा—

राधिका रुचिराकारा राकारासस्थलीसरा ।

रासलीलापरा सारारासारा गीः पिकाधिरा (छ) ॥ ६२

चक्रबन्धो यथा—

(१७) (१) (७) (१३) (२२) (१६) (१०) (४)

[यस्य] श्री तु लनां न [क-श्चन] ग मी भक्तौघ-ता पा दंनो

(१८) (२) (८) (१६) (१४) (११) (५)

[ध्वस्ता-] ना क्य बल- [च्छ-विः] स न हि मां त्वं मुञ्च मो द क्षम !

(२०) (३) (६) (१५) (२१) (१२) (६)

[सन्ना-] थ ! व्र जकेलि- श्र-ब्दनमनः [श्रद्धा-] न दी कौ तुकी(छ)

(२३)

कीलप्राय इहाध्वनीह· सतते नो [मत्सम:] पातकी ॥ ६३

अत्र— श्रीनाथपादकौतुक्यव्रतामोदी कविः शमी (छ) ।

यस्य ध्वस्ताऽच्छविः सन्नाऽश्रद्धा कश्चन मत्समः(13) ॥ ६४

गर्भाक्षर इति—एतान्येवाक्षराणि क्रमनैरपेक्ष्येण गर्भे निधाय कविना नानाच्छन्दोभिः श्लोकाः क्रियन्तामित्येतदप्येकं चित्रम् (च)। राधिकेति—राकायां रासस्थलीं सरतीति सा। साररासारा सारं साररसम् आ सम्यक् रासत्व इयर्त्तीति सा। गी:पिकाधिरा गीर्भिः पिकानामप्याधिं रातीति सा। यस्येति—यस्य श्रीयुक्तां तुलनां कश्चन कश्चिदपि न गमी न गमिष्यति। यस्त्वं ध्वस्तानाक्यबलच्छविः ध्वस्तमनाक्यानामसुराणां बलं छविश्च येन स त्वं मां न मुञ्च। हे मोदक्षम! भक्तजनानन्दने समर्थ! हे सतां नाथ! इहाध्वनि भक्तिमार्गे सततेऽविरते मत्समः कीलतुल्यः कोऽपि पातकी नास्ति। कीदृशः? व्रजस्य केलेः कथाश्रवणेनैव या मनसि श्रद्धानदी तस्यां कौतुकी स्नातुं कौतुकवान्. तत्रात्यन्ता· योग्योऽपीति भावः।

श्रीनाथस्य पादे पदसेवायां कौतुक्यं कुतुकिनो भावस्तत्रैव व्रते आमोदी कविः पण्डितः शमी शान्तः। यस्याच्छविम्लानता ध्वस्ता अश्रद्धा च सन्ना विशीर्णा तत्समः कोऽपि न भवेत्। पक्षे कविः स्वदैन्यं स्वयमेव वर्णयति स्म—श्रीनाथस्य श्रीगुरोः पादयोः कौतुक्यं पादावस्यैव संश्रयामीति यत् कौतुक्यं तन्मात्र एव व्रत आमोदी, न तु पादयोः कदाचित् कामपि सेवामकरोदिति भावः। कविः श्रीमहाप्रभुदत्तशक्तिकः शमी विरक्तो गुरुकृपा-

---

(छ) बन्धश्लोकेषु नामाङ्कता हि प्रायशः प्राचीनश्लोककृतां शैली। एषु क्वचित् कवेर्गुरु-स्मरणं गुरुनामाङ्कता च वरीवर्त्ति। तत्र विस्तरः कण्ठाभरणादितो ग्राह्यः। नीरसा-

(13) अत्र "न तत्सम" इति पाठः (ख) (ग) (छ) पुस्तकेषु, स च टीकाकृता गृहीतः।

शार्ङ्गबन्धो यथा—श्रीकृष्णगाथा नामेयं कर्मणा च कदाचन ।
नासाद्यते पावनिका विना तस्य दयां हरेः ॥ ६५
कथमस्य कृपासिन्धोर्जनेषु च मिथोरतिः ।
जन्यते बहुजन्मान्ते सुकृतैः कारणायितैः ॥ ६६
चरणासवलाभेन दारुणाकरुणात्मनाम् ।
मोहं हित्वा किल प्रैति तममुं सततं स्मर ॥ ६७
तस्य रूपं चेतसि च मन्त्रवत् सततं लिख ।
तेन साधुतया कृष्णे भविष्यति समागमः ॥ ६८
एषु— श्रीनाथपादपाथोज—(14) रसलालसचेतसा ।
कृतेयं ततमोदा च सुजनै कविता तथा ॥ ६९ इति श्लोकान्तरम् ।
यथा वा—श्रीशप्रीतिः स्वनामाकृतिकथनविनाभावपक्षे न, विद्या-
ऽमोदश्रद्धाकलापादपि सुखदमिथोभावसाम्राजतश्च (15) (क) ।
रम्या रम्यस्थलस्थप्रसरमदकलामोदलक्ष्मीसमेत-
प्रेमासन्नप्रगीतप्रणयिनि रुरुचे तात तन्ना बिसाभा ॥ ७०

सेवायामप्यनासक्त इति भावः। अतएव यस्य कृविर्भक्तसंसदि ध्वस्ता, श्रद्धा च सन्ना, तत्समो महाप्रभुभक्तमण्डले कोऽपि नास्ति, स एवैकोऽस्ति इति भावः। चरणेति—दारुणः कठोरोऽपि।

श्रीशप्रीतिः श्रीकृष्णविषया प्रीतिः स्वं स्वीयं यन्नामाकृत्योर्नामरूपयोः कथनं कीर्त्तनं तद्विनाभावपक्षे न भवति, किन्तु तदविनाभावपक्ष एव भवतीत्यर्थः। विद्याया आमोदः सौरभं, जगद्व्यापि यश इत्यर्थः। श्रद्धायाः कलापः समूहश्च तयोर्द्वन्द्वैक्यं, तस्मादपि न भवति, तथा सुखदो यो मिथोभावः परस्परप्रीतिस्तस्यापि साम्राजतः साम्राज्यात् "हायनान्त-युवादिभ्यश्चेत्यर्हण्। कीदृशी? रम्या, रमा शोभा तस्यां साधुः, रम्यस्थलं श्रीवृन्दावनं तत्रस्था

---

नामपि चित्रकाव्यानां देवद्विजगुरुनृपप्रशस्तिपरत्वे उपादेयत्वमुपयोगश्चालङ्कारिकैः सुबहुभिः स्वीक्रियते। उपरिप्रदर्शितात् चक्रबन्धादिभेदान्नासमञ्जसक्रमेण गृहीतैरक्षरसन्नि-वेशैस्तत्तत्स्थलेषु श्लोकान्तरघटनप्रणाली मूले परिशिष्टे च संख्याऽङ्क-चित्राद्यवान्तरसाधनैः स्फुटीकर्त्तुं चेष्टिता। एवमप्युक्तरत्नदर्शिते वैयाकरणप्रसिद्धलक्षणीयेन सिंहावलोकनन्यायेन

---

(14) 'पदपाथोज' इति पाठः (क) (ख) (ज) पुस्तकेषु।

(15) 'साम्राज्यतश्चे'ति पाठः (ग) पुस्तके। स चाधःप्रदर्शितात् श्लोकान्तरेणासाम्याद्धेयः।

अत्र च— श्रीनाथपदपाथोजरसलालसचेतसा ।
भाविता ततमोदस्थरसा सुकविना कृतिः(क) ॥ ७१

एकाक्षरपादो (क) यथा—

शंशीः शशी शशाशाशां पापोऽप-पाप-पः पपिः ।
लोलो (क) ललाल ली-ला-लीं ययाऽयं योऽयया ययौ ॥ ७२

एकाक्षरो यथा—

न नाना नानिनोऽनेना नानाऽनेनाननं नु नुः ।
नूनं नोनान्नूननूनाननु नुन्नुन्ननून्निनीः ॥ ७३

ये प्रखरा जङ्गमाः पशुपक्षिमृगादयस्तेषां मदो भावोन्मादः, कला वैदग्धी, मोदो हर्षो, लक्ष्मीः शोभा, तत्समेतो यः प्रेमा तमासन्नोऽनुगतो यः प्रगीतः प्रतिष्ठितः प्रणयिजनस्तत्र बत्थे रोचते स्म। तातेति वात्सल्येन सम्बोधनम्। हे मत्प्रियशिष्य ! तद्वा तस्य प्रणयिजनस्य भा शोभा विसाभा मृणालसदृशी अतिनिर्मलेत्यर्थः।

श्रीनाथेति—सुकविना कृतिः काव्यं भाविता आविर्भाविता। कीदृशी ? ततमोदस्थो विस्तृतानन्दस्थो रसो यस्यां सा। एव शार्ङ्गबन्धस्येव प्रपञ्चः। काचित् कृष्णमभिसरन्ती अकस्माच्चन्द्रमुदितं वीक्ष्याभिसर्त्तुमक्षमाऽनुतपति—शंशीरिति। शशी चन्द्र आशां पूर्वां, दिशं शशाश प्राप, शश् प्लुतगतौ, पश्चिमस्यां दिश्यस्तीभूय पुनः प्लुतेनैव पूर्वां दिशं जगामेत्यर्थः। कीदृशः ? शंशीः शं कल्याणं, तत्र शेते, न तु मत्कल्याणे जागर्त्तीति भावः शीङ् स्वप्ने क्विबन्तः। यद्वा मत्कल्याणस्य शीर्हिंसा यतः, शॄ हिंसायां सम्पदादित्वात् क्विप्, शमिति मान्तमव्ययम्। दुःखेन शशिनमाक्षिपति—पाप इति। अप-पाप-पः अपगत-पापानस्मद्विधयुवतिजनान् पायति, (16) पै ओ वै शोषणे। पुनः कीदृशः ? आशामस्मन्मनो-रथं पिबतीति सः, न लोकेत्यादिना षष्ठीनिषेधः। अतएव लोलो युवतिसतृष्णः कृष्णो लीमाश्लेषं लाति ददातीति याऽली सखी तां ललाल कामितवान्। 'लोलश्चलसतृष्णयोः', लीङ् श्लेषणे, लल ईप्सायाम्। यया लीलालया सह अयं शुभावहं विधिं सम्प्रयोगं ययौ प्राप। कीदृश्या ? अयया न विद्यते या यानं यस्यास्तया सम्प्रयोगे स्थिरयेत्यर्थः, वाम्यमकुर्व्वत्येवेति भावः। यद्वा, न यातीति अया तया।

नेत्यादि—ना पुरुषः परमेश्वरो नाना न भवति, किन्त्वेक एवेत्यर्थः। कीदृशः ? अनिनः न विद्यते इनः प्रभुर्यस्मात्, स एक एव प्रभुरित्यर्थः। 'इनः सूर्य्ये प्रभौ राज्ञी'त्यमरः।

---

षट्किते श्लोकान्तरगर्भे बन्धे। तत्षट्कश्लोकेष्वेषु श्रीकृष्णभक्तिः, तत्सूतेषु च गुरोः स्तुतिरिति विचित्रा भणितिपरिपाटी। श्रीमद्भागवतपुराणोपरि विषमकुटी प्रभृतयः स्वग्रामे

---

(16) 'पाययती'ति (ग) (ङ) (छ) पुस्तकेष्वसङ्गतः पाठः। 'पापयतीति' (ख) पुस्तकेऽनवधानकृतः पाठश्च।

सिंहावलोकश्लोकान्तरगर्भो यथा(क)—

(२) (१)
तेजः किञ्चन [तत्तदस्य] सततं [नव्याम्बुदाभं भज]
(४) (३)
स्निग्धं लोचन-[लोभदञ्च-] तुरता-[लीलाविलासावलि] ।
(६) (५)
अन्तश्चिन्तय-[तां रसस्य] सरणिं [श्रीराधिकाप्रौढ़िम-]
(८) (७)
प्रेमार्द्रं रुचि-[रच्छवि स्म]-रवतीं [क्रीड़ां दधद्धामसु] ॥ ७४

अत्र—नव्याम्बुदाभं भज तत्तदस्य लीलाविलासावलि लोभदञ्च ।

श्रीराधिकाप्रौढ़िमतां रसस्य क्रीड़ां दधद्धाम सुरच्छवि स्म (क) ॥ ७५

इति श्लोकान्तरगर्भः ।

## (६) पुनरुक्तवदाभासः पुनरुक्तवदेव सः ॥ २१५ का—

तव तनुशरीरसदृशीं काञ्चन कनकस्य वीरुधं नेच्चे ।

राधे ! सुमुखि ! न भवत्या मुखवदनङ्कोऽपि शुभ्रांशुः ॥ ७६

अनेनाः, न विद्यन्ते एनः पापं यस्य, "अयमात्माऽपहतपाप्मे'तिवत् । यद्वा विषमजगत्स्रष्टावप्यनेना निरपराधः । एकस्यैव तस्य नानाविधजगत्कारणमाह—अनेन परमेश्वरेणैव नाना नानाविधमायिकं जगद्भवतीति भावः । नु भो नुर्जीवस्याजड़स्यापि अननं जीवनमनेन परमात्मनैव भवति, किं पुनर्मायिकस्य नानाविधजगत इति भावः । नूनमिति वितर्के । जनान् न्यूनान् नॄन् पुरुषान् अनूनान् अन्यून्यांश्च पुरुषाननु लक्ष्यीकृत्य न नुन्नुद्भवति, नु स्तुतौ क्विपि नुत्, नुतं स्तुतं नुदति दूरीकरोतीति तथाभूतो न भवति, अनुत्कृष्टमुत्कृष्टं वा पुरुषं कश्चित् ईश्वरत्वेन स्तौतु, तत्राप्यसहिष्णुता नास्यमात्सर्य्यादिति भावः । प्रत्युत ननु निश्चितमुन्निनीः ऊर्द्ध्वं स्वर्गं महर्लोकादिकञ्च नितरां नयतीति, सन्निकृष्टोत्कृष्टदेवतोपासकानामपि स एव स्वर्गादिकं फलं प्रापयति, तस्यैव सर्वफलदातृत्वादिति भावः । तेजः कथम्भूतम् ? अन्तश्चिन्तयतां जनानां रसस्य सरणिं वर्त्म । 'सरणि'मित्यस्य तेजोविशेषणत्वेऽप्यजहल्लिङ्गत्वान्न क्लीवत्वम् । धामसु कुञ्जमन्दिरेषु स्मरवतीं क्रीड़ां दधत् परिपुष्णात् । सुराणां सूर्य्यादीनामपि छविस्तेजो यस्मात्; 'न तद्भासयते सूर्य्य' इत्यादि, "न तत्र सूर्य्यो न च चन्द्रतारकाः" "तमेव भान्तमनु भाति सर्वं"मित्यादिश्रुतेः, "यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामक"मिति स्मृतेश्च । यमकचित्रकाव्यव्याख्या समाप्ता ।

---

कुमारहट्टान्तः काञ्चनपल्ल्यभिधे श्रीकृष्णरायाख्यदेवायतनप्रतिष्ठातॄणां परमभागवतानां द्विजवराणां श्रीनाथचरणानां सादरस्मरणं श्रीकृष्णचैतन्यगणोद्देशदीपिकायामानन्दवृन्दा-

अयं शब्दार्थनिष्ठोऽपि (ज)। यथा—

घनजलदरुचिर! सुन्दरधाम! महःसञ्चयौघलिप्ताशः।
विधुरमृतकरकलानिधिरेष नभःपुष्कराकाशः॥ ७७

अत्र शब्दवदर्थोऽपि पुनरुक्तवदाभासते, न तस्य पौनरुक्त्यम्। नभाः श्रावणस्तत्सम्बन्धि पुष्करं व्योम तद्वदा सम्यक् काशः प्रकाशो यस्य स तथेति। कृष्ण-पक्षेऽनेनैव श्यामत्वोपलब्धेः,पुन'र्घनजलदे'त्यादिना पुनरुक्तवच्छ्यामत्वमर्थं प्रतिभासते, न तु पुनरुक्तम्। वस्तुतस्तु 'नभःपुष्कराकाशे'त्यस्य साध्यस्य

श्रीकृष्ण आह तवेति—अत्र 'तनु''शरीर'योरेकपर्य्यायत्वन एवं 'काञ्चन''कनक'योरेकपर्य्यायत्वेन च पुनरुक्तत्वम्। भवत्या सुखवदनङ्को निष्कलङ्कोऽपि शुभ्रांशुचन्द्रो न भवतीत्यर्थः। अत्रापि 'सुख''वदन'योः समानपर्य्यायत्वेन पुनरुक्तत्वं ज्ञेयम्। घनेति—हे निबिड़जलद इव रुचिर श्रीकृष्ण! पुनश्च हे सुन्दरदेह! एष त्वं विधुः सर्वेषां संसारदुःख विधुनोति हरतीति तथाविधः सन् भासि। त्वं कथम्भूतः? महःसञ्चयस्य कान्तिसमूहस्यौघेन वेगेन लिप्ताऽशा दिक् येन सः। पुनः कथम्भूतः? अम्रतहस्तश्चासौ कलानिधिश्चेति। तथा कला वैदग्धी तस्या निधिरिव। नभःपुष्करस्य श्रावणमाससम्बन्ध्याकाशस्येव आ सम्यक् काशः श्यामदीप्तिर्यस्य सः। अत्र 'घन''जलद'शब्दयोस्तथा 'रुचिर''सुन्दर'यो 'र्धाम''महसो:' 'सञ्चयौघ'योरेकपर्य्यायत्वेन पुनरुक्तवदाभासत्वं ज्ञेयम्। एवमुत्तरार्द्धेऽपि। चन्द्रपक्षे, हे निबिड़मेघेन सुन्दर! किञ्चिद्दूरवर्त्तिमेघेन चन्द्रस्य शोभाऽतिशयो भवतीति सर्वैरेव दृश्यते इति ज्ञेयम्। अम्रतकिरणश्चासौ कलानिधिश्चेति, कला षोड़शो भागस्तस्या निधिः।

---

वनाख्यचम्पूग्रन्थे च कविकर्णपूरेण विहितम्—यथा 'गुरुं नः श्रीनाथाभिधमवनिदेवान्वयविधुं नुमो भूषारत्नं भुव इव विभोरस्य दयितम्' इति, 'कुमारहट्टे यत्कीर्त्तिः कृष्णदेवो विराजते,' इति च। यथा तत्र तथाऽत्रापि अन्वाशुतो वैष्णवजनोचितो विनयमहिमा मनागुपभोग्यः। चित्रकाव्यत्वादेषु 'व्रजकेलिशब्दनमनः' "ध्वस्ताऽच्छविः" 'ततमोदा च सुजने' 'रम्या रम्यस्थल....' 'सुरच्छवि स,' इत्यादौ क्लिष्टताऽर्थापरिपोष-नेयत्व-निरर्थकत्वादीनां दोषाणां समाधानं नासुकरम्। लोल इति—'विशेषणमात्रप्रयोगो विशेष्यप्रतिपत्तौ'विति विशेष्यार्थबोधः। श्रीकृष्णस्य स्वयं मन्मथमन्मथत्वेऽपि लोलता भक्ताकर्षणव्याजेनेति सर्वमवदातम्। साम्राजतश्च—अस्य युवादिगणपाठसिद्धत्वं न पाणिनीयानुशासनसंवादि। एतदधिका- लङ्कारिकसम्मतक्रियाकारकगुणस्थानचित्रादीनां भेदा आकरतो ज्ञेयाः।

(ज) पुनरुक्तवदाभासस्य केवलशब्दनिष्ठत्वं शब्दार्थोभयनिष्ठत्वञ्चोभयमेव प्रकाशकृदादिकृतरीत्या। आद्ये कल्पेऽत्रैवास्यावतारः सम्यङ्, द्वितीयेऽपि तथैव, अतोऽत्रानुक्तता

'घनजलदे'त्यादि हेतुभूतम् । एवं चन्द्रपक्षेऽपि, तेनोक्तरूपशब्दपरिवृत्तावपि 'विधु'रिति नानाऽर्थस्य शब्दस्य स्थितौ तथाविधार्थालङ्कारस्य प्राधान्यम् (ज) ।

॥* इत्यलङ्कारकौस्तुभे शब्दालङ्कारनिर्णयो नाम सप्तमः किरणः ॥ *

नभस्याकाशे पुष्करं श्वेतकमलमिव त्वा सम्यक् काशो दीप्तिर्यस्य । सरोवरे यथा श्वेतकमलं शोभते तथैव नभोरूपसरोवरे चन्द्रोऽपीति ॥ *

---

भेदसरणिरेकधा न्यायानुसारिणी, तथा च शब्दालङ्कारतोऽर्थालङ्कारोत्तरणकल्पे पुनरयमेव साधीयान् सेतुविन्यासः । आश्रयाश्रयिन्यायमनुरुन्धाना रुय्यकादयस्त्विममर्थालङ्कारत्वेन स्मरन्ति । परिवृत्तिसहत्वासहत्वयुक्तिमुपयुञ्जाना अपि दर्पणकृदाद्याः केचिदस्योभयस्वरूपस्य शब्दप्राधान्यभित्तिमुररीकृत्य तन्निबन्धेष्वादावेवास्यालङ्कारस्य विमर्शनेन सर्वस्वकृतां क्रमभक्तिमुपजीवन्ति । अर्थालङ्कारप्राधान्यमिति—नानार्थशब्दोत्थितत्वेनास्यार्थालङ्कार-प्राधान्यपरिकल्पना प्राचीनमतवादं प्रति श्रद्धावुद्धितः प्रसूतेत्यापाततः प्रतिभाति । इति—*

## अष्टमः किरणः।

अथार्थालङ्कारा उच्यन्ते—

**यथाकथञ्चित् साधर्म्यमुपमा (१) (क)—२१६ का**

उपमानोपमेययोर्यथाकथञ्चिद्येन केनापि समानेन धर्मेण सम्बन्ध उपमा। स च अंशेन, (क) न तु सर्वैरंशैः—सर्वांशत्वेनाभेदादुपमानोपमेयभाव एव न भवतीति।

**—सा भवेद्द्विधा।**

**पूर्णा लुप्तेति—२१७ का**

सा उपमा। **—पूर्णा तु धर्मेनेव-यथाऽऽदिभिः॥**

**उपमानोपमेयाभ्याम्—२१८ का**

यथाकथञ्चिदिति सूत्रस्यार्थमाह—उपमानोपमेययोरित्यादिना। उपमानोपमेययोः सादृश्यसम्बन्ध उपमाऽलङ्कारः। सादृश्यसम्बन्धमेवाह—यथा कथञ्चिदिति। एक-द्व्यादि-धर्मेण, न तु सर्वेण धर्मेणेत्यर्थः। येन केनापी'ति साधारणेन धर्मेणेत्यर्थः। 'समानेने'ति उपमानोपमेयवृत्तिनेत्यर्थः। 'धर्मेणे'ति 'धान्येन धनवान्' इतिवदभेदे तृतीया। तथा चोपमानोपमेयवृत्त्येक-द्व्यादिसाधारणधर्माभिन्नः सम्बन्धः सादृश्यसम्बन्धः। न तु सर्वैरंशैरिति—न तूपमानवृत्तियावन्तो धर्मास्तैरित्यर्थः। अभेदादिति—स्वनिष्ठयावद्धर्मेण स्वसदृशं स्वमेव, अतोऽभेदेन उपमानोपमेयभाव एव न सम्भवतीत्यर्थः।

---

(क) यथाकथञ्चिदिति—दण्डिकृतोपमालक्षणच्छायेवातिव्याप्तिमतीव प्रतीयमानेयं लक्षण-घटना वृत्तिग्रन्थाद्व्याख्यादिरतिरिक्तैव प्रतिपाद्यते। नात्र तत्र गृहीतायाः प्रतीयमानसादृश्याया उपमाया अन्तर्भावो कथञ्चिदभिप्रायः। स चांशेनेति—'भूयोऽवयवसामान्ययोगो जात्य-न्तरस्य यदि'ति केश्चिल्लक्षितस्य सादृश्यलक्षणस्यानुबन्धः स्फुट एव। एतदभिप्रेत्यैव प्रकाश-सर्वस्व-कौस्तुभ-रुद्रादीनां लक्षणेषु साम्य-सामान्य-सादृश्यादिपदन्यग्भावेन साधर्म्यपदस्य निवेशः। रूपकोच्चिकया मतद्वयसमाधानमित्थ' केश्चिच्चेष्टितम्-यथा, 'यत्र किञ्चित् सामान्यं कश्चिच्च विशेषः स विषयः सदृशतायाः' इत्युद्धृते सर्वस्वग्रन्थोक्ते। उपमाया विच्छित्तिमात्रा-ऽतिरेकोऽनेकालङ्कारजीवातुभूतत्वञ्चानादिकालतः कलितमित्यस्यानन्यसाधारणतैवात्राग्रिम-निर्देशबीजम्। अत्र साधारणधर्मस्यासाधारणस्यापि सामान्यं क्वचिदेकरूप्येण प्रत्यैक्य-मयत्वेन वा, क्वचिद्वा तस्य पृथक्तया निर्देशो वस्तुप्रतिवस्तुभावेन, यथा लक्ष्य यान्त्या मुहुर्वलित-कन्धरमाननन्तदावृत्तवृन्तशतपत्रनिभं वहन्त्या' इत्यादि मालतीमाधवपद्ये, 'पाण्ड्योऽयमंसा-

धर्मः सामान्यधर्मं आह्लादकत्वादिः। इव-यथा-वाऽदय औपम्यवाचकाः। उपमानं चन्द्रादि। उपमेयं मुखादि। एतैर्युक्ता पूर्णेत्यर्थः।

—इयमेवेव-वाऽदिभिः।

युक्ता श्रौती— २१९ का

इयमेव पूर्णा इव-यथा-वाऽदिभिर्युक्ता चेद्भवति तदा श्रौती। 'तत्र तस्येवे'त्यनेन (पा ५।१।११६) विहितो वतिश्च श्रौत्यामेव।

समाद्यैस्तु सा स्यादार्थी च—२२० का—

सा पूर्णा समाद्यैर्युक्ता यदि भवति तदाऽऽर्थी। समादयस्तु सम-समान-सदृश-सदृक्ष-सदृक्-तुल्य-सन्मित-निभ-चौर-बन्धु—प्रभृतयः (क)। 'तस्य तुल्यं क्रिया चेदित्य'नेन (पा ५।१।११५) विहितेन वतिना चार्थी। तत्र तेन तुल्य-मिति तच्छब्द उपमानपरः। तुल्यशब्द उपमेयपरः। तस्य तुल्यमित्यत्र विपर्य्ययः। उभयं तुल्यमित्युभयनिष्ठः।

—तद्धिते।

वाक्ये समासे चेत्येते षोढ़ा—२२१ का

एते श्रौत्यार्थी च। तद्धितादित्रिके षड्विधा भवति। तद्धितन्तु वत्यादि —तद्यथा वति-कल्प-देश्य-देशीय-बहुच्-प्रभृतयः। वाक्यं प्रसिद्धं, समासश्च। तद्धितगा श्रौती, वाक्यगा श्रौती, समासगा श्रौती, तद्धितगा आर्थीं, वाक्यगा आर्थी, समासगा आर्थी, इति पूर्णा षड़ेव।

—लुप्ता तु लोपतः।

धर्मवाद्युपमानानामेकद्वित्रिक्रमेण हि॥ २२२ का

धर्मादीनामेकस्य द्वयोस्त्रयाणां वा लोपतो लुप्ता भवतीत्यर्थः।

पूर्णा त्विति—यत्र वाक्ये एते सर्वे शब्दा वर्त्तन्ते, तत्र पूर्णोपमाऽलङ्कारो ज्ञेय इति समुदायार्थः। विपर्य्यय इति—तस्योपमेयस्य तुल्यमुपमानमित्यर्थः। उभयं तुल्यमित्युक्ते

---

पितलम्बहार' इत्यादि रघुपद्ये च। परं न स भेदः साधर्म्यप्रतिघातकः। एतमेवाभिप्रायं केचिदाचार्य्यदण्डिलक्षणे 'उद्भूत'मिति पदेनैव गतार्थं मन्यन्ते। परमाचार्य्यपादैर्वाक्यार्थोत्थं तत्र तत्र सादृश्ये भिन्नवाक्यघटनेऽप्युपमास्थितिः स्वीकृता, न तन्नवीनालङ्कारिकचक्रसम्मत-

**धर्मलोपे क्रमेणैषा पूर्णावत् षड्विधोदिता ।**

**किन्तु तद्धितगा श्रौती लुप्तायां नेति पञ्चधा ॥२२३ का—**

एषा लुप्ता तद्धितगाऽऽदिभेदेन पूर्णावत् षड्विधा भवितुमुचिता । श्रौती लुप्ता त्रिविधा, आर्थी लुप्ता त्रिविधेति । किन्तु धर्मलोपतद्धितगा श्रौती लुप्ता न भवतीति पञ्चेव—वाक्यगा श्रौती लुप्ता, समासगा श्रौती लुप्ता, तद्धितगा आर्थी लुप्ता, वाक्यगा आर्थी लुप्ता, समासगा आर्थी लुप्तेति ।

**क्यचि कर्माधारकृते कर्तृकर्मकृते णमि ।**

**क्यङि चेति पुनः पञ्चेवादिलोपे यथाक्रमम् ॥ २२४ का—**

कर्मकृते क्यचि, आधारकृते क्यचि, कर्तृकृते णमि णमुलि, कर्मकृते वा णमुलि, क्यङि चेति सा लुप्ता पुनः पञ्चेति दश ।

**उपमानानुपादाने द्वैधं वाक्यसमासयोः ॥ २२५ का**

तत्र लुप्तायामुपमानानुपादाने सति वाक्यसमासयोर्निमित्तयोर्द्वैधं भवति ।

**इवादेरनुपादाने द्वैधं स्यात् क्विप्समासयोः ॥ २२६ का**

पुनस्तस्या इवादिलोपे क्विपि समासे च द्वैधम् ।

**धर्मोपमानयोर्लोपे द्वैधं वाक्यसमासयोः ॥ २२७ का**

पुनस्तस्या द्वैधमित्यर्थः ।

**धर्मेवादिलोपे तु द्वैधं स्यात् क्विप्समासयोः ॥ २२८ का**

पुनर्द्वैधमित्यर्थः ।

उपमानोपमेयोभयनिष्ठधर्मः प्रतीयते। किन्त्विति—यत्र तस्योपमेयस्य तुल्यमित्यर्थे 'वति'प्रत्ययस्तत्रैव श्रौती लुप्ता। अत्र यदि धर्मलोपस्तदा वाक्यार्थ एव न भवति, तद्यथा वक्ष्यमाणोदाहरणे 'त्वदाननस्ये'त्यादौ माधुर्य्यादिधर्मलोपे वाक्यार्थसङ्गतिर्न स्यात्, तस्मात्तद्धितगा श्रौती लुप्ता नास्तीत्यसौ द्विधैव श्रौती लुप्ता।

---

मिति विशेषः। उपमाद्योतकानामिव वदादीनां सुष्ठु संग्रहः काव्यादर्शेतो ग्रहणीयः। अस्य भेदपरिगणने प्राचीनैर्भामहदण्ड्यादिभिः, नातिप्राचीनैरुद्भट-रुद्रटादिभिरर्वाचीनैर्भोज-मम्मट-विश्वनाथादिभिश्च यथारुचि भिन्न एव मार्गोऽवालम्बि। तत्र नवीनमतपक्षपातिना

उपमेयस्य लोपे तु स्यादेका प्रत्यये क्वचि ॥ २२९ का

पुनरेका ।

धर्मोपमेयलोपेऽन्या विलोपे तु समासगा ।

एवं दशैकादश च लुप्ता स्यादेकविंशतिः ॥

पूर्णा षड़ेव तेन स्युरुपमाः सप्तविंशतिः ॥ २३० का—

तत्र पूर्णाऽदिक्रमेनोदाहरणानि । तद्धितगा श्रौती पूर्णा यथा—

तदाननस्य माधुर्यं लोचनानन्दि चन्द्रवत् ।
अक्ष्णोश्च तव लालित्यं राधे ! नीलसरोजवत् ॥ १ ।

अत्र'तत्र तस्येवेत्य'नेन वतिः श्रौत्यर्थप्रतिपादकः ।

वाक्यगा श्रौती पूर्णा यथा—

श्यामे वक्षसि कृष्णस्य गौरी राजति राधिका ।
कनकस्य यथा रेखा विमले निकषोपले ॥ २ ।

अत्र श्यामगौरत्वं धर्मः, यथाशब्दः उपमावाचो, उपमानं कनकरेखाऽदि, उपमेयं राधाऽदि । अत्र व्यङ्ग्यमपि धर्मान्तरमुपमागतम् (क), तद्यथा कनक-रेखानिकषोपलयोर्निष्पन्दत्वेन राधाकृष्णयोरानन्दनिष्पन्दत्वम् ।

समासगा श्रौती पूर्णा यथा—

राधाकृष्णौ मम नवतड़िद्दामसेघाविवाक्ष्णोः
स्यातान्तापप्रशमनकृतौ पीतनीलप्रकाशौ ।
यावन्योन्यावयवरुचिभिः काञ्चनैरिन्द्रनीले-
राक्लृप्तेन प्रकटमहसा निष्कराजेन तुल्यौ ३ ।

'कनकरेखादी'त्यादिपदेन निकषोपलस्य । ''राधे''त्यादिपदेन कृष्णवक्षस्य । राधाकृष्णौ परस्पराङ्गरुचिभिः स्वर्णैरिन्द्रनीलमणिभिश्चाक्लृप्तेन निष्कराजेन पदकश्रेष्ठेन तुल्यौ ।

---

कौस्तुभकृता दर्पणानुमोदिताः सप्तविंशतिरेव भेदाः सन्निबद्धाः, मम्मटोक्तास्तु पञ्चविंशतिः । एतच्च भेदपरिकल्पनासूक्ष्मत्वकृतमन्तरायं हास्यकरमिव च केचिदाधुनिका मन्यन्ते—तत्तु सामान्यतो रिक्तं वच इति ध्वनिकिरणव्याख्याने अस्माभिरुपपादितम्, परं भेदसङ्ग्राहकत्व-मपि न सुगमो भेदमार्गो युक्तिसूक्तिप्रतिष्ठः, यथाऽधोदर्शितेऽनवीनस्य कस्यचिदुपमाभेद-प्रपञ्चे—'समानमधिकं हीनं विपरीतेकदेशिकम् । यादृच्छिकमभूतञ्च सप्तौपम्यार्थसंग्रहः ॥'

अत्र पूर्वार्द्धे 'इवेन नित्यसमासे विभक्त्यलोपः, पूर्वपदप्रकृतिस्वरत्वञ्चे'ति इवेन समासः। आर्थी तद्धितगा पूर्णा यथा—

कोमलं ते वपुस्तन्वि! राधे! भाति शिरीषवत्।
परुषं वर्त्तते कस्मान्मनो दम्भोलिवत्तव॥ ४।

अत्र 'तेन तुल्यं क्रिया चेद्वि'त्यनेन वतिः; तेन तुल्यार्थत्वादार्थी। वाक्यगाऽर्थी पूर्णा यथा, "राधाकृष्णौ मम"त्यादेरुत्तरार्द्धे (२य श्लोके) 'यावन्योन्यावयवरुचिभिः (1) काञ्चनैर्नीलरत्नैराकृष्टेन प्रकटमहसा निष्कराजेन तुल्यौ।' समासगाऽर्थी पूर्णा यथा—

मृदुलमपि शिरीषतुल्यमङ्गं कमलसमं विकशन्मुखन्तवेदम्।
रमयति च वचः सुधासमानं कथमशनिप्रतिमं मनो दुनोति॥ ५

इति पूर्णायाः षड् भेदाः। अथ धर्म्मलोपे वाक्यगा श्रौती लुप्ता यथा—

राधे! सुन्दरताऽङ्गेषु वाग्भङ्गी वदने तव।
मनसि प्रेमवैदग्धी सत्यं वचसि सुधा यथा॥ ६

समासगा श्रौती लुप्ता यथा—

भ्रुवौ तव धनुर्लते इव, तदग्रतो लोचने
लसन्मदिरदम्पती इव, पुरस्तयोर्नासिका।
स्मरेषुधिरिव स्फुरत्पुरटनिर्मिताऽधोमुखी,
तदीयशिखरे न्यधात् भमिव कः कृती मौक्तिकम्॥ ७

हे राधे! तवाङ्गमिदं सुखञ्च सुधासमानं वचश्च मां रसयति सुखयतीत्यर्थः। सुधा यथा—सुधेव स्वादो, अत्र स्वादुत्वबोधकपदाभावादेव धर्मलोपो ज्ञेयः, तथापि धर्मवाचकपदाध्याहारादेव शाब्दबोधो ज्ञेयः। एवमुपमानादिलोपेऽपि बोध्यम्।

भ्रुवाविति—धनुर्लते इव वक्रे, मदिरदम्पती खञ्जनस्त्रीपुरुषाविव चञ्चले। कन्दर्पस्य स्वर्णनिर्मिताऽधोमुखी इषुधिस्तूण इव नासिका मनोहरा। तस्या नासिकाया अग्रभागे

---

इति; अतोऽरोचकेऽपि रुचिर्वैयाकरणालङ्कारिकपदार्थसङ्करसन्दे भेदवन्दे मतिदार्वेमित्यलं पल्लवितेन। व्यङ्ग्यमपीत्यादि—नात्रालङ्कारस्य व्यङ्ग्यमुखेन संस्थितिरिति, स चालङ्कार्य एवेत्याधुनिकानां वाचोयुक्तिर्युक्तिसङ्गता, परं व्यङ्ग्यमुखेनागतयैव दिशा तात्पर्य्यालोचनायां शोभा-

---

(1) "काञ्चनैरिन्द्ररत्नै"रिति (क) पुस्तके पाठः। 'नीलरत्नै'रित्युन्तरत्र मूले पाठः।

तद्धितगाऽर्थी लुप्ता यथा--

शिरीषकल्पान्यङ्गानि राधे ! सृष्टा विधिस्तव ।
दम्भोलिदिश्यं धीराक्षि ! चेतो निरमिमीत किम् ॥ ८

वाक्यगाऽर्थी लुप्ता यथा—

तवास्यं सममञ्जेन मधुना सदृशं स्मितम् ।
राधिके सुधया तुल्या वाचि शब्दार्थमाधरी ॥ ९

समासगाऽर्थी लुप्ता यथा—

कनकशम्भुसमौ बत ते कुचौ मम करावपि नीरजसन्निभौ ।
त्वमपि चन्द्रकशेखरसेविनी यदुचितं तदिहादिश राधिके ! ॥ १०

अथेवादिलोपे कर्मक्यचि यथा—

वाणीयति कटाक्षं ते कार्मुकीयति यो भ्रुवम् ।
वृथा कामः पुष्पबाणकार्मुको भुवि विश्रुतः ॥ ११

आधारक्यचि यथा—

वनीयति गृहे राधा गृहीयति वनान्तरे ।
यावदालोकितः कोऽपि त्वया नवघनद्युतिः ॥ १२

क्यङि यथा—

हरीयते सा स च राधिकायते निरन्तरं भावनयोभयोरुभौ ।
विपर्य्ययेणापि विपर्य्ययोत्थितां वियोगबाधां सदृशीमुपेयतुः (क) ॥ १३

कर्मणमुलि यथा—राधे ! सुधाधामदर्शं पश्यन्मुखमिदं तव ।
कर्तृणमुलि यथा—कृष्णश्चकोरसञ्चारं सञ्चरत्येष लालसः ॥ १४ एवं दश ।

भमिव नक्षत्रमिव । उभयो राधाकृष्णयोर्मध्ये सा राधा श्रीकृष्णस्य भावनया हरीयते अहमेव हरिरित्यात्मानं हरिमिवाचरति, तथा श्रीकृष्णोऽप्यहमेव राधिकेत्यात्मानं राधिकामिवाचरति। विपर्य्ययेण राधायाः श्रीकृष्णरूपत्वस्य श्रीकृष्णस्य राधिकारूपत्वस्य च विपर्य्ययेण। विपर्य्ययोत्थितामिति—श्रीराधिकायाः स्वस्याः श्रीकृष्णत्वभावनया श्रीकृष्णविरहपीड़ाऽद्य-भावेऽपि श्रीकृष्णस्य यथा राधिकाविरहपीड़ा जायते तत्सदृशी राधिकाविरहपीड़ा राधिकाया भवतु, एवं श्रीकृष्णस्य स्वस्य राधिकात्वभावनया राधिकाविरहपीड़ाऽद्य-

---

तारतम्यास्वादः सुतरामेव सहृदयावर्जकः । हरीयते इति,—"मधुरिपुरहमिति भावनशीले"-त जयदेवपद्यमुदाहार्य्यम् । जक्ष समो यत्यौति—एवंविधाश्चौपम्यप्रयोगा असमाख्या-

उपमानानुपादाने द्विधा यथा—

त्वदाननस्य सदृशं किमपीह न दृश्यते । इति वाक्यगा ।

नहि त्वत्सदृशी क्वापि राधे ! काऽपि विलोक्यते ॥ १५ इति समासगा ।

इवाद्यनुपादाने द्वैधं यथा—

अशनयति कुसुममशनिः कुसुमति हालाहलत्यमृतम् ।
हालाहलमप्यमृतति समयेऽस्या दुःखसुखदत्वे ॥ १६ इयं क्विप्गा।

नवधाराधरश्याममभिराममिदं महः ।
आनयन्नयनानन्दं कस्य नो हरते मनः ॥ १७ इयं समासगा ।

धर्मोपमानयोर्लोपे द्वैधं यथा—

तम्मसि किं ति पिअन्तो कट्ठरसं मुरलिवाअणे कण्ह ।
जस्स समो णत्थि रसो सो इह णअरे घरे घरे होइ ॥ (क) १८

इयं वाक्यगा। इहैव "जच्छरिसो णत्थि रसो" इति पाठे समासगा। धर्मेवादिलोपे द्वैधं यथा "अशनयति कुसुम" मित्यादौ (१६ श्लोके) 'हन्त कदाचिदपि तासा' मिति चतुर्थचरणे यदि स्यात्तदेवादिलोपे धर्मलोपे च क्विप्गा ।

राधे ! शारदपीयूषमयूखमुखि ! मौनताम् ।
मुञ्च, पीयूषवचनैः सिञ्च मे कर्णयोर्युगम् ॥ १९

भावेऽपि श्रीराधिकाया यथा श्रीकृष्णविरहपीड़ा जायते तत्सदृशी श्रीकृष्णविरहपीड़ा श्रीकृष्णस्य भवत्वित्यर्थः ।

अस्या राधिकायाः समये श्रीकृष्णविच्छेदसमये दुःखमयवस्तुनः सुखदत्वे सति कुसुममशनिरिव भवति पुष्पस्योद्दीपनत्वेन वज्रतुल्यतापवत्त्वात् । तथाऽशनिः कुसुममिव भवति, वज्रस्य सद्यःप्राणहारकत्वेन विरहज्वालानिवर्त्तकत्वात् । अमृतस्य मरणनिवर्त्तकत्वेनामृतमपि हालाहलतुल्यं भवति—तथा हालाहलस्य सद्यःप्राणहारकत्वेन हालाहलमप्यमृततुल्यं भवति--जीवनापेक्षया मरणं तस्याः सुखदं भवतीति ज्ञेयम् ॥ तास्यसि किमिति पिबन् काष्ठरसं मुरलीवादने कृष्ण ।। यस्य समो नास्ति रसः स इह नगरे गृहे गृहे

---

लङ्कारान्तरलक्ष्याणीति केचित्—'सर्वथैवोपमानिषेधेऽसमाख्योऽलङ्कारः' इति तेषां लक्षणम् । परन्तु तस्य भिन्नतया स्वीकारेऽयुक्तिर्विध्वंसितैव रसगङ्गाधरप्रभृतिनिबन्धेषु । रसनोपमायाः पृथक्त्वेन स्वीकारकल्पो न सर्ववादिसम्मतः तथा च प्रकाशकारकृता हेतुसम्पत्तिः—'एवंविधवैचित्र्यसहस्रसम्भवात्, उक्तभेदानतिक्रमाच्चे'ति । अनन्वयोपमा—दक्षिमतसंज्ञा

बद्धो राधिकयाऽपाङ्गलतया कृष्णकुञ्जरः ।
तत्केलिसाधनीभूतो न गन्तुं क्वचिदर्हति ॥ २०

अत्र धर्मवादिलोपे समासगा ।

उपमेयलोपे क्वचि त्वेका, यथा—

कोमलाऽसि प्रकृत्यैव शिरीषादपि राधिके ! ।
अहो मानस्य माहात्म्यं येन त्वमश्मनीयसि ॥ २१

अत्र "आत्मानमश्मनीयसी'ति वक्तव्ये आत्मशब्दस्योपमेयस्य लोपः ।

धर्मोपमेयलोपे यथा—

जयति मनोभवसिद्धिः काऽपि शरच्चन्द्रमःसमं दधती । (2)

इत्यत्र उपमेयलोपो धर्मलोपश्च, "शरच्चन्द्रललितास्ये"ति यतो न कृतम् । त्रिलोपे समासगा । पूर्वस्योत्तरार्द्धम्—

चकितमृगशावनयना नयनानन्दं चकारोच्चैः ॥ २२ ॥

अत्र मृगशावस्य नयने इवायते नयने यस्या इति समासे उपमानं, तद्द्योतकमिवादि च, तद्धर्मश्च, त्रयाणां लुप्तता—इत्येकविंशतिः । पूर्णाभिः सह सप्तविंशतिः ।

## एकत्वमुपमेयानामुपमानामनेकता ।
## धर्मैकरूप्यवैरूप्ये द्वेधा मालोपमा भवेत् ॥२२१ का—

भवति ॥ अत्र 'यस्य सम' इत्युपमानलोपो धर्मलोपश्च । मनोभवस्य कन्दर्पस्य सिद्धिरूपा काऽपि व्रजसुन्दरी जयति । 'शरच्चन्द्रमसं दधती'त्यत्र सुखपदस्य लालित्यरूपधर्मबोधकपदस्य च लोपो ज्ञेयः । 'शरच्चन्द्रललितास्ये'त्युक्ते उभयोरेव विद्यमानत्वान्न धर्मोपमेययोर्लोपः ।

यत्रोपमेयानामेकत्वमुपमानानामनेकत्वं तत्र मालोपमा भवेत् । सा द्विविधा, यत्रोपमेयोपमानयोरेक एव धर्मस्तत्रैका, यत्रोपमेयस्यैको धर्म उपमानानामनेको धर्मस्तत्रान्या ।

---

अनन्वय इति भामहादीनां प्राचां नवीनानाञ्च बहूनामादृता संज्ञा, उभयत्रैव सार्थकसंज्ञानिर्देशः । आचार्यदण्डिमते इयमप्युपमाप्रपञ्च एव, यदाहुस्त एव—'अनन्वयससन्देहावुप-

---

(2) एवं (ग) पुस्तके । 'चन्द्रमसं दधती'ति (ख) (क) पुस्तकयोष्टीकाकृता च धृतः पाठः । स च आर्यानियमभङ्गात् "छन्दोभङ्गं त्यजेद्गिर"मित्यनुशासनबलाद्धेयः । उपरिगृहीते पाठे उपमेयलोपस्याभासत्वं, 'सम'पदेन विशेषणीभूतेन विशेष्यस्योपमेयस्याक्षेपः सम्भवत्येव । वस्तुतस्तु न कोऽपि पाठोऽत्र सुष्ठु ।

उपमाप्रपञ्चोऽयम् (क)। उदाहरणम्—

मूलस्थितेनेव महोरगेण लता दवेनेव कुरङ्गबाला।
हिमागमेनेव सरोजिनी सा भवद्वियोगेन दुनोति राधा ॥२३

अत्र धर्मैकरूप्यम्।

त्रैलोक्यसम्पदिव निर्भरगर्वहेतुर्माध्वीकपीतिरिव विह्वलताविधात्री।
प्रस्तापनास्त्रफलिकेव मनोभवस्य त्वं ज्ञानविप्लवकरी मम भासि राधे ! ॥ २४

अत्र वैरूप्यं नानाविधत्वात्।

**उपमेयस्योपमात्वमुत्तरोत्तरतो यदि।**
**अभिन्नभिन्नहेतुत्वे द्विधा सा रसनोपमा (३)(क)॥२३२का—**

यथा—आकृतिरिव ते प्रकृतिः प्रकृतिरिव व्यवहृतिः सुमुखि !।
व्यवहृतिरिव सत्कीर्त्तिर्रम्या रमणीसभासु सखि ! राधे ! ॥ २५

अभिन्नधर्मा।

वपुरिव मधुरं रूपं रूपमिवानन्ददायि गुणवृन्दम्।
गुणवृन्दमिव विशुद्धं यशः कृशाङ्गीसभासु तव राधे ! ॥ २६ भिन्नधर्मा

**एकस्यैवोपमानोपमेयत्वेऽनन्वयोपमा (४)।**
**एकवाक्ये (क)— २३३ का—**

उपमानान्तरासम्बन्धोऽनन्वयः। यथा—

आलोकि सा बालकुरङ्गनेत्रा राधेव राधा भुवनेऽद्वितीया।
अद्यापि मे सन्ति मनोनिखातास्ते तत्कटाक्षा इव तत्कटाक्षाः ॥ २७

**विपर्य्यास उपमेयोपमा (५) द्वयोः॥ २३४ का**

द्वयोरुपमानोपमेययोर्विपर्य्यासे उपमेयोपमा। यथा—

त्रैलोक्यसम्पद्यथा निर्भराहङ्कारहेतुः, एवं माध्वीकस्य पीतिः पानं यथा विकलताकर्त्री, तथा कन्दर्पस्य जृम्भणास्त्रस्य फलिका यथ विकलताकर्त्री, तथा त्वमपि मम ज्ञानस्य पूर्वापरानुसन्धानस्य विप्लवकरी नाशकरी।

उपमेयस्योपमानत्वमुत्तरत्र यदि भवति तदा रसनोपमाऽलङ्कारो ज्ञेयः। सा द्विविधा—उपमानोपमेययोरभिन्न एको धर्मश्चेदुपमाऽलङ्कारस्य हेतुस्तदैका, एवमुपमेयोपमानां भिन्ना

---

मास्त्वेव दर्शितेति। एषां सर्वेषां प्रतिवस्तूपमायाश्चोपमाप्रपञ्चत्वेनाभिधानं वक्रोक्तिजीवितादौ दण्डिमतस्यानुवादत्वेन, परं भामहादीनां मतेनोपमानान्तरसम्बन्धाभावादुपमातो

तनुरिव शोभा शोभेव तनुर्गरिमेव मधुरिमा तस्याः।
अथ मधुरिमेव गरिमा राधायाः किमपरं ब्रूमः॥ २८

यथा वा—हरिरिव राधा राधेव हरिर्गरिमेव मधुरिमा च तयोः।
अथ मधुरिमेव गरिमा महिमेव कृपा कृपेव महिमा च॥ २९

इयमेवान्योन्योपमा।

**उपमानस्य निन्दायामयोग्यत्वे निषेधतः।**
**प्रशंसा योपमेयस्य सोपमेयोपमाऽपरा (क)॥ २३५ का—**

यत्रेति शेषः। यथा—

कल्पद्रुमे स्थावरता दृढत्वं चिन्तामणौ कामगवीषु गोत्वम्।
स्वभक्तसङ्कल्पविधेर्विधाने हे नाथ! कृष्ण! त्वमिव त्वमेव॥ ३०

अत्रोपमानस्य निन्दा।

इन्दीवरं वा दलिताञ्जनं वा नवाम्बुदो वा मघवन्मणिर्वा।
कृष्णस्य धाम्नः सदृशं न किञ्चित्तदीयधामेव तदीयधाम॥ ३१

अत्रायोग्यत्वे निषेधः।

एवमन्येऽपि बहवः सन्ति, ग्रन्थगौरवभयान्नोदाह्रियन्ते।

**असम्भाव्यं समुद्भाव्योपमानेऽसम्भवोपमा (६) (क)॥२३६ का—**

या क्रियत इति शेषः। यथा—

पूर्णः सदैवास्तु सुधामयूखः कलङ्कहीनश्च सदैव भूयात्।
नायं चकोरैरपि पीयताञ्च राधे! त्वदास्येन तुलां बिभर्त्तुं॥ ३२

नानाधर्माश्चेद्धेतवस्तदाऽन्या। उपमानस्य निन्दायां सत्यां यत्रोपमेयस्य प्रशंसा, एवमुपमानस्यायोग्यत्वे सति तस्य निषेधादुपमेयस्य प्रशंसा साऽपरा उपमेयोपमा। असम्भाव्यमिति—उपमानेऽसम्भाव्यं यद्वस्तुनः सम्भावना नास्ति तस्य सम्भावनां कृत्वा योपमा क्रियते साऽसम्भवोपमा।

भिन्नैवेयम्, अतः किल नामकरणेन व्यामोहनिवारणायोपमेत्यन्तिमपदं परित्यक्तमितीव प्रतिभाति। उपमेयोपमाऽपरेति—नास्या आपाततः प्राचां ग्रन्थेषु ग्रहणम्, उभयथैवात्रोपमानस्याक्षेपः अन्यैरुद्भाविताद् प्रतीपालङ्कारा अदस्याणुरेव भेदस्पर्शः। ग्रन्थकृतामुदाहरणत इयमनन्वयसंसृष्टेव सातिशयचमत्कृतिमतीति प्रतिभाति। असम्भवोपमा—'उभौ यदि व्योम्नि पृथक्प्रवाहा' वित्यादिष्वित्रास्या वैचित्र्यबहुत्वे भिन्नालङ्कारत्वमिति केचित्—उत्प्रेक्षाया अवतारणे सुष्ठु हेतुरनेनालङ्कारबन्धेन कौस्तुभकृता विहित इति च मन्तव्यम्।

**सम्भावनोपमानेनोपमेयोत्कर्षहेतुका।**

**उत्प्रेक्षा (७) नूनमित्यादिशब्दद्योत्या—(ख)॥२३७ का—**

उत्प्रेक्षानामाऽलङ्कारः। सम्भावना हेत्वन्तरोपन्यासेन वितर्कनम्। नूनं-मन्ये-शङ्के-इव-ध्रुवं-नु-किम्-किमुतेत्यादयो नूनमादयः। यथा

नष्टो नष्टः प्रतिकुहु मुहुः पूर्णतामिति चन्द्रो
राकां राकां प्रति नतु भवेदन्यरूपः कदाऽपि।
नान्यो हेतुस्तदिह ललिते! वीक्ष्य वीक्ष्य त्वदास्यं
नूनं धाता तमतिचतुरो निर्मिमीतेऽनुमासम्॥ ३३

यथा वा 'उत्कीर्णैरिवे'त्यादि (द्वितीय किरणे १म श्लोकः)। यथा वा—
तृष्णाऽनुबन्धविकसद्वदनोदराणां चन्द्रः करेण कृपयेव कुमुद्वतीनाम्।
निर्वाप्य गाढ़विरहानलमुज्ज्वलन्तमङ्गारपुञ्जमिव कर्षति भृङ्गसङ्घम् (ख)॥ ३४

यथा वा—श्रीवत्सस्य च कौस्तुभस्य च रमादेव्याश्च गर्हाकरो
राधापादसरोजयावकरसो वक्षःस्थलस्थो हरिः।

प्रतिकुहु सर्वस्याममावस्यायां चन्द्रो नष्टोऽवश्यं नश्यत्येव। एवं सर्वस्यामेव पूर्णिमायां चन्द्रः पूर्णतां प्राप्नोति। कदाऽपि कस्यामप्यमावस्यायां पूर्णिमायां वा चन्द्रोऽन्यरूपो न भवति। अत्र सर्वस्याममावस्यायां नाशे सर्वस्यामेव पूर्णिमायां पूर्णतायाञ्च पुराणादौ योऽन्यो हेतुः श्रूयते स न, किन्तु मयेदं सम्भाव्यते, हे ललिते! तन्मुखं वीक्ष्य वीक्ष्य विधाताऽनुमासं मासि मासि तं चन्द्रं निर्मिमीते। अयम्भावः—सर्वजगन्निर्माणं कृत्वा ललितामुखं दृष्ट्वैतत्सदृशे किञ्चिदन्यन्निर्माणे विधातुरिच्छा यदाऽजनि तदा प्रतिपद्दिनमारभ्य पूर्णिमायां सम्पूर्णचन्द्रं निर्माय ललितामुखसादृश्यमदृष्ट्वा दुःखेन पुनः प्रतिपद्दिनमारभ्य किञ्चित् किञ्चिदिखण्ड्यामावस्यायां पूर्वनिर्मितं पूर्णचन्द्रं दूरीकृत्य पुनश्चन्द्रान्तरनिर्माणे प्रवृत्तश्चतुरो विधाताऽद्यापि मासि मास्येवमेवं करोति, नतु निवृत्तो भवति।

---

(ख) सादृश्यमूलानामलङ्काराणां विवेचनप्रसङ्गे उत्प्रेक्षाया अत्रावतारणं ग्रन्थकर्त्ता मम्मटाद्याचार्यमतं प्रति श्रद्धाबुद्धिं सूचयति। अर्वाचीनाः प्रायेण निर्विशेषमुत्प्रेक्षायां न्यग्भावितसादृश्यसूचनस्याध्यवसायविशेषस्य कल्पितसम्भावनमेव लिङ्गं मन्यन्ते; परं प्राचीनाचार्या भामहादयः नवीनाश्च केचनाद्यं कल्पमेवोपजीवन्ति—तदनुसारिणो बहवः चन्द्रालोककृदाद्याश्चक्रवर्त्तिप्रभृतयः कुवलयानन्दकृतोऽर्वाचीनाश्च। एषां मते उपमानस्यालीकसिद्धत्वमेवोपमात उत्प्रेक्षायाः कक्ष्यान्तरत्वघटकं, न तदतिरिक्तः कश्चन विलक्षणो

बालार्कद्युतिमण्डलीव तिमिरैश्छन्देन बन्दीकृता
कालिन्द्याः पयसीव पीवविकचं रक्तोत्पलं पातु वः ॥ ३५

अत्र 'इव' उत्प्रेक्षायाम्—इत्यादौ सर्वत्र सम्भावनमेव ।

—स संशयः ।

## भेदानुक्तौ तदुक्तौ तु सन्देहः (८) (ग)—२३८ का

सन्देहालङ्कारः । क्रमेणोदाहरणे—

राधे! मुखं तव विधुर्नु सरोरुहं नु नेत्रे च खञ्जनयुगं नु चकोरकौ नु ।
मूर्त्तिश्च काञ्चनलतेव नु चन्द्रिका नु धाता नु पञ्चविशिखो नु रसो नु वाऽद्यः॥
(ग) ॥ ३६

मेघः किमेष, स कथं धरणौ, किमस्मि-
श्चन्द्रोऽय,मस्य विगतः क्व नु वा कलङ्कः ।
माला किमत्र तड़ितः, स्थिरता क्व तस्याः,
कृष्णः किमेष सुमुखः सखि ! पीतवासाः ॥ ३७

मुद्रितकलिकानां चन्द्रदर्शनेन मुद्रात्याग एव जृम्भाऽऽरम्भस्तेन प्रकाशितवदनोदराणां कुमुदतीनां गाढ़विरहानलरूपमुज्ज्वलन्तमङ्गारसमूहं चन्द्रः कृपयेव स्वकिरणरूपकरेण निर्वाप्य पश्चात् कुमुदतीगर्भस्थितं ज्वालारहितमत एव श्यामवर्णमङ्गारपुञ्जमिव भृङ्गसमूहं कर्षतीत्युत्प्रेक्षा । अत्र कुमुदतीभ्रमरयोर्व्यवहारो यथा—रात्रौ विकशितानां कुमुदतीनां मध्ये मकरन्दपानार्थं ये भ्रमराः प्रविष्टा आसन् प्रातःकाले सूर्यदर्शनान्मुद्रितानां मध्ये त एव बद्धा बभूवुः, पुनः सन्ध्याकाले चन्द्रदर्शनादिकशितानां तासां मध्ये ये भ्रमरा निर्जग्मुः, त एवाङ्गारपुञ्जत्वेनोत्प्रेक्षिता इति भावः ।

श्रीकृष्णवक्षःस्थलस्थः श्रीराधापादसरोजयावकरसो युष्मान् पातु । कथम्भूतः ? श्रीवत्सकौस्तुभलक्ष्मीरेखाणान्तिरस्कारं करोति, यावकशोभाया अग्रे कौस्तुभादयस्तिरस्कृता भवन्तीत्यर्थः । तत्रोत्प्रेक्षामाह—वक्षसः श्यामतारूपान्धकारैर्बन्दीकृता प्रातःकालीनसूर्यद्युतिमण्डलीव । ननु सूर्योदयनाश्योऽन्धकारः कथं सूर्यमण्डलीं बन्दीकरोति, तत्राह—छन्देनेति । श्रीकृष्णवक्षःस्थलरूपमहदाश्रयरूपचातुर्य्येणेत्यर्थः । उत्प्रेक्षाऽन्तरमाह—कालिन्दीपयसि पुष्टं विकसितं रक्तोत्पलमिव ।

---

धर्म्मः । द्वितीयकल्पस्यैव साधकाः प्राचो दण्ड्याचार्य्याः 'न वै तिङन्तलनोपमागमस्ती'ति भाष्यानुशासनं प्रमाणयन्तस्तत्रोपमाभ्रान्तिपक्षं न्यग्भावितसादृश्यमिद्धं सिद्धान्तयन्ति—उपमानस्यालीकत्विद्धत्वेऽपि तैरुत्प्रेक्षितोपायभूतोपमाऽऽदिभेदानामुपमाऽन्तर्वर्त्तित्वमुररी-

नात्र 'स कथं धरणा'विति सन्देहोच्छेदः, अपि तु तत्परिपोष एव। एतेन निश्चयान्तोऽयं न भवति। 'कृष्णः किमेष' इति 'किं' शब्दो निश्चयं बाधते। केचिन्निश्चयान्तमपि सन्देहं मन्यन्ते (ग)। स यथा—

मेघो नायं, व्रजपतिसुतो, नापि सौदामिनीयं,
पीतं वासः, सुरधनुरिदं, नैष बर्हावतंसः।
बालाकीयं न खलु विततिः, पश्य मुक्तावलीयं,
विस्रब्धा त्वं विहर, शरदि प्रावृषः कोऽवकाशः? ॥ ३८

**—रूपकन्तु (६) तत्।**

**यत्तादात्म्यं द्वयोः—२३९ का**

द्वयोरुपमानोपमेययोः। अतिशयाभेदादपह्नुतभेदत्वं तादात्म्यम् (घ)।

**—तच्च द्विधैवेति विदुर्बुधाः।**

**समस्तवस्तुविषयमेकदेशविवर्त्ति च ॥ २४० का—**

स इति—उपमेय उपमानस्य भेदानुक्तौ यः संशयः सः सन्देहनामाऽलङ्कारः, किं वोपमेय उपमानस्य भेदस्योक्तौ यः संशयः स सन्देहनामाऽलङ्कारः। 'नु'र्विकल्पे। अत्र संशये उपमेये मुखे चन्द्रस्य भेदोक्तिर्नास्ति। एषः श्यामसुन्दरः पदार्थः किं मेघः? इति सन्देहोऽत्र वर्त्तत एव। अत्रोपमेये उपमानस्य मेघस्य भेदोक्तिर्वर्त्तते। मुखं वीक्ष्याह—अयं निष्कलङ्को दृश्यते, स तु सकलङ्कः, अतः प्रसिद्धचन्द्रो न भवति। तथाचायं क इति सन्देहो यथास्थित एव। पीताम्बरमालक्ष्याह—मावेति। अत्रापि निश्चयो नास्ति, तस्मान्नायं निश्चयान्तसन्देहः। कस्यचिन्मते निश्चयान्तसन्देहोऽप्यलङ्कारविशेषः तन्मत अन्यतोदाहरणमाह—मेघ इति। वक्षःस्थले दृश्यमानेयं विततिः श्वेतवस्तुनो विस्तारो न बालाकी न वकपङ्क्तिसमूहः। अयं श्रीकृष्ण एवेति विश्वस्ता सती त्वमनेन सह विहर।

द्वयोरुपमानोपमेययोर्यत्तादात्म्यं तद्रूपकम्। तथा च चन्द्रवन्मुखमित्यत्र उपमानोपमेययोर्भेदबोधक'वति'प्रत्ययोऽस्ति, अतो न रूपकम्—किन्तु यत्र 'मुखं चन्द्र'मिति

---

कृतम्। अयमापातत एषां निष्कर्षो यत्तिङन्तसमभिव्याहृतेवादिशब्दघटितत्वेऽस्या उत्प्रेक्षाया एवावकाश इति। अर्वाचीना सर्वस्वकृदाद्या एतद्विशेषेणदलस्यान्यथोपयोगमापश्यन्त्या उत्प्रेक्षाया विशालक्ष्यत्वस्याङ्गीकुर्वन्तः प्रतिभोत्थापितामध्यवसायलक्षणां बुद्धिमेवास्याः सादृश्यमूलालङ्कारात् भेदलक्षणे बीजत्वेन निर्दिशन्ति। विस्तरस्तत्र चित्रमीमांसायां चित्रमीमांसाखण्डने च द्रष्टव्यः। परमेतन्नापलाप्यं यत् प्रकाशकृदनुसारिभिर्नव्यैरङ्गिरस्यालङ्कार-

आरोप्यमाणश्चारोपविषयो यत्र शब्दगौ ।

तदादिः— २४१ का—

आदिः समस्तवस्तुविषयम् ।

आरोप्यमाणः शाब्द आर्थश्च तत्परम् ।

एकदेशविवर्त्ति— २४२ का—

शाब्दः शब्दोपात्तः, आर्थोऽर्थगम्यश्च । कश्चिच्छाब्दः कश्चिदर्थमर्यादया अवसेय इत्येकदेशविवर्त्तित्वम् । क्रमेणोदाहरणे—

उदञ्चद्वक्षोजस्तबकनमिता बाहुविटप-
द्वयीदोले रम्या स्मितकुसुमसौरभ्यसुभगा ।
इयं सन्ध्यारागच्छविलमृदुपाण्यङ्गुलिदला
नवीना ते राधे ! विलसति तनूरत्नलतिका ॥ ३९

चन्द्रमुखयोरभेदप्रतीतिस्तत्रैव रूपकमित्यर्थः । यत्रारोपविषयस्योपमेयस्य तथाऽरोप्यमानस्योपमानस्य च द्वयोरेव बोधकशब्दौ वर्त्तेते तत्र समस्तवस्तुविषयं रूपकं, यत्र तु आरोपविषयस्योपमेयस्य बोधकशब्दो वर्त्तते किन्त्वारोप्यमाणोपमानबोधकशब्दः काव्ये नास्ति, अपि तु अर्थमर्य्यादया स शब्दोऽनुमेय एव, यस्मिन्नेव पद्ये कुत्रचिच्चरणे उपमानबोधकशब्दोऽप्यस्ति, तत्रैकदेशविवर्त्तिरूपकं ज्ञेयम् । एवं क्रमेण भेदद्वयं भवतीत्यर्थः ।

इयन्तनूरूपा रत्नलतिका विलसति । कथम्भूता ? स्तनरूपस्तवकेन नमिता—तन्नुरपि साहजिकलज्जया किञ्चिन्नम्रा भवति । पुनश्च बाहू एव शाखाद्वयी तस्या दोलनविषये रम्या, लताऽपि शाखायाः किञ्चिचलने रमणीया भवति । हस्तयोः किञ्चिचलने माधुर्य्यस्योत्कर्षो भवति । पुनः सन्ध्याकालीनरक्तच्छविं लान्ति गृह्णन्ति ये मृदुपाण्यङ्गुलयस्त एव पल्लवा यत्र ।

---

भेदस्य विशेषविमर्शने विभागनिर्देशे चावज्ञा स्फुटीकृता । जृम्भानुबन्धेत्यादि—अत्र चन्द्रांशुविकसितां कुमुदवनीं श्रीकृष्णो वर्णयतीति प्रकरणनिर्देशः साहित्यकौमुद्याम् । अत्रान्तिमे पादे भामहादिदृष्टैवोत्प्रेक्षा ।

(ग) ससन्देहाख्योऽयमलङ्कार उत सन्देहाख्य इति सन्देहः कैश्चिदार्वाचीनैष्टीकाकृद्भिरुत्थाप्यते । भामहादयस्तु प्राचीना एनं ससन्देहमेवाहुः, उभयथाऽपि निरुक्तार्थस्य सत्त्वादयं निरर्थकप्रायो विचारष्टीकाकृतकृतिसुलभव्यामोहनमात्रमिति दिक् । सादृश्यवाचका इवादय एवमुत्प्रेक्षावाचका 'मन्ये' 'शङ्के' प्रभृतय इव सन्देहवाचकाः किं नुप्रभृतयः केचनैव गृह्यन्ते । रथो नु वाऽद्य :—आद्यः स्रष्टा इति टीकाकृत्कृतान्वयस्तु न चमत्कारकारी,

अत्र समस्तवस्तुविषयम्, आरोप्यमाणारोपविषययोः शब्दोपात्तत्वात्

प्रसूनैर्नानाभैः स्मितमलिनिमारुण्यपिशुनै-
र्लसन्नानाभावा मधुपगणभृङ्गारकलहा।
श्रिया सार्द्धं स्पर्द्धां बत विदधती गोकुलपते-
रुरस्या रत्नानामुपरि वनमाला विजयते (घ)॥ ४०

अत्र वनमालाया नायिकात्वेनारोपः, श्रियः प्रतिनायिकात्वेन—स चार्थ एव, प्रसूनानां स्मिताद्यारोपस्तु शाब्द, इत्येकदेशविवर्त्ति।

**आरोपविषयाभावेऽप्यारोप्यं यदि तत् परम्। २४३ का—**

परमन्यप्रकारमित्यर्थः। यथा—

मधुरिमरसवापीमत्तहंसीप्रजल्पः प्रणयकुसुमवाटीभृङ्गसङ्गीतघोषः।
सुरतसमरभेरीभाङ्कृतिः पूतनारेर्जयति हृदयदंशी कोऽपि वंशीनिनादः(घ) ॥४

अत्र 'मधुरिमरसवाप्या'दीनामारोप्याणामारोपविषयो नास्तीति।

**उक्तं प्रसङ्गि—२४४ का—**

प्रसङ्गि प्रकृष्टसङ्गवत् सजातीयबहुलमित्यर्थः। त्रिविधभेदमेव यदुक्तम्।

नानाभैः श्वेतश्यामरक्तनानावर्णैः प्रसूनैर्लसन्नानाभावा श्रीकृष्णस्य उरस्या उरसि भवा वनमाला रत्नानामाखाद्यानां वस्तूनामुपरि विजयते। प्रसूनैः कीदृशैः? स्मितेति—अत्र 'स्मिते'त्यनेन प्रसादः, 'मलिनिमे'ति वाम्यं, 'आरुण्ये'त्यनुरागः, एतेषां सूचकैरित्यर्थः। अत्र श्वेतपुष्पे स्मितस्यारोपः, श्यामपुष्पे वामत्वारोपः, रक्तपुष्पे अनुरागित्वारोपो बोध्यः। वनमालाया नायिकात्वारोपः रेखारूपाया लक्ष्म्याः प्रतिनायिकात्वारोपश्चार्थ एव, नतु शाब्दः, तयोर्बोधकशब्दाभावात्, पुष्पेषु स्मितस्यारोपस्तु शाब्द एव, स्मितादिबोधकशब्दानां विद्यमानत्वात्। अतोऽत्र शाब्द आर्थश्चोभयमपि वर्त्तत इत्येकदेशविवर्त्ति। यत्र केवलं शाब्द एव तत्र समस्तवस्तुविषयं रूपकमिति भेदो ज्ञेयः। आरोपविषयस्योपमेयस्याभावेऽपि यद्यारोप्यमुपमानं वर्त्तते तदा तद्रूपकमन्यप्रकारम्। मधुरिमेति—माधुर्यरसस्य वापीस्वरूपे श्रीकृष्णे या मत्तहंसी तस्याः प्रजल्परूपो वंशीनिनादो जयति, अत्रोपमेयस्य कृष्णस्य बोधकपदाभावादन्यप्रकाररूपकम्।

---

[1] परम् 'आदौ' रस इत्यन्वय एव वरम्। तथाचात्रार्थे प्रमाणं 'शृङ्गारैकरसः स्वयं नु मदन' इति विक्रमोवर्शीयपद्यस्थं प्रकाशोदाहरणं यदुपजीव्य रचितं स्यात् पद्यमदः। निश्चयान्तमपीति—निश्चयान्तस्य सन्देहस्य प्रकाशकृतां स्वीकृतत्वं स्मरणीयम्। अभियुक्तश्रेष्ठा उद्भटभट्टाः प्रकाशग्रन्थोपजीव्यभूता न निश्चयान्तं सन्देहं स्वीकुर्वन्ति, निश्चयस्य वाच्यत्वे न तादृश-

**—निःसङ्गमेकमेव विवक्षितम् ॥ २४५ का—**

एकमेव प्रधानत्वेन विवक्षितं तथाविधसजातीयशून्यं निःसङ्गम् ।

यथा— न पश्यति न भाषते न च शृणोति न स्पन्दते
निमीलति विघूर्णते पतति मूर्च्छतीयं यतः ।
तदेतदनुमीयते किमपि बाधते राधिकां
मुकुन्दविरहव्यथाविषविसर्पविस्फूर्जितम् ॥ ४२

**मालारूपकमन्यत्तु ज्ञेयं मालोपमानवत् (घ)॥ २४६ का—**

यथा— श्रवसोः कुवलयमक्ष्णोरञ्जनमुरसो महेन्द्रमणिदाम ।
वृन्दावनरमणीनां मण्डनमखिलं हरिर्जयति (घ) ॥ ४३

यथा वा— शौटीर्यं स्मरभूपतेर्मधुमदो लावण्यलक्ष्म्याः, स्मयः
सौभाग्यस्य, विलासभूर्मधुरिमोल्लासस्य, हासः श्रियः ।
अद्वैतं गुणसम्पदामुपनिषत् केलीविलासावलेः
सेयं लोचनचन्द्रिकाचयचमत्कारश्चकोरेक्षणा ॥ ४४

**श्लिष्टस्य वाचकस्यानुरोधाद्दारोप एव यः ।**
**सोऽन्यस्यारोपहेतुश्चेत् परम्परितनामकम् (घ) ॥२४७का—**

निःसङ्गमिति—यत्र एकमेव रूपकं प्रधानत्वेन विवक्षितं पूर्ववत् सजातीयरूपकान्तरं नास्ति तत्र निःसङ्गमेव (3) तद्रूपकं ज्ञेयम् । न पश्यतीति—अत्र केवलं व्यथाया विषविसर्पत्वारोपः, नतु सजातीयरूपकान्तरमस्तीति । सेयं चकोरेक्षणा राधिका मम लोचनयोश्चन्द्रिकाचयजन्यो यश्चमत्कारस्तत्तुल्यचमत्काररूपा । अत्र 'चमत्कारविशिष्टे'त्यनुक्त्वा 'चमत्कार' इति धर्मनिर्देश आधिक्यविवक्षया, यथा 'देवदत्तः पण्डित' इत्यनुक्त्वा 'साक्षात् पाण्डित्य'मेवेत्युक्तिः पाण्डित्यातिशयं बोधयति । तथा कन्दर्पभूपतेः शौटीर्यं पराक्रमस्तद्रूपा । अत्रापि पराक्रमातिशयविवक्षया धर्मनिर्देशः । एवमुत्तरत्रापि ज्ञेयम् ।

---

चमत्कारित्वं, न वा सादृश्यजीवातुभूतं सन्देहघटनं वरीवर्त्तीति कृत्वा निश्चयाख्यालङ्कारभेदस्य चमत्कारसारत्वे न सर्वेषामेकमत्यम् । अत्र विश्वनाथादिमतं विवेचनीयम् ।

(घ) तादात्म्यमिति—केचिदत्राभेदरूपकं ताद्रूप्यरूपकमिति द्विविधां संस्थामस्थौ-

---

(3) एवं (ग) (क) पुस्तकयोः । (ख) (ङ) पुस्तकयोस्तु 'तत्र द्वितीयरूपकान्तराभावेन निःसङ्ग'मित्यादि पाठो दृश्यते ।

अन्यस्याश्लिष्टस्यारोपे यदि हेतुः स्यात्तदा रूपकं परम्परिताख्यम् । यथा—
पद्मानननोत्सुकतया भ्रमरः, कलाभिः सर्वाभिरन्विततया त्वमखण्ड इन्दुः ।
त्वन्मानसे कनककपङ्कजिनीतयाऽसौ सा राधिका सुरमणीनिकराधिकेव ॥ ४५

अत्र पद्मं पद्मा च, कलाश्चतुःषष्टिः, कला चन्द्रस्य षोड़शो भागश्च, मानसं चित्तं मानससरश्च, सा राधिका सारेणाधिका साराधिका च, इत्येषां श्लिष्टानां वाचकानामनुरोधात् 'भ्रमरा'दिशब्दानामारोपः ।

भेदे सत्यपि तत्— २४८ का

तत् परम्परितम् । यथा—रत्नस्तम्भौ व्रजमृगदृशां चित्तदोलोत्सवस्य
श्रीराधाया रतिजयकलातोरणोत्तानदण्डौ ।
दैत्येन्द्राणां परिभवमहायज्ञनीलेन्द्रयूपौ
शुण्डे कामप्रमदकरिणोः कृष्णबाहू स्मरामः (घ) ॥ ४६

अत्र चित्तदोलनादेर्भिन्नशब्दवाच्यस्योत्सवाद्यारोपेण बाह्वो रत्नस्तम्भत्वाद्यारोपः सिद्ध एव । आद्ययोर्मिश्रत्वं, उत्तरयोः शुद्धत्वम् ।

'पद्मानने'ति श्लिष्टपदम्—पद्माऽऽननमेव पद्माननं तत्रोत्सुकतया हे कृष्ण ! त्वं भ्रमरः । अत्र पद्मा चन्द्रावल्याः सखी, तस्या आनने कमलाननारोपः, तेनारोपश्लिष्टस्य भ्रमरस्य कृष्णे आरोपः, अतोऽत्र परम्परितरूपकम् । तथा कलाभिरेव कलाभिः ; अत्र चतुःषष्टिकलायां चन्द्रस्य षोड़शभागरूपकलाऽऽरोपः, तेनारोपेण श्लिष्टस्य चन्द्रस्य कृष्णे आरोपः । एवं त्वन्मानसमेव मानसं सरस्तत्र स्वर्णकमलिनीत्वेनासौ सा प्रसिद्धा राधिका स्वर्गाङ्गनानिकरेभ्योऽधिकेव । अत्र मानसे चित्ते मानससरोवरारोपः, तेनारोपेण श्लिष्टायाः स्वर्णकमलिन्या राधिकाऽऽरोपः ।

भेदेऽश्लिष्टे सत्यपि तत् परम्परितरूपकं भवति । बाहू कथम्भूतौ ? चित्तदोलनमेवोत्सवस्तस्य रत्नस्तम्भौ श्रीराधाया रतेर्या जयकला उत्कर्षवैदग्धी सैव तोरणं बन्धनमाला तस्य बन्धनार्थमुत्तानदण्डौ । भिन्नशब्दस्याश्लिष्टपदस्य वाच्यस्य चित्तदोलनादेराद्ययो रत्नस्तम्भदण्डयोर्मिश्रत्वं मालारूपकेण सह मिलनं ज्ञेयं, धर्मैकरूप्यात् । तद्यथा चित्तस्य दोलनेन य उत्सवस्तस्य रत्नस्तम्भौ, रतेर्या जयकला उत्कर्षवैदग्धी तत्र तोरणमिति

---

दिशन्ति, परं न तत् प्रामाणिकसम्मतं 'सुखमपरचन्द्र' इत्यादावपि तथाकथिततादूप्यरूपकेऽभेदरूपकस्यैव सम्भवात् । उपमावन्मनोहारित्वमादधत्यप्येषः न तथा विपुलस्य इति सुविदितमेव, तथाऽपि प्राचां वाल्मीकिव्यासाश्वघोषभासकालिदासादीनां प्रबन्धेष्वस्योत्कर्षो न हीयते । यथा 'प्रज्ञाऽम्बुवेगां स्थिरशीलवप्रां समाधिशीतां व्रतचक्रवाकाम् । अस्योत्तमां धर्मनदीं प्रवृत्तां तृष्णाऽर्दितः पास्यति जीवलोकः ॥' इत्यादि बुद्धचरितपद्ये ।

रसनारूपकमन्ये पठन्ति (घ) । यथा—

कुसुमस्मितैर्लतानां स्मितकुसुमैर्गोपरमणीनाम् ।
किसलयकरैरमूषां स करकिसलयैश्च पिप्रिये तासाम् ॥४७

स कृष्णः, अमूषां लतानाम्, तासां गोपरमणीनाम् ।

—या तु प्रकृतस्यान्यथाकृतिः ।
साऽपह्नुतिः (१०) (ङ)—२४९ का—

अपह्नुतिनामाऽलङ्कारः । अन्यथाकृतिः प्रकृतं निषिध्यान्यस्य स्थापनम् । यथा—

ताम्राधरौष्ठदलमुन्नतचारुनासमत्यायतेक्षणमिदं तव नास्यमास्यम् ।
बन्धूकयुग्मतिलपुष्पसरोजयुग्मैः(ङ)संपूजितः स्वयमसौ विधिनेव चन्द्रः ॥४८

यथा वा— इदन्ते लावण्यव्रततिफलयुग्मं, न तु कुचौ,
मते रज्जून्माथो नभसि, तव राधे ! न वलयः ।

व्याख्याने मालारूपकम् । (4) हे राधे ! तव मध्यदेशरूपनभसि वलयस्त्रिवल्यो न भवन्ति, किन्तु मतेः श्रीकृष्णबुद्धेर्बन्धनार्थं रज्जुरूप उन्माथो कूटयन्त्रं भवति । तथेयं तनुरुहाणां लतिका रोमावली न भवति, किन्तु नाभिरूपह्रदे मग्नः कन्दर्परूप-सर्पस्तस्य फणास्थनीलमणेः सकाशात् समुज्जृम्भन्ती कान्तिर्भवति ।

---

भरतनिर्द्दिष्टालङ्कारचतुष्कोऽस्य गणनं परिदृश्यते । उपमारूपकयोरेकतरादपरस्य विवर्त्तक्रम-निर्द्धारणे तयोः सङ्करघटने च प्राचीनकवीनां रचनैव प्रमाणम् । दिग्दर्शनं यथा सौन्दरनन्दे—'सूत्रेण बद्धो हि यथा विहङ्गो व्यावर्त्तते दूरगतोऽपि भूयः । अज्ञानसूत्रेण तथाऽवबद्धो गतोऽपि दूरं पुनरेति लोकः ॥' वनमाला विजयते—अत्र न कथं समासोक्तिरित्यर्वाक् वृत्तिग्रन्थे (श्लोः५२ विवेचयिष्यते । रूपकेऽर्थबोधप्रसङ्गे न तावत् स्वत एवाभिधागम्यस्यार्थस्य तिरस्करणं, यथा 'पिबन्मधु यथाकाम'मित्यादि दण्ड्याचार्य्योदाहृते समासोक्तिलक्ष्यभूते, परमभिधा-गम्यस्य लाक्षणिकस्य चार्थस्याभेदमयी स्थितिरित्यप्यूह्यम् । मधुरिमेति—आनन्द-वृन्दावनीयमेतत्पद्यं वैष्णवकाव्येषु सततमुद्ध्रियते । अवसोरिति—पञ्चहायनः (मतान्तरे सप्तहायनो वा) कविकर्णपूरो भगवतः श्रीकृष्णचैतन्यचन्द्रादुद्दीपितकवित्वकान्तिरिममेव श्लोकं प्रथमं ग्रथितवानिति प्रसिद्धिः—'आर्य्याशतका'ख्यस्य ग्रन्थस्य कर्णपूरकृतस्यायमेव मुख-बन्धः । अत्र श्लोके परिणामाख्यालङ्कारभेदस्य रूपकादुद्भावितस्य स्थितिरप्यवसेया, कुवलया-दीनां मण्डनरूपप्रकृतार्थे उपयोगदर्शनात् । षुण्डे—अयं लिङ्गविपर्य्यय उपमायामिवात्रापि न दोषाय । अन्ये पठन्तीति—स च पाठो नासङ्गत इति स्वरसः ।

---

(4) 'तवयं'त्यादि'र्मालारूपक'मित्यन्तोऽशः (ख) (ङ) पुस्तकयोर्नास्ति ।

इयं नाभीमग्नस्मरफणिफणानीलमणितः
समुद्यान्ती कान्तिस्तव तनुरुहाणां न लतिका ॥ ४९

यथा वा— क्षीराब्धेः कति वीचयः, कति लसद्रक्तोत्पलानां दल-
द्रोणीसञ्चयवृष्टयः (ङ) कति मधून्मत्तालिविच्छोलयः ।
हेलोदञ्चदवाञ्चतोर्नयनयोः कृष्णस्य लीलेक्षण-
व्यापारे कति नोन्मिषन्ति विविधज्योतिर्विलासच्छलात् ॥ ५०

—अनेकार्थप्रतिपादकता यदि ।

**एकार्थस्य तु शब्दस्य तदा श्लेषः(११) स कथ्यते(च) ॥२५०का—**

यथा— उदयति यस्मिन्नुदयति तिरोभवत्यपि तिरोभवति ।
जगदेव तत्र तमसां नाशिनि कैः कृष्ण ! तन्यतां कोपः ॥ ५१

हेलयोदञ्चत्तिरश्चीनयोः श्रीकृष्णनयनयोर्लीलेक्षणव्यापारे सति विविधानां श्रीकृष्णनेत्रस्थश्वेतरक्तश्यामज्योतिषां विलासच्छलात् क्षीरसमुद्रस्य कति तरङ्गा नोद्गच्छन्ति, अपि तु उद्गच्छन्त्येव (5) । तथाच श्रीकृष्णस्य तिरश्चीनावलोकनसमये नेत्रस्थमिदं श्वेतरूपं न भवति, किन्तु क्षीरसमुद्रस्य तरङ्गा एव दृश्यमाना भवन्तीत्यपह्नुतिरेव । एवमुत्तरत्रापि ज्ञेयम् । नेत्रस्थमिदं रक्तं रूपं न भवति किन्तु प्रफुल्लरक्तोत्पलानां दलान्येव द्रोणीसमूहास्तेषां वृष्टयः कति नोन्मिषन्ति । वसन्तसमये उन्मत्तभ्रमरश्रेणयः ।

(ङ) अपह्नुतिरिति—'उपमेयं मृषा कृत्वा सत्यत्वेनोपमानकम् । स्थाप्यते चेत्तदा ज्ञेयाऽपह्नुति'रिति काव्यदर्पणे लक्षणमप्येतदभिप्रायम् । आचार्य्यदण्डिमतमुपपादयन्तः केऽपि यत्किञ्चिदपह्नुत्यान्यस्य कस्यचित् प्रदर्शनमपह्नुतिरिति लक्षणं वर्णयन्ति । दण्डिलक्ष्यं 'न पञ्चेषुः स्मरस्तस्य सहस्रं पत्रिणा'मित्यप्येतत्विनिगमकम् । एवमुद्योतकृतो नागोजीभट्टाः । अत्र सादृश्यमूलता ('किञ्चिदन्तर्गतोपमे'ति भामहलक्षणे) भूतार्थापह्नवश्चेतरव्यावर्त्तकत्वे बीजं, नापलापमात्रमाचार्य्यदण्डिप्रभृतिनिर्द्दिष्टमिति विमर्शकाणां सरणिः । एवमेतेन न सर्वथा निर्विवादं वामनमतम् 'अपह्नुतौ वाक्यार्थयोराधिकं ताद्रूप्यं, रूपके तु पदार्थयोः शाब्दं ताद्रूप्यमिति भेद' इति । सर्वस्वकृद्दर्शितमस्य भेदत्रयं भ्रान्तिहेतुकैतवपूर्वमपह्नुतिसंज्ञाकल्पनं मालाऽपह्नुतेश्च लक्षणप्रदर्शनमन्यत्रेत्यास्तां विस्तरः । बन्धूकद्युतीति—अत्र युग्मपदस्य पुनः प्रयोगो न सुष्ठु, परं नानार्थपौनरुक्त्यन्ताम्रधरौष्ठदितयेनैकत्रायतेक्षणयुगलेनापरत्र यथाक्रमं साम्यादिति बोध्यम् । 'द्रोणीति'—स्त्रीत्वमनियतलिङ्गशब्दविषयकम् ।

(5) एवं सर्वत्रैव पुस्तकेषु, परन्तु 'अपि तु बहव उद्गच्छन्त्येवे'त्यनेन भाव्यम् ।

द्वयार्थस्यैव श्लेषो, न शब्दस्य, परिवृत्तिसहत्वात् । अत्र वाक्यमेकार्थमेव(च), तच्च सूर्यप्रतिपादकं, तत्रापि श्रीकृष्णं प्रति काऽप्यभिमानवती विचारेणाभिमानखण्डनपूर्वकं वदति—यस्योदये सर्वोदयः, यस्य तिरोभावे सर्वतिरोभावः, तत्र त्वयि को नाम कोप इत्यर्थान्तरम् ।

यथा वा—'विलोलसंफुल्लकदम्बमाल' इत्यादि ( ७म किरणे ४९ श्लोकः ) ।

**श्लिष्टैर्विशेषणैरेव विशेष्यस्यान्यथास्थितिः ।**

**समासोक्तिः (१२) (क्र)— २५१ का—**

विशेष्यस्य केवलस्य श्लिष्टैर्विशेषणैरन्यथास्थितिरन्यथाभासनं समासोक्तिनामाऽलङ्कारः ।

यथा— त्वदङ्गसङ्गेन विनैव राधे ! क्षणे क्षणे ग्लायति नन्दसूनुः ।
सदैव वक्षःस्थलकेलियोग्या न रोचतेऽस्मै वनमालिकाऽपि ॥ ५२

उदयतीति—अत्र 'उदयतिरोधाना'दिपदानां परिवृत्तिसहत्वान्न शब्दश्लेषः, अपि तु अर्थश्लेष एव । एवमत्रोदयाद्यनेकपदघटितमेकं वाक्यं सूर्यरूपैकार्थप्रतिपादकं, तत्राप्येतद्वाक्यश्लेषेण कृष्णरूपार्थान्तरमपि बुध्यते । विशेष्यस्य केवलाश्लिष्टस्य ।

---

(च) भामहप्रभृत्युक्तः श्लेषालङ्कारो दण्ड्युक्तोऽभिन्नपदश्लेषश्च बहुत तावन्नयोद्दिष्टतदाख्यार्थालङ्कार एवेति विमर्शने प्रतिभाति । परं भामहोद्भटादिकृतमस्य साम्यमूलोद्घाटनम् 'उपमानेन यत्तत्व'मित्यादि तल्लक्षणस्थं सहोक्तिहेतूपमाजनितं भेदत्रयं चिरन्तनानाञ्च श्लेषोपमाघटकसम्बन्धविचारोत्थापकताऽनुक्ताऽप्यत्रावसीयते । दण्डिकृतपरिगणनतोऽस्य साम्यगर्भतायास्तिरस्कारपुरस्कृत उल्लेखः । अयमपि कालक्रमेणालङ्कारान्तरकल्पको जातः, सनियमस्यास्यैवाधुनिकैः परिसंख्यारूपेण गणितत्वात् । एतस्य शब्दार्थोभयात्मकतया भेदस्वीकारः कुन्तकाद्यनुसृतोऽपि नातिरुचिर इति शब्दालङ्कारानुशीलन एव सूचितमस्माभिः । यथा वेति—अत्र सहोक्तिमूलता लक्ष्या । 'छायावन्तो गतव्याला' इत्यादाविव विशेष्यस्यापि साम्यं द्वयोश्च वाच्यत्वमिति व्यावर्त्तकत्वे बीजम्, अलङ्कारान्तरविविक्तो नास्य विषयोऽस्तीति, सर्वालङ्कारापवादोऽयमिति, अभिन्नपदत्व एवार्थश्लेष इति च प्रायोवादाः । श्लेषः—ईदृशस्यास्यार्थालङ्कारत्वे बीजं प्रागेव दर्शितम् । अत्रानेकार्थवाचकतेति शब्दशक्त्युद्भवध्वनिभेदाद् भेद इति ध्वनिकिरण उट्टङ्कितम् । वाक्यमेकार्थमेवेति—वाक्यं वैयाकरणादिनिरुक्तम्, वाक्यसमन्वितः प्रयोजकं पदमत्र वाक्यमुच्यते । अत्र यद्यप्यभिधाया अनियन्त्रणात् द्वावपि कृष्णसूर्यौ वाच्यौ, तथापि प्रकरणान्नियमेनैकोऽप्योर्थो बोद्धुं शक्यः । यदा एकार्थता उभयोः सामान्यरूप्यैकस्यार्थस्य घटकता । स कृष्णपक्षे सूर्यपक्षे च सविशेष इत्यस्तु, परं सामान्यत ऐक्यमिति केचित् । कष्टकल्पनेयेत्याद्यः पक्ष एव वरम् ।

अत्र वनमालिकायाः प्रतिनायिकात्वं केवलेन 'वनमाला'शब्देन नायाति, अपि तु 'सदैव वक्षःस्थलकेली'त्यादिना विशेषणैरेव । समासः सङ्क्षेपस्तेनोक्तिः ।

## —असम्बन्धरूपं यत्तूपमाकृति ।

## निदर्शनैषा दृष्टान्तप्राया (१३) (ज)—२५२ का

निदर्शननामाऽलङ्कारः । यथा—

क्व नाम कृष्णस्य कृपाकटाक्षः क्व तावदस्मिन् बत नोऽभिलाषः ।
रत्नाकरस्योदरवर्त्ति रत्नं वयं करेणेव जिहीर्षवः स्मः ॥ ५३

यथा वा—आकृष्यतां तक्षकमौलिरत्नमुत्ताल्यतां हेमगिरिः करेण ।
आच्छिद्यतां केशरिकेशराली न स्पृश्यतां केशव ! मत्सखीयम् ॥ ५४

मालारूपाऽप्येषा ।

यदुपमाकृत्यमसम्बन्धरूपा एषा निदर्शना किन्तु दृष्टान्तप्राया च । हेमगिरिः सुमेरुः करेणोत्ताल्यतां ध्रियताम् । असाध्ये तक्षकफणास्थरत्नाकर्षणे साहसं क्रियताम् । ततोऽप्यत्यसाध्ये मत्सखीस्पर्शने कदाऽपि मा साहसं कुर्विति भावः । एषा मालारूपा निदर्शना ।

---

(ज) समासोक्तिरिति—अन्वर्थताऽस्य प्राचीनैरुपलक्षिता, सा चालिव कुत्रापि साच्चानवीनैरप्युद्दिश्यते । प्रकृतार्थस्य यदत्राप्रकृतार्थबोधनं तद्विशेषणबलादेव भवतीत्यस्य ध्वनेरलङ्कारान्तराच्च भूयान् भेदः । 'कार्य्य-लिङ्ग-विशेषणै'रिति 'व्यवहारसमारोप' इति च विश्वनाथलक्षणे लक्ष्यस्यालङ्कारस्य स्फुटीकरणार्थं, तत एव विस्तारो ग्राह्यः । केवलस्येति—विशेष्यपदे न श्लेष इति यावत् । 'अतोपमेयस्यानुक्तौ समानगुणन्याया समासोक्तिः, सङ्क्षेपवचनात् समासोक्ति'रित्याख्ये ति वामनः । 'पिबन्मधु यथाकामं', 'स्कन्धवानृजुरव्याल' इत्यादि च तल्लक्ष्येष्वस्या साम्यमूलता लक्षणीया । एवं प्राचीनाचार्य्याः । न च साधीयान् कल्पः प्राचीनाप्रस्तुतार्थकथनं प्रस्तुतस्य प्रतीतोक्तात् समानविशेषणत्वलिङ्गात्, प्रस्तुतेऽप्रस्तुतस्य वस्तुनो व्यवहारसमारोप एवास्यालङ्कारस्य विषय इति नवीनानां नवं दर्शनम् । श्लिष्टविशेषणेति—अपरे तु श्लिष्टविशेषणोत्थापिता, साधारणविशेषणोत्थापिता चेति द्विधेवेति मन्यन्ते । सर्वस्वकृदुद्भावितानामस्य भेदानामस्य ध्वनितातिरिक्तायाश्च विषयस्य दर्पणरसगङ्गाधरादिषु विचारो जिज्ञासुभिरवश्यमवलोकनीयः । यद्यपि भरतनिर्दिष्टेऽलङ्कारचतुष्के नास्योल्लेखो दृश्यते, तथापि चिरन्तनानां चिन्तातन्तुं श्रित एष इति नातिप्रायवादः । एवमप्याहुः प्रतीच्याः—

—यत्र क्रियैव हि।

वक्ति स्वरूपं हेतुञ्च साऽन्या—(ज) २५३ का

यत्रैकैव क्रिया स्वरूपं हेतुञ्च वक्ति साऽन्या निदर्शना।

यथा—अभिवन्द्यवन्दनविपर्य्ययः सदा विदधाति नूनमियतीं हि यातनाम्।

अधिकण्ठसीम परिधाय राधिका रमणीमणिर्न हि मणीकृता यतः॥५५

अत्र 'यातनां विदधाती'ति क्रियां स्वरूपं रमणीमणेर्मणीकरणविपर्य्यय-रूपं हेतुञ्च वक्ति।

—अप्रासङ्गिकस्य वाक्।

प्रासङ्गिककथायां स्यादप्रस्तुतप्रशंसनम् (१४)॥(झ)२५४ का—

अप्रासङ्गिकस्याप्राकरणिकस्यार्थस्य वाक् कथनं यत् प्रासङ्गिककथायां तदप्रस्तुतप्रशंसा स्यात्।

कदाचित् श्रीकृष्णो राधां सङ्केतकुञ्जस्थां विधाय तस्याः प्रतिपक्षरमणीचन्द्रावलीकृत-प्रतिबन्धकवशात्तन्निकटे गन्तुं न शशाक, तदा श्रीराधिका मानिनी बभूव, तस्या मान-भङ्गार्थं कृतेऽपि नानायत्ने यदा मानशान्तिर्न बभूव (?) तदा श्रीकृष्णः खिन्नः सन् साहाय्यार्थं ललितासकाशं जगाम, तं प्रति ललिताऽऽह—अभिवन्द्ये ति—"वदि अभिवादनस्तुत्योः" स्तुत्यर्हाणां वन्दनविपर्य्ययोऽनादरादिर्हि निश्चितमियतीं यातनां विदधाति यतस्त्वया गतरात्रावधिकण्ठसीम कण्ठसीमायां परिधाय राधिकारूपरमणीमणिर्न हि कौस्तुभमणी-कृता। अत्र यातनाविधानरूपक्रिया स्वहेतुं बोधयति, तथाच यातनाविधानरूपकार्य्य-लिङ्गेन रमणीमणेर्मणीकरणं भावरूपं कारणमनुमीयत इत्यर्थः।

---

Personification is as old as language. Man never knows fully how anthromorphic he is. परमस्य मर्य्यादालङ्घनमेव दोषाय। प्राचीनगणनायामप्रस्तुत-प्रशंसातः समासोक्तेर्भेदः सूक्ष्मः, अतो नेदं विस्मयकरं यत् कैश्चित् कुन्तकादिभिरप्रस्तुत-प्रशंसास्वरीकुर्वद्भिरन्यथा चास्याः शोभाशून्यत्वं सिद्धान्तितम्।

(ज) दृष्टान्तप्रायेति—निदर्शनं निश्चित्य दृष्टान्तकरणम्। अत्र वस्तुनोर्वाक्यार्थयोः पदार्थयोर्वा सम्बन्धः स्वतो दुरुपपादः, परमेतत्सम्बन्धकरणद्वारा सादृश्याक्षेपेणौपम्यकरणं सादृश्यपरिकल्पनं बिम्बानुबिम्बत्वबोधो वा। दृष्टान्तालङ्कारादस्य भेदो दर्पणादौ स्फुटीकृतः। अत्र द्वितीयसम्बन्धो भवन्नपि सादृश्यमुखेनैव स्थितिमानित्यस्य सादृश्यमूलता ज्ञेया। अन्येति। अत्रापरैर्लक्षितस्यासम्भवतो वस्तुसम्बन्धस्याभासः—परमत्र भेदप्रकटनं भिन्नार्थमिवेति प्रतिभाति।

**कार्य्यकारणसामान्यविशेषेषु तदन्यगीः ।**
**प्रस्तुतेषु च तुल्ये च तुल्यगीः पञ्चधैव तत् ॥ २५५ का—**

तदप्रस्तुतप्रशंसनं प्रस्तुतेषु कार्य्यादिषु तदन्यगीः कारणादिनिरुक्तिः, चकारादन्येषामप्रस्तुतप्रसङ्गतुल्ये प्रस्तुते तुल्यस्याप्रस्तुतस्य गीश्चेति पञ्चधा। कार्य्ये कारणकथनं, कारणे कार्य्यकथनं, सामान्ये विशेषकथनं, विशेषे सामान्यकथनं, तुल्ये तुल्यस्याप्रस्तुतस्य कथनमित्यर्थः। क्रमेणोदाहरणानि—

गेहेन किं तेन सदासितेन (5a) दिनैर्वृथा तैः किमु यापितैर्वा ।
न यत्र मे चन्द्रकशेखरस्य यागोदयः सिध्यति साधु साध्वः ॥ ५६

अत्र गृहान्निशि कश्चिद्वनाय गच्छामीति कार्य्ये प्रश्ने प्रस्तुतेऽप्रस्तुतस्य तत्कारणस्य प्रशंसा ।

'कुतः समागच्छसि राधिके ! त्वं' ? यत्र स्थिता तस्य मुखं निरीचे ।
'क्व यासि मुग्धाक्षि ! समं सखीभि'र्न कस्य पुष्पावचयो ह्यभीष्टः ? ॥

अत्र 'कुत आगच्छसि' 'क्व यासी'ति प्रश्ने प्रस्तुतेऽप्रस्तुतस्य तस्य तत्-कारणस्य तन्मुखावलोकनस्य पुष्पावचयस्य च प्रशंसा। यत्र तन्मुखावलोकनं भवति तत्रैव यामः, पुष्पावचयस्तु व्याज इति ध्वनिः (भ) ।

अस्ताचलं चुम्बति भानुबिम्बे गृहे गृहे गोकुलसुन्दरीणाम् ।
दिव्यानुलेपाभरणाम्बराणि कृष्णाह्रियन्ते परितः सखीभिः ॥ ५८

अत्र तदागमने प्रस्तुते कारणे कार्य्यमुक्तम् ।

सदासितेन बन्धनाधिकरणेन तेन गेहेन किम् ? षिङ् बन्धने अधिकरणे क्तः। यत्र गृहे दिवसे वा मम चन्द्रकशेखरस्य महादेवस्य पक्षे श्रीकृष्णस्य यागोदयः पूजोदयः पक्षे कन्दर्पयागोदयो न साधु सिध्यति। अत्रेति—कश्चित् प्रश्ने। हे सखि ! वनाय गच्छामीति प्रस्तुतस्य कार्य्यस्य प्रश्नेऽप्रस्तुतस्य तस्मिन् वनगमने कारणस्य गृहे कन्दर्पयागाभावस्य सिद्धेः प्रशंसा कथनमित्यर्थः। अस्ताचलमिति—अप्रस्तुतस्य वस्त्राभरणाद्याहरणरूप-कार्य्यस्य प्रशंसा तया दूत्या कृता—तथाच सन्ध्याकाले वस्त्राभरणादिभिर्विभूषितास्ताः सर्वाः श्रीकृष्णं मिलिष्यन्तीति भावः। साधूनां शरीरेषु वपुःस्वभावेन कामादिदोषा

(भ) वाक् कथनमिति—एतदेव प्राचीनैर्लक्षितालक्षणात् भेदस्फुटीकरणम् ! एवमपि

(5a) 'सुधामितेने'ति (ग) पुस्तके पाठः ।

अन्तर्लतागृहमनल्पतमं तमिस्रमालिङ्ग्य सा तव तनुभ्रमतो वसन्ती ।
दैवोदितेन्दुकिरणैर्विरतेऽथ तस्मिन्मा गाः प्रिय ! त्वमिति सीदति कृष्ण ! राधा ॥

अत्र तदाकारेऽपि साऽनुरज्यतीति सामान्ये विशेषकथनम् ।

अनुरागिवधूमनोज्वरक्षतये त्वं ननु कृष्ण ! भेषजम् ।
स कृती स सुहृत् स वत्सलः सुहृदाधिप्रतिकारको हि यः ॥ ६०

अत्र त्वां नीत्वा यदि तस्या विरहज्वरं नाहं शमये तदा सोऽपि न भविष्यति । अहञ्च न कृतिनी, न सुहृत्, न वत्सला । तस्या मनोज्वर-शमनं विना तद्रूपेण भेषजेन न सम्पत्स्यते । तस्मात्त्वं शीघ्रमेव गन्तुमर्हसीति विशेषे प्रस्तुते सामान्यकथनम् ।

तुल्ये प्रस्तुते तुल्यस्याप्रस्तुतस्याभिधानेऽस्य त्रयः प्रकाराः श्लेष-समासोक्ति-सादृश्य-रूपाः । क्रमेणोदाहरणानि—

न दोषदर्शी भवितेव विद्वान्वपुःस्वभावेन सतां वपुःषु ।
युज्येत फेनादिभिरम्बुदोषैरघौघविध्वंस्यपि गाङ्गमम्बु । ६१ एष श्लेषरूपः ।

[6 यथा—लोलोऽपि पानविवशोऽपि तमःस्वरूपोऽप्याश्रियतां सुमुखि ! न भ्रमरः कदाऽपि ।
जात्यैव खेलनपरो व्रततीर्भ्रमन् यः सारग्रही भवति तासु महागुणज्ञः ॥ ६२
अत्र कृष्णस्य मानिन्याश्च तुल्ययोर्भ्रमरमालत्योरभिधाने श्लेषरूपः ।]

हंहो प्रेम तवायशो विरचितं सद्योऽविनिर्गच्छता
येनानेन हतेन जीवितमिदं तद्येन सन्धार्यते ।

दृश्यमाना अपि पण्डितस्तु तत्तद्दोषदर्शी न भविता (7) । गङ्गाजले जलस्वभावेन फेनादिदोषा दृश्यमाना अपि तज्जलं ब्रह्मद्रवरूपमघसमूहविध्वंस्यपि । अत्र 'दोषदर्शि'शब्दो नानार्थ-वाचकत्वाच्छ्लिष्टः । अत्र प्रस्तुते साधुशरीरे दोषदर्शनाभावेऽप्रस्तुतस्य गङ्गाजलस्य पापसमूहनाशकत्वस्य कथनम् ।

माथुरविरहेण व्याकुला श्रीराधा स्वप्रेमाणं सम्बोध्याह—हंहो खेदे हे प्रेम ! सद्यः श्रीकृष्ण विच्छेदक्षणेऽविनिर्गच्छता येन जीवितेन तवायशो विरचितं तज्जीवितं येनावधिवासरेण धार्य्यते तस्यैव सुमहान् दोषः—यतः शरीरान्तरे तस्य कृष्णस्य प्राप्तावधा-

प्रकाशकतां 'तदन्यस्यवचः' पदेन, यदाहुः सङ्केतकृतः 'अत्र वर्णना न स्तुति'रिति । 'अप्रस्तुतस्य प्रस्तुतपरा प्रशंसा वच,इत्यभिधानम्' । अलङ्कारान्तरेष्विवात्रापि श्लेषस्याङ्गत्वावहः

(7) वाक्ययुगलं शिथिलबन्धदोषदुष्टम्—एवं सर्वेष्वेव पुस्तकेषु ।

तस्यैवावधिवासरस्य सुमहान् दोषः शरीरान्तरे
तत्प्राप्तौ समयोऽधिकः किमवधावित्यं न येनोह्यते ॥ ६३
अत्र समासोक्तिरूपः ।

[यथा (८)—
किं चातकीरपि रसस्पृहयैकताना वर्षन्तमम्बुदमपि स्ववशे नयन्ती ।
बाल्ये ! विधाय दृगगोचरमेतमासां छद्मेन राजसि रजोभिरनेन कामम् ॥ ६४
अत्र राधासक्तानां गोपसुभ्रुवां कृष्णेन सम्भुक्तायाश्च सुखाप्तमायाः प्रस्तावे चातकीनां नायिकात्वं, बाल्यायाश्च प्रतिनायिकात्वं विशेषणमाहात्म्यादेवागम्यते । इति समासोक्तिरूपः ।]

चन्द्रादिनानाविधरम्यवस्तुनः सौन्दर्य्यमादाय मुखादि निर्ममे ।
यस्याः स्मरेण, स्वयमेव तामसौ हिनस्ति तैरद्य हरे ! त्वया विना ॥ ६५
अत्र सादृश्यरूपः ।

[यथा वा—(९)
किं केतकीं पुनरपि श्रयतां विदग्धभृङ्गी यथाश्वभिपतन्नभिनन्न एव ।
विद्धः सकण्टकभरैरददानयैव सङ्गं यदेव नलिनीषु ययौ विहर्त्तुम् ॥ ६६
अत्र कलहान्तरितायाः कृष्णस्य च प्रस्तावे केतकीभृङ्गयोरभिधाने सादृश्यरूपः ।]

प्रतीयमानस्यारोपानारोपाभ्यां पुनर्द्विधा । २६६ का—

पुनरिदमप्रस्तुतप्रशंसनं द्विधा प्रतीयमानस्यार्थस्यारोपानारोपाभ्याम् ।
यथा—का त्वं ? "पृच्छसि दुःखिनीं किमिति मां" कस्मादयं ते शुभे !
निर्वेदो ? 'ननु मुक्तिरस्मि' तदहो सर्वोत्तमा त्वं "न हि ।
दूरस्थामपि सादरोऽनुभजते भक्तिं मुकुन्दप्रियो
नोपेत्यर्थनकारिणीमपि दृशः कोणेन मां वीक्षते" ॥ ६७

[यथा वा (१०)—
त्वं कोऽस्यूषरदेशमेव सुधियो ! जानीत, किं मां भवा-
न्निर्वेदं तनुते, प्रगुणमभितो राजन्ति ता भूमयः ।

तदवधिवासरे किमधिकः समयो भावीति तेनावधिवासरेण न जह्यते न वितर्क्यते—तथा च देहानां सद्यः सुत्यजत्वाद्देहान्तरस्यापि शीघ्रभावित्वाच्छरीरान्तरे तत्र स्वल्पः समयो विचारलब्ध इति भावः । अत्रेति—श्रीकृष्णाविर्भावसमये प्राणगमनप्रतिबन्धकरूपविशेषणेन विशेष्यस्यावधिवासरस्य वैरत्वारोप इति समासोक्तिरूप इत्यर्थः ।

कश्चिद्देवो मुक्तिं पृच्छति त्वं केत्यादि । यथाक्रमं प्रश्नोत्तराणि । मुक्तेः सकाशाद्भक्तिः सुरसेति प्रतीयमानस्यारोपः प्राधान्येन कथनम् । उपेत्य निकटे गत्वा ।

—परं नात्र सर्वत्र व्यङ्ग्यगर्भत्वमनुमापकं लिङ्गम् । 'व्याज' इत्यतोऽप्रस्तुतात् प्रस्तुतस्येत् गम्यत' इति दर्पणकर्त्तां लक्षणाच नेदमूहनीयं यत् प्रतीयमानरूपैणैवास्याविर्भावः—वाच्यरूपेणाप्यस्य

या अम्भोधरवृष्यमाणपयसा शस्येश्च पूर्णा किम-
प्युक्तं सद्भिरिह प्ररोहति कदाऽप्येकं न बीजं यतः ॥ ६८

भक्तोयोर्डयोरन्योन्यकथनम्—अवाचेतनस्योपदेशस्य प्रस्तुते निर्विषहरिभक्तपुरुषनाऽरोपेनैव प्रतिवचनोपपत्तिः । ]

बहिश्चेदस्यान्तर्भवति यदि चान्तर्बहिरहो
जनः स्वस्मिन् देहे भवति घृणया यूत्कृतिपरः ।
अभद्रं भद्रं वा विरचितिविशेषोपधि नहि
स्वतो, भद्रं किञ्चिद्भवति भगवद्भागवशतः (६९) ॥

अत्र प्रतीयमानार्थस्यानारोपः, वाच्यस्यैव प्राधान्यात् ।

निगीर्णस्योपमानेनोपमेयस्य निरूपणम् ।
यत् स्यादतिशयोक्तिः (१५) सा (ञ)—२५७ का

तथा—
चिती शोणेऽम्भोजे तदुपरि नवौ हेमकदली-
तरू नीचीनाग्राविह कनकसिंहासनमिदम् ।
ततः शून्यं तस्योपरि सुमिलितं कोकमिथुनं
ततश्चन्द्रस्तस्मात्तम इति विधेः का नु घटना ॥ ७०

बहिरिति—रचनाविशेष एवोपधिर्यंत्तेत्येवम्भूतम् । जगत् स्वतोऽभद्रं भद्रं वा नहि, किन्तूपाधिकृतं भद्राभद्रात्मकमुभयरूपं भवति, उपाधेरुभयात्मकत्वात् । सर्वथा किञ्चिद्भद्रन्तु भगवदंशबलादेव भवति, भगवद्भजनादेः सर्वथा भद्ररूपत्वात् । अत्र प्रतीयमानस्यार्थस्य देहे हेयत्वस्यानारोपोऽप्राधान्येन कथनं, वाच्यार्थस्यैव चमत्कारित्वेन प्राधान्यात् ।

निगीर्णं ग्रस्तं, तथाचोपमानस्यैव प्रयोगो न तूपमानेन ग्रस्तस्योपमेयस्य, यथोपमानस्य रक्तकमलस्यैव प्रयोगो न तूपमेयस्य चरणस्येत्यर्थः । चितौ चरणद्वयस्थानीये रक्तकमले । तदुपरि ऊरुद्वयस्थानीयौ नवीनस्वर्णकदलीवृक्षौ । कथम्भूतौ ? नीचीनाग्रौ ऊरुदेशस्योपरि स्थूलत्वमधः कार्श्यमित्यभिप्रायात् । इह तदुपरि नितम्बस्थानीयं कनकसिंहासनम् । ततस्तस्योपरि मध्यदेशस्थानीयं शून्यमिति मध्यदेशस्य सूक्ष्मत्वाभिप्रायेणोक्तम् । तदुपरि स्तनद्वयस्थानीयं चक्रवाकमिथुनं, मुखस्थानीयश्चन्द्रः, तस्मात् केशस्थानीयं तम इति विधेः काऽप्यनिर्वचनीया घटना ।

स्थितिः सम्भवति । कुत्रचित् प्रतीयमानच्छाया भूषाविच्छित्तिर्यथा, 'कुतः समागच्छसी' त्याद्युपरिदर्शिते सन्दर्भे ।

(6) (8) (9) (१०) (ग) पुस्तके (ज) पुस्तकस्थे क्रोड़पत्रे च 'यद्दा' इत्यादि तथास्थितानां बन्धनीबद्धानां वाक्यानां मूले निर्देशः, नतु इतरत्र ।

——तदेवान्यतथा यदि ।

**निरूप्यते सा द्वितीया—२५८ का—**

तदेव प्रकृतं वस्तूपमानं वाऽन्यदेवेदमिति यदि निरूप्यते तदा साऽतिशयोक्ति-द्वितीया भवति । यथा--

अन्ये श्रुती ते रसना च साऽन्या चेतः सतां तत् पुनरन्यदेव ।
श्रीकृष्णशीतद्युतिनामलीलारूपामृतं यानि सदा धयन्ति ॥ ७१

अन्यैवेयं कनकलतिका चन्द्रमाश्चायमन्य-
स्तस्मिन्नेतन्मदमदिरयोर्युग्मकञ्चान्यदेव ।
अन्यैवेयन्तदुपरि मनोजन्मनश्चापवल्ली
राधानाम स्फुरति मनसः कैयमुन्माथवीथी (11) ॥७२

———यद्यर्थेन तु कल्पना ।

**यद्यसम्भाविनोऽर्थस्य सा तृतीया—२५९ का—**

यथा— पूर्णो यदि स्यादनिशं सुधांशुः स चेत् कलङ्केन भवेद्विहीनः ।
चकोरपेयोऽपि न चेदयं स्यात्त्वदास्यदास्याय तदैव राधे ! ॥ ७३

—विपर्य्यये ।

**कार्य्यकारणयोरन्या—२६० का—**

अन्या चतुर्थी । यथा—

अविद्ध एव प्रविवेश यत्कृता सरोरुहाच्या हृदि कृष्ण ! वेदना ।
परस्ततोऽन्येन विलोचनाञ्चलीशरेण विद्धं हृदयं त्वयाऽस्याः ॥ ७४

राधानाम विशिष्यं काऽप्यनिर्वचनीया मनस उन्मादश्रेणी—तथाच राधानामश्रवण-मात्रेण श्रीकृष्णस्य मनस उन्मादपरम्परा जायत इत्यर्थः। आदौ कार्य्योत्पत्तिः पश्चात् कारणोत्पत्तिः अयमेव कार्य्यकारणयोर्विपर्य्ययः, तत्र चतुर्थ्यतिशयोक्तिर्ज्ञेया। यथा-'ऽविद्ध एवे'त्यादौ। अत्र कटाक्षशरजन्यहृदयवेधरूपकारणोत्पत्तेः पूर्वमेव तादृशवेधजन्य-

---

(ज) अतिशयोक्तिरिति—अतिशयेन लौकिकसीमातिक्रमेणोक्तिरित्यन्वर्थता संज्ञाया ग्राह्या। अस्याः काव्यशोभाऽधायकत्वं सर्वार्थालङ्कारान्तर्भावित्वञ्च प्राचीनैः 'सैषा सर्वत्र वक्रोक्तिरनयाऽर्थो विभाव्यते। यत्नोऽस्यां कविना कार्य्यः कोऽलङ्कारोऽनया विना॥'' "अलङ्कारा-

---

(11) 'कैयमुन्मादवीथी'ति पाठः (ख) (ग) पुस्तकयोः। स च टीकाकृदनुमोदितः।

—प्रतिवस्तूपमा (१६) तदा ।

**सामान्यस्य स्थितिर्वाक्ये उपमानोपमेययोः (ट) ॥ २६२ का—**

उपमानवाक्ये उपमेयवाक्ये च सामान्यस्य साधारणधर्मस्य यदा स्थितिरित्यर्थः । यथा -- अहमिव कथमित्र सहते राधा निविड़ानुरागभरबाधाम् ।

न हि नवकुसुमवाटी दहनज्वालेन भवति नो दग्धा ॥ ७५

बिभर्त्ति सर्वानमरान् सुमेरुस्तञ्चापरञ्चास्ति (ट) धरा वहन्ती ।

धराञ्च धत्ते भुजगाधिनाथो धुरन्धरैरेव धुरो ध्रियन्ते ॥ ७६

एषा माला प्रतिवस्तूपमा ।

**सर्वेषामेव धर्म्माणां दृष्टान्तः(१७) प्रतिविम्बवत्(ट)॥ २६२ का—**

सर्वेषामेव साधारणधर्म्माणां प्रतिविम्बवद्भासनं यत् तद्दृष्टान्तनामाऽलङ्कारः । वेदनारूपकार्य्योत्पत्तिरित्यर्थः । मथुरास्थः श्रीकृष्णो वनादागतमुद्धवं प्रत्याह—अहमिति । नवीनकुङ्कुमस्य केशरस्यातिसुकुमारत्वात् तस्य वाटी दहनज्वालेन दग्धा भवत्येव । अत्रोपमेयवाक्ये बाधेति उपमानवाक्ये दहनज्वालेत्यत्र एव साधारणधर्मः शब्दभेदेनोक्तः ।

---

न्तराणामप्येकमाहुः परायणम् । वागीशमद्वितासुक्तिमिमामतिशयाङ्कयाम्" ॥ इत्याद्यैरनुवादैः स्वीकृतमेव । एवमपि नवीना प्रतीच्याः—Hyperbole is to poetry what the harmless exaggeration, natural to children, is to their story-telling—which indeed is a form of poetry । परमस्या मर्य्यादालङ्घनेन कविप्रतिभोत्थापितस्यापि हानिः स्यात् । गौड़ीयानां रचनासु प्रागस्या बहुलमुपलम्भो दृष्टस्तथा च श्रीहर्षकृतनैषधचरितादावस्य प्रचुरलक्ष्यतेत्यादिकं टिप्पनीकृताऽन्यत्र दर्शितं मतमुल्लिख्यते । The atmosphere is hyperbolical. *Vide The Gaudi Riti in Theory and Practice—Indian Historical Quarterly, V. II.* 1928) उत्प्रेक्षैवातिशयोक्तिरिति केचिदतिप्राचीनाः—परमुभयोर्भेदो । वामनादिभिर्यथायथं निरूपितः । नव्यानां परिभाषाऽनुसारेणाध्यवसाये सति साध्यत्वेन यत्र व्यापारप्राधान्यप्रकटनं तत्रोत्प्रेक्षा, यत्र तु सिद्धत्वेनाध्यवसितप्राधान्यं तत्रातिशयोक्तिरिति निष्कर्षः । मम्मटाद्यनुसारेणात्र मूले चत्वारो भेदा लक्षिताः । यद्यर्थेन यत्र कल्पना तत्र सर्वस्वकृदादिस्फुटीकृतस्यासम्बन्धे सम्बन्धरूपस्य भेदस्योत्थापनम् । पञ्चमो भेदस्तैः सम्बन्धेऽप्यसम्बन्धरूपोऽपि स्वीकृतः, यथा 'अस्याः सर्गविधा'वित्यादि विक्रमोर्वशीये पद्ये । अत्र विषये रुय्यकमाणिक्यचन्द्रप्रभृतिभिः सर्वैरेव प्राचीनटीकाकृद्भिरस्याधिकस्य भेदस्यान्तर्भावोऽनुमोदितः ।

(ट) प्रतिवस्तूपमेति—साधारणधर्मस्य स्थितिरिति—अत्र वाक्यभेदेनोपादानमात्र-

**स च साधर्म्यवैधर्म्यभेदेन द्विविधो मतः। २६३ का—**

क्रमेणोदाहरणे— हरिसन्दर्शनसमये द्रवति मनो मे कठोरमपि सुमुखि!
उदये सति चन्द्रमसश्चन्द्रमणिः स्यन्दते सरसः॥ ७७

प्रेयसि नयनविदूरे सति मम समुपैति नयनयोरान्ध्यम्।
उदयेन हि तुहिनांशोर्मीलति नीलोत्पलश्रेणी॥ ७८

**कारकैक्ये क्रिया बह्वी व्यत्ययेऽपि च दीपकम्(१८)(ठ)॥२६४का—**

व्यत्यये क्रियैक्ये बहूनि कारकानीत्यर्थः। यथा 'न पश्यति न भाषते न च शृणोति न स्पन्दत' इत्यादौ (दम किरणे ४२ श्लोके पूर्वार्द्धम्)।

कारकबाहुल्ये क्रियैक्यं यथा—

सुहृद्वियोगश्च महाज्वरश्च विषञ्च पाकोन्मुखहृद्व्रणश्च।
महद्विनिन्दा च खलोदितञ्च षड़ेव मर्माण्यवसादयन्ति॥ ७९

**माला स्यात् पूर्वपूर्वञ्चेदुत्तरोत्तरमृच्छति॥ २६५ का—**

माला मालादीपकम्। यथा—

हरिसन्दर्शनेति—अत्र मनसः कठोरत्वं कृष्णसान्निध्ये द्रवत्वञ्चेति धर्मद्वयं दार्ष्टान्ते, दृष्टान्तेऽपि शिलायाः कठोरत्वं चन्द्रसन्निधौ च द्रवत्वञ्चेति धर्मद्वयम्,अतोऽत्र धर्मद्वयस्योभयत्र प्रतिबिम्बवद्भासनमेकसजातीयभासनमित्यर्थः। प्रेयसीति—न हि मीलति मुद्रिता भवती-त्यर्थः। तथा च यथा चन्द्रोदये सति नीलोत्पलानामास्याभावस्तथा प्रेयसि श्रीकृष्णे नयनयोर्विदूरे सति मम नयनयोरास्यमिति वैधर्म्यम्, एवं सति श्रीकृष्णस्योदये ममाप्यास्य-भावः, अतः साधारणधर्मस्यैकजातीयभासनम्। एवं सति।

---

प्यकम्। यदाहुरन्ये 'एकोऽपि धर्मः सामान्यो यत्र निर्दिश्यते पृथगि'ति। कालिदासादि-कृतिभ्योऽस्या विच्छित्तिविशेषोऽनुमीयते, अत एतस्या उपमातः पृथग्गणनं सर्वथा सङ्गतमेव। यथैषा प्राचीनैर्वाक्यभेदेऽप्युपमास्थितिमङ्गीकुर्वद्भिरुपमाभेदेन गृहीता तथाऽस्माभिरेतत्-किरणप्रारम्भ एव दर्शितम्। वस्तुतः प्रतिवस्तुप्रथया प्रथनमित्यन्वर्थनाम्नैषा। 'तस्यापर'मिति पर्वतसामान्यसंग्रहः। दृष्टान्तस्त्वेतस्मात् पृथगेव साधारणधर्मादीनां दृष्टोऽन्तः निश्चयो यत्रेति मम्मटग्रन्थवृत्तिप्रामाण्येनात्र सदृशधर्मस्य प्रतिबिम्बनात्। परं नैतद्भेदकथनमाद्रियते कैश्चित्—रसगङ्गाधरकृतस्तदनुवादिन एव। अत्रोभयत्र द्वावेव वाक्यार्थौ, उपमानोप-मेयव्यवस्था च प्रायः प्राकरणिकाप्राकरणिकत्वाभ्यामेव ज्ञेया। एषु दृष्टान्तालङ्कारमहिम्नैव बिम्बप्रतिबिम्बभावेन प्रतीयमानमुपमानोपमेयभावमस्फुटं तत्र दृष्टान्तोदाहरणनिदर्शनादि-

आलोके सति सम्मदामृतनिधौ स्वान्तन्तदेवाविशत्,
स्वान्ते मन्मथ एष, मन्मथ इदं क्रूरत्वमुच्चैस्तराम्।
क्रूरत्वेऽपि च तस्य धैर्यहरता, तस्यां समस्तेन्द्रिय-
ग्लानिः, का सखि! सुखिताऽभिलषति श्रीकृष्णमालोकितुम्॥ ८०

प्रकृतानाञ्चैकदोक्तिरुच्यते तुल्ययोगिता (१९) (ठ)। २६६ का—

चकारादप्रकृतानाञ्च, प्राकरणिकानामप्राकरणिकानाञ्चेत्यर्थः।

यथा—दृष्टिः शून्या, गमनमलसं, मानसं निर्व्यवस्थं,
देहः क्षामस्तव, सखि! मुखं केतकीगर्भपाण्डु।
श्वासो दीर्घः परिजनगणे मानमायामि राधे!
सर्वो धर्मः कथमयमभूदेकदैवान्यथैव॥ ८१

कुवलयहरिणाङ्गनाट्टगन्तस्मरशरमीनचकोरखञ्जरीटाः।
नयनविलसितेन राधिकाया युगपदपास्तसमस्तसौभगाः स्युः॥ ८२

चकारेणापि साऽभिप्रेया (ठ)—२६७ का—

सा तुल्ययोगिता। यथा—

दृष्टं श्रीकृष्णवदनं हारितञ्च निजं मनः।
लब्धः कोऽपि परानन्दो निपीतञ्च महाविषम्॥ ८३

—व्यतिरेको (२०) विलक्षणः।

उपमानात् (ड)—२६८ का—

विलक्षण इति गुणेन दोषेण च। क्रमेणोदाहरणानि-"आशामात्रे विलसदुदय" इत्यादि (३य किरणे चतुर्थश्लोकः)।

दृष्टिरिति—मानसं मनःसम्बन्धिधैर्यादिकं निर्व्यवस्थं लौकिकव्यवस्थारहितम्,—मौनमायामि दीर्घम्, अत्र सर्वं एवार्थाः प्रकृताः। कुवलयेति—खञ्जरीटः खञ्जनः। अत्र सर्वे एवार्था अप्रकृताः।

---

प्रयुक्ताः कविना न प्रयोक्तव्याः पौनरुक्त्यापत्तेरिति विद्याधरः, यमनुसृत्य सर्वपथीनायां 'त्वत्प्रियोगः परेणापीत्या'दि माघपद्यव्याख्यानावसर उपमेवाऽत्रालङ्कार इत्युदाहृतं मल्लिनाथसूरिभिः। केचिदर्वाचीनाः पुनरेत उदाहरणाख्यालङ्कारान्तरस्य स्थलानीति मन्यन्ते।

(ठ) दीपकमिति—'जातिक्रियागुणद्रव्यवाचिनैकत्र वर्त्तिना। सर्ववाक्योपकारश्चेत्-

यथा वा—राधे ! सुधांशुरेवायं सत्यमेव तवाननम्।

किन्त्वसौ मलिनोऽङ्केन सुनिर्मलमिदं सदा ॥ ८४

दुरापलोके च नवानुरागो हालाहलस्यापि समं विशाखे !

अन्त्यन्तु मन्त्रौषधिरत्नसाध्यं हा हन्त केनापि कदापि नाद्यः ॥ ८५

—द्वयोरुत्कर्षापकर्षार्थशंसिनोः। (ङ)

**हेत्वोरुक्तौ त्रयाणां वाऽनुक्तौ शब्दार्थशक्तितः।**

**आक्षिप्ते सति च श्लेषे स स्याद्बहुविधः पुनः॥ २६६ का—**

द्वयोरुपमेयोपमानयोरुपमेयस्योत्कर्ष उपमानस्यापकर्षः, तयोरुक्तौ—द्वयोरुपमेयोपमानयोरुत्कर्षापकर्षयोरनुक्तिः, उपमेयस्योत्कर्षस्य वाऽनुक्तिः, उपमानस्यापकर्षस्य वाऽनुक्तिः, इति त्रितयं मिलित्वा चत्वारो भेदाः। एते च शब्दप्रतिपादिता अर्थप्रतिपादिताश्चेत्यष्टौ। आक्षिप्तेऽप्यौपम्ये चत्वारः—एवं द्वादश। पुनः श्लेषे द्वादशेति चतुर्विंशतिभेदाः। क्रमेणोदाहरणानि—

आह्लादकस्य सुरभेर्मुखस्य तव राधिके !

चन्द्रस्य कमलस्येव नाङ्को न जलजन्मता ॥ ८६

अत्रोपमेयस्योत्कर्ष उपमानस्यापकर्षः, द्वयोरेवोक्तिः।

तवाननस्योपमानं न चन्द्रो न च पङ्कजम्।

अक्ष्णोरप्युपमानन्ते न राधे ! खञ्जनादयः ॥ ८७

अत्र द्वयोर्द्वयोरनुक्तिः।

मुखस्य तव पद्माक्षि ! कलङ्की न समः शशी।

वचसो न च तुल्यं ते माक्षिकत्वेन माक्षिकम् ॥ ८८

व्यतिरेक इति—वैलक्षण्यमाधिक्यम्। औपम्य उपमानधर्मे आक्षिप्ते उपमानबोधकेवादिशब्दमन्तरेणाक्षेपाल्लभ्ये सतीत्यर्थः—तस्य पुनश्चत्वारो भेदाः। मुखस्येति—माक्षिकं मधु माक्षिकत्वेन मक्षिकाक्षतत्वेन।

त्रयाणामिति—कुत्रचिदतिप्रत्ययस्थले उत्कर्षापकर्षयोर्द्वयोरनुक्तिः, एवं कुत्रचिदुपमानस्यापकर्षस्यानुक्तिः, तथा कुत्रचिदुपमेयस्योत्कर्षस्यानुक्तिरिति त्रयाणामित्यर्थः। पूर्वोक्त 'आह्लादक'मिति पद्ये द्वयोरेवोक्तिः—इत्यनेन चत्वारो भेदा ज्ञेयाः।

---

माहुर्दीपकमिति दण्डिलक्षणमस्य प्राचीनालङ्कारिकनये बहुलप्रसारत्वं दीपादिव पदार्थजातस्य प्रकाशकत्वञ्च सारयति। परमुद्भटाद्या नैतत् सर्वमतिविद्ध तत्तरं विच्छित्त्याधायकं

अत्रोपमेयस्य नोत्कर्षोक्तिः ।

आह्लादकस्य सुरभेर्मुखस्य तव राधिके ! ।

नोपमानं भवेदिन्दुर्न च पङ्केरुहं प्रिये ! ॥ ८९

अत्रोपमानस्यापकर्षानुक्तिः । एते चत्वारो भेदाः ।

आह्लादकं सौरभवद्वदनं तव राधिके !

सकलङ्केन्दुवन्नैव नैव स्थलजलाब्जवत् ॥ ९०

अत्र तुल्यार्थेन वतिनाऽर्थप्रतिपाद्यमौपम्यम् । एतच्च पुनस्त्रयाणामनुक्तौ पूर्ववदनेन सह चत्वारः—इत्यष्टौ ।

शनैश्चलन्ती चरणद्वयेन सा दासीकृताम्भोरुहकाननश्रिया ।

मुखेन राधा सहजामलत्विषा जिगाय चन्द्रं समलं कलङ्कतः ॥ ९१

अत्रेवादिशब्दमन्तरेणाक्षिप्तोपमा । इयमपि पूर्ववदुत्कर्षाद्युक्त्यनुक्त्योश्चतुर्धा । तेन द्वादश भेदाः । एते च पुनः श्लेषगतत्वेन द्वेधा—इति चतुर्विंशतिः । कियन्त उदाह्रियन्ते—कामकार्मुकमिवेदं राधे ! तव युगं भ्रुवोः ।

गुणस्यायोगसंयोगो यत्र नैवान्यचापवत् ॥ ९२

अत्रेवार्थे वतिः । 'गुण'शब्दः श्लिष्टः ।

सदादानः स्निग्धकरः श्रीकृष्णः परवारणः ।

नान्यद्वारणवद्बाले ! पद्मिनीगणभञ्जनः ॥ ९३

कामकार्मुकेति—नान्यचापवत् अन्यचापे गुणस्य प्रतिच्छाया (१२) कदाचिद्योगः । भ्रूधनुषि तौ नस्तः किन्तु सदा गुणस्य संयोग एव । श्लेषेण माधुर्यादेः ।

हे बाले ! हे अङ्गे ! अयं श्रीकृष्णः परवारणः परान् शत्रून् वारयतीति पक्षे मत्तहस्ती । कथम्भूतः ? सदा दानं यस्य तथाभूतः, हस्तिपक्षे दानं मदजलं, करः शुण्डः । किन्तु श्रीकृष्णोऽन्यवारणवन्न भवति, यतः स पद्मिनीगणभञ्जनः, श्रीकृष्णरूपवारणस्तु पद्मिनीगणरञ्जनः—श्लेषेण पद्मिनी सल्लक्षणाक्रान्ता स्त्री !

---

मन्यन्ते यानुसृत्यार्वाचीनानां मम्मटादीनां निबन्धेष्वस्यालङ्कारस्य महिमापकर्षः संघटितः । दण्डिना तु यः कारकदीपकाख्यो भेदस्तं दीपक एवान्तर्भाव्याधुनिकनिरुक्ततुल्ययोगिताऽपि तदङ्गत्वेनैव प्रतिपादिता तत्प्रथामनुसृत्यार्वाचीना अपि कारकदीपकं नालङ्कारान्तरं मन्यन्ते, परं न स पक्षः सम्यङ् मालादीपकवदस्य पृथगलङ्कारतैव योग्या, न दीपकेऽन्तर्भक्तिरूपमार्गभेतायां नवीनैर्दीपकस्य जीवातुतया गणितायां दृढाभावात् । तुल्ययोगितेति

---

(१२) 'प्रत्यच्छाया' इति त्रिकलाकारपाठो मुद्रितपुस्तके ।

अत्र तुल्यार्थे वतिः—'दान'कर'वारणा'दिशब्दा श्लिष्टाः।

हरवन्न तनुशिवोऽयं रविवन्न कुमुद्वतीग्लपनः।

शशिवन्नाप्यनवस्थितकलाकलापः स एष सखि कृष्णः॥ ९४

अत्रापि तुल्यार्थे वतिः—'तनुशिवा'दयः शब्दाः श्लिष्टाः।

राधाऽऽश्लेषादिषु सदा निरतः सततोदयः।

पूर्णं कलाभिरनिशं जिग्ये कृष्ण! सुधाकरम्॥ ९५

अत्राक्षिप्तोपमा। 'राधा'दिशब्दाः श्लिष्टाः-इत्यादयोऽनुसन्धेयाः।

**आक्षेपो(२१) वक्तुमिष्टस्य यो विशेषविवक्षया।**

**निषेधो वक्ष्यमाणत्वेनोक्तत्वेन च स द्विधा (ढ)॥२७०का—**

आक्षेपनामाऽलङ्कारः। क्रमेणोदाहरणे—

दुर्लील! लीलया त्वं हरसि कटाक्षेण जीवितं सुदृशाम्।

अविमृश्यकारिणीनामुचितमिदं किं भणिष्यामः॥ ९६

हिमकरकिरणासारो घनसारो गन्धसारोऽपि।

तव विरहे निर्दयतां दहति किमिभिस्त्वयि प्रोक्तैः॥ ९७

अयं श्रीकृष्णो महादेववन्न तनुशिवः तनौ देहे शिवा दुर्गा यस्य तथाभूतः, अर्द्धनारीश्वरो यथा महादेवस्तथाभूतो नेत्यर्थः। श्लेषेण तनु क्षुद्रं शिवं कल्याणं यस्य तथाभूतो न, अपि तु बृहत्कल्याणविशिष्ट इत्यर्थः। तथा सूर्यवन्न कुमुद्वतीग्लपनः, अपि तु कुमुद्वतीनां हर्षकरः, श्लेषेण कौ पृथिव्यां मुत् प्रीतिर्विद्यते आसां कुमुद्वतीनां हर्षवतीनां स्त्रीणामानन्दकरः। शशी यथा न अवस्थित एकरूपः कलाकलापो यस्य तथाभूतः, तस्य तु कला कदाचिद्ध्रसति कदाचिद्वर्द्धते, अत एव न सदैकरूपः, कृष्णस्तु तथाभूतो न, अपि तु सदैकरूप एव। श्लेषेण कला, वैदग्ध्यादयः।

अयं श्रीकृष्णश्चन्द्रं जिग्ये। जये कारणमाह—राधिकाया आश्लेषाधरपानादिकर्मसु सदा नितरां रतः, चन्द्रस्तु कदाचिद्राधानक्षत्रे कदाचिदश्लेषानक्षत्रे रतः, न तु सदा। अयं सततोदयः, चन्द्रस्य तु कदाचिदुदयः कदाचिदनुदयश्च। अयं कलाभिर्वैदग्ध्यादिभिरनिशं सर्वदा पूर्णः, चन्द्रस्तु पूर्णिमायामेव।

---

तुल्ययोगिताऽन्वयो यत्रेति निर्वचनम्। तुल्ययोगितायां दीपके चोभयत्रोपमा गुणीभूततया चकास्तीति न सा चमत्कृतिमतीत्यालङ्कारिकचक्रसिद्धान्तः। प्राचीनानां स्तुति[illegible]निन्दार्थं यत् समीकृत्य वर्णनं तस्य तुल्ययोगिता, इतरस्य तु तुल्ययोगोपमेत्युपमाप्रपञ्चतया स्वीकृतिः। कस्यचित् प्रकृतत्वे दीपकं अन्यथा तुल्ययोगितेति राद्धान्तः। इष्टमिति परमतेऽत्र सहोक्तिर्व्यङ्ग्या।

**हेतुरूपक्रियाऽभावे फलं यत् स्याद्विभावना (२२)॥२७१का—**

विभावनानामाऽलङ्कारः । फलं फलप्राकट्यम् । अभावे निषेधे (ढ) ।

यथा—प्रियालोके राधा कुसुमचयने कौतुकवती
धुनीते सत्रासं करतलमदष्टाऽपि मधुपैः ।
अखिन्नाऽपि श्रान्त्याऽश्रयति भुजयाऽलीभुजशिरः
परावृत्ता पश्यत्यधृतवसनाऽपि व्रततिभिः (ढ) ॥ ९८

**विशेषोक्तिः(२३) कारणेषु सत्सु कार्य्यस्य नोदयः ॥२७२का—**

विशेषोक्तिनामालङ्कारः ।—यथा—
उदेतीन्दुः पूर्णो वहति पवनश्चन्दनवनात्
कुहूकण्ठः कण्ठात् कलमविकलं निर्गमयति ।

वक्तुमिष्टस्य यथाऽत्रोदाहरणे सख्याः क्षणे प्रीत्यतिशयस्य 'हे सखि ! निर्दये श्रीकृष्णे त्वया प्रीतिः कथं कृते'ति यो निषेधः स एवाक्षेपः । किं भणिष्यामि इति वक्ष्यमाणत्वेनाक्षेप उक्तः । हिमकरश्चन्द्रस्तस्य किरणानामासारो धारासम्पातः, घनसारश्चन्दनः, गन्धसारः सुगन्धिपदार्थमात्रम् । तां मम सखीम् । त्वयि निर्दयत्वेन प्रसिद्धे एभिस्तस्या दाहकैः पूर्वं प्रोक्तैः किं प्रयोजनमित्यर्थः, अतोक्तत्वेनाक्षेप उक्तः ।

हेत्विति—तथा च कारणाभावे कार्योत्पत्तिविभावनेत्यर्थः । वृन्दावनमध्ये स्थिता श्रीराधाऽकस्मात्तत्र श्रीकृष्णदर्शने सति पुष्पावचयने कौतुकवती प्रवृत्तेत्यर्थः । भ्रमरैरदष्टाऽपि सत्रासं यथा स्यात्तथा भ्रमरविद्रावणार्थं करतलं कम्पयति। अत्र भ्रमरदंशनरूपकारणं विनैव कार्यस्य करतलकम्पनस्योत्पत्तिः । श्रमजन्यखेदरूपकारणं विनैव भ्रमरदूरीकरणार्थं भुजया सखीस्कन्धं श्रयति । व्रततिभिर्लताकण्टकैः । परावृत्ता सती पृष्ठदेशं पश्यति । प्रथमतोऽकस्मात् कान्तमेलने सति नायिकायाः स्वभाव एवायमिति भावः ।

---

(ड) विलक्षण इति गुणेन दोषेण चेति वृत्तिः । साम्योद्देशपुरःसरं यत्र वैधर्म्योद्घोषण एव तात्पर्यं तत्रैवायमलङ्कारः । एतेन 'उपमेयस्याधिक्य एव व्यतिरेक' इति मम्मटादिमतं प्रत्युक्तम् । मम्मटमतमनुसरन्तो रसगङ्गाधरकृतश्चन्द्रिकायाम् 'अत्यन्तासारतया तु नानुवादमर्हतीत्युपरम्यत' इति सोत्प्रासकटूक्तिपूर्वं विध्वस्ताः । एवमप्यापाततो गुरुमर्मप्रकाशिन्यां नागोजीभट्टाः । यत् 'उपमानादुपमेयस्यापकर्ष उपमैवे'ति केचिदवोचंस्तत्रेदं वक्तव्यं नात्र प्रकृत उपमायामिव साम्यवाचने तात्पर्य्यम्, अपि तु वैधर्म्यप्रकटन एव । द्वयोरुत्कर्षापकर्षेति—अत्र कारिकायां यतिभङ्गः स्फुटः ।

(ढ) आक्षेप इति सामान्यतो योगरूढं नाम, अप्रस्तुतप्रशंसादावर्थालङ्कारान्तरेऽप्याक्षिप्तमर्थमेव प्रमाणीकृत्य विच्छित्तिव्यवस्थितेर्घटकत्वात् । निषेध इति निषेधाभास इति

प्रियालीनां मूर्द्धः शगथरचना दन्तव्रणता
पादोपान्ते क्षणस्तदपि तव मानो न विरतः ॥९९

एषाऽनुक्तोक्ताचिन्त्यनिमित्तत्वात्त्रिधा । अनुक्तनिमित्तत्ता तूक्ता । अन्ये दर्श्यंते ।

भक्तानुकम्पार्थमजोऽपि जातो लीलाकृते गर्भजगच्च गर्भे ।
जगद्धितायैव जगत्त्रयस्य पिता यशोदातनयो बभूव ॥१००

अत्राजत्वादेः कारणत्वेऽप्युक्तनिमित्तत्वादजत्वादिकार्य्याभावः ।

क्षणस्य चञ्चलकटाक्षशरेण भिन्नं शूलाकरोषि हृदयन्त्वमनङ्ग ! किन्न ।
भस्मीकृतस्य भवतो वृषभध्वजेन किं भस्मसान्नहि कृतो बत बाहुदर्पः ॥१०१

**यथासंख्यं(२४) यथासंख्यं क्रमिकाणां यदन्वयः(ढ) ॥२७२का—**

क्रमिकाणां वाचकानां यथासंख्यं यदन्वयस्तदा यथासंख्यमित्यलङ्कारः ।

यथा—गोपीश्च गोपतनयांश्च सुरद्विषश्च रूपेण च प्रियतया च भुजौजसा च ।
सम्मोहयंश्च रमयंश्च निसूदयंश्च श्रीगोकुलेन्द्रतनयो व्रजमध्यवात्सीत् ॥१०२

एषा विशेषोक्तिः । अनुक्तेति—पूर्वश्लोके कारणसत्वेऽपि मानविरामरूपकार्य्यस्यानुक्तौ किञ्चिन्निमित्तं नोक्तमित्यतोऽनुक्तनिमित्तोक्ता । लीलाकृते लीलाकरणाय । अजोऽपि जात इत्यजत्वकारणसत्वेऽपि जन्माभावरूपकार्य्यस्याभावः, तथा गर्भे जगद्यस्य तथाभूतोऽपि गर्भे जातः, एवं जगत्त्रयस्य पिता सन्नपि यशोदासुतो बभूव सर्वत्र निमित्तं जगद्धितमिति । शूलाकरोषीति—शूलात् पाके डाच्, शूलाग्रेण विद्धा पचसीति । अत्र देह-

---

यावत् । प्राकरणिकत्वाप्राकरणिकत्वाभ्यामेवास्य प्राचीनैः कैश्चित् प्रतीयमानार्थजीवातुतया स्वीकृतस्य 'भम धम्मिअ' इत्यादिपद्ये संलक्षितात् ध्वनेर्विशेषो ध्वन्यालोकादौ विचारितः । दर्पणकृद्भिर्विध्याभासतया लक्षितस्यास्यैव भेदान्तरस्य चमत्कारो नापलपनीय इति संज्ञाभेदोऽपि ग्राह्य इत्यलम् । विभावनेति—विभाव्यते परिकल्प्यते कारणान्तरं यत्रेति कृत्वा संज्ञासंज्ञिनोरभेदः । विना कारणमुपनिबध्यमानोऽपि कार्य्योदयः किञ्चिदन्यत् कारणमपेक्ष्यैव भवितुं युक्त इति कारणान्तरोद्भावनचेष्टा । वस्तुतस्तु काव्यगतालौकिकत्वविच्छित्तिरेवैतेषामलङ्काराणां प्राणाः । तस्य विविधा भेदास्तद्विचाराश्च कुवलयानन्दे तन्मतध्वंसनपरे रसगङ्गाधरे च द्रष्टव्याः । विभावनाविशेषोक्त्योः सङ्करत्वेनावस्थितिरित्यनेके नवीनालङ्कारिकाः । प्राचां विशेषोक्तिस्त्वितो द्राक् भिन्नैव । परावृत्तेत्यादि—अत्र शाकुन्तले प्रथमाङ्कशेषे आसन्नराजविरहखेदमनुभवन्त्या नायिकायाश्चेष्टादयो मूलत्वेनोत्प्रेक्ष्यतया क्लृप्ता इति काव्यरसरसिकानामगूढमेव । यथासङ्ख्यमिति—वाक्यन्यायमूलस्यास्य विच्छित्तिसत्त्व एवालङ्कारत्वस्वीकारः । विच्छित्तिस्तु बहुशस्तात्त्विक्येव यथा लक्ष्येषु प्राचामश्वघोषादीनां प्रबन्धेषु (बुद्धचरिते ५।२४,।।४२) । एवमपि परिवृत्तिपरिसंख्याऽदिष्वप्यूह्यम् ।

**यस्मिन् विशेषः सामान्यं समर्थ्येत (13) परेण यत्।**
**साधर्म्यादथ वैधर्म्यात् स न्यासोऽर्थान्तरस्य(२५) हि(ग)॥२७४का-**

स अर्थान्तरन्यासनामाऽलङ्कार इत्यर्थः। परेणेति विशेषः सामान्येन सामान्यं विशेषेणेत्यर्थः। साधर्म्याद्विशेषः सामान्येन यथा—

त्वमेवाद्या सृष्टिस्त्वयि भगवतः केलिशयनं
त्वया सर्वो लोकः परिहरति तृष्णापरिभवम्।
त्वयाऽपूतः पूतो भवति तदपि त्वं घनरस!
क्रमान्नीचीभावं व्रजसि, महतामेष महिमा॥१०३

"महतां नैष महिमे"ति वैधर्म्यादपि।

साधर्म्यात् सामान्यं विशेषेण यथा—

सङ्क्षेपतस्त्वां ललिते! भणामो दुःखं हि नान्यत् प्रियविप्रयोगात्।
ते पामरा हन्त सुहृद्वियोगात् प्रागेव येषां न समाप्तमायुः॥१०४

"ते तूत्तमा एव सुहृद्वियोगात् प्रागेव येषामपयातमायु"रिति वैधर्म्येऽपि।

**विरोधः(२६) स विरोधाभः (घ)—२७५ का—**

विरोधाभ इति वस्तुतो न विरोधः, विरोध इव भासत इत्यर्थः।

भस्मीभावरूपकारणसत्त्वेऽपि दाहैकदेशबाहुदर्पभस्मीभावरूपकार्य्यस्याभावः—अत्र निमित्तमज्ञेयम्। हे घनरस! जल! आद्या सृष्टिरिति प्रथमतो गर्भदजलस्य सृष्टत्वात्। केलिशयनमिति भगवतो जलशायित्वेन प्रसिद्धेः। नीचैर्भावं नीचस्वभावं प्राप्नोसि, जलस्य नीचगामित्वप्रसिद्धेः। सामान्यधर्मेण विशेषधर्मरूपार्थान्तरस्यासमाह—महतामिति। सर्वोत्कृष्टत्वेऽपि नीचस्वभावोऽहं निकृष्ट इति स्वभावो महिमा उत्कर्ष एवेत्यर्थः। वैधर्म्यादिति—अस्मिन् पक्षे सर्वगुणविशिष्टस्य नीचस्थलगामित्वरूप एष धर्मो महतां महिमा उत्कर्षो नेत्यर्थः। ते पामरा दुःखिनः, अत्र दुःखयोः साधर्म्यं, 'ते तूत्तमा' इत्यत्र सुखदुःखयोर्वैधर्म्यम्।

(ग)। अर्थान्तरन्यास इति महतीयं संज्ञा। यत्र 'सामान्यं सामान्येन यत् समर्थ्यते स उभयन्यास' इति काव्यानुशासनकृद्वाग्भटाद्याः, 'यस्मिन्विशेषसामान्यविशेषाः स विकस्वर' इति च चन्द्रालोककृत इत्यधिकालङ्कारान्तरं मन्यन्ते तत्त्वतिरिक्ततरं किमपि, समर्थनस्य विवक्षितत्वेऽर्थान्तरन्यासेनैव गतार्थत्वात्। सर्वस्वकृदनुसारिभिर्विश्वनाथविद्यानाथदाभिस्तु कार्य्यात् कारणस्य कारणात् कार्य्यस्य च समर्थनेऽप्यर्थान्तर-

(13) "समर्थ्येत" इति (क) (ज) पुस्तकयोर्द्विवचनान्तः पाठः।

—जातिर्जात्यादिभिर्गुणैः।

त्रिभिर्द्वाभ्यां क्रिया, द्रव्यं द्रव्येणैवेति ते दश ॥२७५का—

जात्यादिभिश्चतुर्भिर्जातिर्विरुद्ध्यते, गुणो गुणक्रियाद्रव्यैः, क्रिया क्रियाद्रव्याभ्यां, द्रव्यं द्रव्येणेति दश। क्रमेणोदाहरणानि—

हिमकरकिरणासारो घनसारो गन्धसारोऽपि।

त्वयि मनसोऽन्तर्वर्त्तिनि सम्प्रति दावानलस्तावान् ॥१०५—इति जातिर्जात्या।

गुणरत्नरोहणभुवः कृष्ण! तवाग्रे स्मरोऽपि बीभत्सः।

रत्नाकरोऽपि गाधो न रत्नसानुस्तथोन्नतिमान् ॥१०६—अत्र जातिर्गुणेन।

यदङ्गमासाद्य विधूसराश्च गोधूलयो भूषणतामुपेयुः।

विभूषणानां मणयश्च जग्मुर्विधूसरत्वं स उपैति कृष्णः ॥१०७

अत्र जातिः क्रियया।

हे कृष्ण! त्वयि मनसोऽन्तर्वर्त्तिनि स्मरणावस्थतां प्राप्ते सति चन्द्रकिरणादिस्तावान् सर्वोऽपि शीतलः पदार्थः सम्प्रति दावानलो भवति—हिमकरकिरणजातिदावानलजात्योर्विरोधः। स आभासरूप एव, नतु वस्तुतो विरोधः। श्रीकृष्णविरहे तेषामुद्दीपकत्वेन दावानलवत्तासां प्रतीतिर्भवति, नतु वस्तुतो दावानलो भवतीति। रोहणभुव उत्पत्तिस्थानस्य। कन्दर्पत्वजातिर्बीभत्सत्वगुणेन विरुध्यते, नहि कन्दर्पः कदापि बीभत्सो भवतीति विरोधः। गाम्भीर्यगुणेन समुद्रोऽपि त्वदग्रे गाधः अल्प एव, नत्वगाधः, समुद्रजातिरल्पत्वगुणेन विरुध्यते, नहि समुद्रः कदाचिद्गाधो भवतीति विरोधः। एवमग्रेऽपि। रत्नसानुः सुमेरुपर्वतो नोन्नतिमान् नोच्चतरः, अपि तु क्षुद्र एव। यदङ्गेति—भूषणतां भूषणधर्मं चाकचिक्यम्। अत्र धूलित्वजातिर्भूषणस्थरत्ननिष्ठतद्यउत्पद्यमानचाकचिक्यक्रियया विरुध्यते, न हि धूलयः कदापि रत्ननिष्ठनेत्रचमत्कारिचाकचिक्यक्रियाऽश्रया भवन्ति। यथा दीपानां प्रतिक्षणं ज्वलनक्रिया उत्पद्यन्ते

---

न्यासत्वमुररीकृतम्। रसगङ्गाधरकारास्तमिमं भेदं काव्यलिङ्गेऽन्तर्भावयन्ति—तदाक्षेपिका युक्तयस्तत्समाधानपद्धतिश्च दर्पणादेवावलोकनीयाः। विरोध इति—अस्य साधारणप्रख्यत्वेऽप्यसाधारण्यं प्रतीच्यसाहित्यादावप्यतिरोहितं, तदाधायकेषु ग्रन्थेष्वपि केषु समीक्ष्य विनिवेशनम्। यदाहुः—

Antithesis, perhaps the most direct form of contrast, has an appeal more purely intellectual than most figures of speech......Antithesis depends for its effect not only upon contrast, but upon balance—the scales must be evenly weighted.

गत्वा कलावान् गुरुगोष्ठ्यलक्षितः कृष्णोऽपि विप्रोऽजनि भास्कराध्वरे।
यन्मन्त्रपाठो मधुरोऽप्यभूत् कटुस्तस्याः समुद्यत्स्मरसंज्वरस्य॥ १०८

अत्र पूर्वार्द्धे जातिर्द्रव्येण, उत्तरार्द्धे गुणो गुणेन।

शीतलमपि मुरलीरुतमन्तर्मम सन्ततं दहति।
तीक्ष्णोऽपि तव कटाक्षः शीतलयति मानसं कृष्ण!॥१०९—गुणः क्रियया।

कठिनः शिलामयत्वाद्गोवर्द्धन एष भूभृतां नाथः।
कृष्णकरे कुसुममयः कन्दुक इव कोमलो भाति॥११०—अत्र गुणो द्रव्येण

जीवयति च मूर्च्छयति च पीवयति च सूक्ष्मयत्यपि च।
तव मुरलीरवखुरली नो जाने किं विजानाति॥१११—क्रिया क्रियया।

विभ्राजते यत्कटाक्षोऽप्यनङ्गमपि साङ्गयन्।
ईक्षणक्षणदः कृष्णो वीक्षितः क्षणदामुखे॥११२—क्रिया द्रव्येण।

त्वयि नयनवर्त्मवर्त्तिनि सरसयति रतिं य एव रमणीनाम्।
सति मनसोऽन्तर्वर्त्तिनि कृष्ण! स एव स्मरः कुलिशः॥११३

द्रव्यं द्रव्येण। एवं दश भेदाः।

तथोत्कृष्टपद्मरागप्रभृतिमणीनामेव, न तु धूलीनामिति ज्ञेयम्। भास्कराध्वरे सूर्यपूजास्थले गुरुगोपीभिर्जटिलादिभिरलक्षितः श्रीकृष्णो वैश्यजातिरपि विप्रोऽजनि—नहि वैश्यः कदापि ब्राह्मणो भवतीति विरोधः। एवं माधुर्य्यगुणस्य कटुतागुणेन सह विरोधः। शीतलेति—शीतलत्वगुणो दाहक्रियया विरुद्धो भवति। कठिन इति—काठिन्यगुणस्य कोमलद्रव्येण सह विरोधः। जीवयतीति—मुरलीरवस्य खुरली अभ्यासः, पुनःपुनर्वादनमिति यावत्। एकस्मिन् काले जीवनक्रियामूर्च्छनक्रिययोः परस्परं विरोधः—प्राणानां सम्यक् चलनं जीवनं, किञ्चिन्मात्रचलनं मूर्च्छेति भेदो ज्ञेयः। एवं स्थौल्यकार्श्यक्रिययो-

---

तस्यालङ्कारान्तरस्पर्शे चमत्कृतिः सुतरामुपभोग्या यथा 'स्निग्धे यत् परुषाऽसी'त्यादि विषमेण संसृष्टे गीतगोविन्दपद्ये (८।१०)। एवमपि श्लेषाधाने यथा 'पतन्ती स्वर्लोकान्नयसि पतितानुच्चपदवीं जलध्यन्तर्ग्रान्तो भवजलधिभीतिं शमयसि। जड़ात्माऽपि व्यक्तं कलुष जड़तां नाशयसि यदिचित्रं ते स्तत्वं जननि जनमध्ये विजयते॥' इति प्रेमचन्द्रतर्कवागीशचरणानां श्लोके। आदितस्त्वयं जात्यादीनामेकस्यैकजातीयविरोधमालम्ब्य काव्ये प्रादुर्भूत इत्यभ्यूह्यते—तस्य प्रमाणमश्वघोषरचितानि 'भूभृत्पराद्धोऽपि सपक्ष एव' (बुद्धचरिते ६।१०), 'अर्हंरूपा ह्यनर्हस्य महात्मानश्चलात्मनः' (सौन्दरनन्दे ६।२०) 'वपुष्मांश्च न च स्तब्धो दक्षिणो न च नार्जवः' (सौन्दरनन्दे २।४) इत्येवमादीनि पद्यानि।

**स्वभावोक्तिः(२७) स्वभावस्य वर्णनं यत् (त)—२७६ का—**

यथा—'आराज्जानुकरोपसर्पणपर' इत्यादि (५म किरणे १०म श्लोकः)।

यथा वा—जृम्भस्व तात ! मुखमाकलयामि दन्ताः
कत्युद्गता भवत इत्युदिते जनन्या।
स्मित्वा विकाशितमुखस्य हरेर्जयन्ति
द्रोणप्रसूनकलिका इव केऽपि दन्ताः (त) ॥११४

यथा वा—स्वभावसुन्दरः कृष्णो राधा सहजसुन्दरी।
अन्योन्यमनयोः प्रीतिरखिलोत्सवकारिणी (त) ॥११५

**—मुखे स्तुतिः।**

**निन्दा वा हृदये व्याजस्तुतिः(२८) स्यात्तदन्यथा(त) ॥२७७का**

स्तुतेर्निन्दा निन्दायाः स्तुतिरित्यर्थः। क्रमेणोदाहरणे—

न निःस्पृहस्तत्सदृशो विरक्तः स्वकीयकीर्त्तावसि नानुरक्तः !
दिङ्मात्रनिष्पाद्यपरोपकारे न कृष्ण ! कीर्त्तिं यदुरीकरोषि ॥११६

अत्र मुखे स्तुतिरन्तर्निन्दा।

विरोधः। विभ्राजत इति—अनङ्गमङ्गरहितं वस्तु साङ्गमङ्गजन्यक्रियायुक्तं करोतीति विरोधः। वस्तुतस्तु अनङ्गं कन्दर्पं साङ्गं सम्भोगस्य यावन्त्यङ्गानि तद्विशिष्टं करोतीत्यर्थः। क्षणदासुखे सन्ध्यायां वीक्षितो नेत्राणां क्षणद उत्सवदो भवति। त्वयीति—सन्ध्याकाले व्रजागमनसमये यः कन्दर्पो व्रजसुन्दरीणां रतिं रमणं च चुम्बसम्भोगमिति यावत्। स एव सरस्वयि नेत्रद्वारा व्रजसुन्दरीणां मनोऽन्तर्वर्त्तिनि सति तत्सम्प्रीतुकण्ठयाऽप्यनिरभूत्। नहि रसस्वादहेतुः कन्दर्पः कदापि वञ्चो भवतीति विरोधः।

त्वदङ्घ्रीति—चिरन्तनस्यानादिकाल एव प्राप्तस्य स्थूलसूक्ष्मदेहद्वयस्य देहद्वयनाश एव मोचः। तथाच तद्भजनस्य कोऽप्यचिन्त्यः प्रभावो यदयं भजनारम्भकाल एव भक्तस्य संसारं

---

(त) स्वभावोक्तिरिति—आचार्य्यदण्डिनैवास्य साम्राज्यमाविष्कृतचरमिति प्रागेवास्माभिरूदटङ्कि। अत्र 'इह वस्तुस्वभाववर्णनमात्रं नालङ्कार' इत्यादि युक्तिसरणिः सर्वस्वग्रन्थतो ग्राह्या। एवं सति 'स्वभावसुन्दर' इत्यादिमूलस्थपद्ये एतदलङ्कारख्यापने विचिकित्सा नासङ्गता। 'दन्ता' इति प्राचीनपद्ये पुनर्वचनं न सुष्ठु। व्याजस्तुतिरिति—स्तुतेःस्तुत्यन्तरे निन्दाया निन्दाऽन्तरे च गम्ये इयमेवालङ्कृतिरिति कुवलयानन्दकृदादीनामाकूतम्। तत्राद्ये 'सुखं जीवन्ति हरिणा' इत्यादि दण्डिपद्ये ऽप्रस्तुतप्रशंसैवेति बहवो नवीनाः, द्वितीयस्यैव व्याजनिन्दाऽख्योऽतिरिक्तोऽलङ्कारः कैश्चिदर्वाचीनैः स्वीकृतः। परमतिसूक्ष्मभेदमेतन्नाबलङ्कार-

त्वदङ्घ्रिमूलं भजतां मुकुन्द ! लाभोऽस्तु दूरे वपुषो निजस्य ।
चिरन्तनस्यापि भवेद्विनाशः स्वभाव एवैष तव प्रसिद्धः ॥ ११७

अत्र मुखे निन्दाऽन्तः स्तुतिः । उभयथैव व्याजस्तुतिः ।

यत्तु— वक्त्रं वो द्विजराजहिंसि मदिरालोलं दृशोर्युग्मकं
कान्तिः काञ्चनहारिणी विहरणं गुर्वङ्गनासङ्गतम् ।
सङ्गी पञ्चम एव पञ्चविशिखः शुद्धिस्तथाऽपीह वो
दैत्यं यन्न्यवधीद्वृषाकृतिमयं तेनैष दुष्टो हरिः ॥ ११८

इति यद्यपि व्याजस्तुतिः, तथाऽपि शब्दालङ्कार एवासौ, तेनायमुभयत्रैव । इयं विदूषकस्यैवोक्तिः ।

**सहोक्तिः (२९)सा सहार्थेन शब्देनैका क्रिया यदि(त)॥२७८का-**

यथा—श्वासैः सार्द्धं विरहिसुदृशां दैर्घ्यमापू रजन्यः
साकं देहैरहह ! कृशतां वासराः सम्प्रतीयुः ।

नाशयति । कदाचिदरिष्टासुरवधानन्तरं श्रीराधिकायूथगतं श्रीकृष्णमालोक्य श्रीराधिका ललिताप्रभृतिसखीः सम्बोध्याह, भोः सख्यः, मम त्वद्य श्रीकृष्णेनारिष्टवधः कृतः, तस्मादस्य स्पर्शो भवतीभिर्न कर्त्तव्य इति ब्रुवाणां राधां प्रति विदूषकः कृष्णस्य सखा मधुमङ्गल आह—यत्त्विति—भोः राधिके ! यूयं महापातकिन्यः, श्रीकृष्णेन तु जन्ममध्ये एकं पापं कृतम्, तदपि पापाभासमेव, यतोऽयमसुरो मायया वृषाकृतिर्भवतीति । अत्र तासां पञ्च महापातकानीति हृदये प्रशंसासत्त्वेऽपि निन्दामुखेनाह,—वक्त्रं द्विजराजो ब्राह्मणश्रेष्ठस्तस्य हिंसकमिति ब्रह्महत्या, प्रशंसापक्षे द्विजराजश्चन्द्रस्तस्य निन्दाप्रयोजकत्वेन हिंसत्वम् । दृशोर्युग्मकं मदिरया लोलमिति सुरापानं, पक्षे मदिरा खञ्जनस्तद्वदाचञ्चलम् । काञ्चनहारिणीति स्वर्णस्तेयं, पक्षे सुवर्णमिव मनोहारिणी । गुर्वङ्गनासङ्गतमिति गुरुदारगमः, पक्षे गुरूणामङ्गन एव आसङ्गतं कुलवतीत्वाद्बहिर्गमनाभावात् । अतो वृषो वा दैत्यो वेति तत्त्वं न जानीथेति ध्वनिः । पञ्चविशिखः कश्चिन्महादस्युर्युष्माकं सङ्गी एष पञ्चममहापातकरूपः, पक्षे कन्दर्पः । उभयत्रेति—व्याजस्तुतौ शब्दालङ्कारे चेति प्रयोगो ज्ञेय इत्यर्थः ।

---

भेदघटकत्वे बीजत्वेन ग्राह्यम् । पञ्च महापातकानीति—तथाच मनुः, 'ब्रह्महत्या सुरापानं स्तेयं गुर्वङ्गनागमः । महान्ति पातकान्याहुस्तत्संसर्गश्चापि पञ्चमम् ॥ शब्दालङ्कार एवासौ, अनुप्रासमुखेनैव विच्छित्तिविशेषप्रकटनादित्याशयः । सहोक्तिः—अत्र सर्व्वस्वकृतां मते औपम्यघटकतैव विनिगमकं, न तथेति तु साम्प्रदायिकाः । विरहेण विनेवति—" 'न विना

बाष्पाम्भोभिः सह हिमपयःप्रस्रवाः (14) पेतुरुच्चै-
र्हा धिक् प्राणैः सह कमलिनीकाननं म्लानमासीत् ॥ ११९

विनोक्तिः(३०)सा विनैकेनान्यस्य चेत् सदसत्कृतिः(त)॥२७९का-

विनोक्तिनामाऽलङ्कारः। सत्कृतिः शोभनता, असत्कृतिस्तदन्येति द्विधा। क्रमेणोदाहरणे—

विरहेण विनैव शोभते ललिते ! प्रेम निसर्गशोभनम्।
असुभिश्च विनैव शोभते विरहश्चेद्यत सम्भवद्दशः॥ १२०

विना राधां कृष्णो न खलु सुखदः, सा न सुखदा
विना कृष्णं, द्वाभ्यामपि बत विनाऽन्या न सरसाः।
विना रात्रिं नेन्दुस्तमपि न विना साऽपि रुचिभा-
ग्विना ताभ्यां जृम्भां दधति कुमुदिन्योऽपि नतराम् ॥ १२१

समासमाभ्यां नियमः(३१) परिवृत्तिरुदीर्य्यते(त) ॥२८०का—

अर्थयोरर्थानां वा समेनासमेन वा विनिमयः परिवृत्तिः। समेन यथा—

हारादिभिः संतुटिते र्निजाङ्गाद्विभूषयामास पतङ्गपुत्रीम्।
तस्याः सरोजादिभिरात्मनोऽङ्गं राधाऽलिवर्गो जलकेलिकाले ॥ ११२

यथा वा—एका ददुर्नूपुरनादशोभामन्याः प्रयाणक्रममन्थरत्वम्।
आभीरबालाकलहंसबालासमूहयोः किञ्चन सख्यमासीत् ॥ १२३

श्वासैरिति—विरहविश्लिष्टव्रजसुन्दरीणां रजन्यः श्वासैः सार्द्धं दैर्घ्यमापुः, विरहेण तासां रात्रयः श्वासा अपि दीर्घा बभूवुः, सहार्थकसार्द्धशब्देनैका क्रियेति सहोक्त्यलङ्कारः। वासरा इति—कान्तविच्छेदजन्या यादृशी पीड़ा रात्रौ तादृशी दिवसे न भवति, अतस्तासां दिवसाः शीघ्रं यान्ति, तस्मादेव दिवसानामल्पत्वम्। हिमपयःप्रस्रवा रात्रिसम्बन्धिनीहार-प्रवाहाः। कमलिनीनां म्लानत्वं हिमघटाभिरेव ज्ञेयम्।

निसर्गशोभनम्, अतो विरहाद्यपेक्षा नास्ति। कान्तेन सह विरहश्चेत्तदा प्राणैर्विनैव प्रेम शोभते। विरहेऽपि प्राणास्तिष्ठन्ति चेत्तदा प्रेमैव नास्ति, कुतस्तस्य शोभनताविरहः? कथम्भूतः? सम्भवन्ती मरणपर्य्यन्ता दशा यत्र तथाभूतः। जृम्भां प्रफुल्लत्वं न दधति। इयं दृष्टान्तमिश्रिता सहोक्तिः।

विप्रलम्भेन सम्भोगः पुष्टिमश्नुते' इति यद्रसविदां सूचनं न तदत्रापलप्यते। विरहतापस्य तीव्रतापरमेतत्। अत्र प्रसङ्गेऽन्योक्तिरिति काव्यभेदप्रसाधिकाऽधिका काचिदलङ्कृतिरन्यैः

(14) "प्रसवा" इति (क) पुस्तके पाठः।

असमेन यथा—मनोरागं दत्वा चरणदलरागो मृगदृश-
स्त्वयाऽदत्तो वक्षःस्थलमलति यः कौस्तुभ इव ।
रसं दत्त्वा नीता त्वदधरपुटेनेक्षणमसौ
समन्त्वद्दैदग्ध्यन्तदवयववैदग्ध्यमपि च ॥ १२४

**अतीतानागतार्थानां साक्षात्त्वमिव(३२)भाविकम्(थ)॥२८१का—**

भाविकनामाऽलङ्कारः । क्रमेणोदाहरणे—

प्रातः सखीनां पुरतः शुकीभिः कथा तथा वल्लभयोरुदारा ।
व्यधायि, तौ सा च निशा तयोः सा केलिश्च साक्षादभवन् यथाऽसाम् ॥ १२५

इदानीमिव राधाया भूयो यथा गुणवत्यभूत् ।
तथा मन्ये स्मरस्येयं स्वं चापं त्याजयिष्यति ॥ १२६

**पदवाक्यार्थता हेतोः(३३) काव्यलिङ्गं प्रकीर्त्त्यते(थ)॥ २८२का—**

पदार्थता वाक्यार्थता च । पदार्थता च द्विधा—एकपदार्थताऽनेकपदार्थता चेति । क्रमेणोदाहरणानि—

संसारालर्कदंष्ट्रातः पापाशीविषदंशतः ।
कृष्णनाम्नि महामन्त्रे सति मा भैष्ट साधवः ॥ १२७

अपारकरुणाम्बुधौ स्मरणमात्रसानुग्रहे
विधिप्रभृतिपामरावधिसमानसम्भावने ।
तवाहमिति जल्पतामखिलकामकल्पद्रुमे
हरौ निहितमानसास्त्यजत देहबन्धं जनाः ॥ १२८

हे कृष्ण ! त्वया स्वीयमनोऽनुरागं राधायै दत्त्वा मृगदृक्चरणसम्बन्ध्यङ्गुलिदलानां यावकराग आदत्तो गृह्यते । अलति भूषयति । एवं त्वदधरपुटेन स्वीयताम्बूलरसं तस्या ईक्षणाय दत्त्वा ईक्षणस्य कज्जलरूपमसौ स्वयं गृह्यते, अतस्त्वद्वैदग्ध्यं तवाधररूपावयव-वैदग्ध्यञ्चानयोः साम्यमेव ज्ञेयम् ।

अनागतार्थानां साक्षात्त्वमाह—इदानीं यौवनारम्भ एव । संसारेति—भयाभावे कृष्ण-नाम्नीत्येकस्य पदस्य हेतुता । अपारेति—समानसम्भावने तुल्यदृष्टावित्यर्थः । देहबन्धत्यागे

---

स्वीक्रियते तद्विशेषः आकर एव लक्ष्यः । एका दट्टुरित्यादि—अत्र 'यनीयत प्रतुप्रपदग्गुल्बे' रित्यादि कुमारसम्भवपद्यमुपजीव्यत्वेन गृहीतमिति प्रतिभाति ।

(थ) भाविकमिति—अत्र प्राचीनैरुद्भावितस्य भाविकाख्यप्रबन्धगुणस्य नानुप्रवेशः प्रश्नीयः—उभयोर्भिन्नलक्षणत्वात् । भामह-भट्टि-भट्टोद्भटप्रभृतयस्तत्र प्रमाणम् ।

वाक्यार्थता यथा—वपुःस्थित्या ज्ञातं कपटरहितं प्रेम नहि मे

सति प्रेम्णि प्रायो न भवति वियोगः प्रणयिनोः ।

अतः प्रेम्णोऽकीर्त्तिप्रकटननिमित्ता मम जनिः

कथं नु श्रोतव्य दयित इति भूयो हरिवचः ॥ १२९

**विना वाचकवाच्यत्वं यत्र वस्तु प्रतीयते ।**

**पर्य्यायोक्तं (३४) तत् (थ)—२८३ का—**

जहौ श्रीकृष्णमालोक्य स्थितिं स्वाभाविकीमपि ।

दर्पः कन्दर्पहृदये मानो मानवतीहृदि ॥ १३०

अत्र कन्दर्पो निर्दर्पो, मानवत्योऽपि मानरहिता इति यद्यपि वस्तु शब्देनैव प्रतीयते, तथापि न वाचकमुखेन, न च वाच्यमुखेन । वाचकमुखेन 'अपारे'त्यादीनां चतुर्णां पदानां हेतुता । माथुरविरहपीड़या व्याकुला श्रीराधिकाऽह—वपुरिति । हे दयिते ! इति पदघटितं सन्देशवचनं मया कथं श्रोतव्यं यतो मयि तस्य दयितात्वमेव नास्ति, तद्विच्छेदेऽपि प्राणानां विद्यमानत्वादिति भावः । अत्र जनेः प्रेमाकीर्त्तिप्रकटननिमित्तत्वे 'वपुःस्थित्ये'त्यादि प्रथमार्द्धस्य हेतुता ।

शब्दस्य शक्तिरूपवाचकत्वं विना तथा शब्दजन्यार्थस्य वाच्यत्वरूपसामर्थ्यं विना यत्र किमपि वस्तु प्रतीयते तत्र पर्य्यायोक्तनामाऽलङ्कारो ज्ञेयः । रासोत्सवसम्बन्धिनीं श्रीकृष्णसुषमां पौर्णमासीं प्रति वृन्दा वर्णयति । सर्वापेक्षया कन्दर्पोऽतिसुन्दर इति सर्वजनप्रसिद्धा स्वाभाविकी स्थितिः, तथा सुन्दरीस्त्रीसमा मानवती भवतीति च या स्थितिस्तामपि जहौ । अत्र कन्दर्पो निर्दर्पः मानवती च मानरहितेति बोधस्तु शक्तिं विनैव जायते, न हि एतादृशार्थे पद्यस्थस्य कस्यापि शब्दस्य शक्तिरस्ति, शक्तेरभावे वाच्यस्य सामर्थ्यं सुतरामेव नास्तीति । यदि शक्तिं विना वाचकशब्दमुखेन तादृशार्थबोधः स्वीक्रियते तदैतद्भिन्नानन्तवस्तुप्रतीतिरपि स्वीक्रियताम् (थ)। ननु शक्तिव्यञ्जनयोरभावेऽपि मुख्यार्थस्य बाधादेव लक्षणयैता[illegible]र्थबोधो भविष्यति—तथाहि दर्पस्याचेतनत्वेन स्वाभाविकस्थितित्यागे कर्तृत्वासम्भवान्मुख्यार्थस्य बाधः, तत एव लक्षणायाः प्रवृत्तिः सम्भवतीति चेदाह—

---

राज्ञा तु भाविकस्य शब्दगुणताऽर्थगुणताऽलङ्काररूपता च पृथक् पृथगेव व्यवस्थापिता । तस्य तु भावो भावना पुनः पुनश्चेतसि विनिवेशः—सोऽस्यास्तीति भाविकमिति व्याकृतिः समुद्रवन्धेन सर्वस्वटीकायां या दर्शिता सैव चमत्कृतिहेतुं साधु सूचयति । प्रातः सखीनामिति—अत्रानन्दवृन्दावनस्थं पद्यं (३।३७) स्मरणीयम् । काव्यलिङ्गमिति—नैयायिकबाधितलिङ्गात् पार्थक्यं, सिद्धान्ते तत्र नूनं वैचित्र्यमेव जीवातु । उद्भटोपज्ञमेतदिति सम्भाव्यते ।

चेदभविष्यत्तदा तस्यान्यार्थोऽभविष्यत्। अत्र वाचका एव शब्दा न तूक्तार्थ-व्यञ्जकाः। एवं वाच्यमुखेन चेदभविष्यत्तदाऽन्योऽप्यर्थोऽभविष्यत्। अयन्तु वाच्य एवार्थः, न तु व्यङ्ग्यः, तर्हि सबाधमित्यपि न वक्तव्यम्। तथाहि गवि शुक्ले चलति दृष्टे, गौः शुक्लश्चल इति त्रितयविकल्पो यदेव दृष्टं तदेव विकल्प-यति, तच्चाभिन्नसंसृष्टत्वेन दर्शनं भेदसंसर्गाभ्यां विकल्पयति।

—समृद्धिरुदात्तं(३५) वस्तुनः परा (थ) ॥ २८४ का-

यथा— मानः कामगवीषु नैव नतरां (15) कल्पद्रुमेष्वादरो
लोष्ट्राणीव लुठन्ति हन्त परितश्चिन्तामणीनां गणाः।

गवीति। शुक्लगुणविशिष्टे चलनक्रियायुक्ते गवि दृष्टे 'गौः शुक्लश्चल' इति प्रयोगात् गोत्वजातिशुक्लगुणचलनक्रियाणां विकल्पो बोध्यो भवति, अत्र यदेव पिण्डमात्रपूर्वं दृष्टं तदेव विकल्पयति तादृशबोधे विषयीकरोतीत्यर्थः। अत्र 'गो'पदस्य गोत्वजातिरूपेण शक्तिः, नतु सास्नागलकम्बलादिरूपेण पिण्डे शक्तिः, अत एव लक्षणाऽऽदीनां सुतरां नावकाशः। एवं सति शक्तिलक्षणाव्यञ्जना विना शब्दसामर्थ्या-त्तादृशगोरूपवस्तु प्रतीयते। तथाऽत्रापि 'कन्दर्पो निर्दर्प' इति वस्तु शब्दसामर्थ्यादेव प्रतीयते। यन्मते 'गो' शब्दात् सास्नाऽऽदिरूपेण पिण्डबोधो भवति तन्मतमाल-म्ब्योक्तम्। यथा जातिशक्तिवादिमते व्यक्तौ शक्तिं विनाऽप्याक्षेपबलात् शब्दबोधे व्यक्तिभानं भवति, तथैवात्रापि शक्त्यादिकं विनाऽपि शब्दसामर्थ्यादेव तादृशार्थभानं भवतीति ज्ञेयम्। अयं भावः—सामान्यतः पिण्डमात्रत्वेन प्रथमं दर्शनं क्षणान्तरे च 'गौ'रिति जात्यन्तरात् 'शुक्ल' इति गुणान्तरात् 'चल' इति क्रियान्तराद्भेदेन तत्त्रितय-संसर्गेण च तस्य विकल्पः स्यात्, ततश्च किमपि वस्तुमात्रमिदमित्यनेन यदेवाभ्यधायि तदेव गौः शुक्लश्चलोऽयमित्यनेनाप्यभिधीयते, नतु जातिगुणक्रियाः! तत्र जात्यादीनां भेद-संसर्गयोरेव प्रतीतिमात्रमित्येतन्मात्रमधिकम्। एवमपि कन्दर्पमानवत्यौ दर्पमानरहिते अभूतामिति योऽयमर्थः स एव 'दर्पः कन्दर्पेहृदय' इत्यादिनाऽप्यभिधीयते, किन्तु वचन-वैचित्र्यमात्रमधिकं, तदेवाश्रित्यालङ्कारः प्रवर्त्तत इति। यथा चतुर्थातिशयोक्त्यलङ्कारस्थले कविनिर्माणस्य विधिकृतनियमराहित्येन कारणोत्पत्तेः प्रागेव कार्य्योत्पत्तिरुक्ता तथाऽत्रापि पर्य्यायोक्त्यलङ्कारस्थले शक्त्यादिकं विनैव वस्तुप्रतीतिर्भवतीति सर्वमनवद्यम्।

---

काव्यहेतुरिति केषाञ्चित् प्राचां संज्ञा। 'एकानेकपदार्थत'ति भेदनीजं प्रकाशकृदाद्यनु-सारेण। हेतुत्वस्य 'हि'पद पञ्चमीविभक्त्यादिना वाच्यत्वेऽगूढत्वेन चमत्काराभावान्नाय-मलङ्कारः, किन्तूपात्तयोः कार्य्यहेत्वोरनुपात्तोऽपि हेतुता वाक्यवैशिष्ट्यादिना वाच्यवत्

---

(15) 'नितरा'मिति (छ) (ज) पुस्तकयोरयं पाठः।

अम्बूका इव वापिकापरिसरे मुक्ताकिरः शुक्तयो

वीक्ष्यन्ते न जनैस्त्वमेव नगरि ! औदारकि ! निःस्पृहा ॥१३१

**प्रधानमपि यत्राङ्गम्—२८५का—**

यत्र प्रधानमप्युपलक्षणं तच्चोदात्तम् ।

यथा— सेयं मथुरानगरी सुरगुरुभिर्याचितो भगवान् ।

यत्रावतीर्य्य शतशः सुरद्विषो हेलया न्यवधीत् ॥ १३२

अत्र समस्तदैत्यहननरूपो वीररसो गुणीभूतः (थ) ।

**—एकस्मिन् यत्र साधके ।**

**साधकान्तरनिर्देशः स समुच्चय(३६) इष्यते (द) ॥ २८६का—**

प्रकृतकार्य्यस्यैकस्मिन्नेव साधके सिद्धे सिद्धत्वोपयोगार्थं साधकान्तरनिर्देशः समुच्चयः । यथा—दुरापोऽयं कृष्णः सहजतरलं मानसमिदं

सुदुर्वारः कामो, गुरुतरकरालो गुरुजनः ।

मान इति—तन्नगरस्थजनानां निःस्पृहत्वेन तव निःस्पृहत्वम् । तव परिसरे ढिमा (ढिल्) इति प्रसिद्धानि लोष्ट्रानीव चिन्तामणीनां गणा लुठन्ति, अतएव कामधेनुषु जनानां नैवादरः । वापिकातड़ागादिपरिसरे 'सामुक' इति प्रसिद्धाः अम्बुका इव शुक्तयो जनैर्न वीक्ष्यन्ते । कथम्भूताः ? मुक्ताकिरः याभ्यो मुक्ता उत्पद्यन्ते । सुरगुरुभिर्ब्रह्मादिभिर्याचितः सन् यत्र मधुपुर्य्याम् । मथुराया उत्कर्षार्थं प्रधानीभूतस्यापि श्रीकृष्णनिष्ठवीररसस्य गुणीभूतत्वं ज्ञेयम् ।

---

यत्र प्रतीयते तत्रैवायमिति सम्प्रदायविदः । पर्य्यायोक्तमिति—पर्य्यायोक्तिरिति वा कुत्रापि संज्ञा । निर्वचनमुखेनास्य निष्कर्षोऽभिनवगुप्तपादैर्लोचने प्रकटितः । पर्य्यायोक्तस्य वाक्यार्थोऽङ्गतया विषय इति प्राचीनमताभासमुपपादयन्तो वक्रोक्तिजीवितकृतः खल्वाः । प्राचां व्यञ्जनाधिकारे उपकरणीकृतोऽयमिति केचिदग्निपुराणाद्यनुसारिणः—'दृप्यत्यसौ परभृत' इत्यादि दर्शितपद्यन्तत्र साधकप्रभवम् । एवमेव 'ध्वनिताभिधाने पर्य्यायोक्ति'रिति लक्षणेन 'भम धम्मिअ' इत्यादि 'निःशेषच्युतचन्दने'त्याद्युदाहरणमुखेन च सूचनं काव्यानुशासनकृतां वाग्भटसूरीणाम् । अत्र भङ्गान्तरेणातात्पर्य्येण वा गम्यस्याभिधानमिति सर्वस्वग्रन्थानुसारिणो विद्याधरविश्वनाथादयः । यदीति—इह मूले टीकायाञ्च व्यञ्जनाप्रत्ययसद्भावे हेतुत्वं स्फुटं कयाचित् प्रौढ़ाऽविष्कृतमित्यञ्जसा प्रतिभाति । उदात्तमिति—अत्राभिमानस्थायिभावाङ्गोजनिर्दिष्टादुदात्तरसात् परार्धत्वादेकत्वोद्दीपनविभावत्वेन वस्तुनोऽन्यत्वेति सूक्ष्मेक्षिकया भेदापातः । दक्षादिस्वीकृतस्योदाराख्यगुणस्योर्जितता चात्र वरीवर्त्ति । गुणीभूत इति—अतत्रवालङ्कारत्वेन निर्देशो नालङ्कार्य्यत्वेन ।

नवीनैषोत्कण्ठा, नवमपि वयो, नातिचतुरः
सखीलोको, हाधिग् भवतु कथमाधेरुपशमः ॥ १३३

अत्राधेरुपशमाभावस्य कृष्णदुरापत्वमेव मुख्यं साधकं, तत्रान्येषां साधकानामुपादानेनायं समुच्चयः। एष च सदसदुभययोगात्त्रिधा, सत् शोभनम्, असदशोभनम्, उभयं शोभनाशोभनम्। सद्योगे यथा—

रूपं कुलं वल्लभदुर्लभत्वं शीलं कला कान्तिरुदारता च।
एकेन चैषामपराः सगर्वा राधे! समस्तैरपि ते न गर्वः ॥१३४

असद्योगे यथा—

संसारमार्गो ह्यधमः स्वभावात् कर्माणि तस्मिन् कटुकण्टकानि।
गतागताभ्यामिह खेद एव तथापि नास्मिन् कुजनो विरज्येत् ॥१३५

सदसद्योगे—प्रियः प्रणयकोविदः, प्रणयिनी सदैवोत्सुका,
खलः क्षतपराक्रमो, गुरुजनः खलोक्त्यासहः।
गृहं गृहपतिच्युतं, मनसिजस्य पञ्चेषवः
कलावति! बहिश्चरा इव लसन्त्यमी पञ्च नः ॥ १३६

अत्र प्रियादयः सन्तः खलोऽसन्।

## गुणो गुणक्रियाभ्याञ्च क्रियया च क्रियाऽपरः ॥२८७का—

अपरः समुच्चय इत्यर्थः। गुणेन गुणो यथा—

दुरापेति—अत्राधेर्मनःपीड़ाया उपशमाभावे श्रीकृष्णस्य दुरापत्वमेव मुख्यं कारणम्। ननु श्रीकृष्णस्य दुरापत्वे सति तस्मिन् मनो न देयमित्यपि न सम्भवतीत्याह—मम मानसं चञ्चलं मद्वारणं न स्वीकरोतीति। मनःपीड़ायाः शान्त्यभावे गुणीभूतकारणान्तराण्यप्याह—सुदुर्वारेत्यादि। गुरुतरकरालः कटूक्तिविषवर्षणकारी। रूपमिति—स्त्रीणां गर्वे रूपं मुख्यं कारणम्—अन्येषां कुलादीनां गौणकारणत्वं ज्ञेयम्। वल्लभस्य कान्तस्य स्वनिष्ठदुर्लभत्वम्। अपराः स्त्रियः। प्रिय इति—क्षतो नष्टः पराक्रमः यस्य तथाभूतः—गुरुजनः खलस्य दुर्वादोक्तिं न सहते। युष्माभिर्मिथ्यैव प्रवादो दीयते, मम वधूः साध्वीति पौर्णमासीमुखाच्छ्रुतम्, अतोऽस्मद्गृहे श्रीकृष्णस्याप्यानयनेऽवसरः। पञ्चेषवः—यत्रामीषां पञ्चानां समागमस्तत्रैव कन्दर्पस्य प्रादुर्भावस्तत्र मुख्यं कारणं श्रीकृष्णस्य प्रणयकोविदत्वम्,

(द) समुच्चय इति—नात्र केवलमनेकेषामेकत्र निबन्धो, न वा गुणक्रिययोर्युगपदभिधानमात्रं, परं 'वृद्धा युवानः शिशवः कपोताः खले यथाऽमी युगपत् पतन्ति' तद्वदेककार्यानुष्ठानात्मा प्रौढ़ोक्तिमूलेऽपि यौगपद्यतात्पर्यकत्वेन सार्थकनामाऽयम्।—अपत्वेनैकदेशेनेति

व्रजपतिनन्दनहृदयं राधायामेधिताभिलाषञ्च।

साऽपि च भृशमनुरक्ता तस्मिन्निति सहजभावसार्वज्ञ्यम् ॥१३७

अत्र साभिलाषत्वानुरक्तत्वे गुणौ। अन्वलेनान्यालङ्कारः (द), शुद्धोऽयं तथा न चमत्करोति, अतः सङ्करतयोदाहृतम्। गुणः क्रियया यथा—

अरुणञ्च नीलमलिनप्रभमपि नयनं प्रिये! मयि ते।

आसन्नञ्च ममायं हृदि कम्पमकम्पकद्योते!॥ १३८

क्रियया क्रिया यथा—

हरिरभियास्यति मथुरामिति वार्त्ता नः श्रुतौ च विनिहन्ति।

मम तु सखी भवति न वेत्यपि शङ्का मे मनश्च मूर्च्छयति ॥१३९

## अनेकस्मिन् क्रमेणैकः (३७) पर्य्यायः (द)—२८८ का—

एकं वस्तु क्रमेणानेकस्मिन् यदि भवति आरोप्यते वा तदा पर्य्यायः। तत् भवतीति पक्षे यथा—

एकस्त्वं निखिलवधूहृदि प्रविष्टः संक्षोभं जनयसि गोकुलेन्द्रसूनो!

त्वामेकं नहि सकलाः प्रवेष्टुमर्हाः किं क्षोभं बत जनयन्तु चेतसस्ते ॥ २४०

अन्येषां गौणकारणत्वं ज्ञेयम्। व्रजपतीति—चकाराभ्यामभिलाषानुरागयोः साहित्यस्यापि बोधो भवति। ननु राधिका कथं स्वविषयकं श्रीकृष्णस्याभिलाषं जानाति श्रीकृष्णो वा कथं स्वविषयकं राधाया अनुरागं जानाति, तत्राह—सहजेति। राधामाधवयोर्यः स्वभावसिद्धो भावः प्रेमा तेन सार्वज्ञ्यम्। यथा योगिजनो योगनेत्रेणातीतानागतान् पश्यति तथैतावपि प्रेमनेत्रेण परस्परानुरागं पश्यत इति भावः। एतत्पद्यस्याञ्चलनैकदेशेनान्यः समनामाऽलङ्कारोऽपि ज्ञेयः। अरुणमिति—अत्र हृदयनिष्ठकम्पनक्रियया सह नयननिष्ठकोपारुण्य-गुणो निर्द्दिष्टः। अक्रूरे व्रजमागते ललिता स्वसखीमाह—हरिरिति। सखी राधिका जीवति न वेति शङ्का। अत्र हननक्रियया (16) सह मूर्च्छनक्रिया निर्दिष्टा।

कलहान्तरिता श्रीराधा कृष्णं प्रति भङ्ग्या तस्याक्तत्वमाह—एक इति। तत्रैव सामर्थ्यमधिकम्। एवञ्च प्रेमशून्येन त्वया सहास्माकं प्रीतिरनुचितेति ध्वनिः। मानिनीं

---

यावत्। समाध्यलङ्कारादस्य भेदः सर्वस्वकृदादिभिः सूचितः। पर्य्याय इति—अत्र क्रमाद्विच्छित्तिरेव प्रागभवति नासङ्गता संज्ञा। एकस्मिंस्त्वेति—अत्र 'महिलासहस्सभरिए' इति गाथासप्तशतीपद्यमुपजीव्यम्। 'शशिमुखी'ति श्लोके तृतीयचतुर्थचरणविभागे हाला-हलेति

---

(16) 'चलनक्रियये'ति पाठः (ख) (ग) पुस्तकयोः।

आरोप्यत इति पक्षे यथा—

मदनेनोज्झितं वाम्यं राधे! गृह्णाति ते मनः।
मनस्त्यजति ते रागं लोचने परिगृह्णतः॥ १४१

यथा वा—त्वया त्यक्तां राधे! रुषमहह गृह्णाति मदन-
स्त्वदक्षिभ्यां त्यक्तं परिवहति रागं तव मनः।
धिया कौटिल्यं ते परिहृतमपाङ्गोऽधिकुरुते
पुनः सन्धानार्थं किमुचितपदे न्यस्तमखिलम्॥ १४२

## —अन्यो विपर्य्ययात्॥ २८६का—

विपर्य्ययादुक्तप्रकारस्य वैपरीत्यादेकस्मिन्ननेकमित्यर्थः। यथा भवतीति पक्षे—

एकस्मिंस्तव हृदये व्रजेन्द्रसूनो! भूयस्यो नलिनदृशः कृतप्रवेशाः।
नात्यस्मिन्नवसर एव गाढ़पूर्णे तादृश्यो गुणबहुलाः कथं विशन्तु (द)॥१४३

आरोपपक्षे तु यथा—

शशिमुखि! तव राधिके! कटाक्षः प्रथममभूदमृतद्रवातिवर्षी।
अथ हृदि विनिविष्ट एव हाला-हलपरिदिग्धशरायमाण आस्ते (द)॥१४४

श्रीराधां प्रति श्रीकृष्ण आह—मदनेनेति। त्वया मयि क्रोधवशान्मदनो वाम्यं ग्राहितः, तत एव तद्धृदये कन्दर्पावेशाभावान्मानो वर्त्तते। सम्प्रति मद्दुःखदर्शनात् करुणेन मदनेन त्वामादृत्य वाम्यं त्यक्तम्, अतस्तद्धृदि कन्दर्पावेशो दृश्यते—तथापि त्वं मया सह न मिलसि तत्र मद्दुःखदर्शनेऽपि कठोरं तव मन एव कारणम्—मनो मदनेन त्यक्तं वाम्यं जग्राह। रागो मद्विषयानुरागः, श्लेषेण नयनपक्षे रक्तिमा मद्विषयकस्य तव क्रोधस्यानुभावरूप एव। अत्र मदननिष्ठं वाम्यं मनस्यारोप्यते। मानभङ्गानन्तरं कलहान्तरितां श्रीराधां प्रति श्रीकृष्ण आह—त्वयेति। मदनः क्रुद्धः सन् त्वन्मिलनमप्राप्तं मां शरेण विध्यतीति भावः। परिवहति स्वीकरोति—तथा च क्रोधाभावान्नेत्रयो रागो गतः मनसि चानुरागः प्रादुर्बभूव। धियेति—पूर्वं मानसमये श्रीकृष्णस्य दर्शनमपि न कृतम्, अधुना प्रसन्ना सती तमपाङ्गेन पश्यतीति भावः। अत्रोत्प्रेक्षामाह—पुनर्मानसमय एतेषां पुनः स्वस्वस्थाने

---

च्छेदो न मनोज्ञ इत्यवधेयम्। अनुमानमिति—त्रिविधो हेतुर्नैयायिकसम्मतः पूर्वः सामान्यतो दृष्टः शेषवच्चेति। वाग्भटाद्याः कालत्रितयवर्त्तिनो लिङ्गिनो लिङ्गज्ञानेनात्र त्रैविध्यमुदाहरन्ति। यत्तु नवीनानां ग्रन्थे हेतोर्निष्पादकज्ञापकसमर्थकभेदेन भागव्यवस्थापनं तत्तदुत्यालङ्कारभेदोद्दङ्कनार्थमिति दर्पणादितो ज्ञेयम्। श्लेषसम्पर्कस्य चारुता 'अस्यां मुनीनामपि मोहमूहे' इत्यादिनैषधपद्ये नितरामुपभोग्या। उद्भट-रुद्रट-जयदेव विश्वनाथादिभिरभ्युपगतो हेत्व-

यथा वा—

पृष्ठे मणीन्द्रमहसि प्रतिबिम्बमेव केशस्य केशपरिशेष इति भ्रमेण।
उल्लासयन्त्यसकृदङ्गुलिपल्लवेन सा व्यग्रधीरजनि केशव केशबन्धे॥ १७७

**उपमानस्य धिक्कार उपमेयस्तुतौ यदि।**
**(५७)प्रतीपमुपमानस्य धिक्कृत्यै चोपमेयता (प)॥ ३१०का-**

उपमेयस्तुत्यर्थमुपमानधिक्कारो यदि तदा प्रतीपं, यदि वा धिक्कारायैव उपमानस्यैवोपमेयता तदा चेति द्विविधम्। क्रमेणोदाहरणे—

तव जयति जगत्यां राधिके! भ्रूविभङ्गे
किमिति कुसुमचापश्चापमन्यं बिभर्त्ति।
विलसति मुखबिम्बे वेधसा वा किमर्थं
व्यरचि विधुविधाने निष्फलोऽयं प्रयासः॥१७८

वरतनु! ननु कृष्णो हन्त वैदग्ध्यमुग्धः
शिवशिव भुवि भद्राभद्रभावेऽनभिज्ञः।
तव विगतकलङ्केनाननेनैव योऽयं
शशिनमुपमिमीते नैव लज्जां करोति॥ १७९

मम वदनमेव नयनानन्दकमिति मा कृथाः सुतनु! गर्वम्।
अपरोऽपि कश्चिदेवं राकायां शरदि शीतांशुः॥ १८०
अहमेव दारुणतम इति मा कुरु कालकूट! गुरुगर्वम्।
त्वत्तोऽपि दारुणतमो दुर्लभलोके मनोरागः॥ १८१

इत्याद्यपि तद्भेदान्तर्गतम्।

पृष्ठ इति—श्रीकृष्णस्य केशबन्धने कर्मणि व्यग्रधीरजनि। व्यग्रत्वे कारणमाह। मणीन्द्र इन्द्रनीलमणिस्तद्वन्महत्तेजो यस्य तथाभूते पृष्ठे केशस्य प्रतिबिम्बमेव केशस्य परिशेषोऽग्रभाग इति भ्रमेणासकृदुल्लासयन्त्यूर्द्ध्वं नयन्ती। ममेति—शरत्काले राकायां पूर्णिमायां शीतांशुश्चन्द्रः। अतिशयोक्त्या श्रीकृष्णः प्राह। अहमेवेति। दुर्लभलोके श्रीकृष्णे।

---

(फ) सामान्यमिति—तत्त्वतो भेदबहुलोऽप्यौढ़मपि कविनिर्मितिगौरवेण समानगुणत्वेन निबध्यते चेदस्तु तदाऽयम्। तत्त्वतो भेदानाघ्रातमपि तेन विशेषेण भेदेन यदि विशिष्यते स विशेषः। तयोरेकत्र ग्रहणेन वैलक्षण्यं स्फुटतरं जातमिति च ज्ञेयम्। एकत्र वस्तुसामान्य-

चित्ते चिन्त्यं कथमपि चिरं धाम यच्छ्यामलन्ते
गोपस्त्रीणां कुचकलसयोर्नीलरत्नं बभूव (द) ॥१४७

अत्र "आत्मारामे"रित्यस्य विशेषणस्य सर्वाण्येव विशेषणानि साकूतानि।

**प्रकृतस्थगनं छद्म(४०) व्याजोक्तिरनिषेधभाक्(ध) ॥ २६२ का—**

अपह्नुतिस्तु निषेधपूर्वा, इयन्तु न तथेत्यनिषेधभागित्युक्तम्। इयन्तु छद्मपूर्वं व। यथा—अहो शैत्यस्य महिमा हिमानिल! तवेदृशः।

न शक्यते गोपायितुं क्षतो येनाधरव्रणः ॥ १४८

यथा वा—

अलमलमभिलाषेणामुना वारिखेलाकुतुकिनि! कमलानामाहृते कौतुकस्य।
कलय कलितमङ्गं कण्टकैर्नाललग्नैः शिवशिव! परिदष्टं षट्पदेनाधरोष्ठम् ॥१४९

**प्रश्नपूर्वकमाख्यानं तत्सामान्यव्यपोहनम्।**
**तस्य तस्यापि च ज्ञेये व्यङ्ग्यत्वे स्यादथापरम्।**
**अप्रश्नपूर्वकं वाच्यं परिसंख्या (४१) चतुर्विधा (ध) ॥ २६३ का-**

'तस्य तस्य' चेति प्रश्नपूर्वाख्यानस्य तत्सामान्यव्यपोहनस्य च व्यङ्ग्यत्वम्, अप्रश्नपूर्वकस्य तत् सामान्यव्यपोहनस्य च वाच्यत्वञ्चेति चतुर्द्धा। क्रमेणोदाहरणानि—

सुरताङ्कं गोपायितुं श्यामलाऽऽह—हे शीतकालीन हिमानिल! तव शैत्यस्येदृशो महिमा कियद्वक्तव्यः? अत्र हिमपवनस्य सर्वेषामधरव्रणजनकत्वेन दुःखदायित्वादिमाहात्म्यरूपप्रकृतार्थस्य संवरणं, तत्त् मिषमात्रं किन्तु दुःखदायित्वादिमाहात्म्य एव वक्तुस्तात्पर्य्यम्।

श्रीराधिका काञ्चित् स्वसखीं स्तनाधरादौ सम्भोगचिह्नं दृष्ट्वा परिहसन्त्याह—अलमलमिति—तथा च त्वया कुञ्जमध्ये जलक्रीड़ायामेव गतम्, तत्र जलमध्यस्थितानां कमलानामाहरणार्थं गतायास्तवाङ्गस्य कमलनालस्य कण्टकैः करणैः क्षतादिकं जातम्। अत्र प्रकृतार्थस्य श्रीकृष्णेन सह सम्भोगस्य संवरणमात्रम्, किन्तु तात्पर्यं तत्रैवेति भावः।

---

लङ्कारभेद इति चन्द्रालोककृदादयः। आत्मारामैरिति—"आत्मारामा विहितरतय" इत्यादि वेणीसंहारपद्यमेतदभिप्रायमेव।

(ध) व्याजोक्तिरिति—इयं प्राचीनानां ग्रन्थेषु लवो लेशो वेति निर्द्दिष्टः। रसगङ्गाधरकृतां लेशस्तु गुणस्यानिष्टसाधनतया दोषत्वेन दोषस्येष्टसाधनतया गुणत्वेन वर्णने जङ्घटीतीति भिन्न एव। अत्र तत्त्वतो गोपन एव तात्पर्य्यं तदुत्थञ्च वैचित्र्यमितीतरालङ्कारव्यावर्त्तकता। परिसंख्येति—'परि' शब्दोऽत्र वर्ज्जने, 'परेर्वर्ज्जने' इत्यष्टाध्यायीकृतां निर्देशात्। संख्या बुद्धिः,

किं गेयं ? व्रजकेलिकर्म, किमतिश्रेयः ? सतां सङ्गतिः,
किं स्मर्त्तव्य-मनन्तनाम, किमनुध्येयं ? मुरारेः पदम्।
क स्थेयं ? व्रज एव, किं श्रवणयोरानन्दि ? वृन्दावन-
क्रीड़ैका, किमुपास्यमत्र ? महसी श्रीकृष्णराधाभिधे ॥ १५०
का विद्या ? हरिभक्तिरेव, न पुनर्वेदादिनिष्णातता,
कीर्त्तिः का ? भगवत्परोऽयमिति या ख्याति,र्न दानादिजा।
का श्रीः ? कृष्णरति, र्न वै धनजनग्रामादिभूयिष्ठता,
किं दुःखं ? भगवत्प्रियस्य विरहो, नो हृद्व्रणादिव्यथा ॥ १५१
वक्रता मृगदृशां कचपाशे पाणिपादनयनादिषु रागः।
नीविकेशवसनादिषु बन्धः सान्द्रचन्दनरसादिषु पङ्कः ॥१५२

अत्र 'क वक्रता' इत्यादिप्रश्नपूर्वकस्याख्यानस्य तत्सामान्यव्यपोहनस्य च व्यङ्ग्यता—तथाहि क वक्रता मृगदृशां गोपिनां ? कचपाश एव, नान्तःकरणादौ कस्या अपीत्यादि।

प्रत्यासक्तिर्हरिचरणयोः सानुरागे, न रागे,
प्रीतिः प्रेमातिशयिनि हरेर्भक्तियोगे, न योगे।
आस्था तस्य प्रणयरभसस्योपदेहे, न देहे,
येषां ते हि प्रकृतिकृतिनो, हन्त मुक्ता न मुक्ताः ॥ १५३

अत्र प्रश्नपूर्वकं व्यङ्ग्यं तदन्यव्यपोहनं वाच्यमिति भेदः।

वक्रतेति—व्रजे कुटिलान्तःकरणा विषयेषु रागयुक्ताश्च जनाः न सन्ति, तत्र कस्यापि निगड़ादिबन्धनं कलङ्कस्पर्शो वा नास्तीति ध्वनिः। हरिचरणयोः सानुरागे वैष्णवे आसक्तिः, न विषयरागे। न योगे ज्ञानकर्मादौ। प्रणयरभसस्य प्रेमातिशयस्योपयोगिसिद्धदेहे आस्था नित्यत्वबुद्धिः, नतु पाञ्चभौतिके देहे। तथा च के मुक्ता इति प्रश्नो व्यङ्ग्यः, तत्रोत्तरं येषामिति। मुक्ताभिमानिनो मुक्ता न, तेषां भक्त्यभावात्। तथा, श्रीदशमे 'येऽन्येऽरविन्दाक्ष विमुक्तमानिन' इत्यादौ तेषामधःपतनमेवोक्तम्।

---

तेन वर्जनबुद्धावियमित्यन्वर्थमभिधानम्। न केवलं 'तत्र चान्यत्र च प्राप्तौ परिसंख्ये'ति वाक्यविदां मीमांसकानां विभाषाऽनुमोदितोऽत्राङ्गीकारः, परं काव्यगतानादिविच्छित्ति-बोधितजीवातोरेवात्र परिग्रहः। नियमवच्छेषस्यैवावान्तरभेदोऽयमिति प्राचीनानां दण्डि प्रभृतीनां दर्शनम्। किं गेयमिति—श्रीरामानन्दरायमहाशयश्रीचैतन्यमहाप्रभ्वोः प्रश्नोत्तरा-

यथोत्तरं पूर्वपूर्वहेतुकस्य तु हेतुता ।
तदा कारणमाला (४२) स्यात् (ध)—२६४ का—

पूर्वपूर्वहेतुकार्थस्योत्तरोत्तरपदार्थस्य यदि हेतुता, तदा तदेवेत्यर्थः ।

यथा—सत्सङ्गमेनैव भवेद्विरागो विरागतः स्यान्मनसो विशुद्धिः ।
मनोविशुद्धेरव हरेः प्रकाशो हरेः प्रकाशेन कृतार्थता स्यात् ॥ १५४

—क्रियया॒ऽन्योन्यकारणम् ।
वस्तुद्वयं यदाऽन्योन्यम् (४३) (ध)—२६५ का—

वस्तुद्वयं यदि क्रिययाऽन्योन्यकारणं स्यात्तदाऽन्योन्यमित्युच्यते ।

यथा— राधाभासो मरकतमयीं कुर्वते कृष्णकान्तिं
कृष्णस्याभा अपि च हरितीकुर्वते धाम तस्याः ।
स्थाने स्थाने यदि निवसतस्तौ तदा गौरनीला-
वेकस्थाने यदि बत तदा तुल्यभासौ विभातः ॥ १५५

—प्रश्नस्योन्नयनं यदि ।
उत्तरश्रुतिमात्रेणोत्तरं (४४) स्यात् (ध)—२६६ का—

प्रतिवचनश्रवणादेव पूर्ववचनस्योत्तरस्य यद्युन्नयनं भवति तदोत्तरालङ्कारः ।

यथा—भम कण्ह अम्हघरं विरमदु दे (18) कावि वअणपरिवाडी ।
अम्ह सही इध एक्का ण एत्थ तुह ओसरो ठादुं ॥ १५६

अत्र सख्याः प्रतिवचने कृष्णस्य कोऽपि प्रश्नः पूर्वं जात इति बुध्यते । नचैतदनुमानं, व्याप्त्यभावात् । न चापि काव्यलिङ्गं, हेतोः पदव्याक्यार्थताऽभावात् ; नतु प्रश्नस्य प्रतिवचनजनको हेतुः—तेनेदमलङ्कारान्तरमेव ।

भम कण्हेति—भ्रम कृष्णान्यगृहं विरमतु ते काऽपि वचनपरिपाटी । मम सख्येका नात्र तवासरः स्थातुम् ॥ न चात्रानुमानालङ्कारो वक्तव्यः, प्रतिवचनप्रश्नयोः परस्परव्यभिचारेण व्याप्त्यभावात् । नाप्यत्र काव्यलिङ्गालङ्कारो वक्तव्यः ; न त्विति—प्रश्नं प्रति प्रतिवचनं न जनको हेतुः, अपि तु ज्ञापक एव हेतुः, काव्यलिङ्गे जनकरूपस्य हेतोरेव ग्रहणात् ।

---

मिदं कविकर्णपूरकृते चैतन्यचन्द्रोदयनाटके । कारणमालेति—शृङ्खलामूलिकाऽत्र विच्छित्तिः, एवमप्यत्र स्वीकृतेष्वन्यत्रोद्भावितेषु वा मालादीपकैकावलीसारप्रभृतिष्वत्रगान्तव्यम् । सतु-

(18) "ते" इति पदं (क) पुस्तके नास्ति । तन्न सुष्ठु, आर्यापादस्यापरिपूरितत्वात् ।

—प्रश्नतोऽपि वा ॥ २९७का—

प्रश्नतः पश्चादुत्तरं वा उत्तरम्। यथा—

किं दुर्लभं ? यन्मनसो न गोचरः, किं प्रार्थनीयं ? क्व च यन्न लभ्यते।
किं ह्लादकं ? यत्स्मरणेऽपि स स्यात्, तत्तच्च तत् किं ? व्रजराजनन्दनः ॥१५७

अत्र चतुर्विधपरिसंख्यातो विलक्षणता— तत्र तत्र सर्वतान्यव्यपोहे तात्पर्य्यं क्वचिद्वाच्यमुखेन क्वचिद्व्यङ्ग्यमुखेन। इह तु शुद्धप्रश्नस्य शुद्धमुत्तरमिति भेदः।

**आकारेणेङ्गितेनापि सूक्ष्मार्थो यत्र लक्ष्यते।**
**प्रकाश्यते वाऽन्यस्मै च स सूक्ष्मः(४५)कीर्त्त्यते द्विधा(ध)॥२९८का-**

क्रमेणोदाहरणे—राधायाः करकमले शिखण्डदलपक्ष्म लग्नमालोक्य।
प्रातः सखी विदग्धा लिलेख तत्रैव कार्मुकं सशरम् ॥ १५८

अत्र हि विपरीतरते कृष्णकेशाकर्षणविलग्नतद्बर्हावतंसदर्शनेन पुरुषायितं तवेदं मयाऽवगतमिति सख्या स्ववैदग्धंय प्रकटयितुं पुरुषस्यैव धनुर्द्धरत्वं सङ्गच्छत इति सशरकार्मुकं लिखितमिति सूक्ष्मम्।

भवनप्राङ्गनसङ्गतमनङ्गरसमङ्गलं कृष्णम्।
सकृदवलोक्य सलीलं राधा पिदधेऽवगुण्ठनेन मुखम् ॥ १५९

अत्र चन्द्रास्तसमये समागन्तव्यमिति कृष्णं प्रति सङ्केतोऽनया प्रकटितः, स च सूक्ष्मः।

**सारः (४६)सावधिरुत्कर्षो यद्भवेदुत्तरोत्तरम् (न) ॥२९९का—**

सारोऽलङ्कारः। यथा—वर्षेषु भारताभिधमिह सारो भारते च तीर्थानि।
तीर्थेषु च मथुरैका वृन्दाऽरण्यं मथुरायाम् ॥ १६०

---

सङ्गमेनैवेत्यादि—अत्र कथितपदत्वं न दोषः, परं शोभाऽधायकमेव। अन्योन्यमिति—पश्चाल्लक्षितात् समालङ्कारादस्य भेदः सहज इति वृत्तिग्रन्थ एव प्रमाणम्। उत्तरम्—अत्र प्रकाशकृतां लक्षणे'असकृत् यदसम्भाव्य'मिति 'असकृत्'पदं वैचित्र्यबोधकमिति वरमत्र तन्निर्देशः। इह प्रश्नोत्तरसुखे तात्पर्य्यं नेति प्रथमभेदादेवावगम्यते, यत्र तथा तत्राप्युत्तरांशे न परन्तु प्रश्नोन्नयन एव परं लक्ष्यमिति। प्रश्नोत्तराख्योऽलङ्कारः कैश्चिद्वाग्भटादिभिरुपदर्शितः प्रहेलिकाभेद एवेति महाकवीनां बाणभट्टादीनां सूचनम्। 'किमिभं श्लाघ्यमाख्याति पक्षिणां कः कुतो यशः। गरुड़ः कीदृशो नित्यं दानवारिविराजितः॥'

**अत्यन्तभिन्नाधारत्वे युगपद्भाषणं यदि ।**

**धर्मयोर्हेतुफलयोस्तदा सा स्यादसङ्गतिः(४७) (न) ॥२००का—**

यदाधारो हेतुस्तदाधारं फलमिति, यथा पापपुण्यकृती एकाधारे एव दुःखसुखे, तदन्यथाभावादसङ्गतिः । तत्रापि युगपदेव हेतुः फलञ्च, नतु पापादिकृतदुःखवत् कालान्तरव्यवधानम् । यथा—

तवाधरोष्ठे क्षतमञ्जनञ्च मम व्यथाऽक्ष्णं मलिनञ्च चेतः ।
पीतस्त्वया ते वदनासवस्त्वं मत्तः कुतोऽनर्थपरम्परेयम् ॥ १६१

नायं विरोधः, स त्वेकाश्रयः ।

**कारणान्तरसाहाय्यात् कार्य्यं यत् सुकरं भवेत् ।**

**कर्त्तुर्विना प्रयत्नेन स(४८) समाधिरितीर्य्यते(प) ॥ (२०१)का—**

यथा— मयि व्यग्रे तस्याः प्रणयकलहम्लानमनसः
प्रसादे राधायाः पदपतनमारिप्सितवति ।

यदाधार इति—यस्मिन्नेवाधिकरणे हेतुस्तस्मिन्नेवाधिकरणे फलोत्पत्तिरिति सर्वथा नियमः, तस्यान्यथाभावः कारणस्याधिकरणमेकं कार्य्योत्पत्तेरपरमित्यन्यथाभावः । तथा पापपुण्यजन्ये सुखदुःखे एकस्मिन्नेवात्मनि भवतः । तत्रापि असङ्गतावप्यसङ्गत्यन्तरमाह—युगपदिति । एकस्मिन्नेव काले हेतुः फलञ्च भवति । काचिन्मानिनी प्रातःकाले मानभङ्गार्थमागतं श्रीकृष्णं तस्याधरे सम्भोगचिह्नं क्षतादिकं वीक्ष्याह—तवेति । यस्मिन्नेव क्षणे तवाधरे तया क्षतं कृतं तदैव तस्य स्मरणान्मम मनसि व्यथा जाता, नतु कालव्यवधानम् । त्वं मत्तः सम्भोगचिह्नं धृत्वा मानभङ्गार्थमागतः, इदमेव मत्तताचिह्नमिति भावः । एवमन्यत्राप्यत्तेनोक्तं यदुदाहरणं तत्तु कृष्णसम्बन्धराहित्येन विगीतत्वात् ग्रन्थकारेण परिहृतम् ।

---

इत्यादि लक्ष्यतस्तत् गम्यते । सूक्ष्म इति—'निपुण'मिति प्राचीनानां संज्ञाऽन्तरमस्येति कश्चित् । नास्य विवर्त्त उत्तरकाले कथमप्यासीदित्यप्रधानत्वेऽप्यस्य प्रथमत्वख्यापनं कुत्रचित् । विदग्धानाश्रित्य काव्यवर्त्म जीवतीत्येवं प्रायादलङ्कारादूह्यते, परं वैदग्ध्यमेतदास्फोटनप्रायम । अत्र वक्रोक्तिविरहान्नालङ्कारतेति भामहानुसारिणः कुन्तकादयः ।

(न) सावधिरिति—'परावधि'रिति प्रकाशकृल्लक्षणे—'तेन पर्य्यन्तभागो यत्र सर्वोत्कृष्ट इत्यर्थः, धारावाहिकतया तत्रैवोत्कर्षविश्रान्ते'रिति गोविन्दव्याख्यानम् । उत्तरोत्तरमस्याख्यायां समावेशोऽप्ययमिति । अस्य न केवलं धर्मधर्मिरूपेण व्यतिरेकाङ्गेदः परं मालारूपेण धाराऽधिरोहितयैवेति ज्ञेयम् । सर्वस्वे त्वस्यैवोदार इत्याख्या । प्रतीच्यानां Climax Anticlimax—आख्यावलङ्कारावेतत्सदृशावपि प्रायः क्वचिद्भिन्नार्थौ । असङ्गतिरिति—

अकस्मादम्भोदव्यतिकरकृतः स्फूर्जथुरभूत्
सखे ! त्रासादेषा सपदि मम कण्ठं धृतवती ॥ १६२

**श्लाघ्यत्वेन भवेद्योग्यो यदि योगस्तदा समम्(४६)(न)॥३०२का—**

सममित्यलङ्कारः। यथा—ललामं नारीणामियमहह पुंसामयमहो
वयोऽस्या अस्यापि प्रकृतिनवकैशोरकमिदम्।
प्रसूनेषोर्भाग्यान्मिलितमिव रत्नद्वयमिदं
न राधाकृष्णाख्यं भजतु कथमाद्योऽपि च रसः॥१६३

एवमश्लाघ्यत्वेऽप्यूह्यमुदाहरणम्।

**अत्यन्तवैसादृश्येन योगो यदतिदुर्घटः।**
**कर्त्तुः क्रियाफलाभावः प्रत्युतानर्थसम्भवः॥**
**गुणक्रियाभ्यां ते एव कार्य्यकारणयोश्च यत्।**
**परस्परं विरुध्येते विषमः(५०) स चतुर्विधः(न)॥३६३का—**

ते गुणक्रिये एव। क्रमेणोदाहरणानि—
शिरीषकुसुमादपि प्रकृतिकोमलन्तद्वपुः
कुकूलविषशूलयोर्व्यतिकरोऽनुरागज्वरः।
तथापि सहतेतरां तममुनैव राधा चिरं
न वाङ्मनसगोचरः सहजभावबन्धक्रमः॥ १२४ अत्र गुणो गुणेन।

संसारदावज्वलपितं मनो मे शिश्राय तापप्रशमाय कृष्णम्।
स निर्घृणस्तद्बत लब्धमात्रं समूलमुन्मूलितमेव चक्रे॥ १६५ अत्र क्रिया क्रियया

शिरीषेति—कुकूलविषशूलयोस्तुषाग्निविषाक्तशूलयोः समूहरूपः श्रीकृष्णविषयकानुरागज्वरः। सहजभावः स्वभावसिद्धप्रेमा। अत्र कोमलस्पर्शगुणेनानुरागज्वररूपगुणो विरुध्यते। संसारेति—निर्घृणः कृपारहितः। तथा श्रीकृष्णचरणारविन्दाश्रयणमात्रेण संसारज्वालाया मूलभूतस्य मनोघटितलिङ्गदेहस्य नाशं चकारेत्यहो तस्य कृपालुतेति

---

अस्य तथा प्रत्यनीकाधिकविषमाद्यलङ्काराणां विरोधभेदेन परिगणना प्राचां ग्रन्थेषु। चित्र-हेतुरलङ्कार इति राजानुसारिणः। अयमतिशयोक्तिप्रपञ्च इत्यपि केचित्। चतुर्थभेदातिशयोक्तिसामान्ये कार्य्यकारणयोः पौर्वापर्य्यविपर्य्ययः, इह तु तयोरेव वैयधिकरण्यमितीया-

पीयूषवीरुधो बीजमेकमेव ममान्तरे।
अङ्कुराः किममी तस्माद्बहवो विषवीरुधाम् ॥ १६६

अत्र कार्य्यभूतानामङ्कुराणां बहुत्वेन गुणेन कारणभूतस्य बीजस्यैकत्वं गुणो बाध्यते। पीयूषविषयोश्च कार्य्यकारणरूपत्वादिवैधर्म्यम्।

प्रेमबीजं परानन्दस्यन्दि रोपितमन्तरे।
तस्याङ्कुराः कुकूलस्य स्फुलिङ्गा इव दाहकाः ॥ १६७

अत्र कार्यस्य दहनक्रियया कारणस्य परमानन्दस्यन्दनक्रिया विरुध्यते।

**आधाराधेययोर्भूम्नोर्मिथस्तत्प्रतियोगिनो।**
**ततोऽप्यधिकभूमानौ स्यातां तदधिकं(५१) भवेत् (न)॥२०४का-**

अधिकनामाऽलङ्कारः। क्रमेणोदाहरणे—

अहो ते मनसः सुभ्रु! विशालत्वमिदं महत्।
त्रिलोक्यां यो न मात्येष यत्र माति रमापतिः ॥ १६८

अत्राधेयस्य भूयस्त्वेऽप्याधारस्य ततोऽपि भूयस्त्वम्।

यां वेद्मि यस्यां प्रतिरोमकूपं ब्रह्माण्डभाण्डानि समुल्लसन्ति।
तस्यां तनौ ते न ममौ मुकुन्द! तस्याः समालोकमहोत्सवोऽयम् ॥१६९

अत्राधारभूयस्त्वेऽप्यगाधेयस्य भूयस्त्वम्।

**अपकार्य्यापकारार्थमसमर्थेन तत्प्रियम्।**
**हिनस्ति यत्तदोयोक्तिः प्रत्यनीकं(५२) स्तवो यदि (न)॥२०५का--**

व्याजस्तुतिरपि ज्ञेया। अत्राश्रयणक्रिययोन्मूलनक्रिया विरुध्यते। बीजं प्रेम, तत्तु एकमेव, तस्याङ्कुरा विरहजन्यज्वालारूपा बहवः—एकस्य बीजस्य बहवोऽङ्कुरा न सम्भवन्तीति विरोधः, पीयूषविषयोरपि विरोधश्च।

भूम्नोः व्यापकयोः। तत्प्रतीति—आधारस्य प्रतियोग्याधेयः, आधेयस्य प्रतियोग्याधार इति। तथा चाधेयापेक्षया यदाधारो व्यापको भवति।अथवाऽधारापेक्षया यदाधेयो व्यापको भवति तदाऽधिकालङ्कारः। अत्राधेयस्य श्रीकृष्णस्य, आधारस्य राधिकामनसः।

---

नैव भेदः। त्रिविधोऽयमिति नवीनो मणिहारकारः। समाधिरिति—समाहितमिति संज्ञा वा, यत्र कार्य्यमङ्गेन समाधीयते स समाधिः। अत्रैकस्मिन्कारणागमस्य प्रधानत्वेन विवक्षा, इतरेषां तु गौणत्वेन। समिति—अस्य त्रयो भेदा रसगङ्गाधरे सूचिताः। विषम इति—अन्व-

अपकारिणोऽपकारासामर्थ्येन तत्प्रियस्य योऽपकारस्तदुक्तिः स्वरूपा यदि भवति तदा प्रत्यनीकम्। यथा—

माधुर्य्यमादाय तवाननेन कलङ्कसारो विहितः शशाङ्कः।
तेनैष राधे! तव वल्लभत्वादसन्निधाने तव मां हिनस्ति॥ १७०

**तुल्येन लक्ष्मणा स्तोकेनान्यद्यदि निगूह्यते।**
**सहजेनेतरेणापि त-(५३)न्मीलितमपि द्विधा(प)॥३०६का—**

एकेन वस्तुना अन्यद्वस्तु यदि तुल्येनास्तोकेन चिह्नेन निगूह्यते सहजेन स्वाभाविकेनेतरेणागन्तुकेन वा स मीलितनामाऽलङ्कारः। क्रमेणोदाहरणे—

स्वतश्चपललोहिते सुमुखि! राधिके! ते दृशौ
गतं सहजलालसं प्रकृतिमन्दमन्दं स्मितम्।
स्वभावमृदुवक्रता ललितमर्द्धमर्द्धं वचो
मदश्च मदनोऽथवा मधुमदश्च कैर्लक्ष्यताम्॥ १७१

सञ्जातकम्पोत्पुलकां हिमागमे स्नानोत्थितां कृष्णदृगन्तपातिनीम्।
शीतार्दिता भाववती नु वेति तां विज्ञाऽपि न ज्ञातवती सखीं सखी॥ १७२

पूर्वत्र सहजं, उत्तरत्रागन्तुकम्।

**स्थाप्यते खण्ड्यते वाऽपि पूर्वं पूर्वं परेण यत्।**
**विशेषणतया वस्तु सा द्विधैकावली(५४) भवेत् (प)॥३०७का—**

माधुर्य्यमिति—हिनस्ति, विच्छेदे चन्द्रस्योद्दीपकत्वेन पीड़ाकरत्वं ज्ञेयमिति भावः। स्वत इति—अत्र च स्वभावसिद्धेन महता नेत्रस्य चाञ्चल्येनारुण्येन च यौवनमत्तताऽदिजन्यत्वं

---

र्थेयं संज्ञा। एतदतिरिक्ता असम्भवाद्यलङ्काराः प्रपञ्चायितानीति बहुभिर्न गण्यन्ते। अधिक इति—अतिशयोक्तिद्वितीयभेदा विशेषत्वात्तदन्तर्भुक्तोऽयमिति केचिदाधुनिकाः—परमाधाराद्या धिक्यकृतशोभाऽधायकत्वादस्य विशेष इति सर्वं स्वस्थम्। अल्पमित्यलङ्कारः 'अल्पन्तु सूक्ष्मादाधेयादाधारस्यातिसूक्ष्मते'ति लक्षितः कैश्चित् स्वीक्रियते। प्रत्यनीकमिति-लौकिकन्यायमूलोऽलङ्कारनिर्द्देशो वैचित्र्यात्। 'यथाऽनीकेऽभियोज्ये तत्प्रतिनिधीभूतमपरं मूढतया कश्चिदभियुङ्क्ते तथेह प्रतियोगिनि विजेये तदीयोऽन्यो विजीयते इत्यर्थ' इति संज्ञाऽन्वर्थता मम्मटभट्टैः प्रतिपादिता। यदस्य पञ्च भेदाः कैश्चिद्दर्शितास्तत्प्रदर्शनमात्रम्।

(प) मीलितम्—अत्र निगूहनन्तु बलीयस्तया—तेन सामान्यालङ्कारद्भेदः सुप्रकः। एका-

परग परयेत्यर्थः । क्रमेणोदाहरणे—

यस्यां रजन्यः समणिप्रदीपा: मणिप्रदीपाश्च रतेऽप्यहार्याः ।

रतञ्च कृष्णप्रणयैकसारं कृष्णश्च सर्वाङ्गबलासु तुल्यः ॥१७३ अत्र स्थापनम् ।

प्रीतिर्न सा प्रेति न या परं जनुर्न तज्जनुर्यन्न महाकुलोद्भवम् ।

महाकुलं तच्च न यत्र वैष्णवं न वैष्णवः सोऽपि न यो व्रजप्रियः ॥ १७४

अत्र खण्डनम् ।

**पूर्वानुभूतस्मरणं तत्समाने विलोकिते ।**

**स्मरणम् (५५) (प)— ३०८का—**

बिसखण्डकलमेकमदता विलोलदीर्घं रथाङ्गयुगलेन ।

छिन्नार्द्धहारराधास्तनघटयोः स्मारितः कृष्णः ॥ १७५

**भ्रान्तिमां(५६)-स्तद्धीरतस्मिन् साम्यभाजि यत् (प) ॥ ३०९का**

साम्यं सादृश्यम् । यथा—

तापिञ्छद्रुममञ्जरीति नखैश्छित्वा श्रुतौ कुर्वते

यां काश्चित् कबरीभरे कुवलयश्रेणीति यां काश्चन ।

गाहन्ते कुलसुभ्रुवोऽपि यमुनावन्येति यामङ्गने

कृष्णस्य व्रजरञ्जनी जयति सा तेजस्तरङ्गावलिः ॥ १७६

संवृत्तं बभूव । मत्तस्याप्येवं भवति । एवमुत्तरत्रापि ज्ञेयम् । संजातेति—स्नानादुत्थिते नागन्तुकेन कम्पेन श्रीकृष्णदर्शनजन्यः कम्प आवृतो बभूव । बिसेति—अत्र म्दृणालखण्डदर्शनेन छिन्नार्द्धहारस्य स्मरणं, चक्रवाकद्वयदर्शनेन स्तनयोः स्मरणं ज्ञेयम् ।

---

वलीति—एकावली हारः, तद्वदत्रापि विशेषणानां मालाऽकारेण ग्रथनम् । स्मरणमिति—सादृश्यस्मृतिमूलकोऽयं, न केवलं स्मृतिमात्रं मनोवृत्तिमयमुल्लासनम् । तेनाविच्छित्तिवाहिनि वाक्यमात्रे नातिव्याप्तिः । भ्रान्तिमानिति—अत्रापि सादृश्यमूलता बीजम् । भ्रान्तिरत्र प्रतिभोत्था सादृश्यकल्पितैव ग्राह्या, न खरसोत्या, शुक्तिकायां रजतमिति वदिति सम्प्रदायसिद्धान्तः । प्रतीपमिति—प्रतिकूलवर्त्तित्वादियं संज्ञा । प्राचश्चैतमुपमाभेदेऽन्तर्भावयन्ति, 'यथाकथमिदि'त्यादि तल्लक्षणानां सावसरत्वात् । नात्रोपमानोपमेयगतसादृश्य एव तात्पर्यं, परन्तूपमानतिरस्कारमुखेन व्यतिरेकालङ्कारविलक्षणरूपेण प्रातिकूल्यस्थापने, तत् सुस्थितोऽयमिति ।

**साध्यसाधनसद्भावेऽनुमान-(३८) मनुमानवत् (द)। २९० का—**

अनुमाने यथा त्रिविधो हेतुस्तथाऽत्रापि । यथा—

इन्दीवराक्षि ! भवदक्षि मनोभवस्य बाणः सुधांशुमुखि ! मानसभेदकत्वात् ।
येनाहतो मनसि गोकुलराजसूनुः सन्धुक्षते न हि बहिः कुरुतेऽवहित्थाम् ॥१४५

अत्र 'भवदक्षि' पक्षः, "मनोभवस्य बाण" इति साध्यं,'मानभेदकत्वा'दिति हेतुः ।

यथा वा—

नाभीगृहं तव कलावति ! मन्मथस्य लीलाऽग्निहोत्रभुजदर्पकृशानुशालि !
एतद्वलग्नगगनाञ्चलचुम्बिचारुगन्धोल्लसत्तनुरुहावलिधूमहेतोः ॥१४६

अत्र रूपकगर्भमनुमानम् ।

**विशेषोक्तिः परिकरः(३९)स्यात् साकूतैर्विशेषणैः (द)॥ २९१का—**

यथा— आत्मारामैर्विगतहृदयग्रन्थिभिर्मुक्तबन्धै—
देहाध्यासप्रशमशमिभिर्ब्रह्मभूयं व्रजद्भिः ।

स्थापनार्थमुचितपदे योग्यस्थाने किं त्वयाऽखिलं न्यस्तम् ? श्रीराधाया मानभङ्गार्थमुद्यतं श्रीकृष्णं प्रति ललिताऽऽह—एकस्मिन्निति। तादृशी गुणबहुला राधिका कथं विशतु ? गौरवे बहुवचनम् । इन्दीवरेति—सन्धुक्षते जीवति । हे सखे ! श्रीकृष्ण ! कथम्भवान्मत्त इव दृश्यते इति सखीभिः पृष्टोऽपि बहिरवहित्थमाकारगोपनं करोति,नतु तत्त्वं कथयति । कलावत्या नाभी एव मन्मथस्य गृहमिति रूपकं तदेव पक्षः। सम्भोगलीलैवाग्निहोत्रं, श्रीकृष्णस्य भुजदर्प एव तादृशाग्निहोत्रस्य कृशानुरग्निः, स एव साध्यम् । एतस्याः कलावत्या वलग्नो मध्यदेशः, "वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयो"रित्यवस्याकारलोपः । स एवात्यन्तक्षीणत्वेन गगनप्रदेशस्तत्सम्बन्धिनी चारुगन्धेनोल्लासाल्लोमावलिरेव धूमः स एव हेतुः । तथा च याज्ञिकब्राह्मणा यथा गृहादुत्थितं गगनप्रदेश उड्डीयमानं सुगन्धधूमविशेषं हेतुत्वात्याग्निहोत्रीयवह्नेरनुमानं कुर्वन्ते तथा सख्योऽपि नाभिरूपगृहादुत्थितं मध्यदेशरूपगगनस्पर्शिसुगन्धरोमावलीरूपधूमविशेषं हेतुत्वाय (17) सम्भोगाग्निहोत्रीयस्य भुजदर्परूपवह्नेरनुमानं कुर्वन्तीति ।

---

लङ्कारः (प्राचीनानां हेत्वलङ्कारो वा) इतो मिथश्च कुत्रापि भिन्न एव—परं जगन्नाथविश्वेश्वरप्रभृतिभिराद्यस्यातिशयोक्तिभेदतया कथनं प्राचीनमर्यादानियन्त्रणामूलमिति युक्तिसूक्तयो बहवः । परिकर इति—अत्र विशेषणानां प्रतीयमानार्थगर्भीकारेण तात्पर्यं बन्धसन्दर्भरूपेनेव शोभाऽतः सार्थकं संज्ञाकल्पनम् । विशेष्यस्य साकूताभिधाने परिकराङ्कुराख्योऽ-

---

17) 'हेतु' मत्त्वे'ति (ग) (ङ) पुस्तकयोः पाठः ।

**प्रस्तुतस्याप्रस्तुतेन गुणैकत्वविवक्षया ।**

**ऐक्यं निबध्यते योगाद्यत् सामान्यं(५८) तदिष्यते ॥३११ का—**

राधे ! तड़िद्गोरि ! तवैष गण्डयोः कर्णान्तलम्बी नवकेतकीच्छदः ।

न सौरभेणापि गतो विभिन्नतां मधुव्रतेनैव विविच्य बोधितः ॥ १८२

अथवा—द्विरदरदनक्लृप्ते चारुपर्य्यङ्कराजे क्लृतकशिपुनि तल्पे मल्लिकापत्त्रिकाभे ।
शशिमहसि निदाघे प्राङ्गने निर्वितानि जयति निरवलम्बस्वापशालीव कृष्णः ॥

**आधारस्य प्रसिद्धस्याभावेऽप्याधेयदर्शनम् ।**

**एकस्य युगपद्वृत्तिरनेकत्र स्वरूपतः ॥**

**एकस्यैवातिचित्रस्य वस्तुनः करणेन हि ।**

**तत्सामान्यान्यवस्तूनां करणं स भवेत्त्रिधा ॥**

**विशेषः (५९) (फ) —३१२का**

येन प्रयत्नेन चित्रवस्तुकरणारम्भस्तेनैव प्रयत्नेन तथाविधाशक्यवस्त्वन्तर-मप्यारभत इति केचित् (फ) । क्रमेणोदाहरणानि—

लोकान्तरान्तः सुहृदां गतानां गिरश्च रूपाणि च केलयश्च ।

तथैव सन्तीह सुहृज्जनानां मनस्यहो सौहृद ! ते प्रभावः ॥ १८४

अत्र प्रसिद्ध आधारः सुहृदेव, तदभावेऽप्याधेयानां रूपादीनां स्थितिः । नायं विरोधः, पूर्वदेकविषयत्वाभावात् । द्वितीयो यथा—

राधे इति—गण्डकेतकीपत्रयोः सुगन्धत्वेन केतकीच्छदो न भिन्नतां प्राप्तः किन्तु भ्रमरेणैव गण्डस्थलात् केतकीपत्रं भिन्नमिति विविच्य बोधितः । तथा च पूर्वानुभूते कर्णस्थोत्पले पतितुमागतो भ्रमरः पश्चात् कर्णस्थकेतकीपत्रगन्धेनान्धः सन् पलायितः, तद्दृष्ट्वा सर्वेषामिदं केतकीपत्रमिति ज्ञानं जातमिति भावः । केतकीगन्धो भ्रमरस्यासह्य इति सर्वत्र प्रसिद्धिः । प्रस्तुतस्य गण्डस्थलस्याप्रस्तुतेनागन्तुकेन सह योगात् पीतवर्णरूपगुणैकत्वविवक्षयैक्यं वर्णितम् । द्विरदेति—प्राङ्गनस्य शय्यानाञ्च सर्वेषां श्वेतत्वेनैक्यात् निरवलम्बस्वापशालीव तथा च सर्वश्वेतत्वेन रदादीनां विशेषज्ञानाभावात् श्रीकृष्णः शून्यप्रदेशे स्वपितीति बुध्यते इत्यर्थः । मल्लिकायाः श्वेतपुष्पैः क्लृप्तः कशिपुस्तूलिका यत्र तथाभूते । केचिदिति—केषाञ्चिन्मते येन प्रयत्नेनेत्यादिलक्षणाक्रान्तस्तृतीयभेदो विशेषनामाऽलङ्कारः ।

---

प्रतिसन्धाने तात्पर्य्यमपरत्र शिरोद्घाटने वैशिष्ट्यसाधने वेत्यन्वर्थता संज्ञायाज्ञेया । वक्रोक्तिः

राधाऽग्रतश्च परतोऽपि च पार्श्वतश्च श्रोत्रे च चक्षुषि च वाचि च मानसे च।
केनाध्वनैष मदनो हृदि मे प्रविश्य मां हन्ति हन्त किमियं न निराचकार॥१८५
अत्रैकस्यैव वस्तुनो युगपदेवानेकत्र स्थितिः।
तृतीयो यथा—आनन्दो निधिरसतं ह्रीः श्रीर्विद्या धृतिः पुष्टिः।
अनुकूलेन हि विधिना त्वां ददता मे न किं दत्तम्॥१८६

करणेन इति करणमत्र क्रियामात्रं, नतु निर्माणमेव। तेन 'प्रतिकूलेन किं हि विधिना त्वं हरता हन्त किं न हृतम्' 'अतिनिपुणेन हि विधिना त्वां सृजता भुवि न किं सृष्ट'मित्यादीन्यपि। सर्वत्र चैवंविधेषु स्थलेषु वक्रोक्तिरेवान्तर्भूता (फ)। तथापि किञ्चिद्वैलक्षण्यमाश्रित्य भेदः क्रियते। वस्तुतस्तु सर्वेष्वेवालङ्कारेषु वक्रोक्तिरेव वैचित्र्यकारिणी, यथोक्तं 'वक्रोक्तिः काव्यजीवितम्' (फ)। अन्यैरप्युक्तम्—वक्रोक्तिरेव काव्यानां सर्वालङ्कारमार्जिका।
तस्मादेव प्रयत्नेन सम्पाद्या कविपुङ्गवैः (फ)॥

—स्वगुणं त्यक्त्वा परगुणस्य समीपगम्।
तस्यैव गुणमादत्ते यद्वस्तु स्यात् स (९०)तद्गुणः॥२१२का-

यथा—बिम्बाधरोष्ठमहसा समुदित्वरेण वर्णान्तरे लसति दाड़िमबीजबुद्ध्या।
नासाऽवलम्बि गजमौक्तिकमुल्लिलेख खेलाशुकः करमुपेत्य स राधिकायाः॥१८७

लोकान्तरेति—अत्र विरोधालङ्कारो सम्भवति। परलोकगतसुहृदामेतल्लोकगतनसुहृज्जनमनसाञ्च भिन्नत्वान्न दोषः। आनन्द इति—एवं सति अत्राङ्ग,तवस्तुनो दानक्रियायै तत्सामान्यस्यैव दानक्रियासिद्धिः। एतच्च 'त्वां हरते'त्यनेन तद्धरणरूपक्रियया सर्वेषां हरणक्रियासिद्धिः। ननु त्रिविधविशेषालङ्कारस्थले सर्वत्र वक्रोक्तिनामाऽलङ्कार एव सम्भवति, किमत्र स्वतन्त्रालङ्कारकरणेनेति—तत्राह—सर्वत्रेति। किञ्चिद्वैलक्षण्यं स्वीकृत्य विशेषनामाऽलङ्कारः कृतः। वक्रोक्त्यलङ्कारः (19) सर्वेष्वेवालङ्कारेषु वर्त्तते, अतोऽत्र न दोष इत्याह।
बिम्बेति—राधिकाया नासावलम्बिगजमौक्तिके वर्णान्तरे लसति सति खेलाशुको

---

काव्यजीवितम्—एतच्च भामहमतानुसारिणामलङ्कारमाहात्म्यवादिनामलङ्कारप्राणभूतविच्छित्तिमद्योतनम्। उक्तमिति—आपाततो वक्रोक्तिपदेन स्वभावोक्तिः प्रतिषिध्यते—यदाहुः प्राचः, 'भिन्नं द्विधा स्वभावोक्तिर्वक्रोक्तिश्चे ति वाङ्मय'मिति। परं वक्रोक्तिजीवितकारेण कुन्तकेन वैदग्धीभङ्गिभणितिपरपर्यायाया अस्याः सारवत्वं व्यापकत्वञ्च यथोपयोगं सविस्तरञ्च

---

(19) एवं (ख) पुस्तके। "अधुना वक्रोक्त्यलङ्कार" इत्याद्यन्येषु।

**न गृह्यते यदि गुणस्तस्य स स्यादतद्गुणः(६१) ॥३१४ का—**

यथा—सदाऽनुरक्तो मनसीह वर्त्तसे तथाऽपि च त्वं न दधासि रक्तताम्।
सदाऽनुषक्तं त्वयि नाथ! कृष्ण! हे मनोऽपि मे नैव बिभर्त्ति कृष्णताम् ॥१८८

यथा वा—क्षीरोदधिजठरभवः सहजन्मा कालकूटस्य।
तदपि च न सितो न शितिः कौस्तुभ एकः स्वभावतो रक्तः ॥१८९

**यद्वस्तु साधितं येन करणेन तदन्यथा।**
**तेनैव यदि तस्य स्यात्तदा(फ) व्याघात(६२) इष्यते ॥ ३१५का-**

यथा—सन्तापयास य एव चित्तं स एव भूयः शिशिरीचकार।
न कालकूटो न सुधातरङ्गः स कीदृशः केशिकृषः कटाक्षः ॥ १९०

**उपमाऽदय एतेऽमी व्याघातान्ता क्रमेण हि।**
**द्विषष्टिसंख्या एवैतेऽलङ्कारा बहवः पुनः ॥**
**संसृष्ट्या सङ्करेणापि (ब) भूयः संसृष्टिरप्यसौ।**
**क्रियाशब्दार्थोभयभूः सा क्रमेण प्रदर्श्यते ॥ ३१६का—**

शब्दः शब्दालङ्कारः, अर्थोऽर्थालङ्कारः, उभयं शब्दार्थालङ्कारः—एते त्रयः क्रियाप्रधाना इत्यर्थः। एतेषामन्योन्यनिरपेक्षत्वेन विशकलिततयाऽवस्थानं संसृष्टिः। तत्र शब्दालङ्कारसंसृष्टिर्यथा—'सुरतरु'रित्यादौ (९म किरणे १२श श्लोके) यमकानुप्रासयोः। अर्थालङ्कारसंसृष्टिर्यथा—

आलुम्पतीव परितो मनसः प्रसादमालुञ्चतीव पदवीं नयनद्वयस्य।
उद्वेलकज्जलमहोदधिवद्गभीरो मोहोऽन्धकार इव मोह इवान्धकारः ॥ ९१

गृहस्थपालितः शुको मौक्तिकसुम्लिलेख स्वचञ्चोल्लिखितश्लोकारेत्यर्थः। उद्वेल उन्नततीर-मर्य्यादः कज्जलमहोदधिः श्याससमुद्रस्तद्वद्गभीरो मोहोऽन्धकारश्च। मोहो विषयेऽत्यासक्तिः अन्धकारश्च मनसः प्रसादं लुम्पतीव, मोहे सति मनसः प्रसादलोपो भवति, तथाऽन्धकारेऽपि सर्पवृश्चिकाद्यागमनशङ्कया मनसः प्रसन्नता न तिष्ठति। एवमन्धकारे नेत्रद्वयस्य पदवीलोपा-ज्जनोऽन्धो भवति, तथा मोहे सति विषयेन जनोऽन्धः सन् पुरः सतोऽपि साधून्न पश्यति, दक्षपार्श्वे यममपि न पश्यतीति भावः।

---

निरधारि स्वग्रन्थे। अत्र 'वक्रोक्ति'पदेन तदाख्यालङ्कारविशेषपरिग्रहं मन्यमाना अर्वाचीनास्तु

अत्रोत्प्रेक्षासमासगाऽन्योन्योपमाऽदिभिः संसृष्टिः(ब)। शब्दार्थालङ्कारयोः संसृष्टिर्यथा 'मेघे माघवने मणावपी'त्यादौ (५म किरणे ३य श्लोके) अनुप्रासविरोधौ ।

## सङ्करस्त्वङ्गाङ्गिभावः (ब)—३१७का—

एषामलङ्काराणामङ्गाङ्गिभावः सङ्करः। स चानुग्राह्यानुग्राहकभावेन। यथा— कपोलयोः कुण्डलपद्मरागमयूखबिम्बं व्रजराजसूनोः।

खचुम्बलग्नाधररागबुद्ध्या स्ववाससा लुम्पति काऽपि मुग्धा ॥१९२

अत्र तद्गुणोऽङ्गी, भ्रान्तिमानङ्गम—उभयोरनुग्राह्यानुग्राहकभावेन सङ्करः। यथा वा—निरस्य करलीलया तिमिरनीलचेलाञ्चलीं

रथाङ्गमिथुनस्तनावपि निपीड्य जातस्मितः।

क्रियेव निमिषत्कुशेशयदृशं सरागां प्रियः

प्रियामिव सुधाकरो हरिहरिद्वधूं चुम्बति ॥ १९३

अत्र रूपकमुत्प्रेक्षा श्लेष उपमा समुच्चयश्चेति परस्परमङ्गाङ्गितयैव पञ्चालङ्काराः। तथाहि तिमिरस्य नीलचेलत्वारोपाद्रूपकं, 'क्रियेवे'त्युत्प्रेक्षा, 'करलीलये'ति श्लेषः, 'प्रियः प्रियामिवे'त्युपमा, 'निरस्य' 'निपीड्येति' समुच्चयः। एषु यो मुख्यः सोऽङ्गी, अन्येऽङ्गानि। एवं शब्दालङ्कारपक्षेऽपि। यथा—'ससार से'त्यादौ (७म किरणे ४२ श्लोके) यमकानुप्रास-द्व्यक्षर-मुरजबन्ध-गोमूत्रिकाबन्ध-बद्धकवाट-मुक्तकवाट-शृङ्खलादयः।

कपोलयोरिति—कुण्डलस्थितपद्मरागस्य रक्तिमानं कपोलौ गृह्णात्यतस्तद्गुणालङ्कारः, तादृशरक्तिम्नि मुग्धायाः स्वीयाधररागस्य भ्रान्त्या भ्रान्तिमानलङ्कारः।

निरस्येति—हरिद्हरित् पूर्वदिगेव वधूस्तां चुम्बति। अन्यो नायकः मस्तकस्य पटं दूरीकृत्य चुम्बति, चन्द्रोऽपि सन्ध्याकालीनान्धकाररूपनीलचेलाञ्चलीं किरण एव करस्तस्य लीलया निरस्य चुम्बति। ज्योत्स्नैव चन्द्रस्य स्मितम्। अन्या नायिका चुम्बनसमये मुद्रितनेत्रा भवति, इयमपि चन्द्रदर्शनान्मुद्रितकुशेशयं कमलमिव लज्जया मुद्रिता दृक्

---

भ्रान्ता एव। बिम्बाधरौष्ठेत्यादि—अत्र कवेः कमलाकरस्य 'तव करकमलस्थां स्फाटिकीमक्षमाला'मित्यादिः साहित्यकौमुदीधृतः श्लोकस्तुलनीयः। व्याघात इति—लौकिकन्यायमूलकोऽयं—नात्र विरोधालङ्कारसंस्पर्शः कथमपि कल्पनीयः,तस्य युगपज्ज्ञापने तात्पर्यवत्वात्,

—बहूनां वा द्वयोश्च वा।

सहावस्थानबाधेन भवेन्नो वेत्यनिश्चये।

सङ्करोऽनिश्चयाख्यः स्याद्यथास्थानं प्रदर्श्यते॥ ३१८का—

द्वयोर्बहूनां वाऽलङ्काराणां सहावस्थानबाधेनायं भवेन्नवेत्यनिश्चयेऽनिश्चयाख्यो द्वितीयः सङ्करः। यथा—

यथाऽनन्दस्यन्दी दृशि दृशि यथाऽयं बहुकलो
यथा नक्षत्राणां पतिरपि यथा तापहरणः।
यथाऽयं भानोरप्युपरि परिसर्त्ता कथमहो
तथा नायं धाता विधुरनिशपूर्णो विरचितः॥१८४

अत्र विशिष्यस्य चन्द्रस्य प्रस्तुतस्य श्लिष्टैरेव विशेषणैरप्रस्तुतस्य कस्यचिद्धर्मस्य प्रतीतिरूपा किं समासोक्तिः, किं वा तरैव चन्द्रस्याप्रस्तुतस्य शंसनमुखेन कस्यचित् साधोस्तथाविधस्य क्षीणत्वादिधर्मस्य प्रस्तुतत्वप्रत्यायिन्यप्रस्तुतप्रशंसेति निश्चयाभावादनिश्चयसङ्करः (व)। यत्रानुकुलता प्रतिकूलता वा स्फुटतया स्फुरति तत्र निश्चयान्न (व)। अनुकूलता साधकत्वं, प्रतिकूलता बाधकत्वम्। यथा— इदं ते रदनद्योतैरैतैरुपचितं स्मितम्!
ज्योत्स्नेव मुखचन्द्रस्य काममामोदकं दृशोः॥ १८५

अत्र प्रधानतया स्मितं मुख एवानुकूलं न तु चन्द्रे। तेनोपामयाः साधकं न रूपकस्य—अतो मुखचन्द्रस्येति रूपकं न भवति। तेन न सन्देहः, तदभावात् सङ्करोऽपि न।

अहो बत महत्वस्य धृष्टताऽभीरुताऽपि च।
मुखचन्द्रे सत्ययन्ते यदन्यश्चन्द्र उद्गतः॥ १८६

यथास्यात्तथाभूता। यथानन्देति। भानोः सूर्य्यस्याप्युपरिभ्रमणकर्त्ता, सूर्य्यमण्डलस्याप्युपरि चन्द्रमण्डलमिति पञ्चमस्कन्धोक्तेः (व)

एतैरेव रदनद्योतैर्दन्तकिरणैरुपचितं प्रशोभातिशयं प्राप्तं स्मितं दृशोरामोदजनकम् यत्रोपमानोपमेययोर्द्वयोरतिशयाभेदात् भेदज्ञानं न भवति तत्र रूपकमलङ्कारः। अत्र तु स्मितरूपधर्मेण मुखचन्द्रयोर्भेदज्ञानान्न रूपकं किन्तु गर्कांशेन यथा कथञ्चित् सादृश्या-

(व) संसृष्ट्या सङ्करेणापीति—नात्र सङ्करस्य संसृष्टेर्वाऽलङ्काररूपेण पृथग्गणना यथा

अत्रान्यत्वं चन्द्रस्यानुकूलं, न तु मुखस्य, तस्य प्रतिकूलमेव ; तेन रूपकस्य साधकं, न तूपमायाः, तस्यास्तु बाधकम् ।

शास्त्रभास्करं संज्ञा तामालिङ्गति सर्वदा ॥ १९७

इत्यत्रालिङ्गनमुपमाबाधकं, नहि सती स्त्री पतिसदृशेऽनुरज्यति, अतो रूपकस्यैव साधकम् ।

कृशोदरि ! मुखेन्दुस्ते स्फुरत्कनककुण्डलः ।
दृशोरकृशमानन्दमुल्लासयति मे भृशम् ॥ १९८

अत्र स्फुरत्कनककुण्डलत्वमिन्दौ प्रतिकूलम् असम्भवादिति रूपकस्य बाधकम्, उपमायास्तु साधकमिति न सङ्करः । एवमन्यदप्यूह्यम् ।

**एकत्र विषये व्यक्तमुभयालङ्कृतिर्यदि ।**
**तदाऽपरः सङ्करः स्यादिति त्रिविध एव सः(ब) ॥२१९का—**

यथा—शैवाललक्षणविलक्षणलक्ष्मलक्ष्मीरुद्दण्डरश्मिबिसमण्डलमण्डमानः ।
मग्नश्चिरं हरिहरित्सरसीरसेभ्यः प्रत्युन्ममज्ज शनकैरमृतांशुहंसः ॥१९९

अत्र रूपकानुप्रासावेकपदविषयौ, नतु संसृष्टिवत् पृथग्विषयौ—इति त्रिविधः सङ्करः । तेन शब्दालङ्कारोऽर्थालङ्कार उभयालङ्कारश्च संसृष्टिसङ्करत्वेन बहुत्वेन बहुविधा भवन्ति । तथाहि—

दुपमाऽलङ्कार एव । अहो इति अत्र मुखचन्द्रयो र्भेदास्फूर्त्या रूपकालङ्कारः । अन्यः मुखभिन्नश्चन्द्र उन्नत इत्यत्र मुखचन्द्रयोरत्यन्तभेदान्न साहृश्यम्, अतो नोपमाऽलङ्कारः ।

संज्ञा सम्यक् ज्ञानरूपा स्त्री शास्त्ररूपम् भास्करं सूर्य्यं त्वामालिङ्गति । अत्र शास्त्रसूर्य्ययोः रूपकमेव नोपमा । अत्र कारणमाह—नहि सतीति । सन्ध्याकाले पूर्वदिशः सकाशादुन्नक्रान्तं चन्द्रं वर्णयति—शैवालेति । हरिहरित् पूर्वदिक् सैव सरसी तस्या रसेभ्यो जलेभ्यश्चन्द्ररूपो हंस उन्ममज्ज । आदौ चिरं कालं वाप्यां सरोवरजले निमग्नः पश्चात्तस्मादुन्नत इत्यर्थः । अन्यो हंसः शैवालमृणालाभ्यां शोभितः सन् सरोवरान्निर्गच्छति, अयन्तु शैवालस्वरूपं विलक्षणं लक्ष्म चन्द्रनिष्ठकलङ्करूपचिह्नं तस्य लक्ष्मीः शोभा यस्य तथाभूतः । एवमुद्दण्डरश्मय एव बिसमण्डलं मृणालसमूहस्तेन मण्डमानश्चन्द्रः ।

---

तत्र बहुषु निबन्धेषु । तिलतण्डुलन्यायेन संसृष्टिः क्षीरनीरन्यायेन सङ्कर इति साम्प्रदायिकाः । सङ्करस्य भेदनिर्देश आधुनिकैर्दर्शितः । सूर्य्यमण्डलस्योपरीति—तथा च श्रीमद्भागवते (५।२२।८) 'एवं चन्द्रमा अर्कगभस्तिभ्य उपरि लक्षयोजनत उपलभ्यमान' इत्यादि । अनिश्चय-

शब्दालङ्कृतयः शुद्धास्त्रिचत्वारिंशदीरिताः (४३) ।
ताः परस्परसंसृष्ट्या तावता गुणनेन हि ॥
षड्विन्दुवसुचन्द्राः (१८०६) स्युश्चित्रं चेत्तत्र गण्यते ।
तदा तस्य बहुत्वेऽपि स्यादैक्यन्त्वेन तद्युतौ ।
मुनिबिन्द्विभचन्द्राः (१८०७) स्युः सङ्करेण द्विधा पुनः ।
चन्द्रपक्षाब्धिबाणाः (५४२१) स्युः शब्दालङ्कारसंग्रहे ।
अर्थालङ्कृतयः शुद्धा (६२) द्विषष्टिस्तत्प्रभेदतः ।
अश्वनागशशाङ्काः (१८७) स्युस्तावता गुणनेन ते ॥
इतरेतरसंसृष्ट्या षड्र्त्तुग्रहसिन्धुभिः ।
युतोऽग्निरेखे च (३४९६९) पुनः सङ्करेण त्रिरूपिणा ॥
अश्वबिन्दुग्रहाम्भोधिबिन्दुचन्द्राः(१०४९०७) प्रकीर्त्तिताः ।
शब्दालङ्कारसंसृष्ट्या वाजिसिन्धुमतङ्गजैः ॥
बिन्दुवाजीभषड्बाणा(५६८७००८४७)उभयालङ्कृतिग्रहाः ॥३२०
रसवत्-प्रेय-ऊर्ज्जस्वि-समाहितसमाख्यया ।
रसालङ्कृतयोऽपरान्यास्चतस्रो रसपोषिकाः (भ) ॥३२१का—

यत्र रसे स्फुटतया शब्दालङ्कारोऽर्थालङ्कारो वा निर्णेतुं न शक्यते केवलं रससामग्री स्फुरति तत्र रसालङ्कारा एव बोद्धव्याः । ते च यथायोग्यमेव सम्भवन्ति । शृङ्गारे प्रेयः, उर्ज्जस्वी वीरबीभत्सरौद्रेषु, अन्यावन्येषु (भ) । एतेऽपि सति सम्भवे शब्दार्थालङ्काराभ्यां संसृष्टौ बहवो भवन्तीत्यपि ज्ञेयम् ।

रसवदिति—ते चतस्रो रसालङ्काराः पूर्वोक्तद्विषष्ट्यलङ्कारभिन्ना ज्ञेयाः । अन्यौ रसवत् समाहितौ अन्येषु रसेषु ज्ञेयौ ।

---

सङ्कर इति—साधकबाधकप्रमाणैर्निश्चयाभावे तथा । त्रिविध एव स इति—एवमप्युक्तनयेन त्रैविध्यमिति नवीनाः । द्वैविध्यं पुनर्दण्डिप्रभृतिभिरस्य स्वीकृतम्, अनिश्चयाख्यसङ्करस्य तेषां निबन्धेष्वपरिग्रहात् न तदन्याय्यम् । उभयालङ्कृतिग्रहा इति—एतच्च गणिते प्रावीण्यमावि-

**अथैषां कथ्यते दोषः—३२२का—**

एषां शब्दार्थालङ्काराणाम्।

**—वैफल्यं वृत्त्ययोग्यता।**

**प्रसिद्धेश्च विरुद्धत्वमनुप्रासे मलत्रयम् ॥३२३का—**

मलो दोषः। क्रमेणोदाहरणानि—

द्वन्द्वं द्वन्द्वं वादयद्दुन्दुभीनां नन्दद्वृन्दं व्योम्नि वृन्दारकाणाम्।

हर्षोत्कर्षान्नाकमाकन्दवर्षैः सान्द्रानन्दं नन्दसूनुं ववन्दे ॥ २००

अत्र 'माकन्द'शब्दो निष्फलः। अत्रैव 'हर्षोत्कर्षादिन्दुकुन्दद्युतीना'मिति पाठे सर्वेषां देवानां शुक्लत्वमप्रसिद्धम्। तेन 'शीधुस्यन्दामन्दमन्दारवर्षै'रिति न्याय्यः पाठः।

वृत्तिविरोधो यथा—प्रकाण्डभुजदण्डोऽयं पुण्डरीकेक्षणः क्षणी।

कुण्डलोद्भासिगण्डश्रीः स्त्रीमण्डलममण्डयत् ॥ २०१

अत्र शृङ्गाररसे या वृत्तिस्तत्रायोग्यत्वम्।

**पादत्रयगतत्वेन यमनं यमकस्य तु।**

**अप्रयुक्ततया दोषः—३२४का—**

वैफल्यमपुष्टार्थत्वम् (म)। वृत्त्ययोग्यता प्रतिकूलवर्णन्यासः। प्रसिद्धिविरुद्धत्वं स्पष्टम्। असुरवधानन्तरं देवानां श्रीकृष्णे भक्तिमाह—द्वन्द्वमिति। नाकमाकन्दवर्षैः स्वर्गीयाम्रफलानां वर्षैः सहेत्यपुष्टार्थत्वेन व्यर्थोऽयं प्रयोगः। शीधुस्यन्देति—एवं सति देवैर्यथा दुन्दुभिवादनं कृतम्, एवं वन्दनं कृतं, तथा पारिजातपुष्पवृष्टिरपि कृतेति भावः।

क्षणीति—क्षणोऽवसरस्तद्वान् स्त्रीमण्डलैः सह विहारे प्राप्तावसर इत्यर्थः। वृत्तिर्माधुर्यव्यञ्जकपदन्यासः। अयोग्यत्वमिति—ओजोगुणार्हवर्णन्यासात्। समाना मान-

व्यक्तुंकामानामतिसूक्ष्मधियामुपस्कृतमिति प्रागेव ध्वनिकिरणटिप्पणेऽस्माभिर्मनाक् सूचितम्। शब्दालङ्कृतीनां भेदगणनयैव त्रिचत्वारिंशदिति संख्याऽयाति, तद्यथा सप्तमकिरणोद्दृङ्कितरीत्या वक्रोक्तौ २ भेदाः, अनुप्रासे ६ भेदाः, यमके २० भेदाः, श्लेषे ६ भेदाः, चित्रे प्रतिलोमानुलोमपादादिरेकः, सर्वतोभद्रादिरेकः, छत्रादिबन्ध एकः, एकाक्षरादिपाद एकः, श्लोकान्तरगर्भ एकः—इति ५ भेदाः, पुनरुक्तवदाभासे १ भेदः—साकल्येन ४३ भेदाः। एवमप्यर्थालङ्कारगणनायाम्। गुणनेनानयने उपरिदर्शितैव संख्येति सर्वं स्वस्थम्। परं कारिकाग्रन्थे 'बिन्दुवाजीभषड्'त्यादिस्थाने 'द्विबिन्दूब्धीभषड्'त्यादि गणनाविशुद्धेः पठनीयम्।

यथा—राधेव सौभाग्यविधौ समाना न काऽपि तस्या रमणी समाना ।
मयूखजालेन हि हीरकाणां भवन्ति मुक्तारुचयः समा ना ॥२०२

—उपमायान्तु हीनता ।
आधिक्यं च भवेज्जातिप्रमाणाभ्यां तदाऽपि सः ।
लिङ्गस्य वचनस्यापि कालस्य पुरुषस्य च ।
विध्यादेरपि भेदे चासाम्यासम्भाव्ययोरपि (म)॥३२५का—

क्रमेणोदाहरणानि—

देवोऽयं पुष्पकोदण्डश्चण्डाल इव दारुणः ॥ २०३

अत्र जात्या हीनता । 'चण्डांशुरिव तापकृदि'ति युक्तम् ।
इन्दुरेष सुधाबिन्दुरिव सर्वरसायनः ॥ २०४ अत्र प्रमाणहीनता ।
'इन्दुरेव सुधासिन्धोस्तरङ्ग इव रङ्गद' इति युक्तम् ।
चण्डाल ! मा खिदस्त्वन्तु भूदेव इव पावनः ॥ २०५ अत्र जात्याऽधिक्यम्
'विष्णुभक्ततया शुचि'रिति शुद्धम् ।

स्तनौ ते हिमवद्विन्ध्यौ पावनं मध्यमेतयोः ।
सत्यमेतत् किन्तु भूरि तयोर्नैवाणु चानयोः ॥ अत्र प्रमाणाधिक्यम् ।
पातालमिव नाभिस्ते सत्यं सुमुखि राधिके !
तस्या उत्थितकालाहिरिव ते रोममञ्जरी ॥ २०७ अत्रापि तथा ।
सत्यं कूप इवायन्ते राधिके ! नाभिमण्डलम् ।
रोमराजिरपीयन्ते तज्जलोद्धाररज्जुवत् ॥ २०८ इति शुद्धम् ।

बहिता राधेव सौभाग्यविधौ योग्या—सौभाग्याधिक्ये मानस्याप्याधिक्यम्, ततोऽस्याः सौभाग्यमप्यधिकं,मानोऽप्यधिकः। तत एवान्या रमणी अस्याः समाना न। अत्र दृष्टान्तः—मयखेति—अत्र निषेधार्थको ना शब्दः। स्तनाविति—एतयोः पर्वतयोर्मध्यस्थानं पावनमिति सत्यमेव, किन्तु तयोर्मध्यमन्तरं भूरि, अनयोः स्तनयोस्तु अण्वप्यन्तरं नैव, एतेन स्तनयोः परमनैबिडामुक्तम्। 'आर्य्यावर्त्तः पुण्यभूमिर्मध्यं विन्ध्यहिमागयो'रित्यमरः।

(म) रसालङ्कृतयोऽपेरता इति—एतच्च 'रसभावादितात्पर्य्यमाश्रित्य विनिवेशनम्। अलङ्कृतीनां सर्वासामलङ्कारत्वसाधकम् ॥' इति ध्वनिकारोक्तदिशा तदुपरि 'अनेन भावादलङ्कारा अपि प्रेयस्ऊर्जस्विसमाहितादयो गृह्यन्ते' इत्यादिकात्...'चारुत्वहेतुश्चे'ति तस्या-

कल्पवल्लीव राजन्ते राधासख्यो गुणाधिकाः ॥ २०९ इति वचनभेदेऽशुद्धम्

'कल्पवल्ल्य इवाभान्ती'ति शुद्धम्।

चिन्तारत्नानीव राधे! गुणास्ते खञ्जनेक्षणे! २१०—अत्र लिङ्गभेदः।

'चिन्तामणीनां खनिवद्राधे! तव गुणावलि'रिति शुद्धम्।

व्रजं विशन्नन्दसुतः प्रदोषे व्रजाङ्गनानां मुदमाततान।

रथ्यां बलारातिदिगङ्गनायाः कुमुद्वतीनामिव शीतरश्मिः ॥ २११

अत्र कालभेदः—तेनाशुद्धम्। 'व्रजाङ्गनानां भवति प्रमोदी'ति शुद्धम्।

भासि त्वं कल्पवल्लीव सर्वकामफलप्रदा ॥ २१२ अत्र पुरुषभेदः, तेनाशुद्धम्।

"कल्पवल्लीव भवती भाति सर्वफलप्रदे'ति शुद्धम्।

कृष्णे प्रवहतु प्रीतिस्तव गङ्गेव सन्ततम् ॥ २१३ इत्यत्र विध्यादिभेदः।

तेनाशुद्धम्। 'गङ्गेव प्रवहद्रूपा तव कृष्णे सदा रति'रिति शुद्धम्।

आदिशब्दादनुमतिरपि(20)। असाम्ये यथा—

'ग्रथ्नामि काव्यशशिनं विततार्थरश्मि' मित्यत्र काव्यशशिनोः केनापंशेन
Vamana's Kavyalankara S. V. 4. 2. 16.

साम्यं नास्ति, एवमर्थरश्मरोष।

असम्भाव्यं यथा—तवाननादिदं राधे! निर्गतं मधुरं वचः।

आनन्दयति मे कर्णौ चन्द्रादिव मधु क्षरत् ॥ २१४

चन्द्रान्मधुक्षरणमसम्भाव्यं, कर्णयोरपि मधुन आनन्दकत्वमसम्भाव्यम्।

'आस्वाद्यत्वमतीवेति पद्मादिव मधु क्षर'दिति शुद्धम्।

---

ङ्गत्वाङ्गावलङ्कारस्य विषय' इत्यन्तात् लोचनग्रन्थाच्च स्फुटमेव। प्रकाशग्रन्थस्य सूचनमप्येतदर्थ अनुकूलमेतदनुसार्य्यैव वेति सूक्ष्मधियामतिरोहितम्। यत्तु 'रसवत्प्रेयऊर्ज्जस्विभावसमाहितानि गुणीभूतव्यङ्ग्यप्रकारा एव नालङ्कारा'इति प्रौढ़ा केषाञ्चिदाशयोद्घोषणं तद्गजनिमीलितप्रायमिवानादेयम्। अथवा वाङ्मात्रेण विवाद एष न तात्त्विक इति। इह मूले 'शृङ्गारे प्रेय' इत्यादि ग्रन्थकृतां मतख्यापनन्तु याद‍ृच्छिकमिव प्रतिभाति। सम्प्रदायकृतामाचार्य्याणामानन्दवर्द्धनाभिनवगुप्तप्रभृतीनां मतमनूद्यैव दर्पणकृतोक्तं 'रसभावौ तदाभासौ भावस्य प्रशमस्तथे'त्यादि। एवमपि मूले 'यत्र रसे…बोद्धव्या' इति तु विवरणमेव, न लक्षणम्। लक्षणन्तु 'प्रधानेऽन्यत्र वाक्यार्थे यत्राङ्गन्तु रसादयः। काव्ये तस्मिन्नलङ्कारो

---

(२०)'आदिशब्दादनुमतिविभक्तिरपी'ति (ग) पुस्तके, 'अनुमितिर्विभक्ति'रिति (ख) पुस्तके, 'अनुमतिर्विभक्ति' रिति (क) पुस्तके पाठः।

धर्महीनता यथा—

स पीतवासाः शिखिपिच्छमौलिर्विलोलहारो हरिरुच्चकाशे।

तड़िल्लताशक्रशरासनाभ्यां विभूषितो नव्य इवाम्बुवाहः॥ २१५

अत्र 'विलोलहार' इत्यस्य बलाकारूपधर्महीनता। तेन

विभूष्यमाणः क्षणरोचिरिन्द्रधनुर्बलाकाभिरिवाम्बुवाहः॥

धर्माधिक्यं यथा—चामीकराभं वसनं वसानः शिखण्डचूड़ो हरिराबभासे।

विभूष्यमाणः क्षणरोचिरिन्द्रधनुर्बलाकाभिरिवाम्बुवाहः॥२१६

अत्र बलाकारूपधर्माधिक्यम्।

**सारूप्ये लिङ्गभेदस्तु न दोषो न च वा गुणः (म)॥ २२६का—**

सारूप्यं भिन्नलिङ्गत्वेऽप्येकाकारत्वम्।

यथा— महारत्नैरिव गुणैः कृष्णरत्नाकरो भवान्।

तवामृतमिव स्वादु व्याहारं वेद्मि राधिके॥ २१७

**उत्प्रेक्षायां 'यथा'शब्दः(म)—२२७का—**

दुष्ट इत्यर्थः। 'यथा' शब्दस्य केवलं साधर्म्यमात्रपर्य्यवसायित्वादवाचकत्व-मुत्प्रेक्षायाः। तस्यास्तु 'नूनं''मन्ये' 'ध्रुव'मित्यादयो वाचकाः। उदाहरणम्—

चित्ते द्रवति तोयेन पूर्य्यते नयनद्वयम्।

प्रिययोश्चित्तनयने संवादचतुरे यथा॥ २१८

चामीकरेति—चामीकराभं सुवर्णमयम्, क्षणरोचिर्विद्युत्, बलाका बकपङ्क्तिः,—अत्रोपमेये श्रीकृष्णे 'विलोलहार'पदाभावादुपमायां बलाकारूपधर्मस्य सत्त्वाच्च धर्माधिक्यं ज्ञेयम्।

महारत्नैरिति—अत्र 'रत्न'शब्दो नपुंसकलिङ्गः गुणशब्दस्तु पुंलिङ्गः तथाऽपि तृतीयायां पुंनपुंसकयोरेकरूपत्वात् 'रत्नैर्गुणैरित्येकाकारत्वम्। एवं द्वितीयायाम् 'अमृतं' 'व्याहार'-मित्येकाकारत्वम्। चित्त इति-तथाच यथा प्रीत्यापन्नयोः संवादचतुरयोर्द्वयोर्मध्ये

रसादिरिति मे मति'रिति ध्वनिकृता सूचितम्। राजा तु एवंविधस्थले यत् रसालङ्कारत्व-स्थितिमुररीचकार तत्तु तद्ग्रन्थे रसालङ्कारयोरितरेतराश्रयतापत्त्यसुधाकृतैव, नचानाम-रुचिकरमेतदेवेति बहुशोऽस्माभिरसूचि,तस्यातितरां दूषणाक्रान्तत्वादतिविवादपदारूढ़त्वाच्च। अत्र मूले 'रसपोषिका' इति विशेषणोपादानमनर्थकं सर्वासामलङ्कृतीनामेव तत्त्वेन सम्भवात् स्वरूपकलनाभावोज्जृम्भितमितदित्येवास्तां साधु साधनम्।

अत्र 'यथा' शब्द उत्प्रेक्षाया अवाचकः। तेन 'संवादचतुरे इव' 'संवादचतुरे इव'मिति वा शुद्धम्।

—एवमन्येऽपि सूक्ष्मतः॥ ३२८का—

अन्ये सूक्ष्मतयाऽलङ्कारदोषाः सन्ति, तेषां केचिदग्रे दोषकिरणे दर्शयिष्यन्ते।

* इत्यलङ्कारकौस्तुभेऽर्थालङ्कारनिरूपणो नामाष्टमः किरणः।*

एकस्यानन्दं ज्ञात्वाऽन्यो हृष्टो भवति तथा चित्तस्य द्रौत्यं ज्ञात्वा नयनं जलपूर्णं भवतीत्यर्थः।
इति—

---

(म) अर्थेषामिति—अलङ्काराणां मध्ये मुख्यत उपमाया दोषचर्चाऽतिप्राचीनैर्मेधाविरुद्र-प्रभृतिभिरुद्भाविता, सा च नवीनैरप्यनेकैरनुस्रियते। 'उपमादोषाः सप्त मेधाविनोदिता' भामहकृतकाव्यालङ्कारे विवेचिताः, आचार्य्यदण्डिप्रभृतिभिश्च निपुणं विमर्शिताः। वैफल्यम-पुष्टार्थत्वमिति कौस्तुभटीकाकृत्—अर्थपारिशेष्यत एवार्थालङ्काराणां परिनिष्ठिता विच्छित्ति-रिति। 'वैफल्य'मित्यादिमूलकारिकायां 'मलत्रय'मिति दोषार्थे 'मल'शब्दप्रयोगो न सर्वथा निर्मल इत्यलं न्यूलनाशेन। अस्मिन् प्रसङ्गे वृत्तिविरोधस्य दोषत्वेन पृथक् स्वीकारे दोषकिरणो-क्तमेतदनुषङ्गि यत् किञ्चिदनूद्यते। एतच्च विमर्शयोग्यं भवति वृत्तियोग्यत्वे ग्रन्थकृन्मतस्य गुणविशेषहेतुकस्य रीतिपदार्थस्य स्थितिः सम्भवति तदन्यथात्वे वैशेषिकतया दोषस्य स्वीकारः सम्यङ् न वेति। परमकिञ्चित्करमेतदालङ्कारिकवर्य्यैरन्यैरपराम्ष्टमित्यलमयथाऽयासाटोपेन। इदन्तु ग्रन्थकृत्पक्षे उदाहार्य्यं यदनुप्रासमाहात्म्याऽऽन्वितधियां गौड़ीरीतिलालित्यलेशलालित-मानसानामन्येषाञ्च केषामयथाप्रयोगाः स्खलनानि चेदृशानां नवीनानां निबन्धेष्वेतदवतरणस्य यौक्तिकतां प्रति प्रमाणम्। उपमायान्तु हीनतेत्यादि—ग्रन्थकृन्मता एते नव मेधाविरुद्र-प्रभृतिभिः पूर्वाचार्य्यैर्निर्दिष्टानां सप्तानामुपमादोषाणां प्रपञ्चा इति तु सुव्यक्तमेव। साम्यप्य लिङ्गभेदस्त्विति—'न लिङ्गवचने भिन्ने न हीनाधिकताऽपि वा। उपमादूषणायालं यत्रोद्वेगो न धीमताम्॥' इत्याचार्य्यदण्डिवचनमात्रमेवात्र प्रमाणं, परं 'छायेव तां भूपतिरन्वगच्छ'दित्या-दिषु 'स लोहकारभस्त्रेव श्वसन्नपि न जीवति।' 'अमानि तत्तेन निजायशोयुगं द्विफालबद्धा-श्चिकुराः शिरःस्थित'मित्यादिषु चैतदनुषङ्गिषु सादृश्यघटितेषु लक्ष्येषु सिद्धान्तनिर्णयो न सुशकः। औचित्यहानिरेषु तथा दरीवर्त्ति यथा दोषकिरणप्रसङ्ग एव वरमस्य विचार इति प्रमाणविदां पन्था एवानुसर्त्तव्यः। उत्प्रेक्षायां 'यथा'शब्दः—'मन्ये शङ्के ध्रुवं प्रायो ननमित्येव-मादिभिः। उत्प्रेक्षा व्यज्यते शब्दै'रिव'शब्दोऽपि तादृशः॥' इत्येषां परिगणनं काव्यादर्शे। अवाचक इति दोषवैशिष्ट्यप्रकटनमिति मन्तव्यम्। एवमन्येऽपीति—यथाऽर्थान्तरन्यासा-

प्रस्तुतप्रशंसाव्यतिरेकसमासोक्तिप्रभृतिषु तेषु काव्यप्रकाशे निर्दर्शिताः ; प्राचीनतरैस्तट्टीकाकृद्भी रुचक-श्रीधर-चण्डीदास-प्रभृतिभिः सूरिभिर्वितत्य विशदीकृताः। एषु दोषकिरणोद्घाटितदूषणानामेव सामान्यतः स्थितिरिति सर्वेषामप्येषां तदन्तरेव ग्रहणं श्रेयः—तथा च दर्पणे 'एभ्यः पृथगलङ्कारदोषाणां नैव सम्भव' इति, एभ्यो निरूपितस्वाधिष्ठानदूषणेभ्य इति शेषः। अनुमतिरपीति—लिङ्लोटोरर्थप्रपञ्चेष्वस्यास्ति ग्रहणमिति 'विध्यादे'रिति गणने तदन्तर्भूततया स्वीकारः सुकर इत्येवमेव मन्यते। असाम्य इति—'तेनासदृशताऽपि चे'तिमेधाविपरिगणने भामहग्रन्थे। वस्तुतस्त्वेषु असादृश्योपहतेषु स्थलेषु नयानां मत उपमैव नास्ति 'शिरो नास्ति शिरोव्यथे'ति न्यायेन कथं तस्य तदाश्रितदोषस्पर्श इति नास्तेऽत्र वेषामवसरः। असम्भाव्यमिति—'असम्भव' इति प्राचां परिगणनेऽस्य संज्ञा-असम्भावितोपमायामङ्गतोपमायां वा आचार्यदण्डिपरिलक्षितायां नातिव्याप्तिरस्य शङ्क्या, एकत्र च रूपपोषादन्यत्र चारुत्वहानेः, 'असम्भाविते'त्युपपदस्यातर्कितोपनतवाच्यसौष्ठवमर्थ इति कृत्वा च। 'अनुपपत्तिरसम्भव' इति वामनलक्षणम्। 'नन्वर्थविरोधोऽयमस्तु किमुपमादोषकल्पनये'ति पूर्वपक्षस्तत्सिद्धसिद्धान्तश्च सर्वं सुगमयतीत्यास्तामेतत्। एषु सर्वेषु दोषेषु सर्वत्रौचित्यमेव व्यापकतया परिपन्थि इति तु सहृजं वचः इति—

---

## अथ नवमकिरणः ।

अथ 'सुसंस्थानं रीति'रिति (१मकारिकायाम्) यदुक्तं सा किंलक्षणा कियत्प्रकारा वेति तामेव दर्शयति—

**रीतिः स्याद्वर्णविन्यासविशेषो गुणहेतुकः (क) ॥३२९का—**

गुणास्तूक्ताः । वर्णविन्यासविशेष इति वर्णानां रसानुगुण-(1) गुणानुरोधोपाधिकरचनाविशेष इत्यर्थः । यद्यपि गुणविवेकेनैव स लभ्यते तथाऽपि तद्विशेषबोधार्थं रीतिकिरणमारभ्यते (क) ।

**वैदर्भ्यादिविशेषेण चतुर्द्धा सा निगद्यते ॥ ३३० का—**

सा रीतिः । वैदर्भी पाञ्चाली गौड़ी लाटीति चतुर्विधा (क) । तासां क्रमेण लक्षणमाह—

**अवृत्तिरल्पवृत्तिर्वा समस्तगुणभूषिता ।**
**वैदर्भी सा तु शृङ्गारे करुणे च प्रशस्यते ॥ ३३१ का—**

रीतिरिति । गुणहेतुको गुणव्यञ्जकः । एतदेवोक्तं गुणकिरणे 'व्यञ्जकाः स्युर्वर्णाश्च रचना अपी'ति (१८६ का—) (क) ।

अवृत्तिरिति—वृत्तिः समासस्तद्रहिता (2) केवलसुबन्तपदघटितवर्णनमेवोचितमित्यर्थः । आलोकनमिति—क्रम इति—तव मदनमत्तयोः क्रमो नास्ति, कुटिलावलोकनादौ तयोः

---

(क) रीतिरिति—अत्रादौ तावद्विचारणीयं गुणतो रीतेः पृथग्विवेचने किं तावन्मानं कश्च सम्प्रदायसिद्धः पन्थाः, तत्रालङ्कारिकवर्य्याणां विमतौ का वा युक्तिरन्यतरपक्षपरिग्रह इति । कौस्तुभकृतो हि प्रकाशग्रन्थमुपजीव्यैव प्रवृत्ता इति बहुशोऽवोचाम । अत्रापि रीतिलक्षणोपष्टम्भे तद्विमर्षे च निश्चयाभावसूचकः सामञ्जस्यसाधनप्रयासः,'इत्यादेः खल्वनुप्रासरीतिरूढ़स्य वर्त्मन' इत्यादि इष्ट किरणस्थः कारिकाग्रन्थः,'यद्यपि गुणविवेचनेनैव स लभ्यते, इत्याद्यत्रत्यो वृत्तिग्रन्थश्च तदेतदनुमानं सुतरां द्रढ़यन्ति । परं 'सुसंस्थानं रीति'रित्यादिमकारिकायमाकूतं 'वर्णविन्यासविशेष'इति रीतिप्रकरणे वाचिकं 'वैदर्भी सा तु शृङ्गारे करुणे

---

(1) 'रसानुकूले'ति (ख) (छ) पुस्तकयोः पाठः ।

(2) 'समासस्तद्रहितमिति (छ) पुस्तके पाठः ।

समस्तगुणेति गुणास्त्रयो दश वा । यथा—

आलोकनकुटिलितेन विलोचनेन सम्भाषणञ्च वचसा मनसाऽर्दमर्दम् ।

लीलामयस्य वपुषः प्रकृतिस्तवेयं राधे ! क्रमो न मदनस्य न वा मदस्य ॥१

अत्र अल्पवृत्तिरल्पवृत्तिश्च । 'ङ्कु'-'म्भ'-'ञ्च'ेति माधुर्य्यव्यञ्जका वर्णाः । 'र्दमर्द'मित्योजोव्यञ्जकौ द्वौ । अर्थवैशद्यं प्रसादः, अनिष्ठुरत्वं सुकुमारतेत्यादिः समस्तगुणाः । न केवलमियं तथाविधवर्णविन्यासादृत्त्यभावाच्च वैदर्भी, अपि त्वर्थगतौदार्य्येणापि ।

अन्यथा—मदनेन मदेन चालसो वनिताभिर्जनितातिलालसः ।

अतिमञ्जुनि कुञ्जमन्दिरे रमतेऽसौ सखि ! नन्दनन्दनः ॥ २

इत्यत्राल्पवृत्तित्वात्तथाविधवर्णविन्यासोपाधिगुणत्रयवत्त्वाच्च वैदर्भी यद्यपि, (ख) तथाऽपि तथाविधौदार्य्याभावान्न तथा शोभते ।

कारणत्वात् । अयम्भावः मूर्च्छितजनोऽधरसुधां पाययित्वा जीवयितुमेव योग्यः, नतु कटाक्षशरेण हन्तुम् । एवञ्च तस्य जीवने सति पश्चाल्लीलया कुटिलावलोकनरूपशरप्रहारे क्षतेऽपि न दोष इति क्रमस्तयोर्नास्तीत्याक्षेप उक्तः ।

अधुना वैदर्भीलक्षणेऽर्थनिष्ठसौष्ठववदेशिष्ट्यरूपविशेषणान्तरं देयमित्याह(ख)—न केवल-

---

चे'त्यादिषु 'संघटना लक्षणरूपताख्यापनञ्च प्रकाशकृदादीनां मतपक्षे दूषणमुद्घोषयन्ति । रीतिगुणयोरव्यभिचारित्वसन्धानसिद्धान्तप्रतिपादने प्राचीनैर्वामनादिभिर्जीवातुतया स्वीकृते न किमपि प्रमाणं गरीयोऽस्तीति युक्तिसूक्तिनिचयैः सूचितः प्रामाणिकैर्ध्वन्यालोककृद्भिः स्वग्रन्थे तृतीयोद्योते । अतः पृथक्तया विवेचनमेव श्रेय इति बहवः । गुणरीत्योरव्यभिचारित्वसंश्लेषं स्वीकृत्यापि केचित् प्राचीनमानिनः कण्ठाभरणकृत्प्रकाशवर्षप्रभृतयो रीतिः शब्दालङ्कारकक्षाऽन्तर्भुक्तिं समर्थयितुमीहमाना इयतैव गुणरीत्योर्विवेकोऽवश्यम्भावीति प्रतिपद्यन्ते । एतदेव कण्ठाभरणटीकाकृतां 'गुणाः श्लेषादयः काव्याव्यभिचारिणो नव । तेषामन्योन्यमिलनक्षमतया पानकरस इव गुडमरीचादीनां खाड़व इव मधुराम्लादीनां यत् संमूर्च्छनरूपावस्थाऽन्तरागमनं तत्संस्कारादेव हि लोकशास्त्रपदरचनातः काव्यरूपा च रचना व्यावर्त्तत'इत्यादौ प्रदर्शितं मतमित्यनुमीयते । रीतिशब्दस्य व्युत्पत्तिलभ्योऽर्थः प्राचीनैः केश्चिदत्र 'रीङ् गता'विति धातोर्लक्ष्यो दर्शितः—प्राचीनतराणां मार्गपदव्यवहारोऽत्र सुसिद्धः । रीतिस्त्रिधेति वामनः,चतुर्धेत्यपरे, पञ्चधेत्यपि केचित्,षोढ़ेति राजमतानुसारिणः । वामनकुन्तकादिभिरस्या देशविशेषसंस्पृष्टत्वे प्रकृतं तथ्यं निरधारि । आकरत एवैतानि सर्वाणि ग्राह्यानीत्यलम् ।

पाकोऽप्यस्याः सहायः स्यादाम्रवार्त्ताकुपाकवत्(ख) ॥ ३३२ का—

अस्या वैदर्भ्याः पाको निर्वाहः। स च द्विविधः—रसालपाको वार्त्ताकुपाकश्चेति। रसालपाक एव सहायः स्यात्, शोभाकरत्वात्, नेतरः।

पूर्वं पूर्वं दशायाश्चेत्तदुरोत्तररम्यता।
तदा रसालपाकः स्याद्विपरीते तदन्यकः ॥ ३३३ का—

क्रमेणोदाहरणानि—'आलोकनं कुटिलितेने'त्यादौ (१म श्लोके) चतुर्थचरणे रसालपाकः। तत्रैव यदि 'लीलामयस्य वपुषस्तव राधिके यः कोपक्रमो नु सहजः किमु कृत्रिमो वा ॥" अत्र सत्यामपि वैदर्भ्यां पाकेन वार्त्ताकुपाकता, तेनास्या विरसत्वम्। एवं छन्दोऽप्यस्याः सहायतां व्यनक्ति—तच्च वसन्ततिलकोपेन्द्रवज्राऽऽदि। यथा'(3) एतानि तानि नलिनीविपिनी'त्यादि (५म किरणे ८८श्लोकः), यथा—"आलोकनं कुटिलितेने'त्यादि च (१म श्लोकः)। यथा च

न वाग्मिनः सन्ति कतीह भूतले भवन्ति सर्वे न हितप्रियोक्तयः।
मयूरमुख्याः कति भान्ति पक्षिणः परं पिका एव रुवन्ति पञ्चमम् ॥ २

मिति। न शोभत इति—अवार्थसौष्ठवाभावान्न वैदर्भीत्वर्थः। रसाल आम्रस्तस्य पाक एवोत्तरकाले शोभाकरः, न वार्त्ताकुपाकः, वार्त्ताकोः प्रथमदशायामेव सौन्दर्य्यं, पक्वदशायामत्यन्तवैरूप्यात्। सहाय इति—एवं सति वैदर्भीलक्षणे रसालपाकवैशिष्ट्यमपि विशेषणं देयमिति ज्ञेयम्। छन्दोऽपीति—तथाच वैदर्भीलक्षणे वसन्ततिलकोपेन्द्रवज्राऽऽदिवैशिष्ट्यविशेषण-

(ख) न तथा शोभत इति—समस्तगुणाया वैदर्भ्याः प्राचीनमते 'तदुदाराह्वयं तेन सनाथा काव्यपद्धति'रिति निर्देशादुत्कर्षवत्त्वं स्वीकार्य्यम्। नव्यमते गाम्भीर्य्यमस्याः प्राणप्रदो धर्मः। वस्तुतस्तु याद्दच्छिकैषा युक्तिः। नव्यानामपि वैदर्भीपक्षपातः वस्तुसिद्धः। अर्थस्य प्रौढ्या गम्भीरिम्ना वा य उत्कर्षस्तमाश्रित्यौदार्य्यस्य परिकल्पनेति चेत्, कथं तस्य रीत्यन्तरेऽनवकाश इति न वयं प्रतीमः। पाकोऽपीति—एतच्च राजशेखर-भोज-विद्याधर-विद्यानाथप्रभृतीनामालङ्कारिकाणां सिद्धान्तमुपजीव्यावतार्य्यते। शय्यायुक्तिभणितिपठितिप्रभृतीनामिवास्यापि शब्दाश्रयत्वं चमत्कारस्येति च विभाव्यम्। आम्रवार्त्ताकुव्यतिरिक्ता इतरे अपि पाका गुडाद्यभिधा आकरतो ज्ञेयाः। वैदर्भी गर्भिणीवेति—सर्वातिशायित्वात्तस्या अनुगुणच्छन्दोबन्धनमावश्यकमेव। प्रतीच्यानामप्येतदर्थं छन्दस्तया कलितस्यावान्तरभावप्रपञ्चस्य सामञ्जस्ये मतिः सुस्थितैव। शब्दालङ्कारविवेचनप्रसङ्गे राज्ञा गतिपदार्थान्तर्द्रुतमध्यविलम्बितानां तेषामितरेतरसङ्कराणां स्थितिः स्वीकृता। सुवृत्ततिलके आर्य्यक्षेमेन्द्ररचिते

(3) 'यथा' इति (ग) पुस्तक एवास्ति, नान्यत्र।

अत्रापि 'पञ्चम'मित्यनुस्वारस्तथाविधं नौजो बध्नाति, गुरुरप्ययं क्लीववद्भासते । तेन 'न भान्ति किं केकिमुखाः खगाः पिकाः परञ्च ते पञ्चमगानचञ्चवः' इत्येव शोभते । आदिशब्दात् रथोद्धताऽदि च । यथा—

गाहते गहनमीहितेतरामर्द्दमर्द्दमभिराममीहितम् ।

भाषते वचनमुन्मदाकुलं कोऽयमिन्दुमुखि ! मेघमेदुरः ॥ ४

यथा वा—इन्दुनिन्दिवदनं मृदुस्मितं कञ्जगञ्जिनयनं सुनासिकम् ।

स्निग्धमुग्धवचनं नवं नवं मेघमेदुरमुपास्महे महः ॥ ५

अन्यत्र छन्दसि तथाविधरचनायामपि वैदर्भी न तथा चमत्करोति, यथा 'वैदर्भी गर्भिणीव स्फुरति रसमयी कामसू रुक्मिणीवे'ति छन्दोदोषान्न तथा सुरसेति । एतच्छन्दस्तु गौड्यनुकूलम् । यथा—'गौड़ी गाढ़ोपगूढ़प्रकटहठघटागर्व्वगर्भेव गौरी' ( ख ) ।

**कथाप्रायो हि यत्रार्थो माधुर्य्यप्रायको गुणः ।**

**न गाढ़ता न शैथिल्यं सा पाञ्चाली निगद्यते(ग)॥२२४का—**

यथा—'कान्ते !' कां प्रति ते बभूव मधुरं सम्बोधनं, 'त्वां प्रति'

ज्ञातं, किं कमनीयताऽनुगमिदं किंवा प्रियत्वानुगम् ।

'तात्पर्य्यन्तु ममोभयत्र', न न न प्राप्तोऽसि, नाहन्तु सा,

'काऽसौ', या हृदये तवास्ति, 'हृदये नित्यं त्वमेवासि मे' ॥ ६

इत्येवमनुसर्त्तव्यम् ।

मपि देयमित्यर्थः । क्लीववदिति—व्यर्थं भातीति यावत् । अन्यत्रेति—वसन्ततिलकाऽदिभिन्नछन्दसि वैदर्भी न चमत्करोति । एतच्छन्दोऽनुकूलत्वं गौड़ीरीत्यामाह—यथेति । गाढं यथास्यात्तथोपगूढ़ो गुप्तः प्रकटहठसमूहरूपगर्वो गर्भे यस्यास्तथाभूतेव ।

---

छन्दसां भावप्रपञ्चस्य कवीनाञ्चैतदानुषङ्गिप्रावीण्यप्रकटनपटुत्वस्य विमर्शः साधु साधितः ।

(ग) सा पाञ्चाली निगद्यत इति—वार्त्तायां वर्णने वाऽस्याश्चारुरुपयोगः—यथा 'अयमुदयति मुद्राभञ्जनः पद्मिनीना'मिति पद्ये । 'वाचि वस्तुन्यपि रसस्थिति'रियतैव माधुर्यलक्षणं यैः साधितं तैरस्या रीतेर्माधुर्य्यायत्ताया अवतारणं मिथैव व्यधायि । गुणत्रयस्वीकारे प्रसादगुणबाहुल्ये वैदर्भी, माधुर्य्यायत्तत्वे पाञ्चाली, ओजोभूयिष्ठत्वे गौड़ी रीतिरित्ययत्नसिद्धः सिद्धान्तः । गौड़ी भवेदनुप्रासबहुलेति—वस्तुतस्त्वनुप्रास एव नास्योत्कर्षहेतुर्नवाऽस्या 'अष्टमस्तगुणा गौड़ी'त्याद्यभियुक्तवचनैरन्यतोनिकर्षः स्वतःसिद्धः । एतच्चास्माभिरन्यत्र सविस्तरं

**निष्ठुराक्षरविन्यासा दीर्घवृत्तिर्युतौजसा ।**
**गौड़ी भवेदनुप्रासबहुला वा (ग)—२३५ का—**

यथा—'किं रे कष्टमरिष्ट! दुष्टे'त्यादि (५म किरणे ८म श्लोकः)। न केवलं निष्ठुराक्षरप्रायत्वमेवास्या लक्षणम्, अपि त्वनुप्रासबाहुल्यमपि। तेन यस्य यस्य गुणस्यानुगुणो भवत्यनुप्रासः तस्य बाहुल्यमेव गौड़ीरीतिमनुबध्नाति (ग)। अतो 'द्वन्द्वं द्वन्द्वं वादयदि'त्याद्यपि (८म किरणे २०० श्लोके गौड़ी। एवम् 'अनङ्गसङ्गरासङ्ग' (5) इत्यादौ (७म किरणे ८म श्लोके), किन्त्वत्र न गौड़ीत्वम्।

वल्गद्वल्गु-वतंस-मांसविगलन्मन्दारमालामिल-
द्रोलम्बद्रुतिलम्बमानसुमनोधूलीभिराधूसरः।
लीलाबन्धुरकन्धराञ्चलचलच्छ्रीकौस्तुभं भ्राजते
धावन् धूतधरो धराधरधरो धाराधरश्यामलः(ग) ॥ ७

अत्र सत्यप्योजोगुणभूयिष्ठत्वे वृत्तिबाहुल्येऽप्यर्थकौमल्यप्रसादादिभिर्वैदर्भीमार्गपतितैवेयम् (ग)। यथा वा—

निष्ठुरेति—ओजसा गुणेन युता तथाऽनुप्रासबहुला वा भवेत्। अत्र'वा' शब्दो विशेषणसमुच्चयबोधको नतु विकल्पार्थकः। अनङ्गेति—अत्र निष्ठुराक्षराणामभावान्न गौड़ी (ग)। अधुना भीष्मेण सह युद्धे प्राप्तपराभवमर्जुनं वीक्ष्य क्रोधेन भीष्मवधार्थं शीघ्रं गच्छतः श्रीकृष्णस्य धावने क्रियां वर्णयति— वल्गदिति। धाराधरो मेघस्तत्तुल्यश्यामलः श्रीकृष्णो धावन् भ्राजते। धावणक्रियाया विशेषणत्रयमाह—वल्गन् चाञ्चल्यं प्राप्नुवन् वल्गुवतंसो मनोहरं कर्णभूषणं शिरोभूषणञ्च यत्र तद्यथा स्यात्तथा—अवेत्यस्याकारलोपः। पुनश्च धावनलीलया बन्धुरा उन्नता या कन्धरा तस्या अञ्चले चलन् श्रीकौस्तुभो यत्र तद्यथा स्यात्तथा। पुनश्च धूता कम्पिता धरा यत्र तथाविधं यथा स्यात्तथा। श्रीकृष्णः कथम्भूतः? अंसात् स्कन्धाद्विगलन्ती या मन्दारमाला तस्यां मिलन्तो ये रोलम्बा भ्रमरास्तेषां मालयाञ्चल्येनैवात्र स्थातुमसमर्थानां द्रुत्या मालया सह धारणेन लम्बमानानां पुष्पाणां धूलिभिरीषद्धूसरः पुनश्च पर्वतधरः। इयं गौड़ी वैदर्भीलक्षणघटकीभूतविशेषणविशिष्टेत्यर्थः (4)।

---

सप्रमाणोपन्यासं विवेचितम्। (Vide *The Gaudi Riti in Theory and Practice.* I.H.Q. Vol. 1927…)वैदर्भीमार्गपतितैवेयमिति—एतच्च गौड़ीयस्यग्रन्थकारस्य कौस्तुभहृतः वैदर्भीरीतेः सर्वातिशायित्वबुद्धिप्रसूतमिति नास्ति सन्देहलवोऽपि। गौड़ीयस्य

(4) 'विशेषणविशिष्टाऽपीत्यर्थः' इत्यसङ्गतप्रायः पाठः (ख) (क) पुस्तकयोरुपलभ्यते।

(5) 'अनङ्गमङ्गलासङ्ग' इत्यत्र (क) पुस्तकस्थः पाठः।

दाक्षिण्योत्सुकया गुणैरधिकया प्रेम्णा गतालीकया
लीलाकेलिपताकया क्षत-कया चित्कौमुदीराकया ।
दृक्कर्पूरशलाकया नवकया लावण्यवापीकया (ग)
कृष्णो राधिकयाऽन्वरञ्जि, न कया जातं निरातङ्कया ॥ ८

—समन्ततः ।

**शैथिल्यं यत्र मृदुलैर्वर्णैर्लादिभिरुत्कटम् ।**
**सा लाटी स्याल्लाटजनप्रियानुप्राससनिर्भरा ॥ ३३६का—**

लाटो विदग्धः (6) । उदाहरणम्—

लीलाविलासलुलिता ललनावलीषु लीलालकासु ललिताऽलिरलं ललामम् ।
कीलालकेलिकलयाऽनिलचञ्चलाया: काले ललौ मृदुलतां लवलीलतायाः ॥ ९

अत्र केवलं शैथिल्यम् । लाटानुप्रासबाहुल्येऽपि तथा—

स्मेरारविन्दवदनावदनारविन्दसौन्दर्य्यकाम इव शारदशीतरश्मिः ।
आकाशवासतपसा सह संविधत्ते धूमस्य पानमिव लक्षणलक्षणस्य ॥ १०

एष लाटानुप्रासः—एषाऽपि लाटी रीतिः ।

॥ * ॥ इत्यलङ्कारकौस्तुभे रीतिनिरूपणो नाम नवमः किरणः ॥ * ॥

दाक्षिण्येति—राधया कृष्णोऽन्वरञ्जि राधा कृष्णमनुरक्तं चकारेत्यर्थः । अतः कया सख्या निःशङ्कया न जातम्, अपि तु सर्वा एव सख्यो निःशङ्का बभूवुरित्यर्थः । श्रीकृष्णो राधायामनुरक्तो भविष्यति न वेति पूर्वं सखीनां या शङ्काऽसीत् साऽधुना गतेति पर्य्यवसितार्थः । राधया कथम्भूतया ? वाम्यं त्यक्त्वा दाक्षिण्य उत्सुकया प्रेम्णा हेतुना गतालीकया निष्कपटया पुनर्लीलारूपध्वजस्य केलिपताकया, पुनः क्षतं कं सुखं यया तथाभूतया, पुनश्च चिच्छक्तिरेव कौमुदी तस्या राकया पूर्णचन्द्रस्वरूपया, नवकया नवीनया, स्वार्थे कः । लावण्यस्य वाप्यस्यामिति बहुव्रीहौ ह्रस्वत्वनिषेधः (ग) ।

समन्ततः सर्वत्र लादिभिर्मृदुलैर्वर्णैर्यत्रोत्कटं शैथिल्यम् । अनुप्रासानां निर्भरोऽतिशयो यत्र तथाभूता । लुलिता मर्दिता आलिर्यस्याः सा राधा चञ्चलालकासु ललनासु मध्ये श्रीकृष्णेन लीलाविलासैर्लुलिता मर्दिता सर्वापेक्षयाऽतिशयलीलाविलासवतीति यावत् । अतोऽलमतिशयेन ललामं सर्वासां शिरोरत्नमेवम्भूता राधा जलकेलिकलया हेतुनाऽनिलेन चञ्चलाया लवलीलताया मृदुतां ललौ गृहीतवती । लाटः कोमलः—तथाच कोमलवर्णानुप्रासेऽपि तथा शैथिल्यं ज्ञेयम् । स्मेरेति—आकाशवासरूपतपसा धूमस्य पानमिव विधत्ते । कथम्भूतस्य ? लक्षणं कलङ्करूपचिह्नं तल्लक्षणस्य तत्स्वरूपस्य । तथाच चन्द्रः यन्निष्ठकलङ्कचिह्नव्याजेन धूमपानरूपतपश्चकारेत्यर्थः (ग)—इति ।

---

धोयीकस्य कवेः पवनदूते साटोपमुपासिता वैदर्भीप्रीतिरप्येतदर्थिका । लावण्यवापीकयेति—'नद्यृतश्च'ेति कप् समासान्तः । परं न समासान्तर्विहितं पदमेतत् सहृदयानां रुचिकरम् । शैथिल्यं यत्रेति—'अल्पप्राणाक्षरोत्तरं शिथिल'मिति दण्डिमतमुपनीय मृदुलैर्लादिभिरित्युक्तमिति ।

(6) 'लाटोऽविदग्ध' इति पूर्ववत् (ख) (क) पुस्तकयोः पाठः ।

## अथ दशमकिरणः ।

'यदस्मिन् दोषः स्याच्छ्रवणकटुताऽदिः स न परः' (प्रथम कारिकायाम्) इत्युद्दिष्टस्य दोषस्य लक्षणपरीक्षे दर्शयितुं दोषकिरणमारभते । कोऽसौ दोष इत्याह—

**रसापकर्षको दोषः (क)—३३७ का—**

अपकर्षकः स्थगनकारी । ननु रसस्यात्मनः कथं स्थगनमित्याशङ्क्याह —

**रसोऽत्रास्वाद उच्यते (क) । ३३८का—**

अत्र दोषलक्षणे रसशब्देनास्वाद एवोच्यते, रस्यत इति रसः न शृङ्गारादिक आत्मभूतो रसः (क) । यथा न काणत्वखञ्जत्वादिकमात्मनः कौरूप्यकारणम् अपि तु देहस्यैव, तथाऽत्र शब्दार्थयोरेव दोषः, नात्मभूतस्य रसस्य । तर्हि 'शब्दार्थापकर्षको दोष' इत्येवास्तु लक्षणम् इत्याशङ्क्याह—

**अपकर्षस्तत्स्थगनम्—३३९का—**

तस्यास्वादस्य स्थगनं सङ्कोचः । न हि शब्दस्यार्थस्य वा तेन सङ्कोचः क्रियते, अपि तु तत्तदाश्रयेण सताऽस्वादस्यैव । अतः सम्यगुक्तं 'रसापकर्षको दोष' इति । आस्वादश्च सहृदयान्तर्गत एव येन शब्दाश्रयेणार्थाश्रयेण वाऽप-कर्षेण तेषां जायमान आस्वादः सङ्कुच्यते स एव दोषः ।

नन्विति—काव्यपुरुषस्य रस एवात्मा तस्य कथं स्थगनमित्यर्थः । तत्तदिति—शब्दार्था-श्रयेण दोषेणास्वादस्यैव सङ्कोचः क्रियते, न तु शब्दस्यार्थस्य इति । तथा सति दोषस्य

---

(क) रसापकर्षक इति—न तु शृङ्गारादिक आत्मभूतो रस इति च—एतच्च ध्वन्यालोक-ध्वस्तध्वान्तानां नवीनानां मम्मटादीनां दर्शनम् । 'गुणविपर्ययात्मानो दोषाः' 'ये हेयास्ते दोषा' इत्यादिलक्षणानामव्याप्त्यतिव्याप्तिप्रभृतिः सुधीकसन्धान इत्यलं पिष्टपेषणेन । भरत-भामह-दण्डिप्रभृतीनां प्राचां ग्रन्थेषु दोषतत्त्वोद्घाटनं शब्दशुद्धियुक्तिशुद्ध्योरेकतरमुभयं वा परिकल्प्यासन्निति । आचार्य्यवामनेन काव्यालङ्कारसूत्रवृत्तिकृता पदपदांशादिविभागव्यवस्थया दोषाणां स्वरूपसम्बन्धस्वरसाविष्कारेण शास्त्रस्यास्य महदुपस्कृतं साधितम् । महिमभट्टेन

स च द्वेधा निरूप्यते ॥ ३४० का—

यावदास्वादापकर्षको यत्किञ्चिदास्वादापकर्षकश्च(क) । यत्र सहृदयानामसहिष्णुता भवति स आद्यः, यत्र सहिष्णुता स्यात् सोऽन्यः ।

श्रुतिकट्वादयस्तत्रादावुच्यन्ते समासतः ।
पदे वाक्ये पदांशेऽमी अर्थे चेति चतुर्विधाः ॥३४१ का—

अमी श्रुतिकट्वादयः । ते यथा—

श्रवणकठोरमसंस्कृतमसमर्थञ्चाप्रयुक्तनिहतार्थम् ।
व्यर्थमवाचकमपि चानुचितार्थं ग्राम्यमप्रतीतञ्च ॥
अश्लीलं सन्दिग्धं नेयार्थमथो समासगं क्लिष्टम् ।
अविमृष्टविधेयांशं विरुद्धमतिकृच्च षोड़शैतानि(ख)॥३४२ का—

एतानि षोड़श पदानि दुष्टानीत्यर्थः । क्लिष्टादित्रितयं समासगमेव, असमस्तस्य दुष्टत्वाद्यसम्भवात् । श्रवणकठोरं श्रुतिकटु । असंस्कृतं च्युतसंस्कृति । व्यर्थं निरर्थकम् । अश्लीलन्तु त्रिविधं, व्रीड़ाजुगुप्साऽमङ्गलदायित्वात् । क्रमेणोदाहरणानि—

निष्कृष्ट(१)-लक्षणमाह—येनेति । स च दोषश्च । यत्रेति—यत्र दोषस्योत्कटत्वे सहृदयानामसहिष्णुता स यावदास्वादस्यापकर्षकः, दोषस्याल्पत्वे सहृदयानां यत्र सहिष्णुता तत्र यत्किञ्चिदास्वादापकर्षकः ।

(क) व्यक्तिविवेककारेण महिमभट्टेन रुद्रटेन तत्रभवता च काव्यालङ्कारकृता दोषविचारसरणिः निपुणमुपन्यस्तेति, तदनुसारिभिराचार्य्यवर्य्यैर्मम्मटादिभिरनुसृतात् सिद्धान्तमार्गात् ज्ञायते । परमेतदेव नवीनानां दर्शनेऽनवद्यं तथ्यं यद्रसस्य काव्यात्मनो दोषैः स्थगनं भवति । एतन्मूलिका एव नित्यानित्यदोषव्यवस्था प्राचां ग्रन्थेषु । अत्रापि 'यावदास्वादापकर्षको यत्किञ्चिदस्वादापकर्षक' इति द्विधा संग्रहस्तमेव पक्षं कक्षीकरोति । एवं स्थिते रसदोषा इति पारिभाषिका एव मुख्यदोषाः प्रबन्धानाम्, इतरे पदपदांशादिगतास्तमेव रसं परोक्षतयोपजीवन्तीति गौणाः । तथापि सम्प्रदायसिद्धमेतत्प्रसक्तमालोचनमिति काव्यप्रकाशदीपिकाकृच्चण्डीदासादीनां सूचनमेव सम्यक् ।

(ख) पदवाक्यवाक्यार्थाश्रयभेदतया त्रिधैव दोषा इति प्राचीनमानिनो भोजानुसारिणः । पदांशानामपि गुणदोषव्यञ्जनाऽधिकारे 'शक्तिसामान्यमस्तीति कृत्वा नव्यैस्ते पृथगत्र गृहीताः । सरस्वतीकण्ठाभरणे सर्वे दोषाः षोड़शैवेति पददोषाणामपि षोड़शत्वमुररी-

(१) 'निष्कृष्टलक्षण'मिति निकृष्टः पाठः (ख) (क) पुस्तकयोः ।

शिरीषपुष्पादपि कोमलानि राधे ! तवाङ्गानि कुरङ्गनेत्रे ।

स्तनद्वयं ते हृदयस्य शिष्यं काठोर्य्यमुच्चैर्यदिदं बिभर्त्ति ॥१

अत्र 'काठोर्य्य'मिति श्रुतिकटु, तेन काठिन्यमिति पाठ्यम् ।

ब्रूमः किमन्यैर्व्रजसुन्दरीजनैः समं समत्वं तव देवि ! राधिके !

वैदग्ध्यमध्यापयते वयोऽपरां वयस्त्वमध्यापयसे विदग्धताम् ॥२

अत्र 'अध्यापयत' इत्यात्मनेपदं च्युतसंस्कृति । तेन 'वैदग्ध्यमध्यापयतीतरां वयस्तदेतदध्यापयसि त्वमग्रत' इति पाठ्यम् ।

हंसीव हंसि मदमेदुरमन्दमन्दमालोक्यसे सचकितं हरिणाङ्गनेव ।

आभाषसे मृदुकलं ललिते ! पिकीव लक्ष्मीं बिभर्षि सरसस्य वनस्य च त्वम् ॥

अत्र यद्यपि 'हन् हिंसागत्यो'रिति हन्तिर्गत्यर्थेऽपि वर्त्तते, तथापि श्लेषादिकं विनाऽन्यत्र गमनार्थेऽसमर्थमिदं, तेन 'हंसीव यासी'ति पठनीयम् ।

राधे ! तवाङ्घ्रिपद्मोऽयं सत्यं दोहददेवतः (ख) ।

अकालेऽपि यदाघातादशोकः पुष्पितोऽभवत् ॥४

अत्र 'वा पुंसि पद्मं नलिनं' 'दैवतानि पुंसि वे'ति यद्यप्यनुशासनं वर्त्तते तथापि कविभिरप्रयुज्यमानत्वादप्रयुक्तम् । तेन 'राधे ! तव पदाम्भोजं सत्यं दोहददैवत'मिति पाठ्यम् ।

Amarakosa—Varivarga and Svargavarga.

लाक्षारसेन तव शोणितमद्य वक्षस्तस्याः पदाम्बुरुहतो गलितेन कृष्ण !

आभाति फुल्लनवकोकनदावलोकः शान्तोर्मिको ह्रद इव द्युमणेः सुतायाः ॥५

अत्र यद्यप्यरुणितादिपदसमानार्थं शोणितपदं, तथापि प्रसिद्धेन क्षतजार्थत्वेनाप्रसिद्धार्थो व्याहन्यत इति निहतार्थम् । तेन 'लोहित'मिति पाठ्यम् ।

ब्रूम इति—अपरां व्रजसुन्दरीम् । राधे इति—वृक्षाणां शीघ्रवृद्धौ तथाऽकाले पुष्पफलोत्पत्तौ च कारणमौषधिविशेषो दोहदः । तथा च पादपद्मरोहदरूपदेवताविशेषः । यस्य पादपद्मस्याघातात् । काचिन्मानिनी मानभङ्गार्थमागतस्य श्रीकृष्णस्य वक्षःस्थले

कृतम् । एवं परिगणनायां प्रकाशकृद्दण्डादिभिर्वामनमम्मटरुद्रटप्रभृतिकृतविभागं निपुणं पर्य्यालोचयद्भिस्तदुट्टङ्कितमिति स एवाधुनिकैरनुस्रियते । अत्रापि स एव पन्थाः ।

गुणास्त्वनेनैव तवोदिता हरे ! प्राणेश्वरीजीवितवल्लभोऽसि यत् ।
दोषोऽप्ययं किन्तु कुलाङ्गनाततेर्मनोमणिस्तेयकरत्वमेव च ॥६

अत्र चकारः केवलं पादपूरणत्वादपार्थं इति व्यर्थं पदं,तेन 'मनोमणिस्तेयकरत्वमेव ते' इति पाठ्यम् ।

यस्यामीक्षणकौमुदीयमुदिता हा हन्त साऽभून्निशा
योऽयं तद्विरहान्धकारगहनः सोऽभूदहो वासरः ।
तद्रूपस्मरणे य इन्द्रियलयः सोऽभूदहो मूर्च्छनं
किं ब्रूयामविवेकतां तव विधे ! वामाय तुभ्यं नमः ॥७

अत्र पूर्व्वार्द्धे 'निशा'पदं केवलान्धकारेऽवाचकम् ; एवं 'वासर' शब्दोऽपि केवलप्रकाशेऽवाचकः, तेनेदमवाचकम् । अतो 'हा हन्त सा तामसी येयं तद्विरहान्धकारगहना ज्योत्स्नावती साऽभवं'दिति परिवर्त्तनीयम् ।

बिभर्षि नीलं वसनं यदेतद्धलञ्च पाणौ न कथं करोषि ।
जानातु लोकस्तव कृष्ण ! वैशाद्दर्षीयसि भ्रातरि भक्तिमत्त्वम् ॥८

अत्र 'हल'पदं कृष्णं प्रति साकूतत्वेनोचितमपि कर्षकत्वव्यञ्जनयाऽक्षेपेण तदेव बलदेवं प्रत्यनुचितार्थम्—तेन प्रकृतभङ्ग्यैव 'कथं न पाणौ मुषलं करोषी'ति प्रकृतार्थं प्रत्युचितमेव । अत्रापि ध्वन्यन्तरसद्भावः ।

सम्भोगचिह्नं दृष्ट्वा सक्रोधमाह—आचारस्तेनेति । मथुरास्थः श्रीकृष्णः श्रीराधिकाविरहेण व्याकुलः सन् स्वगतमाह—ममेक्षणस्य कौमुदीरूपेयं राधिका यस्यां निशुदिता सा निशाऽन्धकारोऽभूत्, स मम वासरः प्रकाशोऽभूत् । कदाचिदिन्द्रियाणां वृत्तिलोपरूपलयो भवति चेत्तदा क्षणं विरहपीड़ाया अपि निवृत्तिर्भवति, सोऽपि न सम्भवेदित्याह—तद्रूपेति । स लयः सम्प्रति मूर्च्छनमभूत् । जरासन्धेन सह युद्धोद्यमाद्यनैकविषये सदा इन्द्रियाणां विक्षेप एव तिष्ठति, कथं लयः सम्भवतीति भावः । भ्रमेण स्वीयपीतवसनं विहाय विपक्षाया

---

दोहददैवत इति—प्रकृते पुंलिङ्गे 'दैवत' शब्दप्रयोगोऽपि दूष्य इति स्मरणीयम् । आशयपदमिति—योगदर्शने त्वस्यार्थान्तरमिति तमुपजीव्य लक्ष्यविरचनं दर्पणादिनिबन्धेषु । ग्रन्थकृदयं वङ्गीयवैद्यवंशीय इति वैद्यकशास्त्र एवास्य बहुमानः । उक्तञ्चेति—तथैव वामनकृतकाव्यालङ्कारसूत्रवृत्तौ 'संवीतस्य हि लोकेऽस्मिन्न दोषान्वेषणं क्षमं'मिति पूर्वांशोऽस्य । असत् शब्देऽपीति—एवमेव-भगिनीभगवत्यादिशब्दा इत्याचार्यदण्डिप्रभृतयः प्रमाणविदः ।

वक्षोरुहौ काञ्चनपद्मकोरकौ मुष्टिप्रमेयं तव सुभ्रु ! मध्यमम्।
कटिश्च ते हेमशिलाविलासिनी शशी मुखं पङ्कजमङ्घ्रियुग्मकम् ॥९

अत्र 'कटि' शब्दो ग्राम्यः। एवमुत्तमनायके 'नागरा'दिशब्दोऽपि(2), नागरिकानागरयोरेकार्थत्वात्। तेन 'श्रोणिश्च ते हेमशिलाविलासिनी'ति पाठ्यम्।

नामेन पच्यमाने वा न पक्केऽप्ययमाशये।
भाति प्रेमरसः किन्तु दुर्ज्जरोऽङ्गविमर्द्दकः ॥१०

अत्र 'आशय'शब्दः। तस्य त्रैविध्यञ्च वैद्यकशास्त्र एव प्रतीतम्, अन्यत्राप्रतीतमिति तथा(ख)। तेन 'नामोऽसौ पच्यमानश्च न पक्वश्च भवत्यसौ। एकावस्थः प्रेमरसो दुर्ज्जरः प्राणिपीड़कः' इति पाठ्यम्।

अश्लीलन्तु त्रिविधमिति यदुक्तं तस्य भेदमाह। व्रीड़ादायि यथा—

लावण्यमन्यादृशमन्यथैव माधुर्य्यमन्यादृगिदं वपुश्च।
योगे वियोगे च भवन्ति तस्य स तेऽनुवर्त्ती किमतो भगं ते ॥ ११

अत्र 'भगं श्रीकाममाहात्म्ये'त्यादिषु यद्यप्यनेकेष्वर्थेषु वर्त्तते तथाऽप्यत्र व्रीड़ाकरं, किन्तु सुभगा-दुर्भगा-भगिनी-भगवत्यादिषु न तथा (ख)। शब्दस्य तथैव मर्य्यादा (ख), तेन 'स एव कृष्णस्तव पार्श्ववर्त्ती'ति पाठ्यम्। एवं लिङ्गपदमपि क्वचिद्व्रीड़ाकरं, न सर्वत्र। उक्तञ्च (ख) 'शिवलिङ्गस्य संस्थाने कस्यासभ्यत्वभावना।' एवं योन्यादिशब्दोऽपि। क्वचिन्न, यथाऽऽत्मयोनिप्रभृतिः। जुगुप्साकरं यथा—

Amarakosa.—Nanarthavarga.

ब्राह्मणः क्षत्रियो विड्वा शूद्रो वा निजधर्मतः।
न निस्तरति संसारं विना कृष्णाङ्घ्रिसेवनात् ॥ १२

नीलवस्त्रमङ्गे विधाय मानभङ्गार्थमागतं श्रीकृष्णं काचिन्मानिनी साकूतमाह। बलदेवस्य परिधेयवस्त्रं भक्त्या यदि स्वीयाङ्गे करोषि तदा तस्य हलमपि पाणौ कथं न करोषि? वर्णीयषि ज्येष्ठे। ध्वन्यन्तरमिति—वरं सुवलाघातोऽपि सह्यो नतु विपक्षरमणीवसनधारित्वमिति ध्वनिः। नागरिकशब्दो (2) नगरसम्बन्धिवाचकः, तथा नागरशब्दोऽपि। अत उभयोरेकार्थत्वान्नागरादिशब्दो ग्राम्य एव। ज्वरजनको रस आमाशये तिष्ठति, पच्यमानाशये किंवा पक्वाशये सति याति, कश्चिद्रस आमाशयेऽपि यातीति वैद्यकशास्त्रे

(2) 'नागरीशब्द' इति (ख) पुस्तके, 'नागरिकशब्द' इति (छ) पुस्तके।

अत्र विश्-विषोर्भिन्नप्रकृतिकत्वेऽप्याकारैक्येन विड़िति जुगुप्साकरं, तेन 'वैश्य' इति पाठ्यम्। एवं 'वायु'प्रभृतिपदमपि। यथा—

रजःप्रसूनस्य ममाक्षिलग्नमिति व्यथां काऽपि तथाऽभ्यनैषीत्।
मुखस्य वायुं ददता मुकुन्देनोदस्य तत्तत्र च सा चुचुम्बे ॥ १३

अत्र 'वायु'शब्दो जुगुप्साजनकः शब्दमर्य्यादया। तेन 'मुखानिलेनैव निरस्यता तत् क्षणेन सा तत्र चिरं चुचुम्बे' इति पाठ्यम्। अमङ्गलदायि यथा—अहह हृदयबन्धोः कोऽपि शोकः कुकूलो

ज्वलति किमपि मन्दं मन्दमेवातितीक्ष्णः।
अपि तु दहति सर्व्वाण्येव मर्माणि गाढ़ं
धगिति भवति दीप्तस्तज्जनस्यावलोके ॥ १४

अत्र 'शोक' इति करुणरसस्थायित्वादमङ्गलं मरणरूपं प्रत्याययति, अतोऽमङ्गलस्मरणादश्लीलम्। तेन 'प्रियविरहकुकूलः कोऽपि नोच्चैःशिखोऽपी'ति वाच्यम्। एवं नाशादिशब्दोऽप्यदर्शनवाच्यपि। तथा

कालिन्द्याः पुलिनप्लावि काञ्चनं सतरङ्गकम्।
द्योतते सुरतस्रस्ता वेणिः श्रोणिगतेव ते ॥ १५

अत्र कस्य जलस्याञ्चनं गतिः किंवा काञ्चनं कनकमिति सन्देहात् सन्दिग्धम्। तेन 'पुलिनाप्लाविनो धारा यमुनोर्मिर्यमस्वसु'रिति पाठे दोषान्तरञ्च नश्यति। यथा वा—

कृष्णोऽस्या वशवर्त्तीति वदनाद्वदनं गता।
चन्द्राच्चन्द्रे पदं कृत्वा स्तुत्या कीर्त्तिः प्रयाति ते ॥ १६

अत्र 'स्तुत्ये'ति, तृतीयया स्तवेन, किं स्तवार्हेति वा, सन्देहः। तेन 'कीर्त्तिर्भ्रमति ते भुवी'ति वाच्यम्।

कथितम्। अयन्तु सर्वथा न तथा। श्रीकृष्ण आह—कालिन्द्या इति। दोषान्तरञ्चेति—काञ्चनमिति शब्दो नपुंसकः—वेणिरिति शब्दः स्त्रीलिङ्गः अत उपमायां लिङ्गभेदरूपो यो दोषः सोऽप्यत्र पक्षे नास्ति। काञ्चनस्य कनकार्थत्वे श्लोकार्थः सङ्गच्छते इत्यपरितुष्यन्नाह—यथा वेति। यद्वाऽत्र जलाञ्चनस्यार्थस्याप्रसिद्धत्वात् निहतार्थत्वमेवेत्यत आह—यथा वेति। ललिता श्रीराधां प्रत्याह—श्रीकृष्णो राधाया वशवर्त्तीति कीर्त्तिर्वदनाद्वदनं गता सती एकस्या मुखचन्द्रादन्यस्या मुखचन्द्रे पदं चरणं कृत्वा सर्वेषां मुखचन्द्रं प्रयाति।

तव नयनचकोरीपुच्छकच्छाभिघातव्यथितहृदयवृत्तीनीव नीलोत्पलानि ।
कमलमुखि ! जनेभ्यो लज्जया न प्रकाशं दधति दिवसमध्ये मुद्रितान्येव सन्ति ॥

अत्र 'पुच्छकच्छाभिघाते'त्यादिना निर्ज्जितत्वमेव लक्ष्यते । सा च लक्षणा दुष्टैव । 'लक्षणा सा न कर्त्तव्या कष्टेनार्थागमो यतः । न यत्र शक्यसम्बन्धो न रूढ़िर्न प्रयोजनम् ॥' तेन

Kumarila Bhatta.—
Slokavarttika.

नेयार्थमिदम् (ग) । तेन 'तव नयनयुगश्रीसाम्यलेशं न लब्ध्वे'ति पाठ्यम् (2a)।

अथ क्लिष्टादीनि समासगतान्येव ।

यमुनाजनकज्योतिरुदयस्मितशालिभिः ।
त्वन्मुखस्य तुलामाहुमुदवासतपो दधे ॥ १८

अथ यमुनाजनकः सूर्य्यस्तस्य ज्योतिष उदयेन स्मितशालीनि पद्मानि तैः, इति क्लेशत एवार्थावगतिरिति क्लिष्टम् ।

नायं पौष्पः न खलु धनुषो नापि मौर्व्याश्च निर्गो
मुग्धे ! दिग्धः किममृतरसेनैव किंवा विषेण ।
निर्मुक्तोऽपि प्रकटमसकृद्दीव्यते मुच्यमानो
राधे! कोऽयं तव रतिपतेः षष्ठबाणः कटाक्षः ॥ १९

अत्र षष्ठत्वं विधेयं, तत्तु समासेन गुणीभूतम्—इत्यविमृष्टविधेयांशम् । तेन 'मुग्धे' इत्यत्र 'राधे' इति कृत्वा 'षष्ठः कोऽयं नयनमधिके पञ्चबाणस्य

रात्रौ विकसितानि नीलोत्पलानि दिवसे मुद्रितान्येव सन्तीत्यत्र हेतुः—श्रीकृष्णः प्रियां प्रत्याह—तवेति। अत्रोत्पलानां दिवसे मुद्रणे कारणं लज्जा, तस्याः कारणं प्रियानयन-कर्त्तृकं तन्निर्जितत्वं, तस्य बोधः पुच्छकच्छेत्यादिना न भवति। तत्र निर्जितत्वरूपेऽर्थे कस्यापि पदस्य शक्यसम्बन्धो न भवतीति न लक्षणा सम्भवति। यदि यथाकथञ्चित् कस्येन शक्यसम्बन्धं स्वीकरोति (2b) तदा कष्टगम्यत्वेनेयं लक्षणा दुष्टेत्यर्थः। चकोर्य्या पुच्छ-

(ग) लक्षणा सेति—अत्र मीमांसकानां शब्दशक्तिनिष्णातानां मतं सप्रमाणोपन्यासमुप-स्थाप्यते कौस्तुभकृद्भिः। द्वितीयकिरणटिप्पण्योऽस्माभिरेतदनुषङ्गि विवेचनं सूचितम्। रूढ़ौ

(2a) 'साहचर्य्यं न लब्ध्वे'ति (ङ) पुस्तके पाठः ।

(2b) एवं सर्वेष्वेवादर्शपुस्तकेषु ।

नाथ' इति पाठे साधु । यथा, वा—

अकृतं सुकृतं किञ्चिदतप्तञ्च तथा तपः ।
भवेयं येन ते नाथ ! करुणालवभाजनम् ॥२०

अत्र नञां प्राधान्यम्, तस्य समासेन गुणीभावः—एवं लवस्य विधेयत्वेन समासे गुणीभावः । तेन 'न कृतं सुकृतं किञ्चिन्न तप्तञ्च तथा तपः । मयि येन भवेन्नाथ ! करुणाया लवोऽपि ते ॥' इति साधु । तथा—'उदयति शशी श्रीराधाया न तन्मुखमण्डल'मित्यत्र (५म किरणे ४१ श्लोके) नकारस्य प्राधान्याच्च गुणः । यत्र तु विशेषाभिधानं तत्र नञः समासोऽपि न दुष्यति । यथा—

अमार्जितसुचिक्कणैरनभिषिक्तधौतोज्ज्वलै-
रभूषितमनोहरैरननुलिप्तसत्सौरभैः ।
तमालदलकोमलैर्नयनकौमुदीकन्दलै-
रहो किमिदमङ्गकैः स्फुरति नीलमाद्यं महः ॥ २१

अत्र 'सुचिक्कणादिविशेषणाभिधानेऽमार्जितादिषु नञः समासो गुण एव, तद्रूपत्वमेव विधेयम् । नातो विधेयाविमर्शः यथा 'अपीतक्षीबकादम्ब'मिति दण्डिनः (काव्यादर्शे २य परिच्छेदे २००तमः श्लोकः) ।

यथा वा—अनासक्तः कर्म कुर्वन्नसक्तो विषयान् जुषन् ।
अप्रमत्तो भजन् कृष्णं न स तैस्तैर्निबध्यते ॥ २२

घातो नीलोत्पले न सम्भवतीति लक्षणाऽभावबीजं ज्ञेयम् (3) । न कृतमिति—अत्रोत्तर-वाक्यगत'यत्'पदेन 'तत्'-पदापेक्षा नास्तीति भावः । अत्र नञ्-तत्पुरुषे उत्तरपद-प्राधान्याद्विधेयस्य नञोऽप्राधान्यं दोषः । कदाचिद्विरहजन्योन्मादेन चन्द्रादीन् श्रीराधा-ऽऽद्यवयवत्वेन ज्ञात्वा दिधीर्षया धावन्तं श्रीकृष्णं प्रति मधुमङ्गल आह—उदयतीति । श्लोकोऽयं प्राग्व्याख्यातः । अत्र नकारस्य प्राधान्याद् गुण एव नतु दोष इत्यर्थः । यत्र नञ्सहितसमस्तपदार्थस्य विशेषाभिधानमपेक्षितं भवतीति तत्र नञा सह समासेऽपि न दोषः । अहो आश्चर्यं किमिदं श्रीकृष्णस्वरूपमाद्यं नीलं महः कोमलाङ्गैः करणैः स्फुरति । कथम्भूतैः ? नेत्राणां प्रकाशिका या कौमुदी तस्याः कन्दलैरङ्कुरस्वरूपैः तद्रूपत्वमिति

---

प्रयोजने च शक्यसम्बन्धापरिहारेणार्थकल्पनायां लक्षणाऽवकाशः—यत्राशक्यः सम्बन्धस्तत्र लक्षणा निरवकाशेति नेयार्थत्वं शब्दस्य दोषः । तदाश्रयणञ्च वाक्यदूषणमिति तत्परिहारो-

---

(3) अत्र पाठो न कुत्रापि सम्यङिति प्रतिभाति । 'नीलोत्पले न सम्भवतीति लक्षणाबीज'मिति (ख) पुस्तके, 'नीलोत्पले न सम्भवती'ति (ग) पुस्तके, 'नीलोत्पले न सम्भवतीति लक्षणाबीजं ज्ञेय'मिति (ङ) पुस्तके, 'नीलोत्पले न सम्भवती'ति (क) पुस्तके । एवं प्रत्येकं पृथग्विधः पाठ उपलभ्यते ।

यथा वा—अपूतः पूततां गच्छेदविज्ञो विज्ञतां व्रजेत्।

अगुणी गुणितामेति कृष्णे भक्तो भवेद्यदि॥ २३

यथा वा 'अगृध्नुरादद्रे सोऽर्थान्' (Raghuvamsam I. 21) इत्यादि कालिदासः। यत्र नञः प्राधान्येन दोषान्तरमापतति, तत्र दोष एव। यथा 'गिरो न हरितत्परा दृगपि न हरीक्षोत्तरे'त्यादौ किं गिरो न हरितत्पराः, किं, हरितत्परा गिरो न, किं, गिरो न, कुतः, हरितत्पराश्चेदिति सन्देहः स्यात्। तेन 'गिरस्त्वहरितत्परा दृगपि च हरीक्षापरे'ति साधु।

विना शपथमालीनां विना कृष्णस्य नम्रताम्।

न सम्मुखीनाऽसीत्येष राधे! कस्तव दुर्ग्रहः॥ २४

'अत्र दुर्ग्रह' इति दुराग्रहवाची च, ग्रहवैगुण्यप्रतिपादकत्वेन विरुद्धमतिकृत्। 'विना शपथ'मित्यत्रापि 'विनाश'शब्देऽपि विरुद्धता। तेन 'ऋते शपथमालीना'मिति पठित्वा 'राधे! कोऽयं दुराग्रह' इति पाठ्यम्। यथा—

समांसमीनावलि चारयद्भिर्गवां कुलं बल्लवबालवृन्दैः।

वृन्दावने कौतुककेलिलोलः पुनातु वः श्रीव्रजराजसूनुः॥ २५

अमार्जितसुचिक्कणत्वमेव विधेयं न मार्जनाभावो विधेय इत्यर्थः। एवमपीतेत्यादौ पानाभावो न विधेयः, अतो नञा सह समासे न दोषः।

अनासक्त इति—अत्राप्यासक्त्यभावो न विधेयः किन्तु आसक्त्यभावविशिष्टकर्मकर्तृत्वमेव विधेयमिति भावः। अगृध्नुरिति—तथा चाकाङ्क्षाभावविशिष्टस्य पुरुषस्यार्थग्रहणकर्तृत्वमेव विधेयं, नत्वाकाङ्क्षाभावो विधेय इति भावः। नञ् इति—यत्र नञः प्राधान्यं तत्र विमृष्टविधेयरूपदोषाभावेऽपि दोषान्तरमापतति तत्र दोष एव सः। तदेवाह—गिर इति। किं गिरो हरितत्परा न, किंवा हरितत्परा यास्ता गिरो न, किंवा एता गिरो न भवन्ति यतो हरितत्परा न इति सन्देहरूपो दोषः। तेनेति—अत्र हरितत्परत्वाभावो न विधेयः किन्तु हरितत्परत्वाभावविशिष्टवाक्यत्वमेव विधेयम्। एवं हरिदर्शनाभावविशिष्टदृक्त्वमेव विधेयम्—अतो नाविमृष्टविधेयदोषो, नापि सन्देहदोषः।

सम्मुखीनामिना श्रेष्ठा नासि। तथा च पूर्वं सम्मुखीनामानुकूल्यवतीनां प्रियाणां मध्ये

---

ऽवश्यं साध्यः; निहतत्वाप्रयुक्तत्वादिस्थलेषु त्वर्थोपस्थितिबाधा प्रयोगविधिनियन्त्रिता शास्त्रविशेषपरिदृष्टसामर्थ्या च प्रसिद्धिहता चेत्येतेषां परस्परं भेदः। किं बहुनेति—एतच्च निर्बन्ध-

अत्र मांसमीनावलिसहितमिति विरुद्धमतिकृत् । एवम् अकार्य्यमित्वं भवानीपतिरम्बिकारमण इत्यादयोऽपि विरुद्धमतिकृतः ।

किं बहुना, प्रियतम-वल्लभतमेत्यादयोऽपि प्रियान्तरं वल्लभान्तरञ्च प्रतिपादयन्ति । तेन तेऽपि तथा । प्रियतमाप्रभृतयस्तु न तथा, औचित्यादिति केचिदाहुः (ग) । चूषणवान्तादिशब्दास्तु न तथा, कविभिः प्रयुक्तत्वात् ।

एषां समासगतत्वेन दिङ्मात्रमुदाहरणं क्रियते ।

समासगतश्रुतिकटु यथा—

प्रचक्रमे विक्रमविक्रयं भ्रुवा सुवक्रयाऽसौ रतिचक्रमक्रमात् ।

सुनिष्ठुरष्ठूतकटाक्षसौष्ठवा गोष्ठाधिराजस्य सुते विसंष्ठुले ॥३६

अत्र परार्द्धे समासगतं श्रुतिकटु । समुदायेन प्रतिकूलवर्णत्वात् प्रकृतरसाननुगुणम् । 'विसंष्ठुल' इति समाप्तपुनरात्तञ्चेति—परिवृत्तौ मूलनाशः ।

**एवमन्ये यथास्थूलं ज्ञेया वाक्ये तथैव च ॥ ३४२ का—**

च्युतसंस्कृत्यनर्थकं निरर्थकं वर्जयित्वेति श्रुतिकट्वादयो दोषा अनुमेयाः । क्रमेणोदाहरणानि—'प्रचक्रमे विक्रमविक्रये'त्यादि वाक्यमेव ( ३६ श्लोके )

त्वं श्रेष्ठाऽसोरिदानीन्तु तथा न भवसीति । गवां कुलं कथम्भूतम् ? समांसमीनावलिः प्रतिवर्षप्रसूता गोश्रेणिर्यत्र तथाभूतम् । 'समांसमीना सा प्रोक्ता सूते या प्रतिवत्सर' मिति शब्दार्णवः । न कार्य्यं किन्तु स्वतःसिद्धं मित्वम् । भवस्य पत्नी भवानी, तस्याः पतिरिति भवभिन्नोपपतिबोधो जायत इति विरुद्धमतिकृत् । एवं 'रमण'शब्दोऽप्युपपतिं व्यनक्ति— अतएव राधारमण इत्युच्यते, न रुक्मिणीरमणः । तेऽपि प्रियतमादयोऽपि विरुद्धमतिकृतः । औचित्यात् कविप्रयुक्तत्वेनोचितत्वात् (ग) ।

स्वविक्रमस्य विक्रयो व्यत्ययो यत्र तथाभूतं रतिचक्रं विपरीतसम्भोगसमूहम् । अक्रमादिति—स्वक्रमविरुद्धंपुरुषक्रममारुह्य, ल्यब्लोपे पञ्चमी । ष्ठूतं निक्षिप्तम् । विसंष्ठुले, पुरुषक्रमं विहाय स्त्रीसंस्थया स्थिते । परिवृत्तौ निर्दूषणपदप्रयोगे मूलस्य समस्तश्लोक-

---

वतां मतोद्घोषणं, परं ग्रन्थकृद्भिरत्र 'केचि'दिति यदरुचिसूचनं तत् श्रीकृष्ण एव वल्लभतमो नायकः नापरः प्राकृतः कश्चिदिति भक्तमतपक्षपातकचीकृतमिति प्रतिभाति । 'प्रियतमाप्रभृतिपदप्रयोगे एकस्य बह्वीनां वल्लभानां नारीणामौचित्यहानिप्रसङ्गाभावान्न दोषत्वमिति तेषामाशयः । अत्र टीकाकृदुक्तोऽर्थो कविप्रयुक्तत्वेनेत्यादिर्न मनोज्ञः । विगुणस्यन्दनेति—केचिच्छब्दाः परिवृत्तिसहपूर्वावयवाः, केचित् परिवृत्तिसहोत्तरावयवाः,

श्रुतिकटु। यथा वा—कष्टमष्टापदस्येदं दौष्ठवञ्च सुधांशुरः।

वर्ष्मणो ह्यनया घृण्या तुण्डेन च तव प्रिये ! ॥ २७

सुधांशुश्चन्द्रस्य घृण्या किरणेन। अत्र वाक्यमेव तथा।

लेखैर्दुश्च्यवनप्रष्ठैः सुरज्येष्ठादिकैरपि।

वन्द्यमानो विधू रातु शातं श्यतु च दुष्कृतिम् ॥ २८

लेखैर्देवैः, दुश्च्यवन इन्द्रः, सुरज्येष्ठो ब्रह्मा, विधुः श्रीकृष्णः, रातु ददातु, श्यतु कृशं करोतु। अत्र लेखादिशब्दाः सुरादिवाचका अपि श्लेषादिकं विना कविभिरप्रयुक्ताः—तेन वाक्यमेवेदमप्रयुक्तम्।

क्षमाक्षमाधरानन्तमकरध्वजलङ्घिनः।

प्लवन्ते शैब्यसुग्रीवमेघपुष्पबलाहकाः ॥ २९

अत्र क्षमाऽदयो बलाहकान्ताः शब्दाः क्षान्त्यादिभिः प्रसिद्धैर्निहतार्थाः। तथा हि क्षमा क्षान्तिः, क्षमाधरः क्षमी, अनन्तः परमेश्वरः, मकरध्वजः कामः, शैब्यः शिविपुत्रः, सुग्रीवो वानरराजः, मेघपुष्पो जलं, बलाहको मेघः—एतैः प्रसिद्धैः पृथ्वी-पर्वत-व्योम-समुद्रा भगवतो हयाश्चत्वारश्चाप्रसिद्धा व्याहन्यन्ते। यथा वा— सामुद्रं नवनीतं च महारिष्टिश्च नन्दकः।

हरिवत्सशयासन्नो रातां शातं सदैव वः ॥ ३०

अत्र सामुद्रं नवनीतं कौस्तुभः, महारिष्टिर्नन्दकः खड्गं, वत्सं वक्षः, शयः पाणिः, एते सामुद्रलवण नवनीत-महोत्पात-समृद्धि-तर्णक-शयनैः प्रसिद्धैर्निहताः—इति वाक्यमेव निहतार्थम्।

विष्णुस्यन्दनपर्णानां पृषदश्वेन धाविताः।

निपेतुः काश्यपीकान्ताः कौण्डिन्याः करपीड़ने (ग) ॥ ३१

अत्र 'विष्णुस्यन्दना'दयः शब्दा विष्णुरथादय इव गरुड़ाद्यर्थं न बोधयन्ति, तेनामी अवाचका इति वाक्यमेवावाचकम्। पर्णाः पक्षाः, धाविताः कम्पिताः, काश्यपीकान्ता महीश्वराः, कौण्डिन्याः रुक्मिण्याः।

स्येव नाशः स्यात्। वर्ष्मणो देहस्य। दौष्ठवं दुःस्थताम्। दौष्ठवमपि व्याकरणसिद्धम्। क्षमेति—क्षमादीन् लङ्घिनः शैब्यादयो भगवतश्चत्वारोऽश्वाः। विष्णुस्यन्दनेति (ग) - यथा विष्णुरथशब्दो गरुड़वाची न तथा विष्णुस्यन्दनशब्दः (ग)। वलक्षे पक्षे शुक्लपक्षे

---

केषाञ्चिदिरलानामुभयत्रैव परिवृत्तौ बाधा, एतेषां शिष्टप्रयोगतः संस्थाऽवगन्तव्येति न नूतनतया तेषामुद्भावनं समीचीनम्। खानपानादीति—क्रयमत्र

वलक्षे पक्षेऽयं दिवसपरिणामे शशधरो
दिविष्ठं कुष्ठं वा न किरणकलापं विकिरति ।
तथाऽपि द्रष्टॄणां नयनकुसुमं व्योमसरसो
महाप्रोष्ठीवल्काकृतिरपि कुलीकप्रियतमः ॥ ३२

अत्र पृथिवीस्थादिवाचिनोऽपि कुष्ठादयः शब्दाः, कुष्ठं व्याधिः, नयनकुसुमं नयनव्याधिः, कुलीकः कुजनः, इत्यनुचितार्थप्रतिपादकाः । तेनेदं वाक्यमनुचितार्थम् ।

खानपानादिसामग्रीं नाद्यापि बत साधिता ।
कृष्णोऽयमागतः प्रायो भक्ष्य ते गल्लचर्वणम् (ग) ॥ ३३

खानपानादयः शब्दा ग्राम्याः ।

कोषेभ्योऽन्नमयादिभ्यो विश्वादिभ्यश्च यः परः ।
सूते प्राणपतिः कृष्णः सौभाग्यं किमतः परम् ? ॥ ३४

अत्रान्नमयादयः पञ्च कोषाः, विश्वतैजसप्राज्ञास्त्रय आत्मानः, केवलं वेदान्तशास्त्रप्रयुक्तत्वादप्रतीताः, तेनेदमप्रतीतं वाक्यम् ।

अपानेनाभोजनेनामेहनेनापि खिद्यसे ।
किं ते तपस्विन् ! कष्टेन भज कृष्णं सुखी भव ॥ ३५

अत्र 'अपानादयः' शब्दाः पानाद्यभाववाचिनोऽपि अपानादिकमर्थं बोध-

दिवसपरिणामे अपराह्णे । प्रोष्ठी सफरी मत्स्यविशेषस्तस्य वल्कं त्वक् । अपराह्णचन्द्रस्य शोभाया अभावात् मत्स्यवल्काकृतित्वं ज्ञेयम् । यशोदां प्रति श्रीनन्द आह—खानेति—तव गल्लचर्वणं भक्ष्यम् । अहमेव श्रीकृष्णस्य भक्ष्यभोज्यसम्पादितेति वाग्व्ययो वृथैवेत्यर्थः ।

परस्तुरीयः । अत्रेति—अन्नमयप्राणमयमनोमयविज्ञानमयानन्दमया इति पञ्च कोषाः तथा जीवात्मनो विश्वतैजसप्राज्ञा इत्यवस्थात्रयम् । तत्र जाग्रद्दशायां जीवात्मनो विश्व इति संज्ञा, स्वप्नदशायां तैजस इति, सुषुप्तिदशायाम् प्राज्ञ इति च वेदान्तशास्त्र एव प्रसिद्धाः, नान्यत्र । अपानेन पानाभावेन पक्षेऽधोवायुना । एवमभोजनेनेत्यनेन शब्दशक्त्याऽमेध्यभोजनमेवोच्यते । तथाऽमेहनेन मेहनं स्निग्धं तैलादिसेचनं तदभावेन पक्षे मूत्रासेचनेन ।

---

खानापिनेत्यङ्कन्ते च्छशब्दसन्निवेशः । 'भक्ष्य गल्लचर्वणं'मित्यादिष्वपि भाषाविभाषाप्रचलितप्रकारतयाऽर्थसूचना । सुराचार्यः ( रालय इति—अत्रावक्तोतृपाशपरतया द्वितीयार्थसम्भावने न दोषस्पर्श इति स्मरणीयम् ।

यन्तोऽश्लीलाः, व्रीड़ाव्यञ्जकत्वात् । अस्निग्धं स्नेहाभावः ।

वचो वान्तसमं तस्य प्रकृतिस्तस्य दुःखदा ।

उत्सर्गोऽपि विषं तस्य यो वैष्णवविनिन्दकः ॥ ३६

अत्र वान्तादयः शब्दा जुगुप्सादायिनः, प्रवृत्तिर्वार्त्ता, उत्सर्गो दानं, पक्षे विड़ुत्सर्गबोधकम्—इदन्तु जगुप्सादायि। किन्तु वान्तशब्दो वम् धातुप्रयोगार्थान्तरसंक्रमितध्वन्यादौ न दोषः । यथा—'वान्तैरचरमूर्त्तिभिः सुकविना मुक्ताफलैर्गुम्फिता' इति (Anargharaghava I) मुरारिः ।

स्तिमितमृदुलचीनोद्दामकान्तोरुपीन-

स्तनजघननितम्बद्योतधाराप्रहारैः ।

जितमपि भुजपाशैः कान्तमाबध्य शृङ्गा-

हरणकुतुकखेलां सुभ्रुवो नाटयन्ति ॥ इति कन्दर्पमञ्जरी ।

'मा वम संवृणु विषमिति सातङ्कं पितामहेनोक्त' इति (Aryasaptasati, 2.) गोवर्द्धनः ।

सङ्केतं सा पितृवने चकाराद्य तपस्विनी ।

जीवितेशस्य संप्राप्त्यै रङ्गिणी मङ्गलच्चये ॥ ३७

जीवितेशः कान्तः, मङ्गलच्चयः मङ्गलगृहमित्यादिभिः पितृवने पितृउद्याने, तपस्विनी विरहिणी, श्मशान-यम-मङ्गलाभावाः प्रतीयन्ते—इत्यमङ्गलम् ।

विद्वत्सभायां भासि त्वं दोषाकर इवोज्ज्वलः ।

विद्यया च तथा धीरः सुराचार्य्यः सुरालये ॥ ३८

अत्र किं दोषाणामाकरः किं दोषाकरश्चन्द्रः, किं सुराणामाचार्य्यः, किंवा सुरायामाचार्य्यः, एवमपरोऽपि—इति सन्दिग्धं वाक्यम् ।

हरिचरणरत्नकिरणोज्जागरमम्भोदकुसुमजन्मनां गहनम् ।

अनुहरति प्रसवाशुगकूर्दनविद्रोत्थयुवतिमुखसुषमाम् (घ) ॥ ३९

गोपीभिः सह श्रीकृष्णस्य जलक्रीड़ां वर्णयति—स्तिमितेति । शृङ्गेति । जलयन्त्राहरण-खेलां नाटयन्ति । 'शृङ्गः प्रधाने शिखरे विधाने जलयन्त्रके' इति । अपरोऽपीति—सुरालये देवगृहे पक्षे मदिरालये । सूर्य्योदयेन प्रफुल्लानां कमलानां गहनं वनं कर्त्तृ कन्दर्पक्रीड़ा-

(घ) हरिचरणेति—अत्रार्य्याया गीतिसंज्ञाया द्वितीयः पादो दोषदुष्ट इवाभाति, 'कुसुमजनुषां वन'मिति पाठे सर्वं निर्मलम् । 'गहन'मिति काननसामान्यार्थे प्रयोगो 'विशेषणमात्रप्रयोगो

अत्र हरिचरणं विष्णुपदमम्बरं तस्य रत्नं मणिः, द्युमणिः सूर्य्यं इत्यर्थः। उज्जागरं प्रफुल्लता, अम्भोदकुसुमजन्मानि कमलानि, प्रसवाशुगः कामः, कूर्दनं केलिः—इति नेयार्थाः। इति वाक्यं नेयार्थम्।

श्रीकृष्णस्य जनानां निरुपधि विहिता पदाम्भोजे।

शमयति सुकृतं जनयति दुष्कृतमेकान्तनिर्मला हि मतिः॥ ४०

अत्र श्रीकृष्णस्य चरणाम्भोजनिहिता जनानां मतिर्दुष्कृतं शमयति सुकृतं जनयतीति वक्तव्यं यथास्थितं क्लिष्टम्—इति वाक्यमेव क्लिष्टम्।

नवं वयस्तेऽधिकसौकुमार्य्यता प्रियानुरागामृतसिन्धुरत्नता।

यथोत्तरं वृद्धिमती गुणावलिः का ते समाना भवतीह राधे!॥ ४१

अत्र 'अधिकसौकुमार्य्यता' 'प्रियानुरागे'त्यादि च विधेयम्। तच्च समासगतत्वेनाविमृष्टम्। तेन 'नवं वयस्ते सुकुमारताऽधिका प्रियस्य च प्रेम नवं नवं त्वयी'ति साधु।

असमासगतत्वेऽपि वाक्याविमृष्टविधेयांशत्वं द्रष्टव्यम्। यथा—

सौभाग्यं मम पुनरेतदेव कृष्ण! यत् कान्तागणगणने ममापि लेखः।

अत्रायं यदधिक आदरस्तदेतन्माहात्म्यं तव परमुत्तमं कृपायाः॥४२

अत्र 'एतदेवे'ति विधेयं, नत्वनुवाद्यम्—तत्तु पश्चान्निर्देशेनाप्यनुवाद्यमेव जातम्। यथा वा—अपाङ्गभङ्गेन धृतिं धुनोते कलेन वेणोश्च श्रियं लुनोते।

कुलञ्च शीलञ्च पुनः पुनीते स्पर्शेन योऽसौ पुरतः प्रियस्ते॥४३

अत्र योऽसावित्येतयोः पदयोः पूर्वमनुवाद्यं द्वितीयन्तु विधेयं, सन्निकृष्टतमत्वेन द्वितीयमेवानुवादवत् प्रतिभासते। तेन 'स्पर्शेन यस्ते सखि! सोऽभ्युपेती'ति वाच्यम्।

जन्यनिद्राया उत्थिता या युवतिस्तस्या मुखशोभां हरति।

समासगतत्वं विनाऽपि वाक्येऽविमृष्टविधेयांशत्वं सम्भवतीत्याह—असमासेति। 'एतदेव सौभाग्यं मम पुन'रित्यन्वये एतदित्यस्य विवक्षितं विधेयत्वं न सम्भवति, पश्चान्निर्देशात्; किन्त्वनुवादरूपत्वमेव जातं तस्य, अतः 'सौभाग्य'मित्यस्य विधेयस्याविमृष्टविधेयांशत्वम् 'अनुवाद्यमनुक्त्वैव न विधेयं प्रयोजये'दिति वचनात् (4)। अत्र विधेयान्तरमप्याह—स्पर्श-

विशेष्यप्रतिपत्त्या'विति कथञ्चित् समाधेयः। ते ते गुणा इति—एतदर्थे 'विलासचेष्टाः सखि केशिनाशिन' (३।८६) इत्यादि पद्ये 'जन्तन्ति मर्माणि गुणा घना इवे'ति वाक्यं तुलनीयम्।

(4) 'किन्त्वि'त्यादि वाक्यं मुद्रितपुस्तक एवोपलभ्यते।

एवं प्रस्तावतो यत्तदोः सम्बन्धोऽपि विचार्य्यते। तथाहि यत्र हि प्रक्रान्तप्रसिद्धानुभूतार्थविषयस्तच्छब्दः तत्र यच्छब्दो नापेक्षितः स्यात्।
यथा—वृन्दावने चन्दनवातशीते सचन्द्रिकायां निशि सुन्दरीभिः।

कलिन्दकन्यापुलिनेऽतिरम्ये स रासलास्योत्सवमाततान ॥ ४४

अत्र 'स' इति प्रक्रान्तं श्रीकृष्णमेव प्रस्तौति। 'स रासलास्यं वितताान कृष्ण' इति पाठे 'स' इति प्रसिद्धिमात्रद्योतकम्।

सा कान्तिरेकान्तरसायनं दृशां स वाग्विलासः श्रवसां सुधास्रवः।

तद्वीक्षितं प्रेमरसस्य दुर्दिनं कदा पुनर्मे विषयो भविष्यति ॥४५

अत्र तच्छब्दोऽनुभूतार्थः—एवमस्मिन्नर्थे वीप्साऽपि दृश्यते।

ते ते कटाक्षाः स स वाग्विलासस्तत्तत् स्मितं तत्तदसीमधाम।

ते ते गुणा हन्त समस्तमेव ममाधुना कृन्तति मर्म मर्म (ध) ॥४६

एवञ्चोत्तरवाक्यस्थो यच्छब्दः पूर्ववाक्यस्थतच्छब्दं प्रति न साकाङ्क्षः।
यथा—त्रैलोक्यलक्ष्मीमुकुटैकरत्नं श्रीकृष्ण एव प्रणयेन सेव्यः।

येन स्वकीयं पदमादरेण प्रदीयते मुक्त्यधिकं भजद्भ्यः ॥ ४७

अत्रोत्तरपदस्थो यच्छब्दः स्वाच्छन्द्येनैव शोभते। पूर्ववाक्यस्थो यच्छब्द उत्तरवाक्यस्थं तच्छब्दं प्रति सापेक्षः—यथा 'येन स्वकीय'मित्याद्युत्तरमर्द्धं पूर्वार्द्धं यदि भवति तदैव तच्छब्दाकाङ्क्षा। तेन 'श्रीकृष्ण एव प्रणयात् स सेव्य' इति चतुर्थचरणं पाठ्यम्।

द्वयोरनुपादानेऽपि द्वयोरर्थः क्वचिदवगम्यते। यथाऽस्मद्गुरोः—

न वादिनिग्रहः कार्य्यो न शिष्यानुग्रहोऽपि च।

उभयायितरूपस्य मनसो ह्युभयं मतम् (ध) ॥

Srinatha—Bhagavatamatadipika-*Introduction*

नेति। प्रकृतिप्रत्ययमर्य्यादया'मस्माक'मित्यत्र बहुवचनस्यापि विधेयत्वं ज्ञेयम्। एवं ममापीत्यत्रैकवचनस्य। अयमर्थः ममैकस्यापि लज्जनमध्ये वेशश्चेत्तदा सखीसहितानामस्माकं बह्वीनामिदं सौभगम्—अत्रास्मन्निष्ठबहुवचनस्य तथा स्वनिष्ठैकत्वस्यापि विधानं ज्ञेयम्। अधुना माथुरविरहेण व्याकुला श्रीराधिकाऽह—तत्तत् सीमारहितं धाम प्रभावादि समस्तमेव मर्म मर्म कृन्तति। प्रोक्ते द्विरुक्तिर्न दुष्यति। द्वयोर्यत्तदोः।

---

न वादीति—एतच्च ग्रन्थकृद्गुरुचरणानां श्रीमद्भागवतमतनिष्कर्षमाविष्कर्त्तुकामानां वैष्णववर्य्याणां श्रीनाथाचार्य्याणां सप्रश्रयमात्ममतनिवेदनमिति श्रीभागवतमतदीपिकाख्य-

अत्र यो वादी भवति तस्य जिगीषा मे नास्ति, यः शिष्यो भवति तस्मिन्ननुग्रहोऽपि नास्ति। किन्तु मन एव उभयायितं, तेन तस्यैवोभयं निग्रहानुग्रहौ—इति वाक्यद्वये पूर्ववाक्ये यत्तदोरभावेऽपि यत्तदर्थप्रत्यायकत्वम्। तथा'ऽसा' विति शब्दः स इत्यस्यार्थं नाभिधत्ते। यथा—

असौ गुणानां निकषो, गुणाना-मुत्पत्तिभूमिर्भवती च राधे !
जनस्तृतीयः कथमत्र योग्यो येन द्वयोर्दौत्यमुरीक्रियेत ॥४८

अत्र 'स' इत्यर्थे न असौ-शब्दः, अपि तु प्रकान्त एवार्थे। यद्यपि 'यस्ते प्रियोऽसौ न जहाति पार्श्व'मिति यच्छब्दानन्तरं व्यवहितोऽप्यदःशब्दस्तच्छब्दप्रतीतौ समर्थवद्भासते तथापि विना तच्छब्दान्तरं न वाक्यार्थपरिपोषः। तच्छब्दोपादानेनैव स स्यात्। यथा—'यस्ते प्रियोऽसौ स तवैव पार्श्वे' इति।

यस्ते मनोरत्नहरः सुनेत्रे ! नवीननीलाम्बुदवृन्दकान्तः।
राकेन्दुनिन्दाकरवक्त्रबिम्बो मयाऽयमालोकि वनं प्रयान्त्या ॥ ४९

यत्तु (5) क्वचिदिदम्-शब्दवददःशब्दोऽपि तच्छब्दार्थमभिधत्ते, तत्तु तद्यथा नैकवाक्यस्थम्, उत्तरवाक्यस्थमेव तथा, नतु योऽयं सोऽसाविति यच्छब्दनिकटत्वे, तथा सति प्रसिद्धार्थबोधकमेव, यथा यच्छब्दनिकटस्थस्तच्छब्दः

अथ ये पण्डितास्ते वादिषु निग्रहं शिष्येष्वनुग्रहञ्च कुर्वन्ति। एतद्द्वयमेव तेषां साध्यं भवति मम तु तद्द्वयं साध्यं न भवति, किन्तु मन्मन एव मम वादि। तथाहि रे मनस्त्वं भगवच्छ्रीकृष्णकीर्त्तनस्मरणादौ तिष्ठ, विषयेषु सदा मा तिष्ठेति मदाज्ञामनङ्गीकुर्व्वत् सदा विषयेषु तिष्ठति इत्यतो भगवच्चरणाश्रयणरूपबलेन तन्मनो जित्वा शिष्यं करिष्यामि। पश्चात् भगवन्मधुरनामकीर्त्तनादौ निमज्जनरूपानुग्रहं मनोरूपशिष्ये विधास्यामीत्यत आह—न वादीति। उभयायितरूपस्य वादिशिष्यस्वरूपस्य मनस उभयं निग्रहानुग्रहौ मतं मम सम्मतम्। मयाऽयमालोकीत्यत्र 'इदम्'—शब्दस्तच्छब्दार्थबोधकः, तददःशब्दोऽपीति यदुक्तं, तत्तु नैकवाक्यस्थम्, अपि तूत्तरवाक्यस्थमेव। यच्छब्दनिकटस्य तच्छब्दस्य प्रसिद्धार्थबोधकत्व उदाहरणमाह। राधामाधवयोर्यत् तत् प्रसिद्धं प्रेम तत् किं वर्णयितुं शक्यम्। अत्र द्वितीय'तत्'शब्देन सह 'यत्'शब्दस्याकाङ्क्षा, तेनैव 'यत्' पदं निराकाङ्क्षम्, अतः प्रथमं

निबन्धस्योपष्टम्भे स्थितम्। परमसहृदयत्वादिति—अत्र प्रत्ययप्रयोगकृतवैचित्र्यहानिश्च सुतरां लभ्या। परिवृत्तौ मूलनाशसम्भावनेति न कृता तत्रेहा ग्रन्थकृता। देया इति—

(5) 'तत्तु तद्यथेति' इत्यंशद्वयस्य स्थानभ्रंशः (ख) (ङ) (क) पुस्तकेषु।

प्रसिद्धार्थमेवाभिधत्ते । तद्यथा

राधामाधवयोर्यत्तत् प्रेम क्षेमकरं महत् ।
तत् किं वर्णयितुं शक्यं गिरा देव्याऽपि कर्हिचित् ॥५०

अत्र' तत् कि'मिति पुनस्तच्छब्देनैव निराकाङ्क्षम् । एवं प्रागुपात्तस्य यच्छब्दस्य वीप्सायामुत्तरवाक्यस्थस्य तच्छब्दस्यापि वीप्सा कर्त्तव्यैवेति न नियमः, तदकरणेऽपि दोषाभावात् ।यतो वीप्साप्रतिपाद्यं यत् किञ्चिच्छब्दार्थ-रूपं तदेवोत्तरवाक्यस्थैकतच्छब्देनैव समर्थ्यते, उत्तरवाक्यस्थितिसामर्थ्यादेव । यथा —गुणा अपि क्वापि भवन्ति दोषा दोषा अपि क्वापि गुणा भवन्ति ।
यो यो गुणस्ते स स तादृगेव दोषस्तु यो यो न च तस्य लेशः ॥५१

अत्र तृतीयचरणे द्वयोरपि वीप्सा, चतुर्थचरणे यच्छब्दस्यैव । उक्तो-दाहरणद्वये प्रामाण्यं 'यं यं व्यतीयाय पतिंवरा सा विवर्णभावः स स भूमि-पालः' (Raghu VI. 69) इति कालिदासः, 'यद्यत् पापं प्रतिजहि जगन्नाथ ! नम्रस्य तन्मे' (Malatimadhava I.) इत्यादि भवभूतिः ।

पदाम्बुजद्वन्द्वपरागवाही सुपावनोऽयं तव मातरिश्वा ।
ललाग हे वैष्णव ! पुण्ययोगात् पूतः कृतार्थश्च कृतोऽस्मि तेन ॥५२

अत्र मातरि श्वा ललागेति तव मातरि श्वा ललागेति विरुद्धमतिकृ-द्वाच्यम् । अथ पदांशेऽप्येते श्रुतिकट्वादय इति यदुक्तं तदुदाह्रियते ।
परमसहृदयत्वात् सर्वभूतप्रियत्वाद्भगवदनुगतत्वात् सर्वदा दुर्लभत्वात् ।
जगति कति न धन्याः पुण्यदेहा दृगन्तैरपि घनमघभाजामप्यघं नाशयन्ति॥५३

'तत्'पदं प्रसिद्धार्थमेव। तदुभयस्योदाहरणमाह—गुणा इति । कस्यचित्पुरुषस्य पाण्डित्या-दयो गुणा अप्यसत्सङ्गेन दोषा भवन्ति। उक्तं हि देव्या (घ) चतुर्थस्कन्धे—विद्याऽदिभिः 'सतां गुणैः षड्भिरसत्तमेतरैः'। एवं स्त्रीपुत्रादिसहितगृहरूपदोषा अपि सत्सङ्गेन गुणा भवन्ति। उक्तं हि दशमे (१४।३६।) ब्रह्मणा—'तावद्रागादयः स्तेनास्तावत् कारागृहं गृह'मिति। अत्र तु यो यो गुणः स स तादृगेव गुणरूप एव, न कदाचिद्दोषरूपः।

---

देव्ये इति स्यात्। आदर्शपुस्तकसङ्कलयितुः प्रमाद एवायं, न तु भागवतपुराणेऽसामान्य-व्युत्पत्तिमतां टीकाकृच्चरणानाम् । तथा च (४।३।१७) देवीं प्रति भगवतो भवस्य वाक्यम्—विद्यातपोवित्तवपुर्वयःकुलैः सतां गुणैः षड्भिरसत्तमेतरैः। स्मृतौ हतायां भृतमानदुर्दृशः स्तब्धा न पश्यन्ति हि धाम भूयसाम्" इति। असत्तमानामितरैः दोषभूतैरित्यर्थः। आर्षत्वात् समासः कथञ्चित् समाधेयः।

अत्र-त्वात्-त्वात्-त्वात्-त्वादिति श्रुतिकटुत्वम् (घ)।

सत्प्रीतिमत्तां तव किं वदामः सर्वत्र ते कृष्ण ! समैव दृष्टिः।

स्वभावरागा न भवन्ति नूनं क्वचिद्विरागाः क्वचिदूढ़रागाः ॥५४

पदांशे मत्तशब्दः क्षीवार्थेन निहतार्थः तेन 'प्रीतेः प्रभावं तव किं वदाम' इति पाठ्यम्।

तव तन्वङ्गि ! तरलैरपाङ्गानां तरङ्गकैः।

पञ्चयोरिषवः पञ्च राधे ! स्युः शतकोटयः ॥५५ इति पदांशगतम्।

'अपाङ्गाना'मिति बहुत्वमनर्थकं, तेन 'तव तन्वङ्गि ! निकरैस्तरङ्गाना-मपाङ्गयो'रिति पाठ्यम्। यथा वा 'दूराद्द्रावयतेऽवगुण्ठनपटं वामाङ्गुलीपल्लवै-रभ्यर्णे मयि सङ्गते करयुगेने'त्यादि (५म किरणे ८८ श्लोकः)। अत्र 'पल्लवै'-रिति बहुवचनमनर्थकम्। तेन 'लीलाङ्गुलिमुद्रये'त्यादि पाठ्यम्।

विजेयः कामसमरे राधया माधवो मुदा।

सखीमण्डलमध्येऽपि प्रजगल्भे न तत्रपे ॥ ५७

अत्र 'विजित' इति क्त प्रत्यये वाच्ये 'विजेय' इति ण्यत्-प्रत्ययोऽवाचकः। तेन 'जितोऽपि स्मरसंग्राम' इति पाठ्यम्।

शिरीषपुष्पादपि पेलवं वपुर्दुनोति यस्याः शयनेऽपि कौसुमे।

आदर्शवच्छ्वाससमीरणादपि प्रम्लायतीदं सहते तथा व्यथाम् ॥ ५८

अत्र 'पेलव'मित्यश्लीलं व्रीड़ाजनकं, तेन 'कोमल'मिति पाठ्यम्।

अशोभयत्तैव वीप्सा। एवं यो यो दोषस्तस्य त्वयि लेशोऽपि नास्ति—अत्र यच्छब्द एव वीप्सा, न तु तत्पदे।

सदिति—सर्वत्रासज्जनेषु कंसादिष्वपि मोक्षदायकत्वात् समैव तव कृपामयी दृष्टिः। जगद्वर्त्तिनो जनास्तु सर्वत्र स्वभावसिद्धानुरागविशिष्टा न भवन्ति किन्तु क्वचिद् द्विषु विरागाः क्वचिदनुकूलेषु जनेषूढ़रागा भवन्ति। कामक्रीड़ाप्रचुरे जलयुद्धहोलिकोत्सवादौ राधया विजेयः विजितोऽपि माधवोऽहमेव जितवानिति मिथ्या प्रजगल्भे, नतु तत्रपे। दिविष्ठानामिति पदांशे विष्ठेति निर्देशादश्लीलम्। एवं पूयते इत्यादौ पूय

---

दिविष्ठानामिति—एवं पूयत इति च—एतच्च गीर्वाणवाण्या अपूर्वतरवैशिष्ट्यविलसितात् स्थितिमदिति न नित्यताऽस्य स्वीकार्य्या, परं 'कुरु रुचि'मित्यादि प्राचीनतरग्रन्थकारादि-दर्शितेषु स्थलेष्विव कृत्रिमतया विच्छित्तिहानिकरमित्यनित्यदोषास्पदम्। दोषाणां नित्यानित्यत्व-व्यवस्था ध्वनिप्रस्थानाचार्य्यैः पूर्वैर्विशदं व्यवस्थापितेति सैवात्र प्रमाणम्। पूर्वैर्नैयार्थ-

दिविष्ठानां क्लेशकराः शतशो दितिनन्दनाः ।

हता ह्येकेन हरिणा हरिणा हरिणा इव ॥ ५९

अत्र 'दिविष्ठा' इति पदांशे जुगुप्साऽश्लीलं, 'देवताना'मिति पाठ्यम्—एवं 'पूयते' 'अभिप्रेता'दिशब्दाश्च ।

मृगाक्षीणां कामरणे निश्चेष्टानां वपुः स्पृशन् ।

दक्षिणोऽयं जगत्प्राणः प्रणयी समपद्यत ॥ ६२

अत्र 'मरण' इति पदांशेऽमङ्गलाश्लीलं, तेन'गोपिकानां रतिरणे निःष्पन्दाना'मिति पाठ्यम् ।

नीलाब्जहारो हरिणीदृशां वत्सरुहोपरि ।

सरोजकोरकगतो भृङ्गसङ्घ इवाबभौ ॥ ६३

अत्र 'वत्स'शब्देन वक्षो लक्ष्यते—तच्च नेयार्थं पदांशगतमेव। तेन 'वक्षोरुहोपरी'ति वाच्यम्। यद्यपि पूर्वपदपरिवृत्तिसहमुत्तरपदपरिवृत्ति-सहमुभयपदपरिवृत्तिसहञ्चेति प्रागेवोक्तं तथापि तेषां यथाप्रसिद्धि परिवृत्तिः कार्य्या। सा तु महाकविप्रयोगतः सहृदयहृदयादूषणाच्च समुचिता भवति। नहि सर्वाण्येकपर्य्यायोक्तानि पदानि परिवृत्तिक्षमाणि। यद्यप्ययमप्रयुक्त एव दोषस्तथापि पूर्वैर्नेयार्थतयाऽयं भेदो लिखित इति लिखितम् (घ)।

अथ वाक्येऽन्येऽपि दोषाः सन्तीति तानाह—

**प्रतिलोमाक्षरमाहतनष्टविसर्गञ्च संहिताहीनम् ।**

**हतवृत्तं हीनाधिककथितपदप्रस्खलत्प्रकर्षञ्च ॥**

इत्येतदंशेऽश्लीलम् ।

अथ द्वितीयकिरणे दोषरहितशब्दानामेव त्रिविधा परिवृत्तिः कृता। अत्र तु अतिकष्टादिदोषविशिष्टानां पदानां प्रयोग एवानुचितः, कुतस्तेषां परिवृत्तिसम्भावनाऽपीत्याह—यद्यपीति। नहीति—एकपर्य्यायोक्तानां सर्वेषां पदानां मध्ये यानि दुष्टानि पदानि तानि न परिवृत्तिक्षमाणि। ननु यद्यपि नेयार्थस्य स्वतन्त्रदोषत्वं न सम्भवति, अप्रयुक्तत्वदोषस्य लक्षण एव तस्यान्तर्भावसद्भावात्, तथापि पूर्वैरयं स्वतन्त्रतया लिखितः, तदभिप्रायेण मयाऽपि लिखितमित्याह—यद्यप्ययमिति।

---

तयेति—वस्तुतस्तु वैशद्यार्थमेव संज्ञाप्रपञ्चकल्पना। भेदे स्फुटतरे नामान्तरमुचितं, अस्मादाद्यसिद्धमार्गत्यागे लाघवं स्यादिति कृतो निवेशः।

ससमाप्तपुनरुपात्तं नष्टहतयोगसङ्कीर्णम्।
अर्द्धान्तरैकवाचकमनभिहितार्थं प्रसिद्धिहृतमपि च॥
अपदस्थपदसमासं गर्भितभग्नक्रमाक्रमाण्यपि च।
अमतपरार्थञ्चेति ज्ञेयं दोषान्वितं वाक्यम्(ङ)॥२४४का-

एवमेकविंशतिर्दोषाः। प्रतिलोमाचरमुक्तरसानुगुणवर्णप्रतिकूलवर्णम्।

यथा— पुष्पकोदण्डकण्डूलप्रकाण्डभुजमण्डलम्।
कम्बुकण्ठि! समुत्कण्ठं कण्ठेऽकुण्ठा हरिं कुरु॥ ६४

अत्र शृङ्गारे प्रतिकूलवर्णाः—एते तु वीररौद्रादावनुकूलाः। एवं वीर-रौद्रादौ माधुर्य्यव्यञ्जका वर्णाः प्रतिकूला इति बोद्धव्यम्।

आहत उत्वं प्राप्तो विसर्गो यत्र यथा—

श्यामोऽभिरामो रमणो मदनो मोदनो हरिः।
मनोविनोदनो भाति सततं गोपसुभ्रुवाम्॥ ६५

नष्टो लुप्तो विसर्गो यत्र यथा—

इत इत इत एहि देहि वाचं शशिमुखि! नापसर प्रसीद कृष्ण!
अयमपि भवताद्भवत्प्रसादान्मनसि गतव्यथ उत्क उन्मदश्च॥६६

अत्राद्ययोर्लुप्ता विसर्गाः।

संहिता सन्धिस्तया हीनं विसन्धिरित्यर्थः। विवक्षितश्च सन्धिर्भवतीति वाक्यबलात् कृतो विसन्धिः, स सकृदपि दोषावहः, प्रगृह्यादिहेतुकश्चेदसकृदेव। संहितायां हीनमित्यर्थे संहितायां दुःश्रवमश्लीलञ्च इति त्रिविधोऽयं दोषः। क्रमेणोदाहरणानि—

तवैतद्वदनं इन्दुनिन्दकं पङ्कजेक्षणे!
सकलङ्की निष्कलङ्के कथमस्मिन्न लज्जताम्॥ ६७

अत्र 'चन्द्रनिन्दक'मिति पाठ्यम्।

कलङ्किनश्चन्द्रमसः सुभ्र्वाननमिदन्तव।
रुचिं बिभ्रदपि प्रायो निष्कलङ्कमितीर्य्यते॥ ६८।

संहिताहीनमिति—सप्तमीतत्पुरुषेणार्थे कृते हीनशब्दस्य निकृष्टार्थत्वाद्:श्रवादिदोष-द्वयमुक्तं, तृतीयातत्पुरुषे कृते संहितया रहितमित्यर्थेन विसन्धिरित्येको दोषः, मिलित्वा

---

(ङ) दोषान्वितं वाक्यमिति—अत्रापि मम्मटादिमतमनुसृत्य गणना। विवक्षातः सन्धि-र्भवतीति—तच्च गद्यप्रबन्धे कथमपि सङ्घटते इति न लभ्यते। यदाहुः—संहितैकपदे

अत्र 'सुभ्रू'ेति दुःश्रवम्—तेन 'राधे ! मुख'मिति पाठ्यम् ।

अलगड्डमरुडाम्बर्य्यं तव मध्ये विराजिनि (ङ) !

स हरस्य करग्राह्यः करग्राह्यमिदं हरेः ॥६८

अत्र 'लगड्'शब्दोऽश्लीलः—तेन 'वृथा डमरुडाम्बर्य्य'मिति पाठ्यम् ।

हतवृत्तं छन्दोगतवैरूप्यं गुरौ लघुत्वम् । यथा—

शशिमुखि ! सखि ! राधिकेऽधिकोऽसि गुणविभवेन समस्तसुन्दरीभ्यः ।

त्वयि निहितमना मनागपि श्रीव्रजपतिसूनुरुपैति नान्यपार्श्वम् ॥७०

अत्र 'पादान्तो लघुर्गुरुर्वेति' वाक्यबलात् कृतो लघुवर्णन्यासो हतवृत्ततां

व्यनक्ति । तत्तु द्वितीयपादान्ते शोभते न चतुर्थपादान्ते, बन्धशैथिल्यात् । प्रथम-

तृतीयपादान्ते तु नैव (ङ) । एवमार्य्यासु च गणकृता विरुद्धता (ङ) । यथा—

गोकुलललनामण्डलरतिरणपाण्डित्यमुग्धमधुरश्रीः ।

श्रीव्रजराजकुमारो रासविलासे कुमारयति ॥ ७१

अत्र द्वितीयतृतीयगणौ सकारभकारौ विरुद्धौ । तेन 'व्रजललनामणि-

मालारती'त्यादि पाठ्यम् । एवं रसाननुगुणवृत्तञ्च हतवृत्तम् । पज्झटिकादि

शृङ्गारकरुणादौ विरुद्धं, हास्यशान्तादौ न (च) । शृङ्गारे यथा—

हे सखि ! मा कुरु मानमखर्वं मानः सौख्यं ग्रसति हि सर्वम् ।

कुरु सानन्दं हृदयममन्दं रसभरकन्दं भज गोविन्दम् ॥७२

हीनपदं यथा—कमलमुखि ! विचित्रस्यावधिः कोऽपि दृष्ट-

स्तरणिदुहितृतीरोपान्तमद्य प्रयान्त्या (च) ।

अत्र 'मये'ति हीनं पदम् । तेन 'तरणिदुहितृतीरं हन्त यान्त्या मयाऽद्ये'ति

पाठ्यम् ।

हरिणाचीलचायां स्तनोपरि हारायां लुटनपटिम्ना एवं तदुपरिशाटी-

त्रिविधो दोषः । हरिणाचीलचायां स्तनोपरि हारायां तथा पथि गव्ये मिथ्याघट्टाधिपत्यं

पाटनेन च प्रौढ़दर्पः श्रीकृष्णो निर्दयं यथा स्यात्तथा पथि गव्ये मिथ्याघट्टाधिपत्यं

पाटनेन च प्रौढ़दर्पः श्रीकृष्णो निर्दयं तथा नित्या सेवान्यत्र विभाषये"ति । पादान्तो

---

नित्या नित्या धातूपसर्गयोः । श्लोकेष्वपि तथा नित्या सेवान्यत्र विभाषये"ति । पादान्तो

लघुर्गुरुर्वेति—अत्र लौकिकच्छन्दःशास्त्रविदां सम्प्रदायेन द्वितीयचतुर्थपादान्तलघोरेव

तथा व्यवहारः । चतुर्थपादान्ते यदालङ्कारिकनिबन्धेषु कुत्रचिदस्य प्रतिषेधो निदर्शितस्तत्र

रचनागतं शैथिल्यन्तद्गुल्यमेव हेतुः । 'अन्यास्ता गुणरत्न'त्यादौ यदन्यैर्दर्शितं तत्रापि तावदेवं

नियामकं विधानम् । प्रथमतृतीयपादान्तसम्बन्धे गुरुत्वव्यवस्था वसन्ततिलकादिदीर्घच्छन्दः

अधिकपदं यथा—नवजलधरधामा श्यामलोऽयं किशोरः (च) इत्यत्र 'नवजलधरधामे'त्यनेनैव सिद्धे 'श्यामल' इत्यधिकम्। तेन 'नवकुवलयधामश्यामलोऽय'मिति पाठ्यम् ।

कथितपदं यथा—कलयति जलकेलिं मत्तमातङ्गकेलिः (च) ॥ ७२

अत्र केलिं केलिरिति कथितं पदम् ।

प्रस्खलत्प्रकर्षं पतत्प्रकर्षमित्यर्थः । यथा—

हरि हरि हरिणाक्षीलक्षवक्षोजहारत्रुटनपटिमशाटोपाटनप्रौढ़दर्पः ।
अयमदयमुदारोऽलीकघट्टाधिपत्यं कथयति पथि गव्ये दानलीलां दधानः ॥७३

अत्र पूर्वार्द्धादुत्तरार्द्धे पतन्नेव प्रकर्षः। अत्र समाप्तपुनरात्तञ्च। 'कथयति पथि गव्ये' इत्यनेनैवाकाङ्क्षासमाप्तेः 'दानलीलां दधान' इति पुनरात्तम्। तेनोत्तरार्द्धं पूर्वार्द्धीकृत्य पाठ्यम्, तथा सति दोषद्वयहानिः ।

नश्यन्मतयोगोऽसम्मतो योगो यत्र, अभवन्मतयोग इत्यर्थः। यथा—

यस्याज्ञा विधिमौलिमाल्यमधुपी, यं सेवते शङ्करो,
यस्मिन् सर्वमिदं चराचरगुरौ कृष्णे, त्रिलोकी यतः।
येनाकारि समस्तदानववधूवैधव्य,मुर्वीभरं
यो जह्रे, बलिमर्पयन्ति विबुधा यस्मै, स पायाज्जगत् ॥७४

अत्र 'कृष्ण' इति पदं विशेष्यं प्रथमान्तं यदि स्यात्तदा मतयोगो भवति—यच्छब्दैर्निर्दिष्टस्य तच्छब्दार्थस्य कृष्णपदस्य यच्छब्दार्थ एव प्रवेशोऽभवन्मत-करोति। अत्र पूर्वार्द्धे यथा कोमलसमस्तपदं तथोत्तरार्द्धे न, अतः पतत्प्रकर्षदोषः। जीवनेनेति—त्वद्दर्शनजनितज्वालया जीवनोऽत्यन्तकष्टरभूदित्यर्थः (5a)। एवं ताडशकष्टतया

खेव प्रचलितुमर्हति न तन्यूनाचरोपजातिप्रभृतिष्विति बहवः। परं 'भास्वन्ति रत्नानि महौषधीश्च पृथूपदिष्टा'मित्यादिषु बहुतरेषु कालिदासादिकविभिरस्य मर्यादा न साधु रक्षितेति प्रतिभाति। अतएव लक्ष्यलक्षणसङ्गत्या तत्रापि वैकल्पिकत्वविधानं सारवदित्यभियुक्ताः। गणकृत-विरुद्धेति—एवमत्र प्राचामार्य्यासु क्वचिद्विधिभङ्गः, अर्वाचान्तु बहुत्रेति मन्तव्यम्। विराजिनीति—विलासिनीत्यर्थं कष्टस्पष्टम्।

(च) हास्यशान्तादौ नेति—स्तवादिषु हास्यपरास्वन्योक्तिषु च तथा संस्था। प्रभृटिकादीति—आदिपदेन दोधकच्छन्दसो ग्रहणं ज्ञेयम्। शृङ्गारकरुणादीति—वस्तुतस्तु सुकवीनां तथा रचनाया एवाभावः। दिग्दर्शनमेतत्। सुवृत्ततिलकादिप्राचीनतरनिबन्धे मन्दारमरन्दा-

(5a) अर्वाचीनत्र च टीकायां 'जीवन'शब्दस्य पुंलिङ्गप्रयोगः प्रामादिक एवेति ज्ञेयम्।

यस्याज्ञा विधिमौलिमाल्यमधुपी, यं सेवते शङ्करो येनाकारि
योगः। तेन 'यस्याज्ञा विधिमौलिमाल्यमधुपी, यं सेवते शङ्करो येनाकारि
समस्तदानववधूवैधव्य,मुर्वीभरम्। यो जह्रे, बलिमर्पयन्ति विबुधा यस्मै,
त्रिलोकी यतो यस्मिन् सर्वमिदं चराचर, मसौ कृष्णः, स पायाज्जगत्॥ 'इति
वरम्। तथापि विभक्त्यक्रमदोषः, तेन—

'यो भक्त्यैव वशीभवेत्,पशुपतिर्यं सेवते,येन भू-निर्भारा,बलिमर्पयन्ति विबुधा
यस्मै, त्रिलोकी यतः। यस्याज्ञा विधिमौलिमाल्यमधुपी, यस्मिन् समस्तं
जगत् सोऽयं गोपवधूविलासरसिकः कृष्णोऽस्तु वः श्रेयसे॥' इति शुद्धम्।

यथा वा—मुञ्चति त्वयि दृशोः पदवीं मे येन येन शृणु यद्यदवाप्तम्।
जीवनेन कटुता, मरणेन प्रार्थ्यता, प्रियतया परिवादः॥ ७५

अत्र शृणुति क्रियायाः कर्मापेक्षित्वे जीवनादेः सर्वस्य कर्मत्वे
द्वितीयाऽन्तत्वं मतम्। वाक्यार्थकर्मत्वे जीवनादेः प्रथमाऽन्तत्वमेव मतम्।
तदुभयाभावेऽभवन्मतयोग इति केचित्। वस्तुतस्तु 'येन येन यद्यदवाप्तम्
तच्छृणु'त्यनेनैव वाक्यार्थश्चरितार्थः, पश्चा'ज्जीवनेन कटुताऽवाप्ते'त्यादिना
लिङ्गव्यत्ययेनान्वयेन नोक्तदोषः। अवाप्तमित्यत्र अवाप्नोति चेत् क्रियते,
तदा सुतरां न दोषः। यथा वा—

स्वाभिरूप्यकमलाकरजाते पङ्कजे इव सह भ्रमराभ्याम्।
निःसरत्तरकृपामकरन्दे माधवस्य नयने रुरुचाते॥७६

अत्र स्वशब्दो माधवे विवक्षितः। स तु वाक्यमर्यादया कर्तृगतत्वेन
प्रतिभासमानो नयनभ्रमरगत एव जातः, तेन 'आभिरूप्ये'त्येव शुद्धम्।
सङ्कीर्णं यथा—

असहिष्णुत्वेनाधुना मम मरणं भवत्विति जीवनकर्तृकप्रार्थ्यता मरणेन प्राप्ता। तथा
कान्तस्यादर्शनेऽपि या जीवति तस्याः प्रेमाणं धिगिति परिवादं प्रेमा प्राप्येत्यर्थः। द्वितीयाऽ-
न्तत्वमिति—कटुतां प्राप्तं जीवनमित्येव सम्मतं भवति। प्रथमाऽन्तत्वमिति—जीवनः कटुतां
प्राप्त (5a) इति शृणुत्वित्यपेक्षितो भवति। तदुभयाभावे कर्मत्वप्रथमान्तत्वाभावे सति।
स्फटिकवत् परकीयरूपग्रहणसमर्थोऽभिरूपशब्दार्थः। स्वाभिरूप्येति—स्वं कृष्णस्तत्-
स्वरूपो य आभिरूप्यसरोवरस्तत्र जाते ताराख्यानीयभ्रमरविश्लिष्टे पङ्कजे इव कृष्णस्य नयने।
अत्रेति—चेत्रः स्वपुत्रं पश्यतीतिवत् सर्वत्र स्वशब्दः प्रथमाऽन्तपदार्थवाची। अत्र तु
प्रथमान्तपदार्थो भ्रमरविश्लिष्टे नयने एव, अतो दोषः (6)।

कमलसुखेति—अनेकेनैव श्लोकेन हीनाधिक-
कथितपदत्वदोषाणां लक्षणम्। कलाऽणुकस्येति—नानाणुकपदेन दार्शनिकपरिभाषादि-
दर्वाचीनग्रन्थेषु चास्य विस्तरो लभ्यः।

(6) 'नयने तव कुतो दोष' इत्यस्फुटः पाठः (ङ) पुस्तके।

मा कुरु मानिनि ! क्षणं पदगतमुत्थाप्य विषमविपतीच्छाम् ।
आलिङ्ग भुवनमङ्गलमङ्गलमन्तर्मलं मानम् ॥ ७७

अत्र वाक्यद्वयस्थपदानि व्यत्ययेन वाक्यद्वयान्तर्गतानि । एकवाक्यगतपदानामन्योन्यसङ्कुलत्वेन तु क्लिष्टमिति भेदः ।

अर्द्धान्तरैकवाचकं यथा—

किमिन्दुः, किं सरसिजं, किमास्यं, ललिताङ्गि ! किम् ।
खञ्जनौ, किं स्मरशरौ राधे !, किं लोचने तव ॥ ७८

अत्रोत्तरार्द्धस्थैकं 'कि'मिति वाचकं पूर्वार्द्धान्ते ।

पदान्तपतितं राधे ! पश्य क्षणं रुषं त्यज ।
तन्मम श्रूयतां वाणी गाढ़ो मानः परं विषम् ॥ ७९

अत्र तच्छब्दः पूर्वार्द्धवाक्यस्थः—तत् तस्माद्रुषन्त्यजेत्यर्थः । स तूत्तरार्द्धादिस्थ इति तथा । अनभिहितवाच्यं यथा—

क्वासौ हरिर्मम मनोरथदूरवर्त्ती,
क्वाहं, न मे गुणलवो, न कलाऽणुकश्च (च) ।
किं दूति ! दूनयसि मां त्वमलीकयैव
वाचा, विचारय कथं स वशो मम स्यात् ॥८०

अत्र मनोरथस्यापि दूरवर्त्ती, गुणस्यापि लवः, कलाया अप्यणुक इत्यवश्यवाच्यमनभिहितम् ।

**रणितादि नूपुरादिषु विहगादिषु कूजितादीनि ।**
**स्तनितादि च जलदादौ भेर्य्यादिषु भाङ्कृतादीनि ॥**
**मणितादीनि च सुरते रवादि भेकादिषु प्रसिद्धिरियम् ।**
**अस्या विपर्य्यये स्यात् प्रसिद्धिहतदूषणं वाक्ये ॥३४५ का—**

ननु कथं सङ्कीर्णस्य स्वतन्त्रदोषत्वमुक्तं, क्लिष्टदोष एव तस्यान्तर्भावसम्भवात्, इत्यत आह—एकेति । क्लिष्टस्थल एकवाक्यगतानां पदानां क्लेशेनान्वये दोषः, अत्र तु वाक्यद्वय-

प्रसिद्धाणुकद्व्यणुकत्र्यणुकादीनां स्मरणम् । अविमृष्टविधेयांशत्वे लक्ष्ये पूर्वत्र न कुत्रचित् वाक्यस्य काऽप्याकाङ्क्षाजनिता बाधा वरीवर्त्ति, उत्तरत्र तु साऽस्त्येवेति रहस्यम् । सङ्गीतकविरचनामिति—'स्त्रीणां सङ्गीतविधिमादित्ये'त्याचार्य्यदण्डिप्रदर्शितोदाहरण इवात्रापि

यथा—धिनोति राधे! मच्चित्तं मणिमञ्जीरयोस्तव।
रवो नवघनस्येव सन्तप्तानां श्रुतिद्वयम्॥ ८१

अत्र 'रव'शब्दो वचननिष्ठ एव। अपदस्थमस्थानस्थं पदं यथा—

विवाहवेषेण तदा मुरारेर्बभूव या श्रीः कवयन्तु के ताम्।
सपत्नभावादिव साभ्यसूया सरस्वती क्वापि न तां व्यनक्ति॥ ८२

अत्र 'तां न व्यनक्ती'ति स्थानस्थितत्वं, तदभावे तथा। तेन 'वाण्येव तां क्वापि च न व्यनक्ती'ति वाच्यम्। यदि सन्निकर्ष एव स्थाने वैजात्यं तदैव दोषः, न तु विप्रकर्षे च। यथा—'वाणी न कुत्रापि च तां व्यनक्ती'ति वाच्यम्। प्रकाशितविरुद्धं यथा—'न मे वाणी वृन्दावनरमणलीलाऽमृतह्रदे निमग्नाऽप्युत्थातुं प्रभवति कथं या तु परित' इत्यादि (च)। यत्तु 'स्रजं न काचि'दिति (Kiratarjuniya VIII. 37.) तत्र न काचिज्जहौ अपि तु सर्वैव जहाविति विरुद्धार्थजननम्।

अस्थानस्थसमासं यथा—

किं लूमेन घनावलीं विधुनुषे, किं रे खुरक्षोदनैः
क्ष्मां क्षुभ्नासि, विनुद्यतां निजमहःकण्डूः समासाद्य माम्।
इत्थं दोस्तटघट्टनोद्भटकरध्मानप्रतिध्मानित-
क्ष्माभृत्कन्दरवृन्दमध्ययते गोष्ठादरिष्टं हरिः॥ ८३

अत्र क्रुद्धस्य भगवत उक्तौ न समासः, अक्रुद्धस्य वक्त्रान्तरस्योक्तौ स इति तथा। तेन 'किं लाङ्गूलविघट्टनक्षतघनव्यूहं खुरक्षोदन-क्षुभ्यत्क्ष्मातटमुच्च-

गतानां पदानां व्यतिक्रमेणान्वये दोष इति भेदो ज्ञेयः। सपत्नभावात् शत्रुभावात् यदि सरस्वती तां कुत्रापि न व्यक्तीचकार तदा पण्डितानां कुतस्तद्वर्णने सामर्थ्यमिति भावः। यत्त्विति—यतः शिरश्चालननञाऽभावरूपार्थो न जातः, अपि त्वभावविरुद्धार्थस्य भावरूपार्थस्योत्पत्तिः। श्रीकृष्ण आह—लूमेन लाङ्गूलेन किं मेघश्रेणीं कम्पयसि? निजतेजसः कण्डूया विनुद्यतां दूरीक्रियताम्। इत्थमनेन प्रकारेण वामहस्तेन दक्षिणहस्तस्य घट्टनेन चालनेन जातो य उद्भटकरध्मानस्तेन प्रतिध्मानिता गोवर्द्धन-

---

यतिच्छेदाच्छन्दोभङ्गदोषो दुर्मेध इति विभाव्यम्। न मे वाणीति—काचिद्दीणामित्यादि—पद्यद्वयमानन्दवृन्दावनकाव्यस्थितं किशोरस्य श्रीकृष्णस्य लीलामाहात्म्यप्रकटनपरमित्याकरः। हरेः क्षपेति श्लोक उत्तरार्द्धं न पूरितमत्र। एवमुत्तरत्र ९७तमे श्लोके।

लच्चयुगपत्संरावसम्येषि रे' इत्यादि स्यात्तदा न दोषः ।

गर्भितं प्रकृतवाक्येऽप्रकृतवाक्यस्य गर्भस्थितिः । यथा—

झञ्झाऽनिलमिव लवलीप्रणयलता न सहते दीर्घाम् ।

प्रतिघां, प्रियसखि ! तत्त्वं वदामि तव, माऽतिकोपिनी भूयाः ॥ ८४

अत्र 'तत्त्वं वदामि तवे'ति वाक्यान्तरं गर्भितम्—अतः 'प्रतिघां मानिनि ! राधे ! तेन त्वं माऽतिकोपिनी भूया' इति साधु ।

भग्नक्रमो भग्नप्रक्रम इत्यर्थः—स च कारक-वचन-पर्य्यायादि-क्रम-भङ्गादित्वेन बहुधा भवति । यथा—

काचिद्वीणां मुरजमपरा काऽपि वंशीं दधाना
काश्चित्तालं करकिशलये तालधारित्वमाप्ताः ।
चक्रुः सङ्गीतकविरचनां (च) रासमध्ये कयाचि-
द्गानं नानास्वरपरिमलं मोदमुच्चैर्वितेने ॥ ८५

अत्र 'कयाचिदि'ति कारकक्रमभङ्गः, 'काश्चिदि'ति वचनक्रमभङ्गः—तेन 'काश्चिदि'ति स्थाने 'काचिदि' त्येव पाठ्यम्,'आप्ता' इत्यत्र विसर्गाभावश्च, 'चक्रु'रित्यत्र 'चक्रे' इति च । 'कयाचिदि'त्यत्र 'रासमासाद्य काचि-द्गानं नानास्वरपरिमलामोदमाविश्चकारे'ति पाठ्यम् ।

पर्य्यायक्रमभङ्गो यथा—

हरेः कृपा काऽपि समुज्जिहीते, मुकुन्दभक्तेषु न चापरेषु (च) । ८६

अत्र पर्य्यायक्रमभङ्गः । तेन 'हरिप्रियेष्वेव न चापरेष्वि'ति वाच्यम् । इदं ये प्राचीना दैवतादिविषये रसं न मन्यन्ते तेषां मतानुरोधेन लिखितम् । ते तु सत्यं व्याहरन्ति श्रीभगवन्तं विनाऽन्येषां नामान्तराभावाद्भेदप्रतीतिः स्यादेव, तत्तन्नाम्ना प्रसिद्धस्य श्रीभगवतस्तु नामान्तराख्यानेन पर्य्यायक्रमभङ्ग-दोषः, तस्य नाम्नामनन्तत्वात् । अत्र तु सुतरां न दोषः, हरिमुकुन्दयोर्भेद-

कन्दरसमूहानां गर्भा यत्र तद्यथा स्यात्तथाऽरिष्टासुरं गोष्ठादयते प्राप्नोति । वक्रान्तरस्य वर्णनकर्त्तुर्जनस्योक्तौ । स समासः । तेनेति—उच्चलचस्य मत्तवृषसमूहस्येव यो युगपत् संरावोऽतिघोरशब्दो यत्र तद्यथा स्यात्तथाऽभ्येषि अभिमुखं गच्छसि ।

हरेरिति—हरिभक्तेष्वित्येव पर्य्यायक्रमः । 'मुकुन्दभक्ते'ष्विति पदेन तस्य भङ्गो ज्ञेयः । अत्र कथितस्य 'हरि' पदस्य पुनः कथनात् या पौनरुक्त्याशङ्का साऽप्यत्र न कार्य्येत्याह—तथा चेति ।

प्रतीतेरभावात् (7)। अत्र कथितपदाशङ्काऽपि न कार्य्या। तथा च—

**विषादे विस्मये हर्षे कोपे दैन्येऽवधारणे।**
**उद्देश्यप्रतिनिर्द्देश्यविषये च प्रसादने।**
**आनुकम्प्यादिके चापि पौनरुक्त्यं न दुष्यति॥ ३४५ (क) का—**

अतोद्देश्यप्रतिनिर्द्देश्यविषयतैव।

यथा—न भजति तपसा क्लमः क्लमत्वं विषयभवं न सुखं सुखत्वमेति।
विषमपि च विषस्य नाशकं स्यान्नहि सदृशे सदृशत्वमेव नित्यम्॥८७

इत्यादौ पौनरुक्त्यं तच्छब्देन वा निर्द्देशो गुणः। आदिशब्दादर्थान्तर-संक्रमितेऽपि। यथा—'फलमपि फलं माकन्दाना'मित्यादि (३यकिरणे १मश्लोकः)। यत्र तु आरम्भ एव क्रमो नास्ति, तत्र भग्नक्रमो नास्ति।

यथा— आलिङ्गन् बाहुदायास्तनु,मनुरमयन्नर्मदां, तुङ्गभद्रां
चुम्बन्, भद्रां विकर्षन्, निरवधिसुरसो देविकाया रसेन।
वाञ्छत्याः केलिलुब्धो, मुखनिकटमिलच्चन्द्रभागोऽयमुच्चैः
कावेरीवारिखेलां कलयति रमणीमण्डले कृष्णसिन्धुः॥ ८८

एवमन्यदप्यूह्यम्। न विद्यते क्रमो यत्र तदक्रमम्। यथा—
इह मयि सुखं निद्रामाप्ते कया मम चोरिता
मणिमुरलिकाहारः कण्ठात् स चाधिकदुर्लभः।

उद्देश्यप्रतिनिर्द्देशस्योदाहरणान्तरमाह—यथेति। तपसा करणेन जातो यः क्लमः दुःखं तस्य वैषयिकदुःखसदृशत्वेऽपि न दुःखत्वम्। एवं विषयजन्यसुखस्य पारमार्थिक-सुखसदृशत्वेऽपि न तस्य सुखत्वम्। तथाविधदुःखजनकत्वेन द्वेष्यमपि कटादिदशान्तरस्य नाशकमपि भवति, अतः सदा द्वेष्यमपि न भवति।

आलिङ्गन्निति—रमणीमण्डले श्रीकृष्णरूपः सिन्धुः कावेरीवारिखेलां करोति—'कावेरी स्यान्नदीभेदे हरिद्रापण्ययोषितोः'। अत्र कृष्णपक्षे हरिद्रा, सिन्धुपक्षे नदी। किं कुर्वन्नित्याकाङ्क्षायामाह—बाहुं ददातीति बाहुदा गोपी, पक्षे बाहुदा नदी। नर्मदेत्यादयो गोपीविशेषाः, पक्षे प्रसिद्धनद्यः। दिव्यतीति देविका प्रेयसी तस्याः शृङ्गाररसेन सुरसः, पक्षे देविका नदीविशेषस्तस्या रसेन जलेन। वाञ्छती प्रकृष्टवचोयुक्ता काचिद्गोपी, पक्षे वाञ्छती नदी। चन्द्रभागा काचिद्गोपी, पक्षे चन्द्रभागा नदी। पत्युः कुञ्जमध्ये गान्धर्वरीत्या विवाहकर्त्तुः श्रीकृष्णस्य निगदितं श्रुत्वा सा कात्यायनीव्रतपरा नन्दव्रजकुमारिका।

---

(7) 'इद'मित्यादिः 'भावा'दित्यन्तः सन्दर्भो मुद्रितपुस्तके नास्ति। स च सन्दर्भष्टीकाकृताऽप्युपेक्षित इवाभाति। केनापि प्रक्षिप्तोऽयं स्यात्।

निगदितमिति श्रुत्वा पत्युर्विहस्य विहस्य सा
निभृतनिभृतञ्चेलाञ्चल्या मुखेन्दुमपावृणोत् ॥ ८९

अत्र 'हारश्चायं मणीन्द्रकुलोज्ज्वल' इति चकारस्थितौ क्रमः, अन्यथाऽक्रमः। एवम् 'इति निगदितं श्रुत्वे'ति क्रमः—तदन्यथाऽक्रमः। अस्थानस्थपदादत्रायं भेदः—तत्तु तथाभूतमप्यन्वयबोधं झटिति करोत्येव, इदन्तु न तथा।

अमतो विरुद्धः परार्थः परस्य रसस्यार्थो यत्र तदमतपरार्थम्। यथा—

हरिपरिचयान्नीवी मोक्षं गता, गतबन्धन-
श्चिकुरनिकरो, हारश्चायं गुणेन वियोजितः।
दशनवसनं (क) निर्लेपत्वं जगाम मृगीदृशां
सुरतरभसो ज्ञानाभ्यासादतीव विशिष्यते ॥ ९०

अत्र परार्थः शान्तरसः शृङ्गाररसे विरुद्ध इत्यमतपरार्थम् (क)—तेन 'इह (8) विहरणे नीवी'त्यादि पठित्वा चतुर्थचरणे 'घनरसमयीभावः कामोत्सवस्तु समोऽभवदि'ति पाठ्यम्।

हरिपरिचयादिति—श्रीकृष्णस्य निविड़संयोगान्नीव्यादीनां मोक्षपदवीप्राप्तत्वे सति प्रकटितो यः सुरतसम्बन्ध्यानन्दसमुद्रस्तस्य परमाणुरपि ज्ञानाभ्यासजन्यब्रह्मानन्दे नास्ति। एतदेवाह—सुरतरभस इति। तथा च भक्तिरसामृतसिन्धुधृतपुराणवचनम्—'ब्रह्मानन्दो भवेदेष चेत् परार्द्धगुणीकृतः। नैति भक्तिसुधाऽम्भोधेः परमाणुतुलामपि ॥' घनमयीभावः सान्द्रानन्दमयीभावः—तथा च कामक्रीड़ाजन्यसान्द्रानन्दः कामक्रीड़ा च अनयोः साम्यन्तु यथा कारणं तथैव कार्य्यस्योत्पत्तिरित्याकारानुरूपत्वमेवेति ज्ञेयम्।

---

(क) दशनवसनमिति—दन्तच्छदशब्दवत् परिवृत्तिसहोभयावयवघटितोऽधरबोधकः शब्द इति ज्ञेयम्। अत्र समुदयवाक्यार्थविमर्शे 'निर्लेपरागोऽधर' इति विदग्धनारीललितलपितं मूलभूतं स्यात्। परार्थः शान्तरसः शृङ्गाररसे विरुद्ध इति—रसविरोधचर्चायां न सर्वेरसा इतररसैः सहाश्रयैक्येन विषयैक्येन वा स्थातुं प्रभवन्ति यथा शान्तरसः श्लेषाद्यभिधानव्यतिरिक्तस्थले शृङ्गाररसेन विरुध्यते। एष एव मार्गः प्राचीनैरानन्दवर्द्धनादिभिर्नव्यमतप्रवर्त्तकैः 'क्षिप्तो हस्तावलग्न' इत्यादि सन्दर्भसमाकलनेन ध्वन्यालोके सिद्धान्तितो जिज्ञासुभिस्तत एव समाकलनीयः। सच्चिदानन्दघनस्याखण्डस्य रसस्यैक्यकलनायां नास्ति पारमार्थिको विरोध इति हि तत्त्वदृशां दर्शनम्। नवं शीकरमासाद्येति—अत्रापि न वंशीकरम् आसाद्य नवंशीकरमासाद्येति द्विधा पदभङ्गः सम्भवीति ज्ञेयम्। एषु नेयार्थता निहतार्थता वा न दोषायेति विदुषां सुस्थितः सिद्धान्तः।

---

(8) 'हरिविहरणे' इति निकृष्टतरः पाठो मुद्रितपुस्तक एवोपलभ्यते।

एवं वाक्यदोषानुक्त्वाऽर्थदोषानाह—

कष्टोऽपुष्ट-व्याहत-पुनरुक्त-ग्राम्य-दुष्करा अपि च ।
संशयितो हेतुहतः प्रसिद्धिविद्याविरुद्धश्च ॥
अनवोकृतः सनियमोऽनियमस्तथा सनियमे च ।
सामान्ये सविशेषः सामान्यो युतो विशेषे च ॥
साकाङ्क्षो निर्वाहे पूरणकारो विरूपसहचरितः ।
व्यङ्ग्यविरुद्धो विध्यनुवादयुक्तस्तथाऽश्लीलः ।
त्यक्तपुनःस्वीकृत इति दुष्टा अर्थास्तु विंशतिस्त्रियुता (क) ॥

३४६का—

प्रत्येकेनोदाहरणानि व्यस्तेन—'न वंशीकरमासाद्ये'ति (ख) (७म किरणे ३५ श्लोके)। अत्र यमानुजनिर्यमुना, पक्षे नियमः, यमनियमेति गणना क्रमादिति कष्टोऽर्थः ।

किन्त्वयं चित्रकाव्यादौ न दोषो न च वा गुणः ॥३४६(क)का—

अपुष्टो यथा—

कौस्तुभमहसा वक्षःस्थलमिदमाभाति राधिकाजानेः ।
उदयद्दिनमणिकिरणैरतिवितता गगनसरणीव ॥ ८१

अत्रातिविततत्वमपुष्टम् ।

व्याहतो यथा—

यस्याश्चन्दनचन्द्रिकासरसिजप्रालेयवर्षोपल-
स्पर्शादप्यधिकं त्वचां सुखकरस्पर्शो निदाघाहनि ।
सेयं लोचनकौमुदी मम सखे ! राधा हिमस्यागमे
वक्षोजद्वितयोष्मणैव हरते शीतस्य भीतिञ्च मे ॥ ८२

अत्र चन्द्रिकाया अप्यधिको यस्याः स्पर्श इति तस्या अपकर्षः सूचितः, पुनः 'सेयं लोचनकौमुदी'ति तस्या एवोत्कर्षे व्याहतोऽर्थः । तेन 'सेयं चित्त-रसायन'मिति पाठ्यम् ।

यस्तेन यथासङ्ख्यक्रमं विनाऽपि व्युत्क्रमेण प्रत्येकेन श्लोकेन । लीलोपधानं सम्भोगलीलाय

पुनरुक्तो यथा—प्रेयसि ! राधे ! कथं ममोरौ सति भूमावुपविश्यते ?
तथाहि— ऊरुः पीठ,मुरो विलासशयनं, लीलोपधानं भुजौ,

खेलान्नं करपल्लवो, मणिमयादर्शः कपोलस्थली ।

आचम्यं वदनाम्बुजासवरसः, स्वेच्छोपदंशोऽधरो,

मन्मूर्त्तिस्तव वल्लभे ! मधुमतीसिद्धिः स्वयं साधिता ॥ ८३

अत्र कन्दर्पमञ्जरीनाटिकायां चूर्णिकायां 'प्रेयसी'ति सम्बोधने सति पुन'र्वल्लभे' इति सम्बोधन अर्थपौनरुक्त्यं, तेन चूर्णिकायाम् 'अयी'ति सम्बोधने सति दोषहानिः। 'मधुमतीसिद्धि'रित्यत एव समाप्यते चेत्तथाऽपि 'स्वयं साधिते'ति निर्वाहे पूरणकारी दोषः। एवं 'मधुमती'ति सामान्ये सविशेषः—'मन्मूर्त्ति'रिति विवक्षिते सति सनियमेऽनियमः—तेन 'मधुमती काऽप्येव सिद्धिः परे'ति चेत् क्रियते तदा पूरणकारिदोषहानिः, किन्त्वनियमे सनियमो दोषः। तन्नेण चत्वारो दोषा दर्शिताः। तेन 'प्रायोऽयं मम विग्रहः खलु तव क्रीड़ोपहारः पर' इति पाठे सर्वदोषहानिः। किञ्चास्य तृतीयचरणं चेच्चतुर्थचरणं भवति तदा दुष्क्रमदोषोऽपीति। किञ्च 'प्रायोऽयं मम काय एव हि मया भोगाय ते कल्पित' इति चेत् ग्राम्योऽपि।

संशयितः सन्दिग्धो यथा—

नृदेहमासाद्य निषेवणीयं किमत्र तन्नोपदिशन्तु भव्याः ।

गोविन्दपादाम्बुरुहासवः किं स्मेरनववक्त्राम्बुरुहासवः किम् ॥ ८४

अत्र शान्तशृङ्गारयोः शान्तस्यैवोपदेश्यत्वादसन्दिग्धत्वे (१०) प्रश्नो दोषः।

'तक्रिया' इति प्रसिद्धमुपाधानम्। भर्ज्जितगोधूमादय 'उपदंश'पदवाच्याः। मधुमतीसिद्धिः कामोन्मत्ततजनकं यन्मादकं वस्तु तत्सम्पादनीया सिद्धिस्तद्रूपेत्यर्थः। स्वयं साधिता स्वतःसिद्धा। सामान्य इति—पीठशय्यालीलाकमलादिसर्ववस्तुसम्पादनीया (९) सिद्धिस्तद्रूपा श्रीकृष्णमूर्त्तिरिति सामान्ये वक्तव्ये 'मधुमती'ति विशेषनिर्देशात् सामान्ये सविशेषरूपो दोषः। प्रायोऽयमिति—'काय'शब्दस्याधोऽङ्गविशेषबोधकत्वेन ग्राम्यरूपो दोषो ज्ञेयः।

(९) 'लीलाकमलादिसम्पादनीयेति' (क) पुस्तके पाठः।

(१०) —'त्वादसन्दिग्धे' इति (ख) (क) पुस्तकयोः पाठः।

हेतुहतो यथा—अपि देशः स किमास्ते श्रवणशलाकेव कोकिलालपितः ?

दावानलकीला इव न यत्र सखि ! चन्द्रमःपादाः ॥ ८५

अत्र कोकिलालप्यादेः श्रवणशलाकाऽऽदित्वे हेतुर्नोक्तः। तेन 'प्रियाविरहेन स देशः श्रवणशलाकेव यत्र न पिकोक्तिः। न च दवदहनज्वाला इव वा यत्रेन्दुदीधितय' इति पाठ्यम्। 'अपि देशः स किमास्ते श्रवणशलाकेव कोकिलालपितः। दावानलकीला इव दयितवियोगे न यत्र शशिभासः॥' इति चेत्तदा व्यङ्ग्यविरुद्धो भवति—अस्मिन् देशे वल्लभान्तरं लभ्यत इति व्यङ्ग्यविरुद्धम्।

प्रसिद्धिविरुद्धो यथा—

त्वमनाकुलवकुलतरो ! मत्तः खलु सुभग एवासि।

राधायाः पदकमलजघातायदकालफुल्लोऽसि ॥ ८६

अत्र पद्मिन्याश्चरणाघातेन रक्ताशोक एवाकाले फुल्लति, मुखमदिरागण्डूषेण हि वकुल इति कविसम्प्रदायप्रसिद्धिः (ज)—तदन्यथा चेत् प्रसिद्धिविरुद्धोऽर्थः—तेन 'राधाया मुखमदिरागण्डूषबलादकालफुल्लो यदि'ति वाच्यम्।

विद्याविरुद्धः शास्त्रविरुद्धो यथा—

अयं महात्मा परमस्तपस्वी स्नायी निशीथेषु निशीथभोजी (ज) ॥ ८७

अपि देश इति—स देश उपदिश्यतां, तद्देशजिगमिषा नायिकाया अभिप्रायः।

---

(ज) मुखमदिरेत्यादि—तथा च संग्रहः—'स्त्रीणां स्पर्शात् प्रियङ्गुर्विकसति वकुलो योषितामास्यमद्यात् पादाघातादशोकस्तिलककुरवकौ वीक्षणालिङ्गनाभ्याम्। मन्दारो नर्मवाक्यात् पटुमृदुहसनाच्चम्पको वक्त्रवातात् गीतालापान्नमेरुर्विकसति च पुरो नर्त्तनात् कर्णिकार' इति। कविसम्प्रदायसिद्धिरिति—एतदधिकानां कविप्रसिद्धिभूतां सामान्यतः परामर्शः साहित्यदर्पणे 'मालिन्यं व्योम्नि पाप' इत्यादिनोद्दिष्टस्तत एवालोकनीयः। एषां कक्षाविभागे नियामकं वचनम्—'असतोऽपि निबन्धेन सतामप्यनिबन्धनात्। नियमस्य पुरस्कारात् सम्प्रदायस्त्रिधा मत' इति। अत्र 'वस्तुवृत्तिरतन्त्रं, कविसमयः प्रमाण'मिति यायावरीयसिद्धान्तस्तत्त्वम्। राजशेखरकृतायां काव्यमीमांसायां केशवमिश्ररचितेऽलङ्कारशेखरे वाग्भटीये काव्यालङ्कारे जिनसेनकृतेऽलङ्कारचिन्तामणौ तथैवमादिषु

इत्यादौ ग्रहोपरागादिकमन्तरेण रात्रिस्नानं धर्मशास्त्रविरुद्धं, निशीथ-भोजनमपि तथा। यद्युपहासपरमिदं तदा न दोषः। स्तुतिपरत्वे तु दोष एव। यथा वा—नखाङ्कितं दोस्तटमङ्गदस्यारोपेण गोपायति काऽपि गोपी।

उरोजयोः काचन चुम्बलग्नं ताम्बूलरागं घुसृणैः पिनष्टि ॥ ९८

इत्यादावङ्गदस्थाने नखक्षतं स्तनयोश्च चुम्बनं कामशास्त्रविरुद्धम्। एवं यस्य यच्छास्त्रं तस्य तद्विरुद्धत्वं दोषः।

अनवीकृतो यथा—जातं कुले धनवतां महतां ततः किं
शास्त्रेषु बुद्धिरखिलेषु कृता ततः किम्।
पुण्यान्युरूणि विहितानि जनैस्ततः किं
विस्तारितश्च भुवनेषु यशस्ततः किम् (ज) ॥ ९९

अत्र 'ततः किमि'त्येतैरर्थोऽनवीकृतः। तेन 'कृष्णे रतिर्हि परमं पदमातनोती'ति नवीकृतः स्यात्। सनियमो दोषो 'मधुमती काऽप्येव सिद्धिः परे'त्यत्र (९३ श्लोके) दर्शितः, अनियमश्च 'मन्मूर्त्तिरेवे'ति यत्र कृतं तेन तत्रैव दर्शितः। सामान्ये विशेषश्च 'मधुमतीसिद्धि'रित्यत्रैव, मधुमतीति विशेषनिर्देशे दर्शितः—वस्तुतः सिद्धिसामान्यमेव निर्देष्टुं युज्यते।

विशेषे सामान्यं यथा—

भाग्याधिक्यत उत्तरोत्तरसमुत्कर्षावधिभ्यो गुण-
ग्रामेभ्योऽपि बलाधिकस्तनुभृतां कोऽपि स्वभावोदयः।
जन्म क्षीरनिधौ, श्रियः सहजता, श्रीकृष्णवक्षःस्थले
वासो, हन्त तथाऽपि न मणेरश्मेति वादो गतः ॥ १००

अत्र विशेषे कौस्तुभे सामान्यस्य मणेर्निर्देशः—तेन 'वासो यस्य तथाऽपि कौस्तुभमणेस्तस्याश्मता नो गते'ति पाठ्यम्। साकाङ्क्षो यथा—

यथाऽन्यथा मानिनि! मानमुच्चैः कृष्णोऽयमेताश्च वयं समस्ताः।
प्रसीद राधे! विनिधेहि चित्ते कृपामपारो गुणवारिधिस्ते ॥ १०१

कविशिक्षानिबन्धेषु बहुतरेष्वेतेषां विस्तरः। विद्याविरुद्ध इत्यादि—आचार्यदण्डिपरिगणितेषु देशकालकलालोकन्यायागमविरोधिष्वेतेषामन्तर्भावो भाव्यः। अयं महात्मेति—'असावनुपनीतोऽपि वेदानधिजगे गुरोः' इतिवदुदाहरणम्। नवीकृतः स्यादिति—परं तथाऽपि चरणत्रये 'ततः किमिति वाक्यावयवावृत्तौ विच्छित्तिहानिः।

अतायं कृष्णो नोपेक्षितुं योग्यः, नापि वयं क्लेशयितुं योग्या इत्याकाङ्क्षामपेक्षते इति साकाङ्क्षः।

निर्वाहे पूरणकारी तु 'मधुमतीसिद्धिः स्वयं साधिते'ति (८३ श्लोके) 'स्वयं साधिते'ति पूरणकारी, 'मधुमतीसिद्धि'रित्येतावतैव निर्वाहः स्यात्। इममेव दोषमपदयुक्त इति पूर्वे पठन्ति (भ)।

विरूपसहचरितः सहचरभिन्न इत्यर्थः। स यथा—

स्तवेन लज्जा द्रविणैरमत्तता श्रुतेन धैर्य्यं यशसाऽतिनम्रता।

दोषेण तापः प्रणयेन वश्यता सतामियं स्वारसिकी हि रीतिः॥ १०२

अत्र स्तवादिभिरुत्कृष्टैः सहचरैर्दोषतापयोर्निकृष्टयोर्वैरूप्यम्। तेन 'दानैरहत्ते'रिति पाठ्यम्। व्यङ्ग्यविरुद्धस्तु 'अपि देशः स किमास्ते' इत्यादौ (८५ श्लोके) प्रागेव दर्शितः।

विध्ययुक्तो विधेयस्यान्यथा स्थितिमत्ता। यथा—

मुहुर्ललितया राधे! त्वं प्रयत्नैः प्रबोधिता।

त्वयाऽसमीक्ष्यकारिण्या तथापि क्रियते हठः॥ १०३

अत्र 'त्वं प्रयत्नैः प्रबोध्यसे' इत्येव विधेयम्। तदन्यथास्थितौ विध्ययुक्तः।

अनुवादायुक्तो यथा—अयि परभृत! तस्याः कण्ठनादेन तस्या-

न्तव निपतितमक्षि प्रायशो विस्मयेन।

विरहिहृदयकालव्यालमावञ्चयेथाः

कथय कथमिदानीं लप्स्यते कुत्र राधा॥ १०४

प्रबोधितेति—सर्वत्र विधेयस्य मुख्यत्वेन स्थितिरपेक्षिता भवति, अत्र तु विधेयरूपायाः प्रबोधनक्रियायाः गौणकृदन्तप्रत्ययसमभिव्याहारात् गौणत्वमायाति, अतो विध्ययुक्तत्वदोषो ज्ञेयः। अयि परभृतेत्यादि—पूर्वोक्त'परभृत'पदस्यानुवादरूपं हे विरहिहृदयकालसर्पेति पदं, तत्तु अयुक्तम्—अपकर्षबोधकसम्बोधनानन्तरं कथयेति प्रार्थनाया असङ्गतेः।

(भ) निर्वाहे पूरणकारीति—ग्रन्थकृतः प्राचीनतराणां केषामियं संज्ञा स्यात्। प्राचां मम्मटादीनां ग्रन्थेष्वस्यापदयुक्ततेति (अपदमुक्ततेति वा संज्ञेति प्रकाशविवेककारा मीमांसकचक्रधुरीणाः श्रीधरादयः), साहित्यदर्पणे त्वस्यास्थानयुक्ततेति संज्ञा दर्शिता। न चात्र च-वै-तु-हीत्यादिवत् श्लोकपादपूरणार्थमेतदिति कृत्वाऽस्य प्राचीनोक्तपुनरुक्ताधिकपददोषाभ्यां कक्षीकारः स्वीकार्यः। अत्र समग्रस्यैवान्तरवाक्यस्य निष्प्रयोजनत्वादि, तत्र तु

अत्र 'विरहिहृदयकालव्याले'ति नानुवाद्यम्। कुतः? 'कथयें'ति प्रार्थनाफलाभावात्। तेन 'मम रुचिसदृशत्वान्मिते'त्यनुवाद्यम्।

अश्लीलो यथा—आदित्सयांऽशुकानामुन्नतभुजवीरुधां कुमारीणाम्।
पश्यति हरौ विरेजे गतवसनानामधो दृष्टिः (भ्र) ॥ १०५

अत्र नम्रा दृष्टिरिति विवक्षितम्। अत्राधोऽङ्गदृष्टिरिति यत् प्रतीयते तदेवाश्लीलम्। तेन 'गतवसनानां नता दृष्टि'रित्येव शुद्धम्।

त्यक्तपुनःस्वीकृतो यथा—

न चन्द्रेणास्यन्ते तुलयितुमिदं साहसमहो!
ममास्ते, तेनैषा स्तुतिरपि न चन्द्रानन इति।
न चन्द्रो लज्जावास्तदपि यदुदेति स्मितमुखो
धिगेनं यं शश्वत् ग्लपयति कुहूरात्रिरसती ॥ १०६

अत्र 'स्तुतिरपि न चन्द्रानन' इत्येवोपसंहारः कृतः, तथाऽपि 'न चन्द्रो लज्जावानि'ति यदपरमुपक्रम्यते तेन त्यक्तपुनःस्वीकृतता।

उक्तास्त्रयोविंशतिर्दोषाः। येषु येष्वेते दोषा दर्शितास्तेषु तेष्वन्येऽपि बोद्धव्याः, तेन दोषा अपि 'सङ्करेण त्रिरूपेण संसृष्ट्या चैकरूपया' उक्तसंख्याः शब्दादिगता बहवो भवन्ति। तथाहि श्रुतिकट्वादयः षोड़श पददोषाः। एते समासगतत्वेऽपि पुनः षोड़श, तेन पुनर्द्वात्रिंशत्। पदांशे त्रयोदश, वाक्ये षोड़शैव—एवमूनत्रिंशत्। पुनर्वाक्यमेव यद्दुष्टं तत्र प्रतिलोमवर्णादित्वेनैकविंशतिः। पुनरर्थदोषास्त्रयोविंशतिः—एवं चतुश्चत्वारिंशत्। सर्वैकत्वे पञ्चोत्तरशतं (१०५) दोषाः (भ्र)। एते यथास्थिति सङ्करसंसृष्ट्या बहुधैवेति (भ्र)।

एतदेवाह—अत्रेति।

---

वाक्यघटकस्य कस्यापि पदस्येति स्फुटमेव भेदोपलम्भात्। अतएव तस्य वाक्यदोषत्वमेव। एतत्प्रसक्तं दर्पणालोचनमुपयोगि। गतवसनानामधोदृष्टिरिति—भागवतपुराणप्रथिते वस्त्रहरणप्रस्ताव इति प्रकृतप्रसङ्गः। पञ्चोत्तरशतमिति—एतच्च काव्यप्रकाशदर्पणकारादीननुसृत्य। रसदोषाणामग्रे वक्ष्यमाणानां नात्र गणनम्। नेदमसमीचीनम्, यतो रसापकर्षकत्वमुखेनैव परिणामे तत्रैव पर्य्यवसानादमीषां सर्वेषां दोषत्वप्रसङ्गः, अन्यच्च वक्ष्यमाणा इतरविलक्षणा रसदोषा मुख्यतः प्रबन्धाश्रया एव, न वाक्यतदवयवाद्याश्रयाः। बहुधैवेति—'सङ्करेण त्रिरूपेणे'त्यादि नयमनुसृत्य। गणनाशैली प्रागेव ध्वनिकिरणटिप्पणे (६७ पृः) गुणीभूतकाव्यकिरणटिप्पणे (१२४ पृः) चोद्दिष्टा। तत्राद्यचिकारणमधुनातनानां पूर्वमेवैस्माभिरुद्घाटितम्।

**कर्णावतंसादिषु यत् कर्णादिशब्द ईक्ष्यते।**
**तत्सान्निध्यादिबोधार्थं तज्ज्ञेयं न प्रयोजयेत् ॥ ३४७ का—**

अवतंसादिशब्दः कर्णाद्याभरणार्थक एव, तथाऽपि तेषु कर्णादिशब्दो यदीक्ष्यते तत्तदारूढ़त्वादिप्रतिपत्त्यर्थं ज्ञेयं, न तद्दूष्यमित्यर्थः। न तु 'प्रयोजयेत् स्वयं कविनाऽप्रयोज्यम्', (ञ) 'प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वर'मिति न्यायात्। यदि दृश्यते क्वापि, तदा न दूषयेदिति यावत्। आदिशब्दात् शिरःशेखरः, श्रवणकुण्डलं, धनुर्ज्या—एष्वारूढ़त्वाद्यर्थः। मुक्ताहारः, पुष्पमाला—अनयोरन्यरत्नामिश्रत्वोत्कृष्टपुष्पनिर्मितत्वे, केवल-'हार'शब्देन केवल-'माला'-शब्देनैव तत्तत्प्रतीतेः। न प्रयोजयेदित्यस्यायमर्थो वा, एवमादीनां कवि-प्रयुक्तत्वात् कदाचित् प्रयोक्तव्यत्वञ्च, नत्वित्यादिदिशा पादनूपुरजघनकाञ्च्यादि प्रयोक्तव्यमिति (ञ)।

'वाचं जगादे'त्यादिषु वाग्विशेषणार्थमेव वाचमित्यादिप्रयोगः—विशेषणा-भावे तु 'वाचं जगादे'ति दोष एव, धात्वर्थेनैव प्रतीतेः। अत्रापि क्रिया-विशेषणेनैव तदवगतेर्न दातव्यं 'वाच'मित्यादिपदमिति केचित्, (ञ) तन्न, बहुविशेषणे क्रियाविशेषणं न चमत्कारि। एवं पद्भ्यां गच्छतीत्यादिष्वपि विशेषणे सति न दोषः (११)। ख्यातेऽर्थे निर्हेतुता न दोषः, ख्यातेरेव झटिति बुद्धेऽर्थे हेतुर्नापेक्षते। श्रुतिकट्वादीनां दोषाणां परकथितानुकथने न दोषः—क्वचिद्वक्त्राद्यौचित्येनानुकथनं विनाऽपि गुणोऽपि, क्वचिन्न दोषो न गुणश्च। वैयाकरणादौ वक्तरि रौद्रादौ रसे च गुणः, वीररसे गुणः; नीरसे न

(ञ) न तु प्रयोजयेदिति—यदाह काव्यालङ्कारसूत्रवृत्तिकृद्वामनः (२।२।१६)—'तदिदं प्रयुक्तेषु।' प्रकाशकृदपि तमनुसृत्य 'स्थितेष्वेतत्समर्थनम्।' प्रयुक्तानामाकृतिसंग्रहो वामनीये ग्रन्थे। तत्र च सिद्धान्तघोषणम्—'न हि भवति यथा श्रवणकुण्डलमिति तथा नितम्बकाञ्ची अपी'ति। प्रक्षालनाद्धीति न्याय एषां स्वत एवापुष्टत्वादिकृतदुर्घटत्वे विनिगमहेतुः, शिष्टप्रयोग एवात्र तन्त्रं यथेतरत्र। वाचं जगादेत्यादि—अत्रापि प्राचीना-लङ्कारिकवामनादिमतपरामर्शः। बहुविशेषण इत्यादि—तथाचैतदर्थं दर्पणोद्धृतं केषाञ्चि-न्मतम्—'यत्र विशेषणस्यापि क्रियाविशेषणत्वं सम्भवति तत्रापि तत्प्रयोगो न घटत' इति।

(११) 'एव'मित्यादि वाक्यं (ग) (क) पुस्तकयोर्नास्ति।

गुणो, न दोषश्च । अप्रयुक्तनिहतार्थौ श्लेषादौ न दुष्टौ । अश्लीलन्तु शान्तवर्णादि न दुष्टम् । [1](११क) 'द्व्यर्थैः पदैः पिशुनयेच्च रहस्यवस्त्वि'ति मुनिवचनबलात् 'करिहस्तेन सम्बाधे' इत्यादि केचित् पठन्ति । तदसत्—तस्याश्लीलत्वादर्थदोष एव (ज) । किन्तु रहस्यवस्त्विति यस्य शब्दवाच्यतायां दोषस्तदेव नत्वश्लीलम् । सन्दिग्धमपि क्वचिदप्रस्तुतप्रशंसाव्याजस्तुत्यादिप्रतिपादकं यदि भवति प्रत्युत गुण एव । प्रतिपाद्यप्रतिपादकयोर्ज्ञापकत्वे सत्यप्रतीतो गुणः । अधमप्रकृतिषु विदूषकादौ च ग्राम्यो गुणः (ज) । न्यूनपदं हर्षशोकमत्तताऽऽधिक्ये सति गुणः, क्वचिन्न गुणो न दोषः । अधिकपदं विषादादौ गुणः—प्रागुक्तमेतत् । मत्ततायान्तु विशेषत एव । कथितपदं लाटानुप्रासेऽर्थान्तरसंक्रमितवाच्ये विहितस्यानुवादे च गुणः । पतत्प्रकर्षः क्रमेण क्रोधादिह्रासे गुणः । भिन्नवाक्यतया रसभेदे च । समाप्तपुनरात्तं क्वचिन्न दोषो न गुणः—क्वचिदिति यत्र झटिति रसापकर्षकं न स्यादिति । विशेषणदानार्थमेव यत्र पुनर्दीयते न वाक्यान्तरत्वेन तत्रैव दूषणम् । अस्थानस्थसमासं क्वचिद्गुणः क्रोधाद्यस्थानेऽपि । यत्र क्रोधाद्यनुकरणं तत्रेत्यर्थः । गर्भितमवश्यविधेयत्वेन प्रकृतवाक्यपरिपोषकत्वे सति गुणः । अन्ये सर्वे दुष्टा एव ।

किन्त्विति—यस्य शृङ्गाररसादेः । शब्दवाच्यतायामिति—तथाच काव्ये 'शृङ्गार' इति शब्दश्चेत्तदा दोष एवेत्यर्थः—स च रसदोषो न त्वर्थदोषः (ज) । नन्विति—

परं काव्यालङ्कारसूत्रवृत्तिकामधेनुकारादयः केचिदापाततः प्राचीनसम्मतिमङ्गीकृत्यान्यथा प्रतिपद्यन्ते । द्व्यर्थैः पदैरित्यादि—केचित् पठन्तीत्यादि च—दर्पणेऽस्य तन्त्रता स्वीकृता । 'सुरतारम्भगोष्ठ्या'दावश्लीलत्वं तथा पुन'रिति, नैतन्मतं कौस्तुभकृदाद्या आद्रियन्ते । परं 'द्व्यर्थैः पदै'रिति वचनस्य यदत्र व्याख्यानं न तन्मनोज्ञं सर्ववादिसम्मतं वा । वैष्णवचक्रचूडामणिभिः शुचिभावग्रस्तहृदयैरन्ययोट्टङ्कितमिदमित्यास्तां पल्लवितेन । ग्राम्यत्वमधमोक्तिष्विति—एवमादिषु वृत्ताविवास्य सर्वस्य परामर्शः साधितो न तु कारिकाभिरिति ग्रन्थकृतो ग्रन्थसमापनव्यग्रता प्रकटिता । ग्राम्यत्वमेताद्दृशस्थले सुतरां निसर्गसिद्धमिति न तत्र दोषलक्षणस्यावकाशः । रुद्रटीये काव्यालङ्कारे सोदाहरणोपष्टम्भमेतत् साधु साधितम् ।

(११क) अत्र 'उक्तं ही'त्यनन्तरसन्दर्भावतारकः क्वाचित्कः पाठस्तनादेयः ।

अथ रसदोषानाह—

**रसानां शब्दवाच्यत्वं स्थायिनां व्यभिचारिणाम्।**
**विभावस्यानुभावस्य व्यक्तौ कष्टा च कल्पना॥**
**प्रतिलोमविभावादिग्रहो दीप्तिरभीक्ष्णशः।**
**वृथा विस्तारह्रासौ च तथाऽङ्गस्यातिविस्तृतिः॥**
**अङ्गिनोऽनभिसन्धानं प्रकृतीनां व्यतिक्रमः।**
**अनङ्गस्य प्रकटनं रसदोषा इमे स्मृताः॥ ३४९का—**

तत्र रसानां शब्दवाच्यत्वं (ट) यथा—

राधामाधवयोरेव शृङ्गारः श्रुतिरोचनः।
वैदग्ध्यं यत्र पर्य्याप्तं कृतार्थश्च मनोभवः॥ १०७

अत्र 'शृङ्गार'शब्दः। किन्तु 'विलासः श्रुतिरोचन' इति पाठ्यम्। एवं रसादिशब्दश्च। एवं वीरादयश्च। रसादीनां शृङ्गारादिपरत्व एव दोषः, नत्वास्वादादिपरत्वे, तस्य नानाऽर्थत्वात्। तेन सरसो रसवान् रसिक इत्यादौ न दोषः।

**चन्दनानिलचन्द्रांशुपुंस्कोकिलकलस्वनैः।**
**माधव्यां रजनौ राधाकृष्णयो रतिरैधत॥ १०८**

अतो मुनिवचनबलात् काव्येऽश्लीलार्थबोधकतदर्थपदप्रयोगोऽपि न कर्त्तव्य इति भावः। विभावस्येति—रससाक्षात्कारे रसान्तःपातितया विभावादित्रयाणां सम्यक्तयाऽभिव्यक्तिरपेक्षिता भवति। यत्र तु अनुभावस्य चमत्कारातिशयेन तस्यैव रसे प्राधान्येनाभिव्यक्तिर्न तु विभावादेः, विभावादयस्तु अनुभावपर्य्यवसायिनो भवन्ति, तत्र विभावस्याभिव्यक्तौ कष्टकल्पना,

(ट) रसदोषा इति—अत्रापि गतानुगतिकतया प्राचीनतरनिबन्धानुसृतिः, प्रबन्धाश्रयत्वादुदाहरणप्रपञ्चोऽपि ततो गृहीतः। ते च निबन्धकाराः प्राचीनतराणां शास्त्रद्रष्टॄणां सरणिमनुसरन्तीति कुतोऽत्र वैमुख्यावसरः? रसानां शब्दवाच्यत्वमिति—एवमेव भूयसां प्राचीनानां दर्शनं यच्छृङ्गारादिपदसमावेशनेनापि रसादीनामवगतिः स्यात्। तथाचोद्भटकृते भामहविवरणे 'पञ्चरूपो रस' इति प्रतिपत्तिः। एवमपि तन्मतनुसृत्य कृतायां प्रतीहारेन्दुराजलघुवृत्तौ 'एतेषां पञ्चाशत्संख्यानां भावानां सूचकाश्चत्वारोऽनुभावादयः। ते चानुभावा विभावा व्यभिचारिणः स्वशब्दश्च।' जिज्ञासुभिरुद्भटीयकाव्यालङ्कारोपरि प्रतीहारेन्दुराजकृतौ लघुवृत्तिग्रन्थः प्रेक्षणीयः व्याकरणपरः परामर्श-

। अत्र रतेः स्थायिनः शब्दवाच्यत्वं, तेन 'प्रीतिरेधते'ति पाठ्यम् । यत्र 'रति'शब्दस्य स्थायिता न प्रतीयते तत्र न दोषः—यथा भगवति रतिरस्तु ।

आदर्शे स्वमुखालोके विस्मयोत्फुल्ललोचना ।
देवादागतमालोक्य कृष्णं राधा ह्रियं दधे ॥ १०९

अत्र ह्रीर्व्यभिचारिभावः (ट) ।

यत्र तु स्वस्वव्यापारेण लज्जाऽऽदयो व्यभिचारिणो बोधयितुं न शक्यन्ते परं शब्दवाच्यतयैव प्रतीयन्ते, तत्र न दोषः । यथा—'तस्यास्त्रपाभये'त्यादिः (५म किरणे २१७ पृः) । अत्र त्रपाऽऽदीनां व्यञ्जकशब्दोपादाने उन्मादादिभिः सङ्कारोप्यारोपकभावो न घटते । यत्रान्योन्यं हेतुहेतुमद्भावस्तत्र न दोषः—

औत्सुक्येनाजनि चपलता, ह्रीस्तया प्रादुरासी-
त्तस्याश्चिन्ता समजनि, तया प्रादुरासीद्विमर्शः ।
हर्षस्तेन व्यजनि सुदृशां, तेन चावेग एव
प्रादुर्भूतः प्रविशति हरौ कौण्डिनीं राजधानीम् (ट)॥११०

अत्र गुर्वः । एवं विभावानुभावयोः कष्टकल्पनाव्यक्तिर्यथा—

सा दक्षिणे मरुति वाति समुद्यतोन्दौ कृष्णं विलोक्य रचनामवगुण्ठनस्य ।
द्राघीयसीं विदधती भुजवल्लिमूलव्यक्तां पयोधरतटीं पुनराववार ॥ १११

अत्रोद्दीपनविभावा आलम्बनविभावाद्यनुभावपर्य्यवसायिनः स्थिता इति कष्टकल्पना । एवमनुभावाद्यालम्बनविभावपर्य्यवसायित्वे दुष्टाः—जह्य मुदाहरणम् (ट) ।

अतो रसदोषो ज्ञेयः—एवं विभावस्य चमत्कारातिशयेऽनुभावस्याभिव्यक्तौ कष्टकल्पना ज्ञेया । अवगुण्ठनस्येति—अत्रानुभावोऽवगुण्ठनस्य दीर्घीकरणम्, एवं पयोधरतव्याः पुनः-संवरणं, तयोश्चमत्कारातिशयेन प्राधान्येन रसेऽभिव्यक्तिः, दक्षिणानिलचन्द्रोदयरूपो द्दीपनादयोऽनुभावपर्य्यवसायिनः स्थिता इति कष्टकल्पनया रसदोषो ज्ञेयः ।

---

नीयः । केचित्तु नव्यतरा नाट्यदर्पणकृद्रामचन्द्रगुणचन्द्रादयो गतानुगतिकत्वादांशिकतया प्राचीनमतवीथ्यवगाहिनः । परं ध्वन्यालोकानुसारिणो नवीना एतद्भिन्नतरमिति रसानां शब्दवाच्यत्वपक्षं निराकुर्वन्ति प्रत्युतास्य दोषतैवेति घोषयन्ति । रसोपलब्धिविषये नवीनानां प्राचीनमतवैलक्षण्यमेवात्र हेतुः । तस्या इति—षष्ठकिरणीयमेतत् पद्यं कौस्तुभकृतो वैद्यवंशप्रभवत्वं डिण्डिमारावैरुद्घोषयति । जह्यमुदाहरणम्—यथा परिहरति रतिं

प्रतिलोमविभावादिग्रहो यथा—

मुग्धे मा कुरु मानं, कलय कटाक्षेण पुण्डरीकाक्षम्।

अनिलतरलनलिनीदलजलकणमिव यौवनं विद्धि ॥ ११२

अत्र शृङ्गारे प्रतिलोमस्य शान्तस्यानित्यताप्रकाशनरूपो विभावस्तत्प्रकाशितश्च निर्वेद इति दुष्टम्। एवं शृङ्गारे शान्तानुभावश्च प्रतिलोमतया दुष्टः। अभीक्ष्णशो दीप्तिः पुनरेकस्यैव रसस्यौज्ज्वल्यं यथा कुमारसम्भवे रतिविलापे। वृथाविस्तारोऽकाण्डे प्रथनं यथा वेणीसंहारे द्वितीयेऽङ्केऽनेकसंचये प्रवृत्ते भानुमत्या सह दुर्योधनस्य शृङ्गारवर्णनम्। वृथा ह्रासोऽकाण्डे च्छेदो यथा वीरचरिते द्वितीयेऽङ्के राघवभार्गवयोर्वीररसे 'कङ्कणमोचनाय गच्छामी'ति राघवोक्तौ। अङ्गस्यातिविस्तृतिर्हयग्रीववधे हयग्रीवस्य। अङ्गिनोऽनभिसन्धानं रत्नावल्यां चतुर्थेऽङ्के वाभ्रव्यागमने सागरिकाविस्मृतिः।

प्रकृतीनां व्यतिक्रमस्तु यथा—प्रकृतयस्तावत् दिव्या अदिव्या दिव्यादिव्याश्च। तथा धीरोदात्तादीनां प्रागुक्तानाञ्चतुर्णामुत्तमा मध्यमा अधमाश्च। अत्रोत्तमप्रकृतेर्मध्यमाधमत्वेन वर्णनं, मध्यमाधमप्रकृतिकयोरुत्तमप्रकृतित्वेन वर्णनं, मध्यमस्याधमत्वेन च वर्णनं दुष्टम्। उत्तमदेवताऽऽदीनां पार्वतीपरमेश्वरादीनां शृङ्गारवर्णनञ्च न कार्य्यम्। यत्तु कृतं श्रीकालिदासादिभिस्तद्दुष्टम् (ट)। तद्वर्णनं हि स्वपित्रोः शृङ्गारवर्णनमिव। एवं श्रीकेशवयोर्लक्ष्मीनारायणयोरित्यर्थः। उक्तं हीति—प्रसिद्धे श्रीकृष्णे (ठ) औचित्य-

मतिं लुनीते, इत्याद्याकरोद्धृतं पद्यम्। अनङ्गस्य प्रकटितम्—अत्राप्युदाहरणाविष्कारो दर्पणादौ द्रष्टव्यः। अन्यच्च रत्नावल्यां तृतीयेऽङ्के राज्ञा स्वयं वर्णितस्य सूर्यास्तमनस्य तमोपिधानस्य च तिरस्कारगर्भकाक्षेपेणोतो विदूषकवर्णनस्य प्रशंसाऽऽद्यप्यस्य लक्ष्यम्। यत्तु कृतमित्यादि—पूर्वेषां मतानुवाद एतत्। दोषविवेचने नवीना अपि निबन्धारो न व्यक्तिगतमाहात्म्यग्रस्तज्ञाना इति महत् गौरवस्थानम्। एतच्चातिरसद्रुतहृदयानां प्रायशो मर्य्यादोलङ्घनमपि, यदाहुर्नमिसाधुपादा रुद्रटालङ्कारटीकायां प्राचीनसम्मतिसुखेन—'गणयन्ति नापशब्दं न वृत्तभङ्गं क्षयं वाऽर्थस्य। रसिकत्वेनाकुलिता वेश्यापतयः कुकवयश्च॥' वस्तुतस्त्वेतद्धि सर्वेषामेव दोषाणामुपलक्षणम्। औत्सुक्येनेत्यादावनवीकृतत्वमर्थदोष इति स्फुटमेव।

श्रीकेशवयोरपीति केचित् (ठ)। केचित्तु वर्णयन्ति, तयोरीश्वरत्वाद्देवतात्वं नेति। वर्णनं यथा—

'विपरीअरए लच्छी'मित्यादि (काव्यप्रकाशोदाहृते ५म श्लोके १२ श्लोके)। 'अन्यत्वमन्यसमये' इत्यादि च।

राधामाधवयोस्तु वर्णनीयमेव (ठ), सर्वेश्वरत्वेन देवतात्वाभावात्, विधिवाक्यञ्च 'विक्रीडितं व्रजवधूभिरिदञ्च विष्णोः श्रद्धाऽन्वितोऽनु शृणुयादथ वर्णयेद्य' (श्रीमद्भागवतपुराणे १०।३३।३९) इत्यादि। किन्तु यत्र यत्रानौचित्यं प्रतीयते तत्तदेव न वर्णनीयमिति। उक्तं हि ध्वनिकृता—

अनौचित्यादृते नान्यद्रसभङ्गस्य कारणम्।
प्रसिद्धौचित्यबन्धस्तु रसस्योपनिषत् परा॥ इति॥

(Dhvanyaloka. p. 145).

अनङ्गस्य रसानुपकारकस्य प्रकरणं दुष्टम्। अन्यमुदाहरणम्।

**एकाश्रयत्वे रसयोर्न विरोधः प्रवर्त्तते।**
**भिन्नाश्रयत्वे विरोधः शान्तशृङ्गारयोर्यथा॥ ३५०का—**

एकाश्रयत्वे हास्यशृङ्गारयोरद्भुतहास्ययोरद्भुतशृङ्गारयोर्वीरकरुणयोर्न विरोधः। शान्तशृङ्गारयोः शृङ्गारकरुणयोः शृङ्गारबीभत्सयोः केवलं बन्धस्तु रसस्य सर्वोत्कृष्टोपनिषत्परमप्रमाणीभूतवेदतुल्य इत्यर्थः। एकाश्रयत्व इति—एकविषये हास्यशृङ्गारयोर्न विरोधः, भिन्नविषये तु सुतरामेव विरोधो नास्ति।

(ठ) श्रीकेशवयोरपीत्यादि—तयोर्देवतात्वेऽयं सिद्धान्तः। यदुदाहृतं सगौरवं तैरेव—"राधामाधवयोरेव विलासः (शृङ्गारः) श्रुतिरोचनः।" ('कृष्णस्तु भगवान् स्वय'मिति) समस्यापूरकः। अत्र भागवतपुराणीयराद्धान्तः विचारः श्रीक्षेमेन्द्रादिभिः कृतः, ध्वन्यालोकेऽस्य यौक्तिकता प्रतिपादिता। अनौचित्यादित्यादि—औचित्यपदार्थस्यार्थ-वनवासस्यसीताया इत्यादि—यथोत्तररामचरिते षष्ठेऽङ्के। यथा इति—'चिरम्रो हस्तावलम्ब' इत्यादि पद्यालोचनेनानन्दवर्द्धनादिभिरन्यैरपि प्राचीनैरयं पन्थः प्रवर्त्तितः। शान्तशृङ्गारयोः क्वचिन्न दोष पारमार्थिकतत्त्वे तु न कोऽपि विरोधः—सच्चिदानन्द-रूपस्य रसस्य खण्डतो घनविश्लेषे न काऽपि विच्छित्तिः, न वा स्थायिविरोधेनैव केवलं तत्सम्भवः। एतच्चालोचितं दर्पणकृता स्वग्रन्थे तत एव द्रष्टव्यम्। रसस्य दार्शनिकमतानुमतचैतन्यभेदस्वीकारे विरोधस्य कथाऽपि न जागर्त्ति कुतः पुनर्विरोधभावसम्भावनेति सुप्रकटम्। तथाचाभाणकः—शिरो नास्ति शिरोव्यथा। यदाहुः प्राचीनटीकाकृतः—'चैतन्यभेदाद्रसास्वादाद्द स रसस्ताऽदृशो मत' इति। निर्वाणेत्यादि—भक्तिसिद्धान्तसारभूतमेतत्। यदाहुरद्वैताचार्यवर्य्या अपि भक्ति-

विरोध एव। शृङ्गारकरुणयोरङ्गाङ्गिभावे न दोषः। यथा वनवासस्थसीताया गर्भदर्शनात् प्राक् शृङ्गारस्मृतिः (ठ)। अत्र करुणोऽङ्गी शृङ्गारोऽङ्गम्।

शान्तशृङ्गारयोः क्वचिन्न दोषः। यथा—

निर्वाणनिम्बरसमेव पिबन्ति केचिद्भव्या न ते रसविशेषविदो वयन्तु।
श्यामामृतं मदनमन्थरगोपरामानेत्राञ्जलीचुलुकितावसितं पिबामः (ठ) ॥११३

अत्र पूर्वार्द्धे शान्तः परार्द्धे शृङ्गारः, तथाऽपि शुद्धम्—शान्तस्य न्यक्कृतत्वात् शृङ्गार एव पुष्टः। प्रागुक्तलक्षणस्य रसस्यानन्दस्वरूपत्वेन प्रतिपादितैक्ये रसस्य रसेन विरोध इति यदिह प्रतिपाद्यते तत्तु सामग्रीभूतस्य स्थाय्यादेरेव, नतु रसस्य (१२)।

* इत्यलङ्कारकौस्तुभे दोषप्रदर्शनो नाम दशमः किरणः। *

समाप्तोऽयं ग्रन्थः।

भिन्नविषये शान्तशृङ्गारयोर्विरोधः, एकविषये तु सुतरामेव विरोधः। निर्वाणेति—उष्ट्रा यथाऽऽम्रमुकुलं विहाय कटुकषायकण्टकितां लतां खादन्ति, तथा केचिद्भगवद्गुणमाधुर्यादिकं विहाय निर्वाणरूपनिम्बरसं पिबन्ति। ते भव्या न रसविशेषविज्ञाः। वयन्तु मदनेन मन्थरा या गोपाङ्गनानेत्राञ्जलीरूपा रसना तया चुलुकितमास्वादितं तत एवावसितं ताभिः स्वीयत्वेन निश्चितं यत् श्यामामृतं तत् पिबामः—इति।

मार्गोपदेशिका मधुसूदनसरस्वतीचरणाः स्वग्रन्थे भक्तिरसायने—'नवरसमिलितं वा केवलं वा पुमर्थं परममपि मुकुन्दे भक्तियोगं वदन्ती'ति प्रास्ताविकीं प्रवृत्तिं सूचयन्तोऽप्यष्टमष्टमा द्वाश्रान्ताः—'तज्जन्यायां द्रुतौ शृङ्गारतिर्गोविन्दगोचरा। एतदन्तं हि शास्त्रेषु साधनाम्नान-मिष्यते' इति। बहवोऽप्यपरेऽद्वैतवीथीपथिका गोपवधूविटेन वशीकृतचित्तवित्ता एतदनुरक्तं श्रीभागवतपुराणवचनमेव समर्थयन्ति। 'श्रेयःसृतिं भक्तिमुदस्य ते विभो! क्लिश्यन्ति ये केवलबोधलब्धये। तेषामसौ क्लेशल एव शिष्यते नान्यद्यथा स्थूलतुषावघातिनाम्' इति। निर्वाणेत्यादि पद्यं कवेः श्रीचैतन्यचन्द्रोदये नाटके स्थितम्—मुद्रितपुस्तकस्थः पाठः किञ्चिदभिन्नः। निर्वाणनिम्बरसमिति साधुः पदविन्यासः। अत्रार्थे एवमाहुरालङ्कारिकवर्याः

(१२) (च) (छ) पुस्तकयोर्मूल इत ऊर्द्धम् 'श्रीमतः कर्णपूरस्य चरणावनिशं भजे। निर्मितः कृपयाऽऽढ्यो येनालङ्कारकौस्तुभः।' इत्यंशोऽयमुपलभ्यते। स च टीकाऽवसाने यदि भवितुमर्हति तदैव विनिवेश्यः। (ख) पुस्तके टीकावसाने पाठो यथा—समाप्तेयं ग्रन्थस्य टीका। श्रीश्रीराधागोविन्दो जयतितराम्। श्रीमतः कर्णपूरस्य चरणावित्यादि।

केचित् प्रवीणमतयः—“तत्तद्रसान्ततमयान् विषयान् विहाय मुग्धश्चिरं श्रयति मोक्ष-महस्थलीं यः। तस्यात्मनः कथमिवास्तु गुणो विनाशो भोगात्ययेऽपि विकला विभुता न यत्रे”ति।

इह रसघनबन्धे कर्णपूरप्रबन्धे विशदपदकदम्बैश्छिण्णमोमादरेण।
अरचयदनुमत्या प्राच्यपाश्चात्यविद्याखरणिसरणसन्धो नास्ततन्द्रो नवीनः॥ १
कौस्तुभे मणिमयि वनमाला मौक्तिकावलिरिति प्रथमानाः।
उद्धुरं दधति यन्मयि मोहाल्लाघवं किमपि तल्लघु यातु॥ २
पुनार्त्तिंशान्तिक्षमया धिया था न्यस्तैकदा धूर्जनकेन केन।
प्रत्यग्रपुनार्त्तिकदर्थितेन साऽन्येन कष्टात् परिनिष्ठिताऽद्य॥ ३
अशक्तानां समुद्धर्त्तृ ध्रुवं ज्योतिः प्रमाद्यताम्।
अस्तु मे शरणं वस्तु चिदानन्दमयं महत्॥ ४
भट्टपल्लीनिवासस्य शिव! श्रीशिवशर्म्मणः।
कल्याणलवलिप्सोर्मे कृतौ प्रीतिरिहास्तु ते॥ ५

इति वाशिष्ठान्वयसम्भव-श्रीशिवप्रसादभट्टाचार्य्यकृताया-
मलङ्कारकौस्तुभमौक्तिकावल्या-मुत्तरार्द्धमवसितम्।
समाप्तोऽयं ग्रन्थः॥ शम्।

# परिशिष्टम् ।

## छत्रबन्धः ।

तनुतां तनुतां राधाकृष्णयोश्चरितश्रुतिः ।
हृत्तापानां सुधासिन्धुधारा तां नु ततां नुत ॥

(२७१ पृः)

## शङ्खबन्धः ।

धैयमाधुर्य्यमर्य्यादा राधा माधवमार सा ।
सारमाऽवधमाधारा धैयमाधुर्य्यसौभगा ॥

(२७१ पृः)




### पताकाबन्धः ।

रास-तंस"सारम्भे राधा साऽर रमाधवम् ।
बन्धमा!ररसाधारामेऽरं सारसतंसरा ॥
‘२७२ पृ:)

### गदाबन्धः ।

रास-तंसरसारम्भे राधा साऽर रमाधवम् ।
बन्धमाररसाधारामेऽरं सारसतंसरा ॥
(२७२ पृ:)



